३२ ३३ ३४ ३५ ३६ ३७ ३८

सत्यंवदमहाभागकस्येयंवल्लभाबला राजपत्नीवचाभातिनैषामुनिवधूर्द्विज ३२ धौम्यउवाच पांडवानांप्रियाभा-
र्याद्रौपदीशुभलक्षणा पांचालीसिंधुराजेंद्रवसत्यत्रवराश्रमे ३३ जयद्रथउवाच क्वगताःपांडवाःपंचशूराःसंप्रतिविश्रु
ताः वसंत्यत्रवनेवीरावीतशोकामहाबलाः ३४ धौम्यउवाच मृगयार्थंगताःपंचपांडवारथसंस्थिताः आगमिष्यंतिम-
ध्याह्नेमृगानादायपार्थिवाः ३५ तच्छ्रुत्वावचनंतस्यउदतिष्ठदसौनृपः द्रौपदीसन्निधौगत्वाप्रणम्येदमुवाचह ३६ कुशलं
तेवरारोहेक्वगताःपतयश्चते एकादशगतान्यद्यवर्षाणिवचनेकिल ३७ द्रौपदीतुतदोवाचस्वस्तितेस्तुनृपात्मज विश्रम-
स्वाश्रमाभ्यासेक्षणादायांतिपांडवाः ३८ एवंब्रुवत्यांतस्यांतुलोभाविष्टःसभूपतिः जहारद्रौपदींवीरोनादृत्यमुनिसत्तमा
न् ३९ कस्यचिन्नैवविश्वासःकर्त्तव्यःसर्वथाबुधैः कुर्वन्दुःखमवाप्नोतिदृष्टांतस्त्वत्रवैबलिः ४० वैरोचनसुतःश्री-
मान्धर्मिष्ठःसत्यसंगरः यज्ञकर्त्ताचदाताचशरण्यःसाधुसंमतः ४१ नाधर्मेनिरतःक्वापिप्रल्हादस्यचपौत्रकः एकोन
शतयज्ञान्वैसचकारसदक्षिणान् ४२ सत्त्वमूर्तिःसदाविष्णुःसेव्यःसयोगिनामपि निर्विकारोपिभगवान्देवकार्यार्थ
सिद्धये ४३ कश्यपाच्चसमुद्भूतोविष्णुःकपटवामनः राज्यंछलेनत्द्दृतवान्महींचैवससागरां ४४ सोभवत्सत्यवा
ग्राजाबलिर्वैरोचनिस्तदा कपटंकृतवान्विष्णुरिंद्रार्थंतुमयाश्रुतं ४५ अन्यःकिंनकरोत्येवंकृतंवैसत्त्वमूर्तिना वामनं
रूपमास्थाययज्ञपातंचिकीर्षता ४६ नचविश्वसितव्यंवैकदाचित्केनचित्तथा लोभश्चेनसिचेत्स्वामिन्कीदृक्पापप-
कृतंभयं ४७ लोभाहताःप्रकुर्वंतिपापानिप्राणिनःकिल परलोकाद्भयंनास्तिकस्यचित्कर्हिचिन्मुने ४८

३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८

प्रपतंतिनरकेइतिशेषः ५० सर्वोव्यवहारोलोभमूलकएवेतिदर्शयति अन्यस्यानीयतेइति तेदेवाअन्यस्यपुरुषस्यवित्तमानीयतेभ्यः प्रयच्छंतिम
नीषितंधनंवाणिज्यादिव्यवहारेणवातस्माद्देवाअपिपरस्वादानतत्पराएवेत्यर्थः ५१ ५२ ग्रहणकालइति यस्माद्यावत्परिमितंवार्धुषिकंप्राप्त्यंतस्मात्त

मनसाकर्मणावाचापरस्वादानहेतुतः प्रपतंतिनराःसम्यग्लोभोपहतचेतसः ४९ देवानाराध्यसततंवांछंतिचधनंनराः
नदेवास्तत्करेकृत्वासमर्थादातुमंजसा ५० अन्यस्यानीयतेवित्तंप्रयच्छंतिमनीषितं वाणिज्येनाथदानेनचौर्येणापिब-
लेनवा ५१ विक्रयार्थंगृहीत्वान्नधान्यवस्त्रादिकंबहु देवानर्चयतेवैश्योमहर्घ्रंमेभवेदिति ५२ नात्रकिंपरवित्तेच्छावा-
णिज्येनपरंतप ग्रहणकालेसंप्राप्तेमहर्घंचापिकांक्षति ५३ एवंहिप्राणिनःसर्वेपरस्वादानतत्पराः वर्ततेसततंब्रह्मन्विश्वा-
सःकीदृशःपुनः ५४ वृथातीर्थंवृथादानंवृथाध्ययनमेवच लोभमोहवृतानांवैकृतंतदकृतंभवेत् ५५ तस्मादेनंमहा
भागविसर्जयगृहंप्रति सपुत्राहंवसिष्यामिजानकीर्वाद्विजोत्तम ५६ इत्युक्तोसौमुनिस्तावद्गत्वासुधाजितंनृपं उवाचव
चनंराज्ञेभारद्वाजःप्रतापवान् ५७ गच्छराजन्यथाकामंस्वपुरंनृपसत्तम नेयंमनोरमाप्येतिबालपुत्रासुदुःखिता
५८ सुधाजिदुवाच मुनेमुंचहठंसौम्यविसर्जयमनोरमां नचयास्याम्यहंमुक्त्वानेष्याम्यद्यबलात्पुनः ५९ ऋ-
षिरुवाच नयस्वयदिशक्तिस्तेबलेनाद्यममाश्रमात् विश्वामित्रोयथाधेनुंवसिष्ठस्यमुनेःपुरा ६० इतिश्रीदेवीभा
गवतेमहापुराणेतृतीयस्कंधेषोडशोऽध्यायः १६ छ छ छ छ छ

दपेक्षयाधिकंकांक्षति ५३ ५४ ५५ ५६ ५७ ५८ ५९ विश्वा
मित्रइति सयथानीतवांस्तथात्वंनय तस्यगतिवत्तवापिगतिर्भविष्यतीतितात्पर्यं ६० इतिश्रीदेवीभागवतनिलकेतृतीयस्कंधेषोडशोध्या
यः १६ छ छ छ छ छ छ छ छ छ

द्विषष्टिश्लोकवर्यैस्तुविश्वामित्रकथोत्तरं कामबीजस्यसंप्राप्तीराजपुत्रस्यकथ्यते १ मुनिवाक्यश्रवणोत्तरंराजायत्कृतवांस्तदाह इत्याकर्ण्येति अवनीपतिर्युधाजित् १ स्वमतमाह नयामिनेष्यामि २ ३ हन्मिहनिष्यामि ४ यतामियत्नंकरिष्यामि ५ राज्ञोमनस्यश्रवणानंतरंमंत्रीमुनिनाविश्वामित्रस्यदृष्टांतउक्तस्तदभिप्रायमुपवर्ण्यराजानंसाहसान्निवारयतीत्याह साहसमिति ६ दृष्टांतमुपपादयन्दृष्टांतोक्तेरभिप्रायमाह पुरेति गाधिरा-

व्यासउवाच इत्याकर्ण्यवचस्तस्यमुनेस्तत्रावनीपतिः मंत्रिवृन्दंसमाहूयपप्रच्छतमतंद्रितः १ किंकर्तव्यंसुबुद्धेत्रमयाद्यवद्सुव्रत बलान्नयामितांकामंसपुत्रांचसुभाषिणीं २ रिपुरल्पोपिनापेक्ष्यःसर्वथाशमभिच्छता राजयक्ष्मेवसंवृद्धो मृत्यवेपरिकल्पयेत् ३ नात्रसैन्यंनयोद्धास्तियोमामत्रनिवारयेत् गृहीत्वाहन्मितंतत्रदौहित्रस्यरिपुंकिल ४ निष्कंटकंभवेद्राज्यंयताम्यद्यबलादहं हतेसुदर्शनेनूनंनिर्भयोसौभवेदिति ५ प्रधानउवाच साहसंनहिकर्त्तव्यंश्रुतंराजन्मुनेर्वचः विश्वामित्रस्यदृष्टांतःकथितस्तेनमारिष ६ पुरागाधिसुतःश्रीमान्विश्वामित्रोतिविश्रुतः विचरन्सनृपश्रेष्ठोवसिष्ठाश्रममभ्यगात् ७ नमस्कृत्यचतंराजाविश्वामित्रःप्रतापवान् उपविष्टोनृपश्रेष्ठोमुनिनादत्तविष्टरः ८ निमंत्रितोवसिष्ठेनभोजनायमहात्मना ससैन्यश्चस्थितोराजागाधिपुत्रोमहायशाः ९ नंदिन्यासादितंसर्वंभक्ष्यभोज्यादिकंचयत् भुक्त्वाराजाससैन्यश्चवांछितंतत्रभोजनं १० प्रतापंतंचनंदिन्याःपरिज्ञायसपार्थिवः ययाचेनंदिनींराजावसिष्ठंमुनिसत्तमं ११ विश्वामित्रउवाच मुनेधेनुसहस्त्रंतेघटोध्नीनांददाम्यहं नंदिनींदेहिमेधेनुंप्रार्थयामिपरंतप १२ वसिष्ठउवाच होमधेनुरियंराजन्नददामिकथंचन सहस्त्रंचापिधेनूनांतवेदंतवतिष्ठतु १३

ज्ञःसुतः ७ मुनिनावसिष्ठेन ८ ९ नंदिन्यासादितंनंदिन्याकामधुक्कन्यया स्वस्तनेभ्योनिष्काश्यदत्तंवांछितंयस्ययदपेक्षितंतत् १० ११ घटोध्नीनांघटवदूधोयासांगवांतासांबहुदुग्धवतीनामितितात्पर्यं १२ नददामिनदास्यामि तवेदंतवैवतिष्ठतु १३ ७ ७ ७ ७ ७ ७

१४ गृहान्निष्काश्येत्यर्थः १५ १६ यंत्रितांहस्तपादादिषुबद्धां १७ १८ १९ हंभेति गवांशब्दस्यानुकरणं २० २१ २२ २३ २४ तथाहेराजन्मुनिनादृष्टां

विश्वामित्रउवाच अयुतंवाथलक्षंवाददामिमनसेप्सितं देहिमेनंदिनींसाधोग्रहीष्यामिबलादथ १४ वसिष्ठउवाच कामंगृ हाणनृपतेबलादद्ययथारुचि नाहंददामितेराजन्स्वेच्छयानंदिनींगृहान् १५ तच्छ्रुत्वानृपतिर्भृत्यानादिदेशमहाबलान् नयध्वं नंदिनींधेनुंबलदर्पसुसंस्थिताः १६ तेभृत्याजगृहुर्धेनुंहठादाक्रम्ययंत्रितां वेपमानामुनिंप्राहसुरभिःसाश्रुलोचना १७ मुनेत्यज सिमांकस्मात्कर्षयंतिसुयंत्रितां मुनिस्तांप्रत्युवाचेदंत्यजेनाहंसुदुग्धदे १८ बलान्नयतिराजासौपूजितोद्यमयाशुभे किंक रोमिनचेच्छामित्यक्तुंत्वांमनसाकिल १९ इत्युक्तामुनिनाधेनुःक्रोधयुक्ताबभूवह हंभारवंचकाराशक्रूरशब्दंसुदारुणं २० उद्गतास्तत्रदेहात्तुदैत्याघोरतरास्तदा सायुधास्तिष्ठतिष्ठेतिब्रुवंतःकवचावृताः २१ सैन्यंसर्वंहतंतैस्तुनंदिनीप्रतिमोचिता ए- काकीनिर्गतोराजाविश्वामित्रोतिदुःखितः २२ हतपापोतिदीनात्मानिंदन्क्षात्रबलंमहत् ब्राह्मंबलंदुराराध्यंमत्वातपसिसंस्थि तः २३ तस्त्वाबहूनिवर्षाणितपोघोरंमहावने ऋषित्वंप्रापगाधेयस्त्यक्त्वाक्षात्रंविधिंपुनः २४ तस्मात्त्वमपिराजेंद्रमाकृ- थावैरमद्भुतं कुलनाशकरंनूनंतापसैःसहसंयुगं २५ मुनिवर्यव्रजाद्यत्वंसमाश्वास्यतपोनिधिं सुदर्शनोपिराजेंद्रतिष्ठत्वत्रय थासुखं २६ बालोयंनिर्धनःकिंतेकरिष्यतिनृपाहितं वृथातेवैरभावोयमनाथेदुर्बलेशिशौ २७ दयासर्वत्रकर्त्तव्यादैवाधी नमिदंजगत् ईर्ष्ययाकिंनृपश्रेष्ठयद्भाव्यंतद्भविष्यति २८ वज्रंतृणायतेराजन्दैवयोगान्नसंशयः तृणंवज्रायतेक्वापिसम- येदैवयोगतः २९ शशकोहंतिशार्दूलंमशकोवैयथागजं साहसंमुंचमेधाविन्कुरुमेवचनंहितं ३०

तोदत्तोयंतस्येदंतात्पर्यं त्वयापिसाहसंक्रियतेचेत्त्वापितथैवावस्थाभविष्यतीतियस्मादेवंतस्मादित्याह तस्मादिति २५ २६ २७
२८ २९ ३० ध्र ध्र ध्र

३१ ३२ उपचयंवृद्धिं ३३ एकस्मिन्निति कस्मिंश्चित्समयेविदल्लंमंत्रिणंमुनिपुत्रोहास्यवशात्क्लीबेतिनाम्नामंत्रयत् ३४ सुदर्शनस्त्विति तद्वाक्यंसुदर्शनः श्रुत्वातस्यनाम्नआद्यमेकाक्षरंप्रारब्धवशादनुस्वारायुतमनुस्वारेणविहीनमपिचित्तेदधारस्थापयामास पुनःपुनःप्रोवाचजजापचेत्यर्थः तेनबकारेउक्तेप्युपांशू-



व्यासउवाच तच्छ्रुत्वावचनंतस्ययुधाजिन्नृपसत्तमः प्रणम्यतंमुनिंमूर्ध्नाजगामस्वपुरंनृपः ३१ मनोरमापिस्वस्थाभूदाश्रमेतत्रसंस्थिता पालयामासपुत्रंतंसुदर्शनमृतव्रतं ३२ दिनेदिनेकुमारोसौजगामोपचयंततः मुनिबालगतःक्रीडन्निर्भयःसर्वतःशुभः ३३ एकस्मिन्समयेतत्रविदल्लंसमुपागतं क्लीबेतिमुनिपुत्रस्तमामंत्रयत्तदंतिके ३४ सुदर्शनस्तुतच्छ्रुत्वादधारैकाक्षरंस्फुटं अनुस्वारायुतंतच्चप्रोवाचातिपुनःपुनः ३५ बीजंवैकामराजाख्यंगृहीतंमनसातदा जजापबालकोत्यर्थंधृत्वाचेतसिसादरं ३६ भावियोगान्महाराजकामराजाख्यमद्भुतं स्वभावेनैवतेनेत्थंगृहीतंबालकेनवै ३७ तदासोपंचमेवर्षेप्राप्यमंत्रमनुत्तमं ऋषिच्छंदोविहीनंचध्यानंन्यासविवर्जितं ३८ प्रजपन्मनसानित्यंक्रीडत्यपिस्वपित्यपि विसस्मारनतंमंत्रंज्ञात्वासारमितिस्वयं ३९ वर्षेचैकादशेप्राप्तेकुमारोसौनृपात्मजः मुनिनाचोपनीतोथवेदमध्यापितस्तथा ४० धनुर्वेदंतथासांगंनीतिशास्त्रंविधानतः अभ्यस्तासकलाविद्यातेनमंत्रबलादिव ४१ कदाचित्सोपिप्रत्यक्षंदेवीरूपंददर्शह रक्तांबरंरक्तवर्णरक्तसर्वांगभूषणं ४२ गरुडेवाहनेसंस्थांवैष्णवींशक्तिमद्भुतां दृष्ट्वाप्रसन्नवदनःसबभूवनृपात्मजः ४३ वनेतस्मिन्स्थितःसोथसर्वविद्यार्थतत्त्ववित् मातरंसेवमानस्तुविजहारनदीतटे ४४ शरासनंचसंप्राप्तंविशिखाश्चशिलाशिताः तूणीरंकवचंतस्मैदत्तंचांबिकयावने ४५ एतस्मिन्समयेपुत्रीकाशीराजस्यसुप्रिया नाम्नाशशिकलादिव्यासर्वलक्षणसंयुता ४६

स्वारणाद्बकारमश्रुत्वाक्लीत्येवनामचमत्कृतमस्तीत्यभिप्रायेणजजापेत्यर्थः ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६

४७ ४८ ४९ वरंवरययत्तवेष्टंतद्वरयप्रार्थय अथचममभक्तः सुदर्शनिस्तवकामप्रदः पतिरस्तुमेवचनात् ५१ ५२ ५३
५४ ५५ ५६ ५७ ५८ ५९ ६०

शुश्रावनृपपुत्रंतंवनस्थंचसुदर्शनं सर्वलक्षणसंपन्नंशूरंकाममिवापरं ४७ बंदीजनमुखाच्छ्रुत्वाराजपुत्रंसुसंमतंच
कर्मेमनसातंवैवरंवरयितुंधिया ४८ स्वप्नेतस्याःसमागम्यजगदंबानिशांतरे उवाचवचनंचेदंसमाश्वास्यसुसंस्थिता
४९ वरंवरयसुश्रोणिममभक्तःसुदर्शनः सर्वकामप्रदस्तेस्तुवचनान्ममभामिनि ५० एवंशशिकलादृष्ट्वास्वप्नेरूपंमनो
हरं अंबायावचनंस्मृत्वाजहर्षभृशमानिनी ५१ उत्थितासामुदायुक्तापृष्टामात्रापुनःपुनः प्रमोदकारणंबालानोवा-
चातित्रपान्विता ५२ जहासमुदमापन्नास्मृत्वास्वप्नंमुहुर्मुहुः सखीप्राहतदान्यांवैस्वप्नवृत्तंसविस्तरं ५३ कदाचि
त्साविहारार्थमवापोपवनंशुभं सखीयुक्ताविशालाक्षीचंपकैरुपशोभितं ५४ पुष्पाणिचिन्वतीबालाचंपकाधः
स्थिताबला अपश्यद्ब्राह्मणंमार्गेआगच्छंतंत्वरान्वितं ५५ तंप्रणम्यद्विजंश्यामाबभाषेमधुरंवचः कुतोदेशान्म
हाभागकृतमागमनंत्वया ५६ द्विजउवाच भारद्वाजाश्रमाद्बालेनूनमागमनंमम जातंवैकार्ययोगेनकिंपृच्छसि
वदस्वमे ५७ शशिकलोवाच तत्राश्रमेमहाभागवर्णनीयंकिमस्तिवै लोकातिगंविशेषेणप्रेक्षणीयतमंकिल ५८
ब्राह्मणउवाच ध्रुवसंधिसुतःश्रीमानास्तेसुदर्शनोनृपः यथार्थनामासुश्रोणिवर्ततेपुरुषोत्तमः ५९ तस्यलोचन-
मत्यंतंनिष्फलंप्रतिभातिमे येनदृष्टोनवामोरुकुमारस्तुसुदर्शनः ६० एकत्रनिहिताधात्रागुणाःसर्वेसिसृक्षुणा
गुणानामाकरंद्रष्टुंमन्येतेनैवकौतुकात् ६१

कौतुकात्सर्वगुणानामेकमाकरंद्रष्टुंतेनैवविधात्रैकस्मिन्सुदर्शने सर्वे
गुणानिहिताइत्यहंमन्ये ६१ छ छ छ छ छ छ छ छ छ

६२ इतिश्रीदेवीभागवततिलके तृ॰ १७ पंचाधिकैश्चपंचाशत्पद्यैरथनिजांसुतां विवाहयितुमुद्युक्तः काशीराजइतीर्यते १ इत्थंशशिकलांसुदर्शनस-
माचारं ब्राह्मणउक्त्वागतवानित्याह श्रुत्वेति १ २ यच्छ्रवणादनुदेहेविकारउत्पन्नइतिसखींप्राहेत्यन्वयः ३ अज्ञातंरसविज्ञानंयस्यएतस्यश्रृंगाररस
सविज्ञानंलोकैर्नज्ञातमित्यर्थः अधुनैवसंप्राप्तयौवनइत्यर्थः ४ ५ ६ शंकल्याणंहर्म्येगृहेनवनेपिनदीर्घिकायांवाप्यामपिन ७ प्रीणयं

तवयोग्यःकुमारोसौभर्त्ताभवितुमर्हति योगोयंविहितोप्यासीन्मणिकांचनयोरिव ६२ इति॰दे॰ भा॰म॰तृ॰स॰ १७
व्यासउवाच श्रुत्वातद्वचनंश्यामाप्रेमयुक्ताबभूवह प्रतस्थेब्राह्मणस्तस्मात्स्थानादुक्त्वासमाहितः १ सानुपूर्वानुरागा
द्वैमग्नाप्रेम्णातिचंचला कामबाणहतेवासगतेतस्मिन्द्विजोत्तमे २ अथकामार्दिताप्राहसखींछंदोनुवर्तिनीं विकारश्च
समुत्पन्नोदेहेयच्छ्रवणादनु ३ अज्ञातरसविज्ञानंकुमारंकुलसंभवं दुनोतिमदनःपापःकिंकरोमिक्वयामिच ४ स्व-
प्नेष्ठुवामयादृष्टःपंचबाणइवापरः तपतेमेमनोत्यर्थंविरहाकुलितंमृदु ५ चंदनंदेहलग्नंमेविषवद्भातिभामिनि स्त्रगियं
सर्पवच्चैवचंद्रपादाश्चवन्हिवत् ६ नचहर्म्येवनेशंमेदीर्घिकायांनपर्वते नदिवाननिशायांवानसुखंसुखसाधनैः ७ नशय्या
नचतांबूलंनगीतंनचवादनं प्रीणयंतिमनोमेद्यनतृप्तेममलोचने ८ प्रयाम्यद्यवनेतत्रयत्रासौवर्ततेशठः भीतास्मिकु
ललज्जायाःपरतंत्रापितुस्तथा ९ स्वयंवरंपितामेद्यनकरोतिकरोमिकिं दास्यामिराजपुत्रायकामंसुदर्शनायवै+ १०
संत्यन्येपृथिवीपालाःशतशःसंभृतर्द्धयः रमणीयानमेतेद्यराज्यहीनोप्यसौमतः ११

तियेतेऽपचाराइत्यर्थः ८ शठइत्यनेनातिप्रेमाविरहाकुलचित्तत्वंसूचितं प्रयामियास्यामि परंतुकुललज्जायाःसकाशाद्भीतास्मितथापिपितुः परतं-
त्रास्मिततोनमयागंतुंशक्यतइतिभावः ९ यद्यद्यमेसुदर्शनेनैवविवाहंकरिष्यतितर्हिसुदर्शनायराजपुत्रायकामंमैथुनंदास्यामि १० संत्यन्येइ-
तिनमेतेमताइतिशेषः ११ ७ ७ ७ ७ ७ ७ ७
+ दास्यस्मिराजपुत्रस्यकामंसुदर्शनस्यवै इतिपाठःसमीचीनः

तस्याश्चित्तेसुसंस्थितइति१२ इयंयाचित्तस्थैवंस्थितिः सावाग्बीजस्यजपंकरोतियाशशिकलातज्जपाद्यासिद्धिस्तस्याः सकाशादेवोपस्थिता १३

व्यासउवाच एकाकीनिर्धनश्चैवबलहीनःसुदर्शनः वनवासीफलाहारस्तस्याश्चित्तेसुसंस्थितः १२ वाग्बीजस्यजपा त्सिद्धिस्तस्याएषाप्युप स्थिता सोपिध्यानपरोत्यंतंजजापमंत्रमुत्तमं १३ स्वप्नेपश्यत्यसौदेवींविष्णुमायामखंडितां विश्व मातरमव्यक्तांसर्वसंपत्करांबिकां १४ शृंगवेरपुराध्यक्षोनिषादःसमुपेत्यतं ददौरथवरंतस्मैसर्वोपस्करसंयुतं १५ चतुर्भि स्तुरगैर्युक्तंपताकावरमंडितं जैत्रंराजसुतंज्ञात्वाददौचोपायनंतदा १६ सोपिजग्राहतंप्रीत्यामित्रत्वेनसुसंस्थितं वन्यैर्मूल फलैःसम्यगर्चयामासशंबरं १७ कृतातथ्येगतेतस्मिन्निषादाधिपतौतदा मुनयःप्रीतियुक्तास्तेतमूचुस्तापसामिथः १८ राजपुत्रध्रुवंराज्यंप्राप्स्यसित्वंचसर्वथा स्वल्पैरहोभिरव्यग्रःप्रतापान्नात्रसंशयः १९ प्रसन्नातेंबिकादेवीवरदाविश्वमो हिनी सहायस्तुसुसंपन्नोनचिंतांकुरुसुव्रत २० मनोरमांतथोचुस्तेमुनयःसंशितव्रताः पुत्रस्तेद्यधराधीशोभविष्यतिशुचि स्मिते २१ सातानुवाचतन्वंगीवचनंवोस्तुसत्फलं दासोयंभवतांविप्राः किंचित्रंसदुपासनात् २२ नसैन्यंसचिवाःकोशोनसहायश्चकश्चन केनयोगेनपुत्रोमेराज्यंप्राप्तुमिहार्हति २३ आशीर्वादैश्चवोनूनंपुत्रोयंमेमहीपतिः भविष्यतिन संदेहोभवंतोमंत्रवित्तमाः २४ व्यासउवाच रथारूढःसमेधावीयत्रयातिसुदर्शनः अक्षौहिणीसमावृतइवभातिसते- जसा २५ प्रतापोमंत्रबीजस्यनान्यःकश्चनभूपते एवंवैजपतस्तस्यप्रीतियुक्तस्यसर्वथा २६

१४ १५ जैत्रंजयकारिणं १६ तंरथमुपायनभूतंजग्राह मित्रत्वेनस्थितंशंबरंनिषादमर्चयामास १७ तंराजपुत्रं १८ १९ २० २१ २२ २३ अन्यत्साधनंमत्पुत्रस्यराज्यप्राप्तौनदृश्यतेभवतामाशीर्वादैरेवकेवलंभवेत् २४ रथारूढइति एकएवसन्नक्षौहिणीसमावृतइवभाति २५ कुत एवमितिचेन्मंत्रमहिमायमित्याह प्रतापइति एवंवैएवंफलजातमित्यर्थः २६ ७ ७ ७ ७ ७

गुरोर्मंत्रमप्राप्यजपत एवंसिद्धिरनुभूतायस्तुसद्गुरोर्बीजंकामराजाख्यमद्भुतंसंप्राप्यजपेत्ससर्वान्कामानवाप्नुयादित्याह संप्राप्येति २७ प्रसंगा
ज्जनमेजयायश्रीदेवीमहिमानमनुवदतिव्यासः नतदस्तीति शिवायाःसकाशादित्यर्थः २८ २९ ३० बुद्धिःकीर्तिरिति इत्यादिरूपैःसर्वेषांकल्या
णकर्त्री प्रत्यक्षंस्पष्टमेवभासते ३१ ३२ ३३ ३४ सुदर्शनेनेति तस्मात्तस्यकथमेवंफलंनस्यादित्यभिप्रायः ३५ ब्रह्मेति ब्रह्मरूपिण्याः संविदए-

संप्राप्यसद्गुरोर्बीजंकामराजाख्यमद्भुतं जपेद्यस्तुशुचिःशांतःसर्वान्कामानवाप्नुयात् २७ नतदस्तिपृथिव्यांवादिविवा-
पिसुदुर्लभं प्रसन्नायाःशिवायाश्चयदप्राप्यंनृपोत्तम २८ तेमंदास्तेऽतिदुर्भाग्यारोगैस्तेसमभिद्रुताः येषांचित्तेनवि-
श्वासोभवेदंबार्चनादिषु २९ यामातासर्वदेवानांयुगादौपरिकीर्तिता आदिमातेतिविख्यातानाम्नातेनकुरूद्वह ३० बु-
द्धिःकीर्तिर्धृतिर्लक्ष्मीःशक्तिःश्रद्धामतिःस्मृतिः सर्वेषांप्राणिनांसावैप्रत्यक्षंवैविभासते ३१ नजानंतिनरायेवैमोहितामाय
याकिल नभजंतिकुतर्कज्ञाद्देवींविश्वेश्वरींशिवां ३२ ब्रह्माविष्णुस्तथाशंभुर्वासवोवरुणोयमः वायुरग्निःकुबेरश्चत्व
ष्टापूषाश्विनौभगः ३३ आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः सर्वेध्यायंतितांदेवींसृष्टिस्थित्यंतकारिणीं ३४ को
नसेवेतविद्वान्वैतांशक्तिंपरमात्मिकां सुदर्शनेनसाज्ञातादेवीसर्वार्थदाशिवा ३५ ब्रह्मैवसातिदुःष्प्रापाविद्याविद्यास्व-
रूपिणी योगगम्यापराशक्तिर्मुमुक्षूणांचवल्लभा ३६ परमात्मस्वरूपंकोवेत्तुमर्हतितांविना यासृष्टिंत्रिविधांकृत्वा
दर्शयत्यखिलात्मने ३७

वदेवीपदवाच्यत्वमितिभावः तथाचश्रुतिः सर्वेवैदेवादेवीमुपतस्थुःकासित्वंमहादेवीसाब्रवीदहंब्रह्मरू
पिणीमत्तःप्रकृतिपुरुषात्मकंजगदितिमुमुक्षूणांचवल्लभेति मुमुक्षवोहिसर्वंविहायमहाप्रेम्णांस्वात्मरूपांसंविदमेवपरिशीलयंतितस्मात्तेषांप्रियेत्यर्थः
३६ मायाविशिष्टंब्रह्मैवदेवीतत्रब्रह्मभागरूपेणवर्णनंकृत्वामायाभागरूपेणापिवर्णयतिपरमात्मस्वरूपमिति सर्वपुराणतंत्रादिषुवेदेषुचेत्थमेव
रीतिः देव्यामायाविशिष्टब्रह्मरूपत्वात्क्वचिन्मायोपसर्जनब्रह्मरूपत्वेनवर्णनंक्वचिद्ब्रह्मोपसर्जनमायारूपत्वेनवर्णनमितीदंचास्माभिरसकृदुक्तंनवि-

स्मर्त्तव्यं ३७ ३८ ३९ ४० ४१ ४२ शौर्यशुल्कश्चशौर्यमेवशुल्कंयस्मिन्सइत्यर्थः यस्यशौर्येवर्ततेतेनसर्वान्राज्ञोजित्वाकन्याहरणीयेति ४३

सुदर्शनस्तुतांदेवींमनसापरिचिंतयन् राज्यलाभात्परंप्राप्यसुखंवैकाननेस्थितः ३८ सापिचंद्रकलात्यर्थंकामबा-
णप्रपीडिता नानोपचारैरनिशंदधारदुःखितंवपुः ३९ तावत्तस्याःपिताज्ञात्वाकन्यांपुत्रवरार्थिनीं सुबाहुःकारयामा-
सस्वयंवरमतंद्रितः ४० स्वयंवरस्तुत्रिविधोविद्वद्भिःपरिकीर्तितः राज्ञांविवाहयोग्योवैनान्येषांकथितःकिल ४१ इ-
च्छास्वयंवरश्चैकोद्वितीयश्चपणाभिधः यथारामेणभग्नंवैत्र्यंबकस्यशरासनं ४२ तृतीयःशौर्यशुल्कश्चशूराणांप-
रिकीर्तितः इच्छास्वयंवरंतत्रचकारनृपसत्तमः ४३ शिल्पिभिःकारितामंचाःशुभैरास्तरणैर्युताः तताश्चविवि-
धाकाराःसुक्लृप्ताःसभ्यमंडपाः ४४ एवंकृतेतिसंभारेविवाहार्थंसुविस्तरे सखींशशिकलाप्राहदुःखिताचारुलोच
ना ४५ इदंमेमातरंब्रूहित्वमेकांतेवचोमम मयावृतःपतिश्चित्तेध्रुवसंधिसुतःशुभः ४६ नान्यंवरंवरिष्यामि
तमृतेवैसुदर्शनं समेभर्त्तानृपसुतोभगवत्याप्रतिष्ठितः ४७ व्यासउवाच इत्युक्तासासखीगत्वामातरंप्राहसत्व
रा वैदर्भींविजनेवाक्यंमधुरंमंजुभाषिणी ४८ पुत्रीतेदुःखिताप्राहसाध्वित्वांमन्मुखेनयत् शृणुत्वंकुरुक-
ल्याणितद्धितंत्वरिताधुना ४९ भारद्वाजाश्रमेपुण्येध्रुवसंधिसुतोस्तियः समेभर्त्तावृतश्चित्तेनान्यंभूपंवृणोम्य
हं ५० व्यासउवाच राज्ञीतद्वचनंश्रुत्वास्वपतौगृहमागते निवेदयामासतदापुत्रीवाक्यंयथातथं ५१ तच्छ्रु
त्वावचनंराजाविस्मितःप्रहसन्मुहुः भार्यामुवाचवैदर्भींसुबाहुस्तुऋतंवचः ५२ सुभ्रुजानासिबालोसौराज्या-
न्निष्कासितोवने एकाकीसहमात्रावैवसतेनिर्जनेवने ५३ ॐ ॐ ॐ

४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ सूनृतमित्यपिपाठः ५२ ५३

५४ ब्रूहीति अस्मिन्स्वयंवरेस्थितिमंतःप्रतिष्ठिताराजानआगमिष्यंतितस्मादेताद्दशंसर्वेषांविप्रियंवाक्यंकदापित्वयानवक्तव्यमितिशेषः इतिपु-
त्रींब्रूहीति ५५ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेऽष्टादशोऽध्यायः १८ द्विषष्टिश्लोकवर्यैस्तुसुदर्शनयुतान्नृपाः स्वयंवरेसमाजग्मुरिति

तत्कृतेनिहतोराजावीरसेनोयुधाजिता सकथंनिर्धनोभर्त्तायोग्यःस्याच्चारुलोचने ५४ ब्रूहिपुत्रींततोवाक्यंकदाचि
दपिविप्रियं आगमिष्यंतिराजानःस्थितिमंतःस्वयंवरे ५५ इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेऽष्टादशोऽ
ध्यायः १८ व्यासउवाच भर्त्रासाभिहिताबालांपुत्रींकृत्वांकसंस्थितां उवाचवचनंश्लक्ष्णंसमाश्वास्यशुचिस्मि
तां १ किंवृथासुदतित्वंहिविप्रियंममभाषसे पितातेदुःखमाप्नोतिवाक्येनानेनसुव्रते २ सुदर्शनोतिदुर्भाग्योराज्यभ्र
ष्टोनिराश्रयः बलकोशविहीनश्चपरित्यक्तस्तुबांधवैः ३ मात्रासहवनंप्राप्तःफलमूलाशनःकृशः नतेयोग्योवरोयंवै
वनवासीचदुर्भगः ४ राजपुत्राःकृतप्रज्ञारूपवंतःसुसंमताः तवार्हाःपुत्रिसंत्यन्येराजचिन्हैरलंकृताः ५ भ्रा-
तास्यवर्त्ततेकांतःसराज्यंकोसलेषुवै करोतिरूपसंपन्नःसर्वलक्षणसंयुतः ६ अन्यच्चकारणंसुभ्रुशृणुयच्चम
याश्रुतं युधाजित्सततंतस्यवधकामोस्तिभूमिपः ७ दौहित्रंस्थापितस्तेनराज्येकृत्वातिसंगरं वीरसेनंनृपंहत्वासं
मंत्र्यसचिवैःसह ८ भारद्वाजाश्रमंप्राप्तंहंतुकामःसुदर्शनं मुनिनावारितःपश्चाज्जगामनिजमंदिरं ९ शशिकलोवा
च मातर्ममेप्सितःकामेवनस्थोपिनृपात्मजः शर्यातिवचनेनैवसुकन्याचपतिव्रता च्यवनंचयथाप्राप्यपतिशुश्रू
षणेरता १०

सम्यक्कथोच्यते १ भर्त्रेति साराजपत्नी भर्त्राराज्ञेत्यर्थः १ २ ३ ४ राजचिन्हैश्छत्रचामरादि-
भिः ५ ६ ७ अतिसंगरमतिसंग्रामं ८ ९ एवंमातुर्वचनंवाक्यंसुदर्शनप्रत्याख्यानाभिप्रायकंश्रुत्वाशशिकलोवाच मातर्ममेप्सि
तइति कामेमन्मनोरथविषये तत्रदृष्टांतमाह शर्यातीति राज्ञोवचनेनसुकन्यानाम्नीशर्यातिसुताच्यवनंवृद्धंपतिंप्राप्यपतिशुश्रूषणेरताऽन-

थैवममराज्यादिलोभोनास्तिकिंतुभर्त्तृशुश्रूषणमेवाभिलषितंतत्तुममसुदर्शनेपत्यावस्त्येवेतिभावः १० भर्तृशुश्रूषणमेवस्त्रीणांपरोधर्मइत्याह भर्त्रिति ११ किंचसुदर्शनविषयेममभगवत्याआज्ञाप्यस्तीत्याह भगवत्येति समादिष्टंतंसुदर्शनंवरंपतिमृतेइत्यन्वयः संश्रयामिसंश्रयिष्यामि

भर्तृशुश्रूषणंस्त्रीणांस्वर्गदंमोक्षदंतथा अकैतवकृतंनूनंसुखदंभवतिस्त्रियाः ११ भगवत्यासमादिष्टंस्वप्नेवरमनुत्तमं तमृतेहंकथंचान्यंसंश्रयामिनृपात्मजं १२ मच्चित्तभित्तौलिखितोभगवत्यासुदर्शनः तंविहायप्रियंकांतंकरिष्येहंनचापरं १३ व्यासउवाच प्रत्यादिष्टाथवैदर्भीतयाबहुनिदर्शनैः भर्त्तारंसर्वमाचष्टपुत्र्योक्तंवचनंभृशं १४ विवाहस्यादिनादर्वागागातंश्रुतसमन्वितं द्विजंशशिकलातत्रप्रेषयामाससत्वरं १५ यथानवेदमेतातोतथागच्छसुदर्शनं भारद्वाजाश्रमेब्रूहिमद्वाक्यात्तरसाविभो १६ पित्रामेसंभृतःकामंमदर्थेनस्वयंवरः आगमिष्यंतिराजानोबलयुक्ताह्यनेकशः १७ मयात्वंवैधृतश्चित्तेसर्वथाप्रीतिपूर्वकं भगवत्यासमादिष्टःस्वप्नेममसुरोपम १८ विषमग्निंहुताशंवाप्रपतामिप्रदीपिते वरयेत्वदृतेनान्यंपितृभ्यांप्रेरितापिवा १९ मनसाकर्मणावाचासंवृतस्त्वंमयावरः भगवत्याःप्रसादेनशर्मावाभ्यांभविष्यति २० आगंतव्यंत्वयात्रैवदैवंकृत्वापरंबलं यदधीनंजगत्सर्वंवर्ततेसचराचरं २१ भगवत्यायदादिष्टंनतन्मिथ्याभविष्यति यद्वशेदेवताःसर्वावर्तंतेशंकरादयः २२ वक्तव्योसौत्वयाब्रह्मन्नेकांतेवैनृपात्मजः यथाभवतिमेकार्यंतत्कर्तव्यंत्वयानघ २३ इत्युक्त्वादक्षिणांदत्वामुनिर्व्यापारितस्तया गत्वासर्वंनिवेद्याशुतत्रप्रत्यागतोद्विजः२४

१२ १३ प्रत्यादिष्टाप्रत्याख्याता १४ अस्मिन्समयेशशिकलायत्कृतवतीतदाह विवाहस्येति १५ १६ मदर्थेनमत्प्रयोजनेनस्वयंवरःसंभृतःसंपादितः १७ हेसुरोपमत्वंभगवत्यास्वप्नेसमादिष्टोदर्शितआज्ञप्तोमयाचित्तेधृतइत्यन्वयः १८ १९ २० २१ २२ वक्तव्योसाविति हेब्रह्मन्मद्वाक्यान्नृपात्मजःसुदर्शनस्त्वयैवंवक्तव्यः २३ तत्रशशिकलायद्देशेतत्रप्रत्यागतः २४ ७ ७ ७ ७ ७

मुनिनाभारद्वाजेनप्रेरितोगमनेनिश्चयंचकार २५ २६ किंविचिंत्येति किमाश्रयंविचिंत्यस्वयंवरेगच्छसीत्यन्वयः २७ २८ २९ ३० आदेशादा-
ज्ञया ३१ ३२ ३३ अग्रतोंबिकापातु तेनवाग्रतोऽग्रदेशेस्थितांबिकात्वांपात्वित्यर्थः ३४ उत्तरत्राप्येवमेवार्थः ३५ ३६ गिरिसंबंधिनोयेदुर्गा

सुदर्शनस्तुतज्ज्ञात्वानिश्चयंगमनेतदा चकारमुनिनानेनप्रेरितःपरमादरात् २५ व्यासउवाच गमनायोद्यतंपुत्रंतमुवाच
मनोरमा वेपमानातिदुःखार्ताजातत्रासाश्रुलोचना २६ कुत्रगच्छसितत्राद्यसमाजेभूभृतांकिल एकाकीकृतवैरश्च
किंविचिंत्यस्वयंवरे २७ युधाजिद्धंतुकामस्त्वांसमेष्यातिमहीपतिः नतेन्योस्तिसहायश्चतस्मान्माव्रजपुत्रक २८ ए-
कपुत्रातिदीनास्मितवाधारानिराश्रया नार्हसित्वंमहाभागनिराशांकर्त्तुमद्यमां २९ पितामेनिहतोयेनसोपितत्रागतोनृपः
एकाकिनंगतंतत्रयुधाजित्त्वांहनिष्यति ३० सुदर्शनउवाच भवितव्यंभवत्येवनात्रकार्याविचारणा आदेशाच्चज
गन्मातुर्गच्छाम्यद्यस्वयंवरे ३१ माशोकंकुरुकल्याणिक्षत्रियासिवरानने नबिभेमिप्रसादेनभगवत्यानिरंतरं ३२
व्यासउवाच इत्युक्त्वारथमारुह्यगंतुकामंसुदर्शनं दृष्ट्वामनोरमापुत्रमाशीर्भिश्चाभ्यमोदयत् ३३ अग्रतस्तेंबि-
कापातुपार्वतीपातुपृष्ठतः पार्वतीपार्श्वयोःपातुशिवासर्वत्रसांप्रतं ३४ वाराहीविषमेमार्गेदुर्गादुर्गेषुकर्हिचित् कालि
काकलहेघोरेपातुत्वांपरमेश्वरी ३५ मंडपेतत्रमातंगीतथासौम्यास्वयंवरे भवानीभूपमध्येतुपातुत्वांभवमोचनी ३६
गिरिजागिरिदुर्गेषुचामुंडाचत्वरेषुच कामगाकाननेष्वेवंरक्षतुत्वांसनातनी ३७ विवादेवैष्णवीशक्तिरवतात्त्वांरघूद्वह
भैरवीचरणेसौम्यशत्रूणांवैसमागमे ३८ सर्वदासर्वदेशेषुपातुत्वांभुवनेश्वरी महामायाजगद्धात्रीसच्चिदानंदरूपिणी
३९ व्यासउवाच इत्युक्त्वातंतदामातावेपमानाभयाकुला उवाचाहंत्वयासार्द्धमागमिष्यामिसर्वथा ४०

स्तेषुपूर्वोक्तादुर्गास्तुस्थलदुर्गाः ३७ ३८ ३९ ४०

४१ ४२ राघवः रघुकुलोत्पन्नः सुदर्शनः ४३ ४४ दौहित्रेणशत्रुजिता ४५ ४६ कामरूदेशंपातीतिकामरूपः ४७ ४८ ४९ ५०
किन्नुसांप्रतमिति युधाजित्प्रमुखास्त्रिषष्ट्यक्षौहिणीसहिताःप्राणहारकाः शत्रवःसर्वेसमागताः अस्मिन्समाजेएकाकिनआगमनंकिन्नुसांप्रतं

निमिषार्द्धंविनात्वांवैनाहंस्थातुमिहोत्सहे सहैवनयमांवत्सयत्रतेगमने मतिः ४१ इत्युक्त्वानिःसृतामाताधात्रेयीसंयुतातदा विप्रैर्दत्ताशिषःसर्वेनिर्ययुर्हर्षसंयुताः ४२ वाराणस्यांततःप्राप्तोरथेनैकेनराघवः ज्ञातःसुबाहुनातत्रपूजितश्चार्हणादिभिः ४३ निवेशार्थंगृहंदत्तमन्नपानादिकंतथा सेवकंसमनुज्ञाप्यपरिचर्यार्थमेवच ४४ मिलितास्त्वथराजानोनानादेशाधिपाःकिल युधाजिदपिसंप्राप्तोदौहित्रेणसमन्वितः ४५ करूषाधिपतिश्चैवतथामद्रेश्वरोनृपः सिंधुराजस्तथावीरोयोन्द्धामाहिष्मतीपतिः ४६ पांचालःपर्वतीयश्चकामरूपोतिवीर्यवान् कार्णाटश्चोलदेशीयोवैदर्भश्चमहाबलः ४७ अक्षौहिणीत्रिषष्टिश्चमिलितासंख्ययातदा वेष्टितानगरीसातुसैन्यैःसर्वत्रसंस्थितैः ४८ एतेचान्येचबहवःस्वयंवरदिदृक्षया मिलितास्तत्रराजानोवरवारणसंयुताः ४९ अन्योन्यनृपपुत्रास्तइत्यूचुर्मिलितास्तदा सुदर्शनोनृपसुतोत्रागतोस्तिनिराकुलः ५० एकाकीरथमारुह्यमात्रासहमहामतिः विवाहार्थमिहायातःकाकुत्स्थःकिन्नुसांप्रतं ५१ एतान्राजसुतांस्त्यक्त्वाससैन्यान्सायुधानथ किमेनंराजपुत्रीसावरिष्यतिमहाभुजं ५२ युधाजिदथराजेंशस्तानुवाचमहीपतीन् अहमेनंहनिष्यामिकन्यार्थेनात्रसंशयः ५३ केरलाधिपतिःप्राहतंतदानीतिसत्तमः नात्रयुद्धंप्रकर्तव्यंराजन्निच्छास्वयंवरे ५४ बलेनहरणंनास्तिनात्रशुल्कस्वयंवरः कन्येच्छयात्रवरणंविवादःकीदृशस्त्विह ५५

योग्यंनयोग्यमितितात्पर्यं ५१ ५२ ५३ नीतिसत्तमोनीतिज्ञः इच्छास्वयंवरेकन्यायायस्मिन्निच्छाभवतिसतयावरणीयइतिमर्यादायाःसत्त्वान्नात्रयुद्धंकर्तव्यमित्यर्थः ५४ बलेनेति अस्मिन्निच्छास्वयंवरेबलेनहरणंनास्ति नतुशौर्यशुल्कएववर्त्ततेनात्रशुल्कोस्ति किंतर्हितत्राह कन्ये-

च्छयेति ५५ किंचास्यापराधाभावेनकथमेनंहनिष्यसीत्याह अन्यायेनेति ५६ ५७ जगत्पतिःपरमेश्वरोस्त्येवशास्ताकश्चिद्दिलक्षणः ५८ ५९
कथंतं नवरिष्यतीति यदिकन्यायाइच्छास्तितर्हितंकथंनवरिष्यति यदिनास्तितर्हिनवविवादेनापिकिंफलं कन्येच्छायाःस्वतंत्रत्वात् ६० कंवासां
प्रतंस्वीकरिष्यतितेंस्वीकरोतु ६१ ६२ इ॰देवीभागवततिलके तृतीयस्कंधेएकोनविंशोध्यायः १९ एकसप्ततिपद्यैस्तुराज्ञांतत्र परस्परं संवा

अन्यायेनत्वयापूर्वमसौराज्यात्प्रवासितः दौहित्रायार्पितंराज्यंबलवन्नृपसत्तम ५६ काकुत्स्थोयंमहाभागकोसलाधिपतेःसु-
तः कथमेनंराजपुत्रंहनिष्यसिनिरागसं ५७ लप्स्यसेतत्फलंनूनमनयस्यनृपोत्तम शास्तास्तिकश्चिदायुष्मान्जगतोस्य
जगत्पतिः ५८ धर्मोजयतिनाधर्मःसत्यंजयतिनानृतं माऽनयंकुरुराजेंद्रत्यजपापमतिंकिल ५९ दौहित्रस्तवसंप्राप्तःसो-
पिरूपसमन्वितः राज्ययुक्तस्तथाश्रीमान्कथंतंनवरिष्यति ६० अन्येराजसुताःकामंवर्ततेबलवत्तराः कन्यास्वयंवरेकन्या
स्वीकरिष्यतिसांप्रतं ६१ वृतेतथाविवादःकःप्रवदंतुमहीभुजः परस्परंविरोधोत्रनकर्तव्योविजानता ६२ इतिश्रीदेवीभा
गवतेमहापुराणेतृतीयस्कंधेएकोनविंशोध्यायः १९ व्यासउवाच इतिवादिनिभूपालेकेरलाधिपतौतदा प्रत्युवाचम-
हाभागयुधाजिदपिपार्थिवः १ नीतिरित्थंमहीपालयद्ब्रवीतिभवानिह समाजेपार्थिवानांवैसत्यवाग्विजितेंद्रियः २ यो
ग्येषुवर्तमानेषुकन्यारत्नंकुलोद्वह अयोग्योर्हतिभूपालोन्यायोयंतवरोचते ३ भागंसिंहस्यगोमायुर्भोक्तुमर्हतिवाकथं
तथासुदर्शनोयंवैकन्यारत्नंकिमर्हति ४ बलंवेदोहिविप्राणांभूभुजांचापजंबलं किमन्याय्यंमहाराजब्रवीम्यहमिहाधुना५

दंतुविनिर्वर्त्यकन्याबोधउदीर्यते १ केरलाधिपतिवाक्यानंतरंयुधाजिद्वाक्यमाहेत्याह इतिवादिनीति महाभागहेजनमेजय १ नीतिरित्थमिति इयं
नीतिःकिमित्यर्थः २ अयंन्यायस्तवैवरोचते नान्यस्येत्याह ३ असांप्रतंतवमतमित्याह भागमिति सिंहस्यभागंगोमायुःशृगालःकथंभोक्तुमर्हति
नकथमपीत्यर्थः ४ ५ ७ ७ ७ ७ ७ ७

यदुक्तमिच्छास्वयंवरइतितत्राह बलंशुल्कमिति निर्बलराजानांसस्वयंवरवीर्यवतांराज्ञांतुबलमेवशुल्कंपरिकीर्तितं शुल्कंवरादिदेयेस्याद्दरादर्थग्रहेस्त्रि-
यामितिमेदिनीकोशाच्छुल्कंवरादर्थग्रहरूपंपरिकीर्तितं नान्यत् तस्यशुल्कविवाहरूपस्यस्पष्टरूपमाह बलवानेवेति ६ यतोराज्ञांबलमेवशुल्कंतस्मात्कन्यां
बलवानेवगृह्णात्वबलस्तुकदाचनकदापिनगृह्णातितिपणंकृत्वात्रविवाहेनीतिर्ममाभिलषितोयंन्यायोविधीयतांक्रियतां अस्वीकारेदोषमाह अन्यथेति ७ ८
राजन्निति पणरूपापूर्वोक्ताराजभिर्निश्चितानीतिर्न्यायस्त्वयाकार्यात्रस्वयंवरेत्यस्मदभिलषितमस्तीत्यर्थः ९ नवयच्चिकीर्षितंतत्तुत्वमपिवदेत्याह किंतेइ

बलंशुल्कंयथाराज्ञांविवाहेपरिकीर्तितं बलवानेवगृह्णातुनाबलस्तुकदाचन ६ तस्मात्कन्यांपणंकृत्वानीतिरत्रविधीयतां
अन्यथाकलहःकामंभविष्यतिमहीभुजां ७ एवंविवादेसंवृत्तेराज्ञांतत्रपरस्परं आहूतस्तुसभामध्येसुबाहुर्नृपसत्तमः ८
समाहूयनृपाःसर्वेतमूचुस्तत्त्वदर्शिनः राजन्नीतिस्त्वयाकार्याविवाहेऽत्रसमाहिता ९ किंतेचिकीर्षितंराजंस्तद्ब्रूहिस्वसमा
हितः पुत्र्याःप्रदानंकस्मैतेरोचतेनृपचेतसि १० सुबाहुरुवाच पुत्र्यामेमनसाकामंवृतःकिलसुदर्शनः मयानिवारिता-
त्यर्थंनसाप्रत्येतिमेवचः ११ किंकरोमिसुतायामेनवशेवर्ततेमनः सुदर्शनस्तथैकाकीसंप्राप्तोऽस्तिनिराकुलः १२ व्या
सउवाच संपन्नभूभुजाःसर्वेसमाहूयसुदर्शनं ऊचुःसमागतंशांतमेकाकिनमनंद्गिताः १३ राजपुत्रमहाभागकेनाहूतोऽ
सिसुव्रत एकाकीयःसमायातःसमाजेभूभृतामिह १४ नवैसैन्यंनसचिवानकोशोनबृहद्बलं किमर्थंचसमायातस्तत्त्वंब्रू
हिमहामते १५ युद्धकामानृपतयोवर्ततेऽत्रसमागमे कन्यार्थंसैन्यसंपन्नाःकिंत्वंकर्तुमिहेच्छसि १६

ति त्वयापणस्तुनकृतोऽथविवाहार्थंप्रवृत्तोसि तस्मात्पुत्र्याःप्रदानंकस्मैतेरोचतेतद्वदेत्यर्थः १० कामंयथेष्टंसुदर्शनोवृत्तःप्रत्येतिस्वीकरोति ११ सुता
यामनोमेवशेनास्तीत्यर्थः तथायथातस्याःकन्यायाअभिप्रायस्तथैवसुदर्शनोप्यनाहूतोमयात्रप्राप्तः तेनजानामिनूनंकन्ययैवायमाहूतइति १२
सुबाहुवचनंश्रुत्वाकेनाहूतस्त्वंकिमर्थमत्रागतोसीत्यभिप्रायेणसुदर्शनंपप्रच्छेत्याह संपन्नभूभुजाइति शिष्टाभूभुजाइत्यर्थः १३ १४ १५ १६

१७ त्वयिसैन्यविहीनेदृष्टेसत्यस्माभिर्दयावशाद्याथातथ्यंमर्शआद्यजंतंयाथातथ्यविशिष्टंवाक्यंसत्यंवाक्यमुदाहृतमुक्तंतदुत्तरंगच्छाथवातिष्ठयथेष्टंस्यात्तथा कुर्वित्यर्थः १८ १९ केनाहूतःकिमर्थमागतोसीत्यस्योत्तरमाह अत्रेतिनकेनाप्याहूतःकिंतुभगवतीप्रेरणयैवस्वयंवरंद्रष्टुमागतोस्मीतिभावः २० किंत्वंकर्तुमि-

भ्रातातेसुबलःशूरःसंप्राप्तोऽस्तिजिघृक्षया युधाजिच्चमहाबाहुःसहायंकर्तुमागतः १७ गच्छवातिष्ठराजेंद्रयाथातथ्यमुदाहृतं त्वयिसैन्यविहीनेनयथेष्टं कुरुसुव्रत १८ सुदर्शनउवाच नबलंनसहायोमेनकोशोदुर्गसंश्रयः नमित्राणिनसौहार्दंननृपारक्षकामम १९ अत्रस्वयंवरंश्रुत्वाद्रष्टुकामइहागतः स्वप्नेदेव्याप्रेरितोऽस्मिभगवत्यानसंशयः २० नान्यच्चिकीर्षितंमेऽद्यमामाहजगदीश्वरी तयायद्विहितंतच्चभवितायनसंशयः २१ नशत्रुरस्तिसंसारेकोऽप्यत्रजगतीश्वराः सर्वत्रपश्यतामेऽद्यभवानींजगदंबिकां २२ यःकरिष्यतिशत्रुत्वंमयासहनृपात्मजाः शास्तातस्यमहाविद्यानाहंजानामिशत्रुतां २३ यद्भावितद्भविभवितानान्यथानृपसत्तमाः काचिंतात्यत्रकर्तव्यादेवाधीनोऽस्मिसर्वदा २४ देवभूतमनुष्येषुसर्वभूतेषुसर्वदा सर्वेषांतत्कृताशक्तिर्नान्यथानृपसत्तमाः २५ सायंचिकीर्षतिभूपंतंकरोतिनृपाधिपाः निर्धनंवानरंकामंकाचिंतावैतदाममम २६ तामृतेपरमांशक्तिंब्रह्मविष्णुहरादयः नशक्ताःस्पंदितुंदेवाःकाचिंतामेनदानृपाः २७ अशक्तोवासशक्तोवायादृशस्तादृशस्त्वहं नदाज्ञयानृपाद्यैवसंप्राप्तोऽस्मिस्वयंवरे २८

हेच्छसीत्यस्योत्तरमाह नान्यदिति मांजगदीश्वरीयदाहत्वयात्रगंतव्यमितितस्मात्तद्वाक्यपरिपालनादन्यन्ममचिकीर्षितंनास्त्येव युद्धंभविष्यतितदातवकावस्थेतिचेत्तत्राह तयेति २१ २२ २३ २४ २५ २६ तामृतेइति तदुक्तंसूतसंहितायांयज्ञवैभवखंडेत्रयोदशाध्याये यस्तुब्रह्मत्वमापन्नःशिवोयोमुनिसत्तमाः सतस्यापिभवेच्छक्तिस्तयाहीनोनिरर्थकः यस्तुविष्णुत्वमापन्नःशिवोयोमुनिसत्तमाः सातस्यापिभवेच्छक्तिस्तयाहीनोनिरर्थकः यस्तुरुद्रत्वमापन्नःशिवोयोमुनिसत्तमाः सातस्यापिभवेच्छक्तिस्तयाहीनोनिरर्थकइति २७ २८ ७ ७ ७ ७

२९ ३० ३१ ३२ त्वत्कृतेनत्वदाचरणेनदयादिष्टाप्रेरितानस्मात्त्वांवयंब्रवीमोब्रूमोनान्यथेत्यर्थः ३३ ३४ ३५ ३६ नकेवलंकर्मवशगः

सायदिच्छतितत्कुर्यान्ममकिंचिंतनेनवै नात्रशंकाप्रकर्तव्यासत्यमेतद्ब्रवीम्यहं २९ जयेपराजयेलज्ज्ञानमेऽत्राणव
पिपार्थिवाः भगवत्यास्तुलज्जास्तितदधीनोऽस्मिसर्वदा ३० व्यासउवाच इतितस्यतदाकर्ण्यवचनंराजसत्तमाः ऊ-
चुःपरस्परंप्रेक्ष्यनिश्चयज्ञानराधिपाः ३१ सत्यमुक्तंत्वयासाधोनमिथ्याकर्हिचिद्भवेत् तथाप्युज्जयनीनाथस्त्वांहंतुंपरिकां
क्षति ३२ त्वत्कृतेनदयादिष्टात्वांब्रवीमोमहामते यद्युक्तंतत्त्वयाकार्यंविचार्यमनसानघ ३३ सुदर्शनउवाच सत्यमुक्तं
भवद्भिश्चकृपावद्भिःसुहृज्जनैः किंब्रवीमिपुनर्वाक्यमुक्त्वानृपतिसत्तमाः ३४ नमृत्युःकेनचिद्बाध्यःकस्यचिद्वाकदाचन
दैवाधीनमिदंसर्वंजगत्स्थावरजंगमं ३५ स्ववशोऽयंनजीवोऽस्तिस्वकर्मवशगःसदा तत्कर्मत्रिविधंप्रोक्तंविद्वद्भिस्त
त्त्वदर्शिभिः ३६ संचितंवर्तमानंचप्रारब्धंचतृतीयकं कालकर्मस्वभावैश्चततंसर्वमिदंजगत् ३७ नदेवोमानुषंहंतुंश
क्तःकालागमंविना हतंनिमित्तमात्रेणहंतिकालःसनातनः ३८ यथापितामेनिहतःसिंहेनामित्रकर्षणः तथामातामे-
होप्येवंयुद्धेयुधाजिताहतः ३९ यत्नकोटिंप्रकुर्वाणोहन्यतेदैवयोगतः जीवेद्वर्षसहस्राणिरक्षणेनविनानरः ४०
नाहंबिभेमिधर्मिष्ठाःकदाचिच्चयुधाजितः दैवमेवपरंमत्वासुस्थितोऽस्मिसदानृपाः ४१ स्मरणंसततंनित्यंभगवत्याः
करोम्यहं विश्वस्यजननीदेवीकल्याणंसाकरिष्यति ४२ पूर्वार्जितंहिभोक्तव्यंशुभंवाप्यशुभंतथा स्वकृतस्यचभोगेन
कोहक्शोकोविजानतां ४३ स्वकर्मफलयोगेनप्राप्यदुःखमचेतनः निमित्तकारणेवैरंकरोत्यल्पमतिःकिल ४४

किंतुकालकर्मस्वभाववशगश्चेत्याह कालेति स्वभावोमूलभूताप्रकृतिः नतंव्याप्तंतद्वशगमित्यर्थः ३७ तदेवोपपादयति नदेवइति ३८ ३९ ४०
४१ ४२ ४३ अचेतनोबुद्धिरहितोमूढोनिमित्तकारणेदुःखस्येत्यर्थः ४४ छ छ छ छ

४५ एकाकीत्यादिपूर्वान्वयि ४६ भगवत्यावाक्यमितिशेषः ४७ ४८ ४९ ५० ५१ ५२ श्रुतपुण्यंकंवरिष्यतीत्यर्थः ५३ ५४ ५५ ५६



ननथाहंविजानामिवैरंशोकंभयंतथा निःशंकमिहसंप्राप्तःसमाजेभूभृतामिह ४५ एकाकीद्रष्टुकामोहंस्वयंवरमनुत्त मं भविष्यनिचयज्ञाव्यंप्राप्तोऽस्मिनचंडिकाज्ञया ४६ भगवत्याःप्रमाणंमेनान्यंजानामिसंयतः तत्कृतंचसुखंदुःखं भविष्यतिनचान्यथा ४७ युधाजित्सुखमाप्नोतुनमेवैरंनृपोत्तमाः यत्करिष्यतिमेवैरंसप्राप्स्यतिफलंतथा ४८ व्यासउवाच इत्युक्तास्तेतथातेनसंतुष्टाभूभुजःस्थिताः सोऽपिस्वमाश्रमंप्राप्यसुस्थितःसंबभूवह ४९ अ परेह्निशुभेकालेनृपाःसंमंत्रिताःकिल सुबाहुनानृपेणाथरुचिरेष्वस्वमंडपे ५० दिव्यास्तरणयुक्तेषुमंचेषुरचितेषु च उपविष्टाश्चराजानःशुभालंकरणैर्युताः ५१ दिव्यवेषधराःकामंविमानेष्वमराइव दीप्यमानाःस्थितास्तत्रस्व यंवरदिदृक्षया ५२ इतिचिंतापराःसर्वेकदासाप्यागमिष्यति भाग्यवंतंनृपश्रेष्ठंश्रुतपुण्यंवरिष्यति ५३ यदा- सुदर्शनंदैवात्स्वजासंभूषयेदिह विवादोवैनृपाणांचभवितानात्रसंशयः ५४ इत्येवंचिंत्यमानास्तेभूपामंचेषु संस्थिताः वादित्रघोषःसुमहानुत्थितोनृपमंडपे ५५ अथकाशीपतिःप्राहसुतांस्नातांस्वलंकृतां मधूकमाला संयुक्तांक्षौमवासोविभूषितां ५६ विवाहोपस्करैर्युक्तांदिव्यांसिंधुसुतोपमां चिंतापरांसुवसनांस्मितपूर्वमिदं वचः ५७ उत्तिष्ठपुत्रिसुभगेकरेधृत्वाशुभांस्रजं व्रजमंडपमध्येत्वसमाजंपश्यभूभुजां ५८ गुणवान्रूपसंपन्नःकु लीनश्चनृपोत्तमः तवचित्तेवसेद्यस्तुतंवृणुष्वसुमध्यमे ५९ देशदेशाधिपाःसर्वेमंचेषुरचितेषुच संविष्टाःपश्यत न्वंगिवरयस्वयथारुचि ६० ७ ७ ७ ७ ७

सिंधुसुतालक्ष्मीः चिंतापरांभगवतीध्यानपरां ५७ ५८ ५९ ६०

६१अन्याव्यभिचारिण्यः६२ ६३ संकल्पयंतीति मांदृष्ट्वेयंमेभवतादितिनेसंकल्पयंति भवतादित्याशीर्लोटितातङ् ६४ ६५ ६६ कुर्वेइति वार-
स्त्रियाकथंकृतंकुर्वेइत्यर्थः ६७ ननुवृन्दसंप्रदायएवमेवास्तिसच्चलयाप्याश्रयणीयइतिचेत्तत्राह वृन्दैरिति ६८ तत्रदोषमाह सामान्येति य

व्यासउवाच तंतथाभाषमाणंवैपितरंमितभाषिणी उवाचवचनंबालाललितंधर्मसंयुतं ६१ शशिकलोवाच ना
हंदृष्टिपथेराज्ञांगमिष्यामिपितःकिल कामुकानांनरेशानांगच्छंत्यन्याश्चयोषितः ६२ धर्मशास्त्रेश्रुतंतातमयेदंवचनं
किल एकएववरोनार्यानिरीक्ष्यःस्यान्नचापरः ६३ सतीत्वंनिर्गतंतस्यायाप्रयातिबहूनथ संकल्पयंतितेसर्वेदृष्ट्वामे
भवतात्विति ६४ स्वयंवरेस्त्रजंधृत्वायदागच्छतिमंडपे सामान्यासातदाजाताकुलटेवापरावधूः ६५ वारस्त्रीवि-
पणेगत्वायथावीक्ष्यनरान्स्थितान् गुणागुणपरिज्ञानंकरोतिनिजमानसे ६६ नैकभावायथावेश्यावृथापश्यति
कामुकं तथाहंमंडपेगत्वाकुर्वेवारस्त्रियाकृतं ६७ वृन्दैरेतैःकृतंधर्मंनकरिष्यामिसांप्रतं पत्नीव्रतंतथाकामंचरिष्ये
हंधृतव्रता ६८ सामान्याप्रथमंगत्वाकृत्वासंकल्पितंबहु वृणोतिचैकंनह्यहंवृणोमिकथमद्यवै ६९ सुदर्शनो-
मयापूर्वंवृतःसर्वात्मनापितः तमृतेनान्यथाकर्तुमिच्छामिनृपसत्तम ७० विवाहविधिनादेहिकन्यादानंशुभेदिने
सुदर्शनायनृपतेयदीच्छसिशुभंमम ७१ इतिश्रीदेवीभाग०महापुराणेतृतीयस्कंधेविंशोऽध्यायः २० व्यासउ-
वाच सुबाहुरपितच्छ्रुत्वायुक्तमुक्तंतयातदा चिंतावितिष्टोबभूवाशुकिंकर्त्तव्यमितःपरं १

थाकाचित्सामान्यास्त्रीप्रथमंस
भायांगत्वामनसिबहुपुरुषसंघंसंकल्पितंकृत्वापश्चात्स्वभाग्येलिखितमेकमेववृणोतितथासामान्यावत्कथमद्यपुरुषंवृणोम्यहंपतिव्रतासती-
त्यर्थः ६९ ७० ७१ इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेविंशोध्यायः २० अर्धाधिकैःषष्टिपद्यैराज्ञांकोलाहलेसति कन्यायाःसंमतोराजा-
स्थितइत्येतदुच्यते १ कन्यावाक्योत्तरंचिंताग्रस्तोराजायच्चकारतदुच्यते सुबाहुरपीति कन्ययातुसम्यगुक्तंपरंतुमयाकिंकर्तव्यमितिचिंताविष्टोब-

भूवेत्यर्थः १ २ नायातीति इतीतिशेषः ३ प्रत्यादेष्टुंप्रत्याख्यातुं ४ ५ ६ मात्राजनन्या ७ वःसद्नानियूयंव्रजंत्वित्यर्थः ८ ९ खेदितानाडितासतीयदिम्रियेतेत्यर्थः १० किमेतयेति एतयादुष्टयामंदभाग्ययाभवतांकिंफलंभविष्यतियदर्थमेतावानाग्रहोभवद्भिःक्रियते ११

संगताःपृथिवीपालाःससैन्याःसपरिग्रहाः उपविष्टाश्चमंचेषुयोद्धुकामामहाबलाः २ यदिब्रवीमितान्सर्वान्सुतानायातिसांप्रतं तथापिकोपसंयुक्ताहन्युर्मांदुष्टबुद्धयः ३ नमेसैन्यबलंतादृग्नदुर्गबलमद्भुतं येनाहंनृपतीन्सर्वान्प्रत्यादेष्टुमिहोत्सहे ४ सुदर्शनस्तथैकाकीत्यसहायोऽधनःशिशुः किंकर्त्तव्यंनिमग्नोऽहंसर्वथादुःखसागरे ५ इति चिंतापरोराजाजगामनृपसंन्निधौ प्रणम्यतानुवाचाथप्रश्रयावनतोनृपः ६ किंकर्त्तव्यंनृपाःकामं नैतिमेमंडपेसुता बहुशःप्रेर्यमाणापिसामात्रापिमयापिच ७ मूर्ध्नापतामिपादेषुराज्ञांदासोऽस्मिसांप्रतं पूजादिकंगृहीत्वाद्यव्रजंतुसदनानिवः ८ ददामिबहुरत्नानिवस्त्राणिचगजान्रथान् गृहीत्वाद्यकृपांकृत्वाव्रजंतुभवनान्युत ९ नवशेमेसुताबालायदिम्रियेतखेदिता तदामेस्यान्महद्दुःखंतेनचिंतातुरोस्म्यहं १० भवंतःकरुणावंतोमहाभाग्यामहौजसः किमेतयादुहित्रामेमंदयादुर्विनीतया ११ अनुग्राह्योऽस्मिवःकामंदासोहमितिसर्वथा सुतासुतेवमंतव्याभवद्भिःसर्वथामम १२ व्यासउवाच श्रुत्वासुबाहुवचनंनोचुःकेचनभूमिपाः युधाजिच्चक्रोधताम्राक्षस्तमुवाचरुषान्वितः १३ राजन्मूर्खोऽसिकिंब्रूषेकृत्वाकार्यंसुनिंदितं स्वयंवरःकथंमोहाद्रचितःसंशयेसति १४ मिलिताभूभुजःसर्वेत्वयाहूताःस्वयंवरे कथमद्यनृपागंतुंयोग्यास्तेस्वगृहान्प्रति १५ अवमान्यनृपान्सर्वांस्त्वंकिंसुदर्शनायवै दातुमिच्छसिपुत्रींचकिमनार्यमतःपरं १६

१२ १३ १४ १५ अवमान्येति पुत्रींदातुंकिमिच्छसि यदीच्छसितर्हितोऽस्मात्परमधिकमनार्यमश्लाघ्यंकिमस्ति महानपराधस्तवतदेत्यर्थः १६ ७ ७ ७ ७

विचार्येति शुभमिच्छनापुरुषेणादौकार्यंसाध्यमसाध्यंवेतिविचार्यपश्चादारब्धव्यं त्वयातुराजन्नजानतातत्कार्यंकृतमतः फलंभविष्यतीत्यर्थः १७
१८ दौहित्रार्थैवेमांकन्यांदास्यामीतिमेविनिश्चयोऽस्ति १९ २० मुनिकृतेमुनिसंकोचार्थं २१ २२ संबंधीभवेति ममेतिशेषः २३ २४ २५ २६

विचार्यपुरुषेणादौकार्यंवैशुभमिच्छता आरब्धव्यंत्वयातत्तुकृतंराजन्नजानता १७ एतान्विहायनृपतीन्बलवाहन
संयुतान् वरंसुदर्शनंकर्त्तुंकथमिच्छसिसांप्रतं १८ अहंत्वांहन्मिपापिष्ठतथापश्चात्सुदर्शनं दौहित्रायाद्यमेकन्यां
दास्यामीतिविनिश्चयः १९ मयितिष्ठतिकोन्योऽस्तियःकन्यांहर्त्तुमिच्छति सुदर्शनःकियानद्यनिर्धनोनिर्बलःशिशुः
२० भारद्वाजाश्रमेपूर्वमुक्तोमुनिकृतेमया नाद्याहंमोचयिष्यामिसर्वथाजीवितंशिशोः २१ तस्माद्विचार्यसम्य-
क्त्वंपुत्र्याचभार्ययासह दौहित्रायप्रियांकन्यांदेहिमेसुभ्रुवंकिल २२ संबंधीभवदत्त्वात्वंपुत्रीमेतांमनोरमां उ-
च्चाश्रयःप्रकर्तव्यःसर्वदाशुभमिच्छता २३ सुदर्शनायदत्त्वात्वंपुत्रींप्राणप्रियांशुभां एकाकिनेप्यराज्यायकिं-
सुखंप्राप्तुमिच्छसि २४ "कुलंवित्तंबलंरूपंराज्यंदुर्गंसुहृज्जनम् दृष्ट्वाकन्याप्रदातव्यानान्यथासुखमृच्छ-
ति" १ "परिचिंतयधर्मत्वंराज्यनीतिंचशाश्वतीं कुरुकार्यंयथायोग्यंमाकृथामतिमन्यथा २५ सुहृदसिममात्य
र्थंहितंतेप्रब्रवीम्यहं समानयसुतांराजन्मंडपेतांसखीवृतां २६ सुदर्शनमृतेचेयंवरिष्यतियदाप्यसौ विग्रहोमे
तदानस्याद्विवाहोस्तुतवेप्सितः २७ अन्येनृपतयःसर्वेकुलीनाःसबलाःसमाः विरोधःकीदृशस्त्वेनंवृणोत्व-
दिनृपोत्तम २८

बहुयदित्वयाप्रार्थ्यतेनहीदंस्वीकरोमीत्याह सुदर्शनमृतइति सुदर्शनंविहाययंवाकंवानृपतिमियंक-
न्यावरिष्यतितदासौविग्रहोनस्यात्तदातवेप्सितोविवाहास्तुनोचेन्नेतिभावः २७ विरोधःकीदृशइतिविरोधःकिंविषयइत्यर्थः स्वयमेववदति
एनंवृणोत्वदीति एनंसुदर्शनमियंकन्यायदिवृणोतिवृणुयात्तर्हिनद्विषयेविरोधोनान्यराजविषयइत्यर्थः २८

अन्यथेति यदिसुदर्शनायदास्यसीत्यर्थः अतोनिरर्थकंमयासहविरोधंदुःसाध्यंमागच्छमाव्रजेत्यर्थः २९ ३० पुत्रींब्रूहीति एतादृशेकलहेजा
तेप्राप्तेमयाशक्यंयत्किंकर्तव्यंतस्मात्त्वदृशोऽस्मितवयद्युक्तंभासतेतेनथाकुर्विंतिपुत्रींब्रूहीत्यर्थः ३१ ३२ ३३ ३४ ३५

अन्यथाहंहरिष्येऽघबलात्कन्यामिमांशुभां माविरोधंसुदुःसाध्यंगच्छपार्थिवसत्तम २९ व्यासउवाच युधाजितास-
मादिष्टः सुबाहुःशोकसंयुतः निःश्वसन्भवनंगत्वाभार्यांप्राहशुचावृतः ३० पुत्रींब्रूहिसुधर्मज्ञेकलहेसमुपस्थिते
किंकर्तव्यंमयाशक्यंतदृशोऽस्मिसुलोचने ३१ व्यासउवाच साश्रुत्वापतिवाक्यंतुगत्वाप्राहसुतांतिके वृत्तंराजा
तिदुःखार्तःपितातेऽद्यापिवर्त्तते ३२ त्वदर्थेविग्रहःकामंसमुत्पन्नोऽद्यभूभृतां अन्यंवरयसुश्रोणिसुदर्शनमृतेनृपं
३३ यदिसुदर्शनंवत्सेहठात्त्वंवैवरिष्यसि युधाजित्त्वांचमांचैवहनिष्यतिबलान्वितः ३४ सुदर्शनंचराजासौब
लमत्तःप्रतापवान् द्वितीयस्तेपतिःपश्चाद्भविताकलहेसति ३५ तस्मात्सुदर्शनंत्यक्त्वावरयान्यंनृपोत्तमं स्वस्मि
च्छामिचेन्मत्यंतुभव्यंवामृगलोचने इतिमात्राबोधितांतांपश्चाद्राजाप्यबोधयत् ३६ उभयोर्वचनंश्रुत्वानिर्भयो-
वाचकन्यका कन्योवाच सत्यमुक्तंनृपश्रेष्ठजानासिव्रतंमम ३७ नान्यंवृणोमिभूपालंसुदर्शनमृतेक्वचित्
बिभेषियदिराजेंद्रनृपेभ्यःक्लिकातरः ३८ सुदर्शनायदत्त्वामांविसर्जयपुराद्बहिः समारथेसमारोप्यनिर्गमिष्यतितेनपुरात् ३९ भवितव्यंतुपश्चाद्धिभविष्यतिनचान्यथा नात्रचिंतात्वयाकार्याभवितव्येनृपोत्तम ४० यद्भावितद्भवत्येवस
र्वथानात्रसंशयः राजोवाच नपुत्रिसाहसंकार्यंमतिमद्भिःकदाचन ४१ बहुभिर्नविरोद्धव्यमितिवेदविदोविदुः
विरुद्धक्ष्यामिकथंकन्यांदत्त्वाराजसुतायच ४२ राजानोवैरसंयुक्ताःकिंनकुर्युरसांप्रतं

३६ ३७ ३८ ३९ ४० ४१ ४२

पणेकृतेकलहोनभविष्यतीत्याह यदितइति ४३ ४४ ४५ कामंपणं ४६ ४७ ४८ ४९ सर्वेषामिति येयेपणंसाधयिष्यंतितेषांसर्वेषांवशगाभवि
ष्यामीत्यर्थः नत्वेकेनैवपणःसाधनीयइतिपणसमयेनियमःक्रियते किंतुसमुदायोद्देशेनेति ५०एतदेवाह एकःपालयितेति त्रिभिर्योद्वाभ्यांवापणः साध्यतेतदैकाक-

यदितेरोचतेवत्सेपणंसंविदधाम्यहं ४३ जनकेनयथापूर्वंकृतःसीतास्वयंवरे शैवंधनुर्यथातेनधृतंकृत्वापणंतथा ४४ तथा-
हमपितन्वंगिकरोम्यद्यदुरासदं विवादोयेनराज्ञांवैकृतेसतिशमंव्रजेत् ४५ पालयिष्यतियःकामंसतेभर्ताभविष्य-
ति सुदर्शनस्तथान्योवायःकश्चिद्बलवत्तरः ४६ पालयित्वापणंत्वांवैवरयिष्यति सर्वथा एवंकृतेनृपाणांतुविवादःशमि-
तोभवेत् ४७ सुखेनाहंविवाहंतेकरिष्यामिततःपरं कन्योवाच संदेहेनैवमज्जामिमूर्खकृत्यमिदंयतः ४८ मयासुदर्श-
नःपूर्वंधृतश्चेतसिनान्यथा कारणंपुण्यपापानांमनएवमहीपते ४९ मनसाविधृतंत्यक्त्वाकथमन्यद्वृणेपितः कृते
पणेमहाराजसर्वेषांवशगात्वहं ५० एकःपालयिताद्वौवाबहवोवाभवंतिचेत् किंकर्तव्यंतदातातविवादेसमुपस्थिते ५१
संशयाधिष्ठितेकार्येमतिंनाहंकरोम्यतः माचिंतांकुरुराजेंद्रदेहिसुदर्शनायमां ५२ विवाहंविधिनाकृत्वाशंविधा-
स्यतिचंडिका यन्नामकीर्तनादेवदुःखौघोविलयंव्रजेत् ५३ तांस्मृत्वापरमांशक्तिंकुरुकार्यमतंद्रितः गत्वावदनृ-
पेभ्यस्त्वंकृतांजलिपुटोद्यवै ५४ आगंतव्यंचश्वःसर्वैरिहभूपैःस्वयंवरे इत्युक्त्वात्वंविसृज्याशुसर्वंनृपतिमंडलं ५५
विवाहंकुरुरात्रौमेवेदोक्तविधिनानृप पारिबर्हंयथायोग्यंदत्वातस्मैविसर्जय ५६

५८
न्याकस्यभविष्यतीतिविवादेसमुपस्थितेकिंकर्तव्यं नकश्चिदत्रोपायोविद्यतेतस्माद्द्वाभ्यांत्रिभ्योवासाकन्यादेयेतिप्रसंगः स्यात्ततश्चमहाननर्थःपणे
कृतेसतिभविष्यतीत्यर्थः ५१ संशयाधिष्ठितेसंशयविषयइत्यर्थः अयंवापतिरयंवापतिरितिपतिविषयेसंशयेकुलटावदहंमतिंनकरोमिपतिव्रतासतीतिभा
वः ५२ विवाहंविधिनाकृत्वासुदर्शनायमांदेहीतिपूर्वेणान्वयः ५३ ५४ ५५ ५६ ५७ ५७ ५७ ५७ ५७ ५७

५७ ५८ ५९ ६० इतिश्रीदेवीभागवततिलकेतृतीयस्कंधेएकविंशोऽध्यायः २१ अष्टाधिकैश्चत्वारिंशत्पद्यैरथवर्ण्यते सुदर्शनविवाहश्चसु-
बाहोश्चैवकन्यया १ कन्यावाक्यंश्रुत्वायच्चकारराजानदाह श्रुत्वेति कामंयथेष्टंश्वोवाश्वएव १ कार्यंविवाहरूपं २ नयिष्येआनयिष्ये ३ नवि-

गमिष्यतिगृहीत्वामांध्रुवसंधिसुतः किल कदाचित्तेनृपाः क्रुद्धाः संग्रामंकर्तुमुद्यताः ५७ भविष्यंतितदादेवी
साहाय्यंनः करिष्यति सोपिराजासुतैस्तैस्तुसंग्रामंविदधास्यति ५८ देवान्मृधेमृतेतस्मिन्मरिष्याम्यहमप्युत
स्वस्तितेस्तुगृहेतिष्ठत्वंमांसहसैन्यकः ५९ एकैवाहंगमिष्यामितेनसार्धंरिरंसया व्यासउ॰ इतितस्यवचः श्रु
त्वाराजासौकृतनिश्चयः ६० मतिंचक्रेतथाकर्तुंविश्वासंप्रतिपद्यच इति॰दे॰भा॰म॰तृ॰एकविंशो॰२१ व्यासउ॰
श्रुत्वासुतंवाक्यमनिंदितात्मानृपांश्चगत्वानृपतिर्जगाद व्रजंतुकामंशिबिराणिभूपाः श्वोवाविवाहंकिलसंविधास्ये १ भ-
क्ष्याणिपेयानिमयार्पितानिगृह्णंतुसर्वेमयिसुप्रसन्नाः श्वोभाविकार्यंकिलमंडपेत्रसमेत्यसर्वैरिहसंविधेयम् २ नाथा
तिपुत्रीकिलमंडपेद्यकरोमिकिंभूपतयोत्रकामं प्रातः समाश्वास्यसुतांनयिष्येगच्छंतुतस्माच्छिबिराणिभूपाः
३ नविग्रहोबुद्धिमतांनिजाश्रितेनकृपाविधेयासततंत्वपत्ये विधायतांप्रातरिहानयिष्येसुतांतुगच्छंतुनृपायथेष्टं
४ इच्छापणंवापरिचिंत्यचित्तेप्रातः करिष्याम्यथसंविवाहं सर्वैः समेत्यात्रनृपैः समेतैः स्वयंवरः सर्वमतेनकार्यः
५ श्रुत्वानृपास्तेवितथंविदित्वावचोययुः स्वानिनिकेतनानि विधायपार्श्वेनगरस्यरक्षांचक्रुः क्रियामध्यदिनोदिता
श्च ६ ७ ७

ग्रहइति विग्रहोनयुक्तइतिशेषः प्रातरिहसुतामानयिष्ये अधुनातांकृपांविधाययथेष्टंनृपागच्छंतु ४ कथंश्वोवि
वाहंकारयिष्यसीतिचेत्तत्राह इच्छापणंवेति इच्छापणंवाशौर्यपणंवायथाभवतांमनीषितंवर्ततेतथाचित्तेपणंपरिचिंत्येत्यर्थः ५ अवितथंसत्यं
नगरस्यपार्श्वेआसमंताद्रक्षांविधायकदाचिद्राजाछलंविधास्यतीतिशंकया ६ ७ ७ ७ ७

* शिवाज्ञयेत्यपिपाठः

आर्यजनैःपुरोहितादिभिः ७ तस्यार्हणांपूजां ८ ९ मनोरमायाश्चिंताममपुत्रायकन्यांदास्यतिवानदास्यतीतिसाशशामनिधिकन्यकासमांकुबेरकन्यकासमांमेने आत्मानंत्वनुत्तममल्पंकन्यापेक्षयामेने महतांविवाहेएषैवरीतिः १० ११ चतुष्कयुक्तेइत्यर्थः १२ आव्हायपत्पित्रादिनेत्यर्थः

सुबाहुरप्यार्यजनैःसमेतश्चकारकार्याणिविवाहकाले पुत्रींसमाहूयगृहेसुगुप्तेपुरोहितैर्वेदविदांवरिष्टैः ७ स्नानादिकंकर्मवरस्यकृत्वाविवाहभूषाकरणंतथैव आनाय्यवेदीरचिते गृहेवैतस्यार्हणांभूमिपतिश्चकार ८ सविष्टरंचाचमनीयमर्घ्यंवस्त्रद्वयंगामथकुंडलेद्वे समर्प्यतस्मैविधिवन्नरेंद्रएच्छत्सुतादानमहीनसत्वः ९ सोप्यग्रहीत्सर्वमदीनचेताःशशामचिंताथमनोरमायाः कन्यांसुकेशींनिधिकन्यकासमांमेनेतदात्मानमनुत्तमंच १० सुपूजितंभूषणवस्त्रदानैर्वरोत्तमंतंसचिवास्तदानीं निन्युश्चतेकौतुकमंडपांतर्मुदान्विताबीतभयाश्चसर्वे ११ समाप्तभूषांविधिवद्विधिज्ञाःस्त्रियश्चतांराजसुतांसुयाने आरोप्यनिन्युर्वरसंनिधानंचतुष्कयुक्तेकिलमंडपेवै १२ अग्निंसमाधायपुरोहितःसहुत्वायथावच्चतदंतराले आव्हाययत्तौकृतकौतुकौतुवधूवरौप्रेमयुतौनिकामं १३ लाजाविसर्गंविधिवद्विधायकृत्वाहुताशस्यप्रदक्षिणांच तौचक्रतुस्तत्रयथोचितंतत्सर्वंविधानंकुलगोत्रजातं १४ शतद्वयंचाश्वयुजांरथानांसुभूषितंचापिशरौघसंयुतं ददौनृपेंद्रस्तुसुदर्शनायसुपूजितंपारिबर्हंविवाहे १५ मदोत्कटान्हेमविभूषितांश्चगजान्गिरेःशृंगसमानदेहान् शतंसपादंनृपसूनवेसोददावथप्रेमयुतोनृपेंद्रः १६ दासीशतंकांचनभूषितंचकरेणुकानांचशतंसुचारु समर्पयामाससवरायराजाविवाहकालेमुदितो—नुवेलं १७ छ छ छ छ छ

१३ लाजाविसर्गंलाजाहोमं १४ १५ सपादंपंचविंशत्यधिकंशतमित्यर्थः १६ करेणुकानांशतं १७ छ छ छ छ

संभृतभूषितमितिकर्मधारयः आविकानिऊर्णावस्त्राणि १८ १९ क्रमेलकानां उष्ट्राणांच २० इत्थंपारिबर्हैर्वरायदत्त्वावरमातरंत्तो षयन्ति मनोरमामिति २१ हेभूपतेकुलस्यवृद्धिरप्यस्त्वित्यर्थः ममदुर्भगायाःसूनवेत्वयाकन्यादत्तातनरस्तवकल्याणंभवत्वस्माच्चाधिकंनकिंचि न्ममाभिलषणीयमस्ति २२ अथास्मिन्समयेतवमहत्तरास्तुतिःकर्त्तव्यापरंतुसास्तुतिःस्तुतिविषयस्यपरकीयत्वेस्तुतिंकर्त्तुंबंदिजनवत्कथिताशक्तिमत्त्वेएव

अदात्पुनर्दाससहस्त्रमेकंसर्वायुधैःसंभृतभूषितंच रत्नानिवासांसियथोचितानिदिव्यानिचित्राणितथाविकानि १८ ददौ पुनर्वासगृहाणितस्मैरम्याणिदीर्घाणिविचित्रितानि सिंधूद्भवानांतुरगोत्तमानामदात्सहस्त्रद्वितयंसुरम्यं १९ क्रमेलका नांचशतत्रयंवैप्रत्यादिशृङ्गारभृतांसुचारु शतद्वयंवैशकटोत्तमानांतस्मैददौधान्यरसैःप्रपूरितं २० मनोरमांराजस्त तांप्रणम्यजगादवाक्यंविहितांजलिःपुरः दासोस्मितेराजसुतेवरिष्ठेतद्ब्रूहियत्स्यात्तुमनोगतंते २१ तंचारुवाक्यानि जगादसापिस्वस्त्यस्तुतेभूपकुलस्यवृद्धिः समानिताहंममसूनवेत्वयादत्तायतोरत्नवरास्वकन्या २२ नबंदिपुत्रीन्नृप मागधीवास्तोमीहकिंत्वांस्वजनंमहत्तरं सुमेरुतुल्यस्त्वकृतःसुतोद्यमेसंबंधिनाभूपतिनोत्तमेन २३ अहोतिचित्रंनृप तेश्चरित्रंपरंपवित्रंनवकिंवदामि यद्भ्रष्टराज्यायसुतायमेद्यदत्तात्वयापूज्यसुतावरिष्ठा २४ वनाधिवासायकिलाध नायपित्राविहीनायविसैन्यकाय सर्वानिमान्भूमिपतीन्विहायफलाशनायार्थविवर्जिताय २५ समानवित्तेथकुलेबले चदद्दातिपुत्रींनृपतिश्चभूयः नकोपिमेभूपसुतेर्थहीनेगुणान्वितांरूपवतींचदद्यात् २६ वैरंतुसर्वैःसहसंविधायनृपैर्व रिष्ठैर्बलसंयुतैश्च सुदर्शनायाथसुतार्पितामेकिंवर्णयेधैर्यमिदंत्वदीयं २७ ॥

संभवतिनचात्रैतदुभयमस्तितवस्वजन त्वान्ममचकुलीनायाबंदिजनत्वाभावादित्याह नबंदिपुत्रीति २३ पूज्यस्यसुता २४ कथंभूतायममसुतायतत्राह वनाधिवासायेति २५ बलेबलव तीत्यर्थःहेभूपमेर्थहीनेसुतेनकोपिदद्यादित्यन्वयः २६ २७ ॥ ॥ ॥ ॥ ॥

निशम्येति राज्यंत्वंगृहाणाहंतुतवसेनाधिपतिर्भवामिभविष्यामीत्यर्थः २८ वनेथवापुरेसवासोमेनमनोनमान्योस्ति एतादृशक्षेत्रवासंविहायनान्यत्र-
गंतव्यमित्यर्थः २९ कुपितनृपभयंत्वयानैवकर्तव्यमित्याह नृपास्त्विति द्वावपरावुपायौदानभेदौनैस्त्रिभिस्तेषांसांत्वनंजातंचेद्वरं नोचे युद्धमहं
करिष्येत्वयानभीतिःकर्त्तव्येत्यर्थः ३० ननुयुद्धेतवपराजयेममभयंतदवस्थमेवेतिचेत्तत्राह जयाजयाविति यद्यपितौदैववशौनथापियतो धर्मस्ततोज

निशम्यवाक्यानिनृपःप्रहृष्टःकृतांजलिर्वाक्यमुवाचभूयः गृहाणराज्यंममसुप्रसिद्धंभवामिसेनापतिरद्यचाहं २८ नो-
चेत्तदर्धंप्रतिगृह्यचात्रसुतान्वितारायफलानिभुंक्ष्व विहायवाराणसिकानिवासंवनेपुरेवासमतोनमेस्ति २९ नृपास्तु
संत्येवरुषान्वितावैगत्वाकरिष्येप्रथमंतुसांत्वनं ततःपरंद्वावपरावुपायौनोचेत्ततोयुद्धमहंकरिष्ये ३० जयाजयौदैवव-
शौतथापिधर्मेजयोनैवकृतेप्यधर्मे तेषांकिलाधर्मवतांनृपाणांकथंभविष्यत्यनुचिंतितंवै ३१ आकर्ण्यतद्भाषितमर्थव-
च्चजगादवाक्यंहितकारकंतं मनोरमामानमवाप्यतस्मात्सर्वात्मनामोदयुताप्रसन्ना ३२ राजन्शिवंतेस्तुकुरुष्वरा
ज्यंत्यक्त्वाभयंत्वंस्वसुतैःसमेतः सुतोपिमेनूनमवाप्यराज्यंसाकेतपुर्यांप्रचरिष्यतीह ३३ विसर्जयास्मान्निजस-
द्मगंतुंशिवंभवानीतवसंविधास्यति नकापिचिंताममभूपवर्ततेसंचिंतयंत्याःपरमांबिकांवै ३४ दोषागताविविध
वाक्यपदैरसालैरन्योन्यभाषणपदैरमृतोपमैश्च प्रातर्नृपाःसमधिगम्यकृतंविवाहंरोषान्वितानगरबाह्यगतास्तथो
चुः ३५ ७ ७

यइतिनियमाद्धर्मेमयैतादृशेकृतेजयएवममभविष्यति अधर्मेपि अधर्मेतुकृतेनैवजयस्त-
स्मात्तेषामनुचिंतितमभिलषितंकथंभवेन्नकथमपीत्यर्थः ३१ ३२ राज्यमवाप्येति अनंतकोटिब्रह्मांडनायिकाश्रीभुवनेश्वरीभगवतीप्रसादादि-
तिरहस्यं साकेतपुर्यामयोध्यायां ३३ तदेवाह विसर्जयेति परमांबिकांसच्चिदानंदरूपिणीं ३४ दोषागतेति एवंवदतोःसंबंधिनोर्भाषणैरेवदो
षारात्रिर्गतानंतरंप्रातःकृतंविवाहंनृपाः समधिगम्यज्ञात्वानगरबाह्यगतास्तथावक्ष्यमाणप्रकारेणोचुः ३५ ७ ७ ७

अयैवेति अस्मत्प्रतारणाकर्तारंसुबाहुंतंबालंसुदर्शनंचहत्वातांकन्यांलक्ष्मींराज्ञोलक्ष्मींचगृहीमोयद्येतन्नक्रियतेतर्हिलज्जामवाप्यनिजसद्मनि
जगृहंकथंव्रजेम ३६ विवाहनिश्चयःकथंभवताज्ञातइतिचेत्तत्रोचुः शृण्वंत्विति मृदंगशब्दामधुराअपिनिजबाहुल्यात्क्रूरान्शंखस्वनानभिभवंति
एतैर्लक्षणैर्विवाहःकृतइतिमन्यामहे ३७ करपीडनंकन्याकरग्रहणंचकारांतर्भावितणिजर्थं त्वात्कारयामासेत्यर्थः ३८ ३९ ४० ४१

अ येवतंनृपकलंकधरंचहत्वाबालंतथैवकिलतंनविवाहयोग्यं गृह्णीमतांशशिकलांनृपतेश्चलक्ष्मींलज्जामवाप्यनि
जसद्मकथंव्रजेम ३६ शृण्वंतुतूर्यनिनदान्किलवाद्यमानान्शंखस्वनानभिभवंतिमृदंगशब्दाः गीतध्वनिंचविवि-
धंनिगमस्वनंचमन्यामहेनृपतिनाऽत्रकृतोविवाहः ३७ अस्मान्प्रतार्यवचनैर्विधिवच्चकारवैवाहिकेनविधिनाकरपी
डनंवै कर्तव्यमद्यकिमहोप्रविचिंतयंतुभूपाःपरस्परमतिंचसमर्थयंतु ३८ एवंवदत्सुनृपतिष्वथकन्यकायाःकृत्वा
विवाहविधिमप्रतिमप्रभावः भूपान्निमंत्रयितुमाशुजगामराजाकाशीपतिःस्वसुहृदैःप्रथितप्रभावैः ३९ आगच्छं
तंचतंदृष्ट्वानृपाःकाशीपतिंतदा नोचुःकिंचिदपिक्रोधान्मौनमाधायसंस्थिताः ४० सगत्वाप्रणिपत्याहकृतांजलि
रभाषत आगंतव्यंनृपैःसर्वैर्भोजनार्थंगृहेमम ४१ कन्ययासौवृतोभूपःकिंकरोमिहिताहितं भवद्भिस्तुशमःका
र्योमहांतोहिदयालवः ४२ तन्निशम्यवचस्तस्यनृपाःक्रोधपरिप्लुताः प्रत्यूचुर्भुक्तमस्माभिःस्वगृहंनृपतेव्रज
४३ कुरुकार्याण्यशेषाणियथेष्टंसुकृतंकृतं नृपाःसर्वेप्रयांत्वद्यस्वानिस्वानिगृहाणिवै ४४ सुबाहुरपितच्छ्रुत्वा
जगामशंकितोगृहं किंकरिष्यंतिसंविग्नाःक्रोधयुक्तानृपोत्तमाः ४५

४२ हेनृपतेस्वगृहेव्रजेत्येवास्माकंप्रार्थनाभवतोन्यत्सर्व
मेवास्माभिर्लब्धंपूर्णकामावयंजाताइत्यर्थः ४३ सुकृतंकृतंहेराजंस्त्वयासुकृतंपुण्यंकृतंसम्यक्संपादितं अस्मदवज्ञयेत्यर्थः इत्थंराजानमुक्त्वा
परस्परंवदंति नृपाइति ४४ तच्छ्रुत्वास्तुतिनिंदाफलकंवाक्यंश्रुत्वानेमेसांत्वनयोग्याइतिमत्वैतेसंविग्नादुःखेनक्रोधयुक्ताःकिंकरिष्यंतीतिनजानेइ

निशंकिनोगृहंजगाम ४५ समयंसंकेतं ४६ केचनोचुरिति उदासीनाइत्यर्थः ४७ उत्तरकार्याणिवरवधूप्रस्थापनविषयाणि ४८ इतिश्रीदेवी-
भागवततिलकेतृतीयस्कंधेद्वाविंशोऽध्यायः २२ पंचाधिकैश्चपंचाशत्पद्यैरथमहारणे शत्रवोनिहतादेव्येत्येवमर्थोत्रवर्ण्यते १ तस्मैइति गौरवभो
ज्यानिगौरवेणमानेनभोज्यानिमानपुरःसरंभोज्यानीत्यर्थः १ २ मार्गरोधनंकृतंराजभिरितिशेषः ३ ४ भारद्वाजाश्रममिति भारद्वाजमुनेराज्ञया

गतेतस्मिन्महीपालाश्चक्रुश्चसमयंपुनः रुद्ध्वामार्गंग्रहीष्यामःकन्यांहत्वासुदर्शनं ४६ केचनोचुःकिमस्माकंहंतते
ननृपेणवै दृष्ट्वातुकौतुकंसर्वंगमिष्यामोयथागतं ४७ इत्युक्त्वातेनृपाःसर्वमार्गमाक्रम्यसंस्थिताः चकारोत्तरका
र्याणिसुबाहुःस्वगृहंगतः ४८ इतिश्रीदेवीभाग० महापुराणेतृतीयस्कंधेद्वाविंशोध्यायः २२ व्यासउवाच तस्मै
गौरवभोज्यानिविधायविधिवत्तदा वासराणिचषड्राजाभोजयामासभक्तितः १ एवंविवाहकार्याणिकृत्वासर्वाणि
पार्थिवः पारिबर्हंप्रदत्त्वाथमंत्रयन्सचिवैःसह २ दूतैस्तुकथितंश्रुत्वामार्गसंरोधनंकृतं बभूवविमनाराजासुबाहुर
मितद्युतिः ३ सुदर्शनस्तदोवाचश्वशुरंसंशितव्रतः अस्मान्विसर्जयाशुत्वंगमिष्यामोत्यशंकिताः ४ भारद्वाजा-
श्रमंपुण्यंगत्वातत्रसमाहिताः निवासायविचारोवैकर्त्तव्यःसर्वथानृप ५ नृपेभ्यश्चनकर्त्तव्यंभयंकिंचित्त्वयाऽनघ
जगन्माताभवानीमेसाहाय्यंवैकरिष्यति ६ व्यासउवाच तस्येतिमतमाज्ञायजामातुर्नृपसत्तमः विससर्जधनंदत्त्वा
प्रतस्थेसोपिसत्वरः ७ बलेनमहताविष्टोययावङ्गनृपोत्तमः सुदर्शनोवृतस्तत्रचचालपथिनिर्भयः ८

वयमत्रागताःपुनस्तमृषिंद्रष्टुंभारद्वाजाश्रमंगत्वास्थास्यामःपश्चादस्माभिस्तस्मिन्नाश्रमेस्थेयमुततवगृहेस्थेयमितिविचारःकर्तव्योनमध्येइतिभावः ५ इद
मुत्तरंपूर्वराज्ञामद्गृहेस्थेयमित्युक्तंतस्येतिबोध्यं ६ सोपिसुदर्शनोपि ७ अनुपश्चान्नृपोत्तमःसुबाहुः वृतोविवाहितः ८ ७ ७
७ ७ ७ ७ ७ ७ ७ ७

९ सुदर्शनःशिवांशरणंजगामपत्न्यासहनिर्भयोजानोमंत्रजपप्रादुर्भावादित्यर्थः १० ११ १२ राघवेणसुदर्शनेन १३ परस्परजिघांसतांराज्ञांशंखाभेर्यश्चनेदुरित्यर्थः १४ १५ अग्रतःसर्वसैन्यस्यतुसुदर्शनमुपस्थितः प्राप्तस्तेनयुधाजितासहितः शत्रुजिच्चोपस्थितइतिपूर्वेणान्वयः १६ किमर्थंभ्रातरंसुदर्शी

रथैःपरिवृतःशूरःसदारोरथसंस्थितः गच्छन्ददर्शसैन्यानिनृपाणांरघुनंदनः ९ सुबाहुरपितान्वीक्ष्यचिंताविष्टोबभूवह विधिवत्साशिवांचित्तेजगामशरणंमुदा १० जजापैकाक्षरंमंत्रंकामराजमनुत्तमं निर्भयोवीतशोकश्चपत्न्यासहनवोढ-या ११ इतःसर्वेमहीपालाःकृत्वाकोलाहलंतदा उत्थिताःसैन्यसंयुक्ताहंतुकामास्तुकन्यकां १२ काशीराजस्तुतान्दृष्ट्वा हंतुकामोबभूवह निवारितस्तदात्यर्थंराघवेणजिगीषता १३ तत्रापिनेदुःशंखाश्चभेर्यश्चानकदुंदुभिः सुबाहोश्चनृपाणांचपरस्परजिघांसतां १४ शत्रुजित्तुसुसंवृत्तःस्थितस्तत्रजिघांसया युधाजित्तत्सहायार्थंसन्नद्धःप्रबभूवह १५ केचिच्चप्रेक्षकास्तस्यसहानीकैःस्थितास्तदा युधाजिदग्रतोगत्वासुदर्शनमुपस्थितः १६ शत्रुजित्तेनसहितोहंतुंभ्रा-तरमानुजः परस्परंतुबाणौघैस्तनक्षः क्रोधमूर्छिताः १७ संमर्दःसुमहांस्तत्रसंप्रवृत्तःसुमार्गणैः काशीपतिस्तदातू-र्णंसैन्येनबहुनावृतः १८ साहाय्यार्थंजगामाशुजामातरमनिंदितं एवंप्रवृत्तेसंग्रामेदारुणेलोमहर्षणे १९ प्रादुर्बभूव सहसादेवीसिंहोपरिस्थिता नानायुधधरारम्यावरभूषणभूषिता २० दिव्यांबरपरीधानामंदारस्रक्सुसंयुता तांदृष्ट्वातेऽथ भूपालाविस्मयंपरमंगताः २१ केयंसिंहसमारूढाकुतोवेतिसमुत्थिता सुदर्शनस्तुतांवीक्ष्यसुबाहुमितिचाब्रवीत् २२ प-श्यराजन्महादेवीमागतांदिव्यदर्शनां अनुग्रहायमेनूनंप्रादुर्भूतादयान्विता २३ निर्भयोहंमहाराजजातोस्मिनिर्भयादपि सुदर्शनःसुबाहुश्चतामालोक्यवराननां २४

नंहंतुंअनुजएवानुजःप्रज्ञादित्वादण् ततक्षुश्चिच्छिदुस्तेत्रयः १७ १८ १९ २०

२१ विस्मयमेवाह केयमिति २२ २३ २४ छ छ छ छ

५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेनवमोऽध्यायः ९ षट्षष्टि-
श्लोकवर्यैस्तुदूतसंवादकीर्तनं क्रियतेयत्रदोषास्तुदैत्यानांभांतिसर्वतः १ पूर्वाध्यायांते दूतवाक्यंश्रुत्वादेवीयदाहतदुच्यते इतितस्येति १

प्रीतियुक्तासमायातियदिसामृगलोचना रथभंगोयथानस्यात्तथाकुरुममेप्सितं ५८ श्रवणान्मोहितोऽस्म्यद्य
तस्यारूपस्यसंपदा व्यासउवाच महिषस्यवचःश्रुत्वापेशलंमंत्रिसत्तमः ५९ जगामतरसाकामंगजाश्वरथसंयु
तः गत्वादूरतरंस्थित्वातामुवाचमनस्विनीं ६० विनयावनतःश्लक्ष्णंमंत्रीमधुरयागिरा प्रधानउवाच कासित्वं
मधुरालापेकिमत्रागमनंकृत ६१ पृच्छतित्वांमहाभागेमन्मुरवेनममप्रभुः संजेतासर्वदेवानामवध्यस्तुनरैःकि
ल ६२ ब्रह्मणोवरदानेनगर्वितश्चारुलोचने दैत्येश्वरोऽसौबलवान्कामरूपधरःसदा ६३ श्रुत्वात्वांसमुपायातां
चारुवेषांमनोहरां द्रष्टुमिच्छतिराजामेमहिषोनामपार्थिवः ६४ मानुषंरूपमादायत्वत्समीपंसमेष्यति यथारु
च्येतचार्वंगितथामन्यामहेवयं ६५ तत्त्वंहिमृगशावाक्षिसमीपंतस्यधीमतः नोचेदिहानयाम्येनंराजानंभक्तित
त्परं ६६ करभोरुवदा शुत्वंसंविधेयंमयातथा इतिश्रीदेवीभागवतेमहापुराणेदेवीमाहात्म्येनवमोऽध्यायः ९
व्यासउवाच इतितस्यवचःश्रुत्वाप्रहस्यप्रमदोत्तमा तमुवाचमहाराजमेघगंभीरयागिरा १ देव्युवाच मंत्रिवर्य-
सुराणांवैजननींविद्धिमांकिल महालक्ष्मीमितिख्यातांसर्वदैत्यनिषूदिनीं २ प्रार्थिताऽहंसुरैःसर्वैर्महिषस्यवधा
य्च पीडितैर्दानवेंद्रेणयज्ञभागबहिष्कृतैः ३ तस्मादिहागतास्म्यद्यतद्वधार्थंकृतोद्यमा एकाकिनीनसैन्येनसंयु
तामंत्रिसत्तम ४ यत्त्वयाहंसामपूर्वंकृत्वास्वागतमादरात् उक्तामधुरयावाचातेनतुष्टास्मितेऽनघ ५ नोचेद्धन्मि
दृशात्वांवैकालाग्निसमयाकिल कस्यप्रीतिकरंनस्यान्माधुर्यवचनंखलु ६ २ ३ ४ ५ कालाग्निसमयासदृशया ६

गच्छतमिति तंमहिषंप्रतिगच्छेत्यर्थः ७ ८ ९ १० ११ १२ १३ यद्यस्मादित्यर्थः स्त्रीवध्यत्वेऽवशिष्टेसतीतिशेषः



गच्छत्वंमहिषंपापंवदमद्वचनादिदं गच्छपातालमद्युनाजीवितेच्छायदस्तिते ७ नोचेत्कृतागसंदुष्टंहनिष्यामि
रणांगणे मद्बाणक्षुण्णदेहस्त्वंगंतासियमसादनं ८ दयालुत्वंममेदंत्वंविदित्वागच्छसत्वरं हतेत्वयिसुरामूढ
स्वर्गंप्राप्स्यंतिसत्वरं ९ तस्माद्गच्छस्वत्यक्त्वैकामेदिनींचससागरां पातालंतरसामंदयावद्बाणानमेऽपतन् १०
युद्धेच्छाचेन्मनसितेतत्तिष्ठोहित्वरितोसुर वीरैर्महाबलैःसर्वैर्नयामियमसादनं ११ युगेयुगेमहामूढहतास्त्वत्सदृशाः
किल असंख्यातास्तथात्वांवैहनिष्यामिरणांगणे १२ साफल्यंकुरुशस्त्राणांधारणेतुश्रमोऽन्यथा तद्युध्यस्वम
यासार्द्धंसमरेस्मरपीडितः १३ मागर्वंकुरुदुष्टात्मन्यन्मेऽस्तिब्रह्मणोवरः स्त्रीवध्यत्वेत्वयामूढपीडिताः स्फुर
सत्तमाः १४ कर्त्तव्यंवचनंधातुस्तेनाहंत्वामुपागता स्त्रीरूपमतुलंकृत्वासत्यंहंतुंकृतागसं १५ यथेच्छंगच्छवा
मूढपातालंपन्नगावृतं हित्वाभूःस्फुरसद्माद्यजीवितेच्छायदस्तिते १६ व्यासउवाच इत्युक्तःसततोदेव्यामंत्रिश्रेष्ठो
बलान्वितः प्रत्युवाचनिशम्यासौवचनंहेतुगर्भितं १७ देविस्त्रीसदृशंवाक्यंब्रूषेत्वंमदगर्विता क्वासौक्वत्वंकथं
युद्धमसंभाव्यमिदंकिल १८ एकाकिनीपुनर्बालाप्रारब्धयौवनामृदुः महिषोऽसौमहाकायोदुर्विभाव्योहिसंगतं
१९ सैन्यंबहुविधंतस्यहस्त्यश्वरथसंकुल पदातिगणसंविद्धनानायुधविराजितं २० कःश्रमःकरिराजस्यमाल-
तीपुष्पमर्दने मारणेतववामोरुमहिषस्यतथारणे २१ यदित्वांपरुषंवाक्यंब्रवीमिस्वल्पमप्यहं शृंगारेतद्विरुद्धं
हिरसभंगाद्बिभेम्यहं २२ राजास्माकंसुररिपुर्वर्त्ततेत्वयिभक्तिमान् साममेवमयावाच्यंदानयुक्तंतथावचः २३ तस्मिन्



वशिष्टेसतिब्रह्मणोवरोवर्त्ततइत्यत्रगर्वंमाकुर्वित्यर्थः तर्हिकास्त्रीहनिष्यतीतिचेदहमेवहनिष्यामीत्याह त्वयेति १४ कृतागसंत्वांहंतुंसमुपागतेत्यन्वयः

१५ १६ १७ स्त्रीसदृशमप्रौढं १८ १९ २० २१ हियतःश्रृंगारेपरुषंवाक्यंविरुद्धंभवति ततोरसभंगाद्बिभेमिततोनपरुषंव
कुंशक्नोमीत्यर्थः २२ २३ २४ २५ २६ २७ २८ सचिवएवसाचिवः २९ ३० ३१ यदुक्तंस्त्रीस्वभावेति यत्त्वयोक्तंम्

नोचेदन्यमहमद्यैवबाणेनत्वांमृषावदां मिथ्याभिमानचतुरांरूपयौवनगर्वितां २४ स्वामीमेमोहितःश्रुत्वारूपंते
भुवनातिगं तत्प्रियार्थेप्रियंकामंवक्तव्यंत्वयियन्मया २५ राज्यंतवधनंसर्वंदासस्तेमहिषःकिल कुरुभावंविशालाक्षि
त्यक्त्वारोषंमूर्तिमदं २६ पतामिपादयोस्तेऽहंभक्तिभावेनभामिनि पट्टराज्ञीमहाराज्ञोभवशीघ्रंशुचिस्मिते २७ त्रै
लोक्यविभवंसर्वंप्राप्स्यसित्वमनाविलं सुखंसंसारजंसर्वंमहिषस्यपरिग्रहात् २८ देव्युवाच शृणुसाचिववक्ष्या
मिवाक्यानांसारमुत्तमं शास्त्रदृष्टेनमार्गेणचातुर्यमनुचिंत्यच २९ महिषस्यप्रधानस्त्वंमयाज्ञातंधियाकिल पशुबु
द्धिस्वभावोऽसिवचनात्तवसांप्रतं ३० मंत्रिणस्त्वादृशायस्यसकथंबुद्धिमान्भवेत् उभयोःसदृशोयोगःकृतोऽयंविधि
नाकिल ३१ यदुक्तंस्त्रीस्वभावासितद्विचारयमूढकिं पुमान्नाहंतत्स्वभावाऽभवंस्त्रीरूपधारिणी ३२ याचितंमरणं
पूर्वंस्त्रियात्वत्प्रभुणायथा तस्मान्मन्येऽतिमूर्खोऽसौनवीररससवित्तमः ३३ कामिन्यामरणंक्लीबरतिदंभूरिदुःखदं प्रार्थि
तंप्रभुणातेनमहिषेणात्मबुद्धिना ३४ तस्मात्स्त्रीरूपमाधायकार्यकर्त्तुमुपागता कथंबिभेमित्वद्वाक्यैर्धर्मशास्त्रावि
रोधकैः ३५ विपरीतंयदादैवंतृणंवज्रसमंभवेत् विधिश्चेत्सुमुखःकामंकुलिशंतूलवत्तदा ३६ किंसैन्यैरायुधैःकिं
वाप्रपंचैर्दुर्गसेवनैः मरणंसांप्रतंयस्यतस्यसैन्यैस्तुकिंफलं ३७

दस्त्रीस्वभावासीतितत्रविचारयकिमहंपुमान्नास्मितत्स्वभावापु
रुषस्वभावाकिंपुमान्नाहंमायाविशिष्टब्रह्मरूपिण्याममपुंप्रकृत्युभयात्मकत्वात्पुरुषस्वभावत्वमस्त्येव ननुकिमर्थंतर्हिस्त्रीवेषोधृतइतिचेद्देवै
र्महिषवधार्थंप्रार्थितास्त्रीवेषाऽभवमित्याह अभवंस्त्रीवेषधारिणीति ३२ तदेवाहयाचितमिति ३३ ३४ ३५ यदुक्तमेकाकिनीतितत्रोत्तरमाह विपरीत
मिति ३६ ३७

किंचतवमहिषासुरान्ममृत्युर्यदिकल्पितःस्यात्तर्हिसभविष्यत्येव तत्राहमेकाकिनीस्यामपिचेत्किंसैन्ययुतावेदपिकिमित्याह यदायमिति ३८ ३९ ननुमहिषासुरस्यवरोवर्त्ततेततस्तस्यमरणाभावात्कथंतं हनिष्यसित्वंतत्राह ब्रह्मादीनामिति महिषासुरबुद्ध्याह भवनइति ४० ये



यदायंदेहसंबंधोजीवस्यकालयोगतः तदैवलिखितंसर्वसुखदुःखंतथामृतिः ३८ यस्ययेनप्रकारेणमरणं दैवनिर्मितं तस्यतेनैवजायेतनान्यथेतिविनिश्चयः ३९ ब्रह्मादीनांयथाकालेनाशोत्पत्तीविनिर्मिते तथैवभवतः कामंकिमन्येषांविचार्यते ४० येमृत्युधर्मिणस्तेषांवरदानेनदर्पिताः मरिष्यामोनमन्यंतेतेमूढामंदचेतसः ४१ तस्माद्गच्छनृपंब्रूहिवचनंममसत्वरं यदाज्ञापयतेभूपरत्नत्कर्त्तव्यंत्वयाकिल ४२ मघवा स्वर्गमाप्नोतुदेवाःसंतु हविर्भुजः यूयंप्रयातपातालंयदिजीवितुमिच्छथ ४३ अन्यथाचेन्मतिमिंदंमहिषस्यदुरात्मनः तद्युध्यस्वमयासा र्द्धंमरणायकृतादरः ४४ मन्यसेसंगरेभग्नादेवाविष्णुपुरोगमाः दैवंहिकारणंतत्रवरदानंप्रजापतेः ४५ व्यासउ वाच इतिदेव्यावचःश्रुत्वाचिंतयामासदानवः किंकर्त्तव्यंमयाद्युक्तंगंतव्यंवानृपंप्रति ४६ विवाहार्थमिहाज्ञप्तोरा ज्ञाकामातुरेणवै तत्कथंविरसंकृत्वागच्छेयंनृपसन्निधौ ४७ इयंबुद्धिःसमीचीनायद्गच्छामिकलिंविना यथागतं तथाशीघ्रंराज्ञेसंवेदयाम्यहं ४८ सप्रमाणंपुनःकार्यंराजामतिमतांवरः करिष्यतिविचार्यैवसचिवैर्निपुणैःसह ४९ सहसानमयायुद्धंकर्त्तव्यमनयासह जयेपराजयेवापिभूपतेरप्रियंभवेत् ५० यदिमांसुंदरीहन्याद्धंवाहन्मितां पुनः येनकेनाप्युपायेनसकुप्येत्पार्थिवःकिल ५१ तस्मात्तत्रैवगत्वाहंबोधयिष्यामितंनृपं यथाद्याभिहितंदेव्यायथारु चिकरोतुसः ५२

मृत्युधर्मिणइति येमरणधर्मिणोदेवास्तेषांवरेणामृताभवामइतियेजानंतितेमूढाइत्यर्थः ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ देव्याइत्यस्याग्रेतदनंतरमितिशेषः ५२ ७ छ

५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ इतिश्रीदेवीभागवतति

व्यासउवाच इतिसंचिंत्यमेधावीजगामनृपसन्निधौ प्रणम्यतमुवाचेदंकृतांजलिरमात्यजः ५३ मंत्र्युवाच
राजन्देवीवरारोहासिंहस्योपरिसंस्थिता अष्टादशभुजारम्यावरायुधधरापरा ५४ सामयोक्तामहाराजमहिषं
भजभामिनि महिषीभवराज्ञस्त्वंत्रैलोक्याधिपतेःप्रिया ५५ पट्टराज्ञीत्वमेवास्यभवितानात्रसंशयः सतवाज्ञा
करोजातोवशवर्तीभविष्यति ५६ त्रैलोक्यविभवंभुक्त्वाचिरकालंवरानने महिषंपतिमासाद्ययोषितांसुभगाभव
५७ इतिमद्वचनंश्रुत्वासास्मयावेशमोहिता मामुवाचविशालाक्षीस्मितपूर्वमिदंवचः ५८ महिषीगर्भसंभूतंप
शूनामधमंकिल बलिंदास्याम्यहंदेव्येसुराणांहितकाम्यया ५९ कामूढाकामिनीलोकेमहिषंवैपतिंभजेत् मादृ
शीमंदबुद्धेकिंपशुभावंभजेदिह ६० महिषीमहिषनाथंसम्भृंगाभृंगसंयुतं कुरुतेक्रंदमानावैनाहंतत्सदृशीशठा
६१ करिष्येऽहंमृधेयुद्धंहनिष्येत्वांस्मरांप्रियं गच्छवादुष्टपातालंजीवितेच्छायदस्तिते ६२ परुषंतुतयावाक्य
मित्युक्तंनृपमत्तया तच्छ्रुत्वाऽहंसमायातःप्रविचिंत्यपुनःपुनः ६३ रसभंगंविचिंत्यैवनयुद्धंतुमयाकृतं आज्ञां
विनातवात्यंतंकथंकुर्यांदृथोद्यमं ६४ सातीवचबलोन्मत्तावर्ततेभूपभामिनी भवितव्यंनजानामिकिंवाभाविभ
विष्यति ६५ कार्येस्मिंस्त्वंप्रमाणंनोमंत्रोऽतीवदुरासदः युद्धंपलायनंश्रेयोनजानेऽहंविनिश्चयं ६६ इतिश्रीदे०
दशमोऽध्यायः १० व्यासउवाच इतितस्यवचःश्रुत्वामहिषोमदविव्हलः मंत्रिवृद्धान्समाहूयराजावचनमब्र
वीत् १ लकेपंचमस्कंधेदशमोऽध्यायः १० सप्तषष्टिश्लोकवर्यैर्महिषासुरसंसदि विमृश्यतामन्दूतस्तुप्रेषितश्चेतिकीर्त्यते १ इत्थं
पूर्वाध्यायांतेमंत्रिवर्यभाषणमुपन्यस्यतदुत्तरंजातंवृत्तमाह इतितस्येति १ ७ ७ ७ ७

विश्रब्धंनिश्चितं २ सामादिषूपायेषुकउपाय इत्यर्थः ३ सत्यमिति वक्तव्यंहिद्विविधंसत्यंप्रियंचेत्यर्थः तयोर्मध्येएकंविबुधैर्हित करंविचार्यकार्यंस्वीकार्यमित्यर्थः ४ किंतद्धितकरंतत्स्वयमेवाहुः सत्यंचेति प्रियंचाहितकृदिति सत्यमुच्यतेचेद्राज्ञः क्रोधोभवि-

राजोवाच मंत्रिणः किंचकर्तव्यंविश्रब्धंब्रूतमाचिरं आगतादेवविहितामायेयंशांबरीवकिं २ कार्येस्मिन्निपुणायूयमुपायेषुविचक्षणाः सामादिषुचकर्त्तव्यः कोत्रमत्यंब्रुवंतुच ३ मंत्रिणऊचुः सत्यसदेववक्तव्यंप्रियंच नृपसत्तम कार्यंहितकरंनूनंविचार्यंविबुधैःकिल ४ सत्यंचाहितकृद्राजन्प्रियंचाहितकृद्भवेत् यथौषधंनृणांलोकेत्वप्रियंरोगनाशनं ५ सत्यस्यश्रोतामंताचदुर्लभः पृथिवीपते वक्तापिदुर्लभः कामंबहवश्चाटुभाषकाः ६ कथंब्रूमोऽत्रनृपतेविचारेगहनेत्विह शुभंवाप्यशुभंवापिकोवेत्तिभुवनत्रये ७ राजोवाच स्वस्वमत्यनुसारेणब्रुवंत्वद्यपृथक्पृथक् येषांहियादृशोभावस्तच्छ्रुत्वाचिंतयाम्यहं ८ बहूनांमतमाज्ञायविचार्यचपुनःपुनः यच्छ्रेयस्तद्धिकर्त्तव्यंकार्यंकार्यविचक्षणैः ९ व्यासउवाच तस्यैवंवचनंश्रुत्वाविरूपाक्षोमहाबलः उवाचतरसावाक्यंरंजयन्पृथिवीपतिं १० विरूपाक्षउवाच राजन्नारीवराकीयंसाब्रूतेमदगर्विता बिभीषिकामात्रमिदंज्ञातव्यंवचनंत्वया ११ कोबिभेतिस्त्रियोवाक्यैर्दुरुक्तैरणदुर्मदैः अनृतंसाहसंचेतिजानन्नारीविचेष्टितं १२ जित्वात्रिभुवनंराजन्नंधकांताभयेनवै दीनत्वेप्ययशोनूनंवीरस्यभुवनेभवेत् १३ तस्माद्याम्यहमेकाकीयुद्धायचंडिकांप्रति हनिष्येतांमहाराजनिर्भयोभवसांप्रतं १४ सेनावृतोऽहंगत्वातांशरस्त्रास्त्रैर्विविधैःकिल निषूदयामिदुर्मर्षांचंडिकांचंडविक्रमा १५

ष्यतीतिभियाराज्ञोहितकरमपिसत्यंवाक्यंहित्वातन्मनोरंजनायासत्यंकार्यनाशकरंचयन्निष्टंतद्वक्तव्यंतदेतदत्रप्रियपदवाच्यंतच्चाहितकृदेवभवेत् तद्भिन्नमप्रियंसत्यंवाक्यंहितकृदितिभावः तत्रदृष्टांतमाह यथौषधमिति ५ चाटुभाषकाः मनोनुकूलवक्तारः ६ ७ ८ ९ १०

११ १२ दीनत्वेस्वीकृते इत्यर्थः १३ यामिगच्छामीत्यर्थः १४ १५ १६ १७ १८ १९ हावोयमिति योरसवित्तमः सयोयंमा
निनीनांहावस्तंवेत्ति वक्रोक्तिरिति कामिन्यावक्रोक्तिः प्रियंप्रतिपुरुषंप्रतिपरायणंभवति सुखाश्रयभूताभवति २० स्त्रियोत्ददृ्धंनसर्वे
जानंति किंतुकोपिचतुरः कामशास्त्रविचक्षणएवजानातीत्याह वेत्तीति तर्हित्वमेवतद्धृदयवेत्तासितनरस्तद्वाक्यार्थंवर्णयेतिचेत्तदाह यदुक्त
मिति २१ हेतुगर्भमिति कारणगर्भतात्पर्यांतर विशिष्टमित्यर्थः किंतत्तात्पर्यांतरंतदाह बाणास्त्विति नप्रसिद्धाबाणाअत्रविवक्षिताः

बद्ध्वासर्पमयैःपाशैरानयिष्येतवांतिकं वशगातुसदातेस्यात्पश्यराजन्बलंमम १६ व्यासउवाच विरूपाक्ष
वचःश्रुत्वादुर्धरोवाक्यमब्रवीत् सत्यमुक्तंवचोराजन्विरूपाक्षेणधीमता १७ ममापिवचनंश्लक्ष्णंश्रोतव्यंधीमता-
त्वया कामातुरैषास्फुदतीलक्ष्यतेप्यनुमानतः १८ भवत्येवंविधाकामंनाधिकारूपगर्विता भीषयित्वावरारोहात्वांव
शेकर्त्तुमिच्छति १९ हावोयंमानिनीनांवैतंवेत्तिरसवित्तमः वक्रोक्तिरेषाकामिन्याःप्रियंप्रतिपरायण २० वेत्तिकोपि
नरःकामंकामशास्त्रविचक्षणः यदुक्तंनामबाणैस्त्वांवधिष्येरणमूर्द्धनि २१ हेतुगर्भमिदंवाक्यंज्ञातव्यंहेतुवित्तमैः
बाणास्तुमानिनीनांवैकटाक्षाएवविश्रुताः २२ पुष्पांजलिमयाश्चान्येव्यंग्यानिवचनानिच काशक्तिरन्यबाणानांप्र
रणेत्वयिपार्थिव २३ नाहृशीनांनसाशक्तिर्ब्रह्मविष्णुहरादिषु ययोक्तंनेत्रबाणैस्त्वांहनिष्येमदंपार्थिवं २४ विपरीतंप
रिज्ञातंतेनारसर्वविदाकिल पातयिष्यामिशय्यायांरणमध्यांपतितंव २५ विपरीतरतिक्रीडाभाषणंज्ञेयमेवतन् करिष्ये
विगतप्राणंयदुक्तंवचनंतया २६

किंतुकटाक्षाः २२ पुष्पांजलिमयाइति यथाकटाक्षाःपूर्वोक्ताभिप्रायास्तथापुष्पांजलिमयाव्यंग्यवचनानिनर्मोक्तयश्च
बाणाइत्यर्थः ननुसुखबाणाःकुतोनात्रविवक्षिताइतिचेदसंभवान्नतेऽत्रविवक्षिताइत्याह काशक्तिरिति २३ तादृशीनांशृंगारवतीनांस्त्रीणामन्यबाणानांप्रेरणेका
शक्तिः किंशब्दःक्षेपार्थः नैवशक्तिरित्यर्थः याशक्तिर्ब्रह्माविष्णुहरादिषुनास्तितस्माद्यन्तयोक्तंबाणैस्त्वांवधिष्येइतितस्यायमभिप्रायइत्याह २४ २५ यच्च

तयोक्तं तव पतिं महिषासुरं रणे शय्यायां रणरूपायां शय्यायां पातयिष्यामीति तस्यायमभिप्राय इत्याह विपरीतरतीति २६ यच्च तयोक्तं करिष्ये विग नप्राणमिति तस्यायमभिप्राय इत्याह वीर्यप्राणा इति तद्धि हीनं वीर्यविहीनं करिष्यामीत्येव तद्वचनार्थः एतादृशव्यंग्याधिक्येन नर्मोक्त्याधिक्येन वा

वीर्यप्राणा इति प्रोक्तं तद्धि हीनं न चान्यथा व्यंग्याधिक्येन वाक्येन वरयत्युत्तमा नृप २७ तद्धैर्विचारतो ज्ञेयं रसग्रंथ विचक्षणैः इति ज्ञात्वा महाराज कर्त्तव्यं रससंयुतं २८ सामदान द्वयं तस्या नान्योपायोऽस्ति भूपते रुष्टा वा गर्विता वापि वशगा मानिनी भवेत् २९ तादृशैर्मधुरैर्वाक्यैरानयिष्ये तवांतिकं किं बहूक्तेन मे राजन् कर्तव्या वशवर्तिनी ३० गत्वा मया धुनैवेयं किंकरी व सदैवते व्यास उवाच इत्थं निशम्य तद्वाक्यं ताम्रस्तत्त्वविचक्षणः ३१ उवाच वचनं राजन्निशामय मयो- दितं हेतुमद्धर्मसहितं रसयुक्तं नयान्वितं ३२ नैषा कामातुरा बाला नानुरक्ता विचक्षणा व्यंग्यानि नैव वाक्यानि तयोक्ता नि तु मानद ३३ चित्रमत्र महाबाहो यदेकावरवर्णिनी निरालंबा समायाति चित्ररूपा मनोहरा ३४ अष्टादशभुजा नारी न श्रुता न च वीक्षिता केनापि त्रिषु लोकेषु पराक्रमवती शुभा ३५ आयुधान्यपि तावंति धृतानि बलवंति च विपरीतमिदं मन्ये स वै कालकृतं नृप ३६ स्वप्नानि दुर्निमित्तानि मया दृष्टानि वै निशि तेन जानाम्यहं नूनं वैशसं समुपागतं ३७ कृष्णांबरधरा नारी रुदती च गृहांगणे दृष्टा स्वप्ने प्युषः काले चिंतनव्यस्तदत्ययः ३८ विकृताः पक्षिणो रात्रौ रोरुवंति गृहे गृहे उत्पाता विवि धा राजन् प्रभवंति गृहे गृहे ३९ तेन जानाम्यहं नूनं कारणं किंचिदेव हि यत्त्वां प्रार्थयते बाला युद्धाय कृतनिश्चया ४० नैषा स्ति मानुषी नो वा गांधर्वी न तथासुरी

स्येन सात्युत्तमा कामिनी त्वां वरयतीति यन्मयोच्यते तद्धै रसग्रंथविचक्षणैः शृंगारशास्त्रनिपुणैर्विचारतो - ज्ञेयं निश्चेतव्यमित्यर्थः २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ तेन स्वप्नेन तदत्ययो येन स्वप्नो दृष्टस्तदत्ययो ध्वंसो नियतं चिंतितव्य इत्यर्थः ३८ ३९ तेनेति तेन दुःस्वप्नादिना किंचिदन्यदेव कारणमस्माकं मरणरूपमस्या अवतारस्य जानामि अनुमिनोमीत्यर्थः किंच त्वत्यक्षतो पीदं नि

श्रीयत इत्याह यत्त्वामिति ४० नन्वनया कथं मम वधो भविष्यतीति तत्राह नैषास्तीति विलक्षणशक्तिमत्त्वाद्भविष्यतीत्यर्थः ४१ ४२ ४३ ४४ ४५ हंतव्या नान्यथेति यदि संग्रामे न वशगा तदा हंतव्या यद्यन्यथा वशगा स्यात्तदा न हंतव्या किंतु कामं यथेष्टं माननीयेत्यर्थः ४६ ४७

देवैः कृते यं ज्ञातव्या माया मोहकरी विभो ४१ कातरत्वं न कर्तव्यं ममैतन्मतमित्यलं कर्त्तव्यं सर्वथा युद्धं यद्भाव्यं तद्भविष्यति ४२ को वेद दैवकर्त्तव्यं शुभं वाप्यशुभं तथा अवलंब्य धियाधैर्यं स्थातव्यं वै विचक्षणैः ४३ जीवितं मरणं पुंसां दैवाधीनं नराधिप कोपि नैवान्यथा कर्त्तुं समर्थो भुवनत्रये ४४ महिष उवाच गच्छ त्वं त्वं महाभाग युद्धाय कृतनिश्चयः तामानय वरारोहां जित्वा धर्मेण मानिनीं ४५ न भवेद्वशगा नारी संग्रामे यदि सा तव हंतव्या नान्यथा कामं माननीया प्रयत्नतः ४६ वीरस्त्वमसि सर्वज्ञ कामशास्त्रविशारदः येन केनाप्युपायेन जेतव्या वरवर्णिनी ४७ त्वरन्वीर महाबाहो सैन्येन महता वृतः तत्र गत्वा त्वया ज्ञेया विचार्य च पुनः पुनः ४८ किमर्थमागता चेयं ज्ञातव्यं तद्धि कारणं कामाद्वा वैरभावाद्वा माया कस्येयमित्युत ४९ आदौ तन्निश्चयं कृत्वा ज्ञातव्यं तच्चिकीर्षितं पश्चाद्युद्धं प्रकर्त्तव्यं यथायोग्यं यथाबलं ५० कातरत्वं न कर्त्तव्यं निर्दयत्वं तथा न च यादृशी हि मनस्तस्याः कर्त्तव्यं तादृशं त्वया ५१ व्यास उवाच इति तद्भाषितं श्रुत्वा ताम्रः कालवशं गतः निर्गतः सैन्यसंयुक्तः प्रणम्य महिषं नृपं ५२ गच्छन्मार्गे दुरात्मासौ शकुनान्वीक्ष्य दारुणान् विस्मयं च भयं प्राप यममार्गप्रदर्शकान् ५३ स गत्वा तां समालोक्य देवीं सिंहोपरि स्थितां स्तूयमानां सुरैः सर्वैः सर्वायुधविभूषितां ५४ तामुवाच विनीतः सन् वाक्यं मधुरया गिरा सामभावं समाश्रित्य विनयावनतः स्थितः ५५ देवि दैत्येश्वरः सुभ्रु त्वद्रूपगुणमोहितः स्पृहां करोति महिषस्त्वत्पाणिग्रहणाय च ५६ भावं कुरु विशालाक्षि तस्मिन्नमरदुर्जये पतिं तं प्राप्य मृद्वंगि नंदने विहराद्भुते ५७ सर्वांगसुंदरं देहं प्राप्य सर्वसुखास्पदं सुखं सर्वात्मना ग्राह्यं दुःखं हेयमिति स्थितिः ५८

४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८

५९ ६० ६१ ६२ ६३ ६४ कष्टंप्राप्यापिसंग्रामेजयसंदेहइत्यन्वयः ६५ ६६ ६७ इतिश्रीदे·पं·एकादशोऽध्यायः ११ पंच
षष्टिश्लोकवर्यैस्ताम्रस्यागमनोत्तरं दैत्यौचप्रेषितौतेनश्रुतौबाष्कलदुर्मुखौ १ ताम्रवाक्यश्रवणोत्तरंजगदंबिकायदाहतदुच्यते तन्निशम्ये

करभोरुकिमर्थंतेगृहीतान्यायुधान्यलं पुष्पकंदुकयोग्यास्तेकराःकमलकोमलाः ५९ भ्रूचापेविद्यमानेऽपिधनुषा
किंप्रयोजनं कटाक्षाविशिखाःसंतिकिंबाणैर्निष्प्रयोजनैः ६० संसारेदुःखदंयुद्धंनकर्त्तव्यंविजानता लोभासक्ताःप्र
कुर्वंतिसंग्रामंचपरस्परं ६१ पुष्पैरपिनयोद्धव्यंकिंपुनर्निशितैःशरैः भेदनंनिजगात्राणांकस्यतज्जायतेमुदे ६२ तस्मा-
त्त्वमपितन्वंगिप्रसादंकर्त्तुमर्हसि भर्त्तारंभजमेनाथंदेवदानवपूजितं ६३ सतेऽत्रवांछितंसर्वंकरिष्यतिमनोरथं त्वं
पट्टमहिषीराज्ञःसर्वथानात्रसंशयः ६४ वचनंकुरुमेदेविप्राप्स्यसेसुखमुत्तमं संग्रामेजयसंदेहःकष्टंप्राप्यनसंशयः
६५ जानासिराज्यनीतिंत्वंयथावद्वरवर्णिनि भुंक्ष्वराज्यसुखंपूर्णंवर्षाणामयुतायुतं ६६ पुत्रस्तेभविताकांतःसोऽ
पिराजाभविष्यति यौवनेक्रीडयित्वांतेवार्द्धक्येसुखमाप्स्यसि ६७ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेदेवी
माहात्म्येएकादशोऽध्यायः ११ व्यासउवाच तन्निशम्यवचस्तस्यताम्रस्यजगदंबिका मेघगंभीरयावाचाहसंती
तमुवाचह १ देव्युवाच गच्छताम्रपतिंब्रूहिमुमूर्षुंमंदचेतसं महिषंचातिकामार्त्तंमूढंज्ञानविवर्जितं २ यथातेम
हिषीमाताप्रौढायवसभक्षिणी नाहंतथाश्रृंगवतीलंबपुच्छामहोदरी ३ नकामयेऽहंदेवेशंनैवविष्णुंनशंकरं धनदं
वरुणंनैवब्रह्माणंनचपावकं ४ एतान्देवगणान्हित्वापशुंकेनगुणेनवै वृणोम्यहंवृथालोकेगर्हणामेभवेदिति ५
नाहंपतिंवरानारीवर्त्ततेमेपतिःप्रभुः सर्वकर्त्तासर्वसाक्षीत्वकर्तानिःस्पृहःस्थिरः ६ ति १ २ यवसंतृणं यथात्वंतथात्व-
ज्जातीयानाहंयन्मामभिकांक्षसीतिभावः ३ किंचनकामयेहमिति ४ ५ निःस्पृहःस्थिरइतिभगवत्यामायाविशिष्टब्रह्मरूपत्वेनपुंप्रकृत्य

भयात्मकत्वात्तस्यकेवलमायास्वरूपत्वाभिमानेनेयमुक्तिरितिबोध्यं ६ ७ ८ प्रबुध्येति इत्य० युध्यतामित्यर्थः जलवाहकं जलवाह
कत्वेनमहिषःप्रसिद्धोस्तीत्यर्थः ९ १० यत्त्वयोक्तंमहिषेणसंबंधेसुखंभविष्यतीतितत्राहकामंसदृशयोरिति ११ तदेवोपपादयति मूर्खे-

निर्गुणोनिर्ममोनंतोनिरालंबोनिराश्रयः सर्वज्ञःसर्वगःसाक्षीपूर्णःपूर्णाशयःशिवः ७ सर्वावासःक्षमःशांतः
सर्वदृक्सर्वभावनः तंत्यक्त्वामहिषमंदंकथंसेवितुमुत्सहे ८ प्रबुध्ययुध्यतांकामंकरोमियमवाहनं अथवामनु
जानांवैकरिष्येजलवाहकं ९ जीवितेच्छास्तिचेत्पापगच्छपातालमाशुवै समस्तैर्दानवैर्युक्तस्त्वन्यथाहन्मिसंगरे १०
कामंसदृशयोर्योगःसंसारेसुखदोभवेत् अन्यथादुःखदोभूयादज्ञानाद्यदिकल्पितः ११ मूर्खस्त्वमसियद्रूपे
पतिंमेभजभामिनि क्वाहंक्वमहिषःशृंगीसंबंधःकीदृशोद्वयोः १२ गच्छयुध्यस्ववाकामंहनिष्येऽहंसबांधवं य
ज्ञभागंदेवलोकंनोचेत्यक्त्वासुखीभव १३ व्यासउवाच इत्युक्त्वासातदादेवीजगर्जभृशमद्भुतं कल्पांतसदृशं
नादंचक्रेदैत्यभयावहं १४ चकंपेवसुधाचेलुस्तेनशब्देनभूधराः गर्भाश्चदैत्यपत्नीनांसस्रंसुर्गर्जितस्वनात् १५
ताम्रस्त्श्रुत्वाचतंशब्दंभयत्रस्तमनास्तदा पलायनंततःकृत्वाजगाममहिषांतिकं १६ नगरेतस्ययेदैत्यास्तेपिचिं
तामवाप्नुवन् बधिरीकृतकर्णाश्चपलायनपरानृप १७ तदाक्रोधेनसिंहोपिननादभृशमुत्कटः तेननादेनदैतेया
भयंजग्मुरपिस्फुटं १८ ताम्रंसमागतंदृष्ट्वाहयारिरपिमोहितः चिंतयामाससचिवैःकिंकर्तव्यमतःपरं १९ दुर्ग
ग्रहोवाकर्तव्योयुद्धंनिर्गत्यवापुनः पलायनेकृतेश्रेयोभवेद्वादानवोत्तमाः २० बुद्धिमंतोदुराधर्षाःसर्वशास्त्रविशार
दाः मंत्रःखलुप्रकर्तव्यःसुगुप्तःकार्यसिद्धये २१ मंत्रमूलंस्मृतंराज्यंयदिसस्यात्सुरक्षितः मंत्रिभिश्चसदाचारे
विधेयःसर्वथाबुधैः २२ स्त्वमसीति १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२

भूतिमिच्छतामंत्रोगुप्तःकर्त्तव्यइत्यर्थः २३ २४ २५ २६ २७ २८ २९ ३० ३१ राजन्निति इयंकस्यपत्नीकिमर्थमत्रागते



मंत्रभेदेविनाशःस्याद्राज्यस्यभूपतेस्तथा तस्माद्भेदभयाद्गुप्तःकर्त्तव्योभूतिमिच्छता २३ तदत्रमंत्रिभिर्वाच्यंवचनं
हेतुमद्धितं कालदेशानुसारेणविचिंत्यनीतिनिर्णयं २४ यायोषात्रसमायाताप्रबलादेवनिर्मिता एकाकिनीनिरालंबा
कारणंतद्विचिंत्यतां २५ युद्धंप्रार्थयतेबालाकिमाश्चर्यमतःपरं श्रेयोऽत्रविपरीतंवाकोवेत्तित्रिभुवनत्रये २६ नबहूनांजयो
प्यस्तिनैकस्यचपराजयः दैवाधीनौसदाज्ञेयौयुद्धेजयपराजयौ २७ उपायवादिनःप्राहुर्दैवंकिंकेनवीक्षितं अदृष्टमि
तियन्नामप्रवदंतिमनीषिणः २८ तत्सत्त्वेपिप्रमाणंकिंकातराशावलंबनं नसमर्थजनानांहिदैवंकुत्रापिलक्ष्यते
२९ उद्यमोदैवमेतौहिशूरकातरयोर्मतं विचिंत्याद्यधियासर्वंकर्त्तव्यंकार्यमादरात् ३० व्यासउवाच इतिराज्ञोव
चःश्रुत्वाहेतुगर्भंमहायशाः बिडालाख्योमहाराजमित्युवाचकृतांजलिः ३१ राजन्नेषाविशालाक्षीज्ञातव्यायत्नतःपु
नः किमर्थमिहसंप्राप्ताकुतःकस्यपरिग्रहः ३२ मरणंतेपरिज्ञायास्त्रियःसर्वात्मनासुरैः प्रेषितापद्मपत्राक्षीसमुत्पा
द्य स्वतेजसा ३३ तेपिछन्नाःस्थिताःस्वेऽत्रसर्वेयुद्धदिदृक्षवः समयेऽस्याःसहायास्तेभविष्यंतियुयुत्सवः ३४ पुर
तःकामिनींकृत्वातेवैविष्णुपुरोगमाः वधिष्यंतिचनःसर्वान्सात्वांयुद्धेहनिष्यति ३५ एतच्चिकीर्षितंतेषांमयाज्ञातंन
राधिप भवितव्यस्यनज्ञानंवर्त्ततेममसर्वथा ३६ योद्धव्यंनत्वयाद्येतिनाहंवक्तुंक्षमःप्रभो प्रमाणंत्वंमहाराजकार्येऽत्र
देवनिर्मिते ३७ त्वदर्थेऽस्माभिरनिशंमर्तव्यंकार्यगौरवात् विहर्तव्यंत्वयासार्धमेषधर्मोनुजीविनां ३८ विचारोत्रमहा
नस्तियदेकाकामिनीनृप युद्धंप्रार्थयतेऽस्माभिःससैन्यैर्बलदर्पितैः ३९

तिप्रथमंज्ञातव्यानततःपश्चाद्विचारःकर्तव्य



इत्यर्थः ३२ ननुतवमनसिकेयमस्तीत्यागतंतत्राह मरणंतेइति स्त्रियःसकाशात्तेमरणंसुरैःसर्वात्मनापरिज्ञायेत्यन्वयः ३३ ३४ ३५ ३६ ३७ ३८ ३९

४० ४१ ४२ ४३ ४४ ४५ ४६ रसस्यशृंगाररसस्यस्थायीभावोनाम विभावेनानुभावेनव्यक्तःसंचारिणातथा रस

दुर्मुखउवाच राजन्युद्धेजयोनाद्यभविनावेद्म्यहंकिल पलायनंनकर्त्तव्यंयशोहानिकरंनृणां ४०
इंद्रादीनांसयुगेऽपिनकृतयज्जुगुप्सितं एकाकिनींस्त्रियंप्राप्यकाहिकुर्यात्पलायनं ४१ तस्माद्युद्धंप्रकर्त्तव्यं
मरणंवारणेजयःयद्भावितद्भवत्येवकात्रचिंताविपश्यतः ४२ मरणेऽत्रयशःप्राप्तिर्जीवनेचतथासुखं उभयम
नसाकृत्वाकर्त्तव्ययुद्धमद्यवै ४३ पलायनेयशोहानिर्मरणंचायुषःक्षये तस्माच्छोकोनकर्त्तव्योजीवितेमरणे
तथा ४४ व्यासउवाच दुर्मुखस्यवचःश्रुत्वाबाष्कलोवाक्यमब्रवीत् प्रणतःप्रांजलिर्भूत्वाराजानंवाक्यको-
विदः ४५ बाष्कलउवाच राजंश्चिंतानकर्त्तव्याकार्येऽस्मिन्कातराप्रिये अहमेकोहनिष्यामिचंडींचंचललोचनां
४६ उत्साहस्तुप्रकर्त्तव्यःस्थायीभावोरसस्यच भयानकोभवेद्वैरीवीरस्यनृपसत्तम ४७ तस्मात्त्यक्त्वाभयं
भूपकरिष्येयुद्धमद्भुतं नयिष्यामिनरेंद्राहंचंडिकायमसादनं ४८ नबिभेमियमाद्देवात्कुबेराद्वरुणादपि
वायोर्वन्हेस्तथाविष्णोःशंकराच्छशिनोरवेः ४९ एकाकिनीतथानारीकिंपुनर्मदगर्विता अहंतांनिहनिष्यामिवि
शिखैश्चशिलाशितैः ५० पश्यबाहुबलंमेद्यविहरस्वयथासुखं भवतात्रनगंतव्यंसंग्रामेप्यनयासमं ५१ व्या
सउवाच एवंब्रुवतिराजेंद्रंबाष्कलेमदगर्विते प्रणम्यनृपतिंतत्रदुर्द्धरोवाक्यमब्रवीत् ५२ दुर्द्धरउवाच महिषा
हंविजेष्यामिदेवींदेवविनिर्मितां अष्टादशभुजांरम्यांकारणाच्चसमागतां ५३ राजन्भीषयितुंत्वांवैमायैषानिर्मि
तासुरैः

तामेतैरत्यादिःस्थायीभावःसचेतसइत्युक्तलक्षणश्चेतसश्चमत्कारः यद्यपिरसएवस्थायीभावोनरसस्यसंबंधीतथापिरसस्येति
षष्ठीराहोःशिरइतिवज्ज्ञेया यद्वारसस्यचित्तस्येत्यर्थोवा वैरीवीररसस्यतुभयानकोभावोवैरीत्यर्थः ४७ ४८ ४९ ५० ५१ ५२ ५३

५४ ५५ ५६ ५७ ५८ ५९ ६० भीषयंतिप्रभुंसदेति तस्मात्त्वांयेमंत्रिणोभीषयंतितेशत्रुपक्षीयास्तवनाशकराइतिभावः
६१ ६२ ६३ ६४ ६५ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेद्वादशोऽध्यायः १२ पंचाशच्छ्लोकवर्यैस्तुद्वाबाष्कलदुर्मुखौ यम



विभीषिकेयंविज्ञायत्यजमोहंमनोगतं ५४ राजनीतिरियंराजन्मंत्रिकृत्यंतथाशृणु सात्त्विकाराजसाःकेचित्ता
मसाश्चतथापरे ५५ मंत्रिणस्त्रिविधालोकेभवंतिदानवाधिप सात्त्विकाःप्रभुकार्याणिसाधयंतिस्वशक्तिभिः ५६
आत्मकृत्यमकुर्वंतिस्वामिकार्याविरोधनः एकचित्ताधर्मपरामंत्रशास्त्रविशारदाः ५७ राजसाभिन्नचित्ताश्च
स्वकार्यनिरताःसदा कदाचित्स्वामिकार्यंतेप्रकुर्वंतियदृच्छया ५८ तामसालोभनिरताःस्वकार्यनिरताःसदा प्र
भुकार्यंविनाश्यैवस्वकार्यंसाधयंतिते ५९ समयेतेविभिद्यंतेपरैस्तुपरवंचिताः स्वच्छिद्रंशत्रुपक्षीयान्निर्दिशंतिगृह
स्थिताः ६० कार्यभेदकरानित्यंकोशगुप्तासिवत्सदा संग्रामेऽथसमुत्पन्नेभीषयंतिप्रभुंसदा ६१ विश्वासस्तुनकर्त
व्यस्तेषांराजन्कदाचन विश्वासेकार्यहानिःस्यान्मंत्रहानिःसदैवहि ६२ खलाःकिंकिंनकुर्वंतिविश्वस्तालोभतत्पराः
तामसाःपापनिरताबुद्धिहीनाःशठास्तथा ६३ तस्मात्कार्यंकरिष्यामिगत्वाहंरणमस्तके चिंतात्वयानकर्तव्यासर्व
थानृपसत्तम ६४ गृहीत्वानांदुराचारामागमिष्यामिसत्वरः पश्यमेऽद्यबलंधैर्यंप्रभुकार्यंस्वशक्तितः ६५ इतिश्रीदे
वीभागवतेमहापुराणेपंचमस्कं॰ द्वादशो॰ध्यायः १२ व्यासउवाच इत्युक्त्वातौमहाबाहूदैत्यौबाष्कलदुर्मुखौ
जग्मतुर्मददिग्धांगौसर्वशास्त्रास्त्रकोविदौ तौगत्वासमरेदेवीमूचतुर्वचनंतदा दानवौचमदोन्मत्तौमेघगंभीरयागि
रा २ देविदेवाजितायेनमहिषेणमहात्मना वरयत्वंवरारोहेसर्वदैत्याधिपंनृप ३ सकुलामानुषंरूपंसर्वलक्षणसंयुतं लोकंग-

तावेतदुच्यतेक्रूरनायकौ १ राजाज्ञांपूर्वाध्यायांतोक्तांपरिगृह्यबाष्कलदुर्मुखौनिर्गताविन्याह इत्युक्त्वेति १ २ ३

४ ५ संसारस्फुरवंविषयस्फुरवं ६ जाल्मेति हेजाल्मत्वंकाममोहितानारीयंभवति इतिकिंमांजानासियद्यस्मात्तथाविधाहंमहिषंशठं
भजेयमित्यर्थः ७ किंतुकुलांगनाहमस्मि तथाचकुलांगनानामिदंवृत्तम स्तीत्याह कुलशीलगुणैस्तुल्यमिति रूपचातुर्यबुद्ध्यादिभिर-

भूषितंभूषणैर्दिव्यैस्त्वामेष्यतिरहःकिल ॥ ४ ॥ त्रैलोक्यविभवंकामंत्वमेष्यसिशुचिस्मिते महिषेपरमंभावंकुरुकांतेम
नोगतं ५ कृत्वापतिंमहावीरंसंसारसुखमद्भुतं त्वंमाप्स्यसिपिकालापेयोषितांखलुवांछितं ६ श्रीदेव्युवाच
जाल्मत्वंकिंविजानासिनार्यहंकाममोहिता मंदबुद्धिबलात्यर्थंभजेयंमहिषंशठं ७ कुलशीलगुणैस्तुल्यंतंभजंति
कुलस्त्रियः अधिकंरूपचातुर्यबुद्धिशीलक्षमादिभिः ८ कात्वकामातुरानारीभजेच्चपशुरूपिणं पशूनामधमंनूनं
महिषंदेवरूपिणी ९ गच्छतंमहिषंतूर्णंभूपंबाष्कलदुर्मदौ वदतंतद्वचोदैत्यंगजतुल्यंविषाणिनं १० पातालंगच्छवा-
भ्येत्यसंग्रामंकुरुवामया रणेजातेसहस्राक्षोनिर्भयःस्यादितिध्रुवं ११ हत्वाहंत्वांगमिष्यामिनान्यथागमनंमम इत्थं
ज्ञात्वास्फुदुर्बुद्धेयथेच्छसितथाकुरु १२ मामनिर्जित्यभूभागेनस्थानंतेकदाचन भविष्यतिचतुष्पाददीर्घविवागिरिकंदरे १३
व्यासउवाच इत्युक्तौतौतयादैत्यौकोपाकुलितलोचनौ धनुर्बाणधरौवीरौयुद्धकामौबभूवतुः १४ कृत्वास्फविपुलंनादंदे
वीसानिर्भयास्थिता उभौचचक्रतुस्तीव्रांबाणवृष्टिंकुरूद्वह १५ भगवत्यपिबाणौघान्मुमोचदानवोपरि कृत्वातिमधु
रंनादंदेवकार्यार्थसिद्धये १६ तयोस्तुबाष्कलस्तूर्णंसंमुखोभूद्रणांगणे दुर्मुखःप्रेक्षकस्तत्रदेवीमभिमुखःस्थितः
१७ तयोर्युद्धमभूद्घोरंदेवीबाष्कलयोस्तदा बाणासिपरिघाघातैर्भयदंमंदचेतसां १८ ततःक्रुद्धाजगन्माताहत्वातं
युद्धदुर्मदं जघानपंचभिर्बाणैःकर्णाकृष्टैःशिलाशितैः १९ दानवोऽपिशरान्देव्याश्चिच्छेदनिशितैःशरैः

धिकमित्यर्थः स्वस्माद्रू
पचातुर्यबुद्ध्यादिभिरधिक मपीत्यर्थः ८ ९ गच्छतमितिलोट्मध्यमपुरुषद्विवचनांतंतथैव वदतमित्यपि १० ११ १२ १३ १४ १५ १६ १७ १८ १९

२० २१ २२ २३ २४ २५ २६ २७ तिष्ठतिष्ठेतिभाषमाणइत्यर्थः २८ २९ ३० ३१ ३२ यथेति वैतरणी



सप्तभिस्ताडयामासदेवींसिंहोपरिस्थितां २० सापितंदशभिस्तीक्ष्णैःस्रुपीतैःसायकैःखलं जघानतच्छरांश्छित्वाज
हासचमुहुर्मुहुः २१ अर्द्धचंद्रेणबाणेनचिच्छेदचशरासनं बाष्कलोऽपिगदांगृह्यदेवींहंतुमुपाययौ २२ आगच्छंतंगदा
पाणिंदानवमदगर्वितं चंडिकास्वगदापातैःपातयामासभूतले २३ बाष्कलःपतितोभूमौमुहूर्त्तादुत्थितःपुनः चिक्षेपच
गदांसोऽपिचंडिकांचंडविक्रमः २४ तमागच्छंतमालोक्यदेवीशूलेनवक्षसि जघानबाष्कलंक्रुद्धापपातचममारसः २५
पतितेबाष्कलेसैन्यंभग्नंतस्यदुरात्मनः जयेतिचमुदादेवाश्चुक्रुशुर्गगनेस्थिताः २६ तस्मिंश्चनिहतेदैत्येदुर्मुखोऽति
बलान्वितः आजगामरणेदेवींक्रोधसंरक्तलोचनः २७ तिष्ठतिष्ठाबलेसोऽपिभाषमाणःपुनःपुनः धनुर्बाणधरःश्रीमान्
रथस्थःकवचावृतः २८ तमागच्छंतमालोक्यदेवीशंखमवादयत् कोपयंतीदानवंतंज्याघोषंचचकारह २९ सोऽपि
बाणान्मुमोचाशुतीक्ष्णानाशीविषोपमान् स्वबाणैस्तान्महामायाचिच्छेदचननादच ३० तयोःपरस्परंयुद्धंबभूवतुमुलं
नृप बाणशक्तिगदाघातैर्मुसलैस्तोमरैस्तथा ३१ रणभूमौनदाजातारुधिरौघवहानदी पतितानितदातीरेशिरांसि
प्रबभुस्तदा ३२ यथासंतरणार्थायधर्मकिंकरनायकैः तुंबीफलानिनीतानिनवशिक्षापरैर्मुदा ३३ रणभूमिस्तदाघोरा
बभूवातीवदुर्गमा शरीरैःपतितैर्भूमौखाद्यमानैर्वृकादिभिः ३४ गोमायुसारमेयाश्चकाकाःकंकाअयोमुखाः गृध्राः
श्येनाश्चखादंतिशरीराणिदुरात्मनां ३५ ववौवायुश्चदुर्गंधोमृतानांदेहसंगतः अभूत्किलकिलाशब्दःखगानांपलभ
क्षिणां ३६ तदाचुकोपदुष्टात्मादुर्मुखःकालमोहितः देवीमुवाचगर्वेणकृत्वाचोर्ध्वंकरंशुभं ३७ गच्छचंडिहनिष्यामि
त्वामद्यैवस्फबालिशे दैत्यंवाभजवामोरुमहिषंमदगर्वितं ३८ संतरणायेत्यर्थः ३३ ३४ गोमायुःशृगालःसारमेयःश्वा ३५ ३६ ३७ ३८

३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ मौलिमत् किरीटवदित्यर्थः ४७ ४८ ४९ ५० इतिश्रीदेवीभागवततिलकेपंचम-

देव्युवाच आसन्नमरणःकामंप्रलपस्यद्यमोहितः अद्यैवत्वांहनिष्यामियथायंबाष्कलोहतः ३९ गच्छवातिष्ठवामंद मरणंयदिरोचते हत्वात्वांवैवधिष्यामिबालिशंमहिषीसुतं ४० तच्छ्रुत्वावचनंतस्यादुर्मुखोमर्तुमुद्यतः मुमोचबाणवृष्टिंतुचंडिकांप्रतिदारुणाम् ४१ सापितांनरसाछित्त्वाबाणवृष्टिंशितैःशरैः जघानदानवंक्रुद्धावृत्रंवज्रधरोयथा ४२ तयोःपरस्परंयुद्धंसंजातंचातिकर्कशं भयदंकातराणांचभूराणांबलवर्धनं ४३ देवीचिच्छेदतरसाधनुस्तस्यकरेस्थितं तथैवपंचभिर्बाणैर्बभंजरथमुत्तमं ४४ रथेभग्नेमहाबाहुःपदातिर्दुर्मुखस्तथा गदांगृहीत्वादुर्धर्षांजगामचंडिकांप्रति ४५ चकारसगदाघातंसिंहमौलौमहाबलात् नचचालहरिःस्थानात्ताडितोऽपिमहाबलः ४६ अंबिकातंसमालोक्यगदापाणिंपुरःस्थितं खड्गेनशितधारेणशिरश्चिच्छेदमौलिमत् ४७ छिन्नेचमस्तकेभूमौपपातदुर्मुखोमृतः जयशब्दंतदाचक्रुर्मुदितानिर्जराभृशं ४८ तुष्टुवुस्तांतदादेवींदुर्मुखेनिहतेऽमराः पुष्पवृष्टिंतथाचक्रुर्जयशब्दंनभस्थिताः ४९ ऋषयःसिद्धगंधर्वाःसविद्याधरकिन्नराः जहर्षुस्तंहतंदृष्ट्वादानवंरणमस्तके ५० इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेत्रयोदशोऽध्यायः १३ व्यासउवाच दुर्मुखंनिहतंश्रुत्वामहिषःक्रोधमूर्च्छितः उवाचदानवान्सर्वान्किंजातमितिचासकृत् १ निहतौदानवौभूरौरणेदुर्मुखबाष्कलौ तन्व्यातत्परमाश्चर्यंपश्यंतुदैवचेष्टितं २ कालोहिबलवान्कर्त्ताऽसततंसुखदुःखयोः नराणांपरतंत्राणांपुण्यपापानुयोगतः ३ निहतौदानवश्रेष्ठौकिंकर्तव्यमतःपरं ब्रुवंतुमिलिताःसर्वेयद्युक्तंकार्यसंकटे ४ व्यासउवाच एवंब्रुवतिराजेंद्रमहिषेऽतिबलान्विते

स्कंधेत्रयोदशोऽध्यायः १३

षट्पंचाशन्महापद्मैर्दैत्यौतौताम्रचिक्षुरौ महामृधेहतौदेव्याकथ्येयंसमुदीर्यते १ दुर्मुखवधोत्तरंजातंवृत्तमाह दुर्मुखमिति १ दैवचेष्टितंप्रारब्धचेष्टितमित्यर्थः २ ३ ४

५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ दुनोतिखेदयतीत्यर्थः १६ ननुयुद्धेक्षत्रियायशः प्राप्नुवंतितद्वदहमपिप्राप्स्यामी



चिक्षुरारव्यस्तुसेनानीस्तमुवाचमहारथः ५ राजन्नहंहनिष्यामि कामिनींनास्त्रीविहिंसने इत्युक्त्वास्वबलैर्युक्तःप्रययौ रथसंयुतः ६ द्वितीयंपार्ष्णिरक्षंतुकृत्वाताम्रंमहाबलं महतासैन्यघोषेणपूरयन्गगनंदिशः ७ तमागच्छंतमालोक्यदेवी भगवतीशिवा चकारशंखज्याघोषंघंटानादंमहाद्भुतं ८ तत्रस्तस्तेनशब्देनतेचसर्वेसुरारयः किमेतदितिभाषंतोदुद्रुवु र्भयकंपिताः ९ चिक्षुरारव्यस्तुतान्दृष्ट्वापलायनपरायणान् उवाचातिवसंक्रुद्धःकिंभयंवःसमागतं १० अद्यैवाहंहनि-ष्यामिबाणैर्बालांमदोन्नतां तिष्ठंतुत्रभयंत्यक्त्वादैत्याःसमरमूर्द्धनि ११ इत्युक्त्वादानवश्रेष्ठश्चापपाणिर्बलान्वितः आग त्यसंगरेदेवीमित्युवाचगतव्यथः १२ किंगर्ज्जसिविशालाक्षिभीषयन्कातरान्नरान् नाहंबिभेमितन्वंगिश्रुत्वातेऽद्यविचेष्टि तं १३ स्त्रीवधेदूषणंज्ञात्वात्वांथैवाकीर्तिसंभवं उपेक्षांकुरुतेचित्तंमदीयंवामलोचने १४ स्त्रीणांयुद्धंकटाक्षैश्चतथा हावैश्चसुंदरि नशस्त्रैर्विहितंक्वापित्वादृशीनांकदाचन १५ पुष्पैरपिनयोद्धव्यंकिंपुनर्निशितैःशरैः भवादृशीनांदेहेषु दुनोतुमालतीदलं १६ धिग्जन्ममानुषेलोकेक्षात्रधर्मानुजीविनां लालितोऽयंप्रियोदेहःकृंतनीयःशितैःशरैः १७ तै लाभ्यंगैःपुष्पवातैस्तथामिष्टान्नभोजनैः पोषितोऽयंप्रियोदेहोघातनीयःपरेषुभिः १८ देहंछित्त्वासिधाराभिर्धनंभु-ज्जायतेनरः धिग्धनंदुःखदंपूर्वंपश्चात्किंसुखदंभवेत् १९ त्वमप्यज्ञेववामोरुयुद्धमाकांक्षसेयतः सुखंसंभोगजंत्य-क्त्वाकंगुणंवेत्सिसंगरे २० खड्गपातंगदाघातंभेदनंचशिलीमुखैः मरणांतेतुसंस्कारोगोमायुमुखकर्षणं २१ तस्यैवकविभि र्धूर्तैःकृतंचातीवशंसनं रणेमृतानांस्वःप्राप्तिरर्थवादोऽस्तिकेवलः २२

तिचेत्तेषामपिधिक्कारएवास्तीत्याह धिग्जन्मेतियेषांधर्मोलालितो-ऽयंप्रियोदेहःशरैःकृतनीयइति १७ नदेवस्पष्टयतितैलाभ्यंगैरिति १८ १९ २० मत्युतदुर्गुणाएवरणेसंतीत्याह खड्गपातमिति २१ ननुतर्हिदुर्गुणवतो-

रणस्यकिमर्थंकविभिः प्रशंसनंकृतमितिचेद्धूर्तकविभिस्तत्कृतमप्रामाणिकमेवेत्याह तस्यैवेति २२ २३ २४ २५ २६ २७ २८ २९ ३०

तस्माद्गच्छवरारोहेयत्रतेरमतेमनः भजवाभूपतिंनाथंहयारिंस्फुरमर्द्दनं २३ व्यासउवाच एवंब्रुवाणंतंदैत्यंप्रोवा
चजगदंबिका किंमृषाभाषसेमूढबुद्धिमानिवपंडितः २४ नीतिशास्त्रंनजानासिविद्यांचान्वीक्षिकींतथा नसेवितास्त्व
यावृद्धाज्ञानधर्ममतिरस्तिते २५ मूर्खसेवापरोयस्मात्तस्मात्त्वंमूर्खएवहि राजधर्मंनजानासिकिंब्रवीषिममाग्रतः २६
संग्रामेमहिषंहत्वाकृत्वारुधिरकर्दमं यशस्तंभंस्थिरंकृत्वागमिष्यामियथासुखं २७ देवानांदुःखदातारंदानवंमद
गर्वितं हनिष्येऽहंदुराचारंयुद्धंकुरुस्थिरोभव २८ जीवितेच्छास्तिचेन्मूढमहिषस्यतथातव तदागच्छंतुपातालंदानवाः
सर्वएवते २९ मुमूर्षायदिवश्चित्तेयुद्धंकुर्वंतुसत्वराः सर्वानेववधिष्यामिनिश्चयोऽयंममाधुना ३० व्यासउवाच तच्छ्रु
त्वावचनंतस्यादानवोबलदर्पितः मुमोचबाणवृष्टिंतांघनवृष्टिमिवापरां ३१ चिच्छेदतस्यसाबाणान्स्वबाणैर्निशितैस्तदा
जघानतंतुथाघोरैराशीविषसमैःशरैः ३२ युद्धंपरस्परंतत्रबभूवविस्मयप्रदं गदयाघातयामासतंरथाज्जगदंबिका
३३ मूर्च्छांप्रापसदुष्टात्मागदयाभिहतोभृशं मुहूर्तद्वयमात्रंतुरथोपस्थइवाचलः ३४ तंतथामूर्च्छितंदृष्ट्वाताम्रः
परबलार्द्दनः आजगामरणेयोद्धुंचंडिकांप्रतिचापलः ३५ आगच्छंतंतुतंवीक्ष्यहसंतीप्राहचंडिका एह्येहिदानवश्रेष्ठ
यमलोकंनयाम्यहं ३६ किंभवद्भिःसमायातैरबलैश्चगतायुषैः महिषःकिंगृहेमूढःकरोतिजीवनोद्यमं ३७ किंभ
वद्भिर्हतैर्मेद्यमापिविफलश्रमः अहतेमहिषेपापेस्फुरशत्रौदुरात्मनि ३८ तस्माद्यूयंगृहंगत्वामहिषंप्रेषयंत्विह पश्ये
न्मांसोपिमंदात्मायादृशीनादृशींस्थिता ३९ ताम्रस्तद्वचनंश्रुत्वाबाणवृष्टिंचकारह

३१ ३२ रथात्स्वरथात्स्ववाहनात्सिंहादित्य
र्थः ३३ रथोपस्थइवरथोपर्येवेत्यर्थः ३४ ३५ ३६ किंभवद्भिरिति भवद्भिरागतैः किंफलंभवतांपतिरेवकुतोनायाति समहिषोगृहेस्थित्वाकिंजीवनोद्यमं

करोति ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ वसंतेचकिंशुकाइवरणेराक्षसाइत्यन्वयः ४६ ४७ ४८ ४९ ५० ५१ ५२ पंचबाणानांविभागमाह एकेनेति



चंडिकांप्रतिकोपेन कर्णाकृष्टशरासनः ४० भगवत्यापितान्माक्षीसमाकृष्यशरासनं बाणान्मुमोचतरसा हंतुकामासुरा
हितं ४१ चिक्षुराख्योऽतिबलवान्मूर्च्छांत्यक्त्वोत्थितःपुनः गृहीत्वासशरंचापंतस्थौतत्संमुखःक्षणात् ४२ चिक्षुराख्यश्च
ताम्रश्चद्वावप्यतिबलोत्कटौ युयुधातेमहावीरौसहदेव्यारणांगणे ४३ कुपिताचमहामायाववर्षशरसंततिं चकारदानवान्स
र्वान्बाणक्षततनुच्छदान् ४४ असुराःक्रोधसंमूढाबभूवुःशरताडिताः चिक्षिपुःशरजालानिदेवींप्रतिरुषान्विताः ४५
बभुस्तेराक्षसास्तत्रकिंशुकाइवपुष्पिणः शिलीमुखक्षताःसर्वेवसंतेचवनेरणे ४६ बभूवतुमुलंयुद्धंताभ्यांसहसंयुगे
विस्मयंपरमंजग्मुर्देवायेप्रेक्षकास्थिताः ४७ ताम्रोमुसलमादायलोहजंदारुणंदृढं जघानमस्तकेसिंहंजहासचननर्दच ४८
नर्दमानंनदातंतुदृष्ट्वादेवीरुषान्विता खड्गेनशितधारेणशिरश्छिच्छेदसत्वरा ४९ छिन्नेशिरसिताम्रस्तुविशीर्षोमुसलीबली
बभ्रामक्षणमात्रंतुपपातरणमस्तके ५० पतितंताम्रमालोक्यचिक्षुराख्योमहाबलः खड्गमादायतरसादुद्रावचंडिकांप्रति ५१
भगवत्यपितंदृष्ट्वाखड्गपाणिमुपागतं दानवंपंचभिर्बाणैर्जघानतरसारणे ५२ एकेनपातितंखड्गंद्वितीयेनतुतत्करः कं
ठाच्चमस्तकंतस्यकृंतितंचापरैःशरैः ५३ एवंतौनिहतौक्रूरौराक्षसौरणदुर्मदौ भग्नंसैन्यंतयोस्तूर्णंदिक्षुसंत्रस्तमानसं ५४
देवाश्चमुदिताःसर्वेदृष्ट्वातौनिहतौरणे पुष्पवृष्टिंमुदाचक्रुर्जयशब्दंनभःस्थिताः ५५ ऋषयोदेवगंधर्वावेतालाःसिद्धचारणाः
ऊचुस्तेजयदेवीतिचांबिकेतिपुनःपुनः ५६ इतिश्रीदे॰भा॰म॰पु॰पं॰स्कं॰अध्यायः १४ व्यासउ॰ तौतयानिहतौश्रुत्वा
महिषोविस्मयान्वितः

अपरैःशरैरवशिष्टैस्त्रिभिरित्यर्थः ५३ ५४ ५५ ५६ इतिश्रीदे॰भा॰तिलकेपंचम
स्कं॰अध्यायः १४ समाधिकैश्चपंचाशत्पद्यैरथमहारणे असिलोमादयःसर्वेनिहताइतिकीर्त्यंते १ इत्थंपूर्वाध्यायांतेताम्रचिक्षुरयोर्व-

धानंतरंजातंवृत्तमाह् तावितिः १ २ ३ ४ ५ ६ दुःखसंतापेत्युत्तरान्वयि ७ ८ ९ १० ११ तद्भोगजंनाशात्मकमनित्यंत्या
ज्यमित्यन्वयः तस्मात्त्वमपिब्रह्मज्ञानंसंपाद्यसुखीभवयुद्धादुपरमंकुर्वितिभावः ननुसौगतानांमतेपरलोकएवनास्तिदूरतोब्रह्मज्ञानं तथाच
तन्मतेयुद्धसंभवोस्तीतिचेत्तत्राह सौगतानामिति १२ तन्मतेपिपरलोकभयाभावात् विषयसुखमेवभोक्तव्यमित्यायातीत्याह तथापीति

प्रेषयामासदैतेयास्तद्वधार्थंमहाबलान् १ असिलोमबिडालाख्यप्रमुखान्युद्धदुर्मदान् सैन्येनमहतायुक्तान्सायुधा
न्सपरिच्छदान् २ तेतत्रददृशुर्देवींसिंहस्योपरिसंस्थितां अष्टादशभुजांदिव्यांखड्गखेटकधारिणीं ३ असिलोमा
ग्रतोगत्वातामुवाचहसन्निव विनयावनतःशांतोदेवींदैत्यवधोद्यतां ४ असिलोमोवाच देविब्रूहिवचःसत्यंकिमर्थमिहसुं
दरि आगतासिकिमर्थंवाहंसिदैत्यान्निरागसः ५ कारणंकथयाद्यत्वंत्वयासंधिंकरोम्यहं कांचनंमणिरत्नानिभाजनानि
वराणिच ६ यानीच्छसिवरारोहेगृहीत्वागच्छमाचिरं किमर्थंयुद्धकामासिदुःखसंतापवर्द्धनं ७ कथयंतिमहात्मानोयुद्धं
सर्वसुखापहं कोमलेतीवतेदेहेपुष्पघातासहेभृशं ८ किमर्थंशस्त्रसंपातान्सहसीतीविस्मये चातुर्यस्यफलंशांतिः
सततंसुखसेवनं ९ तत्किमर्थंदुःखहेतुंसंग्रामंकर्तुमिच्छसि संसारेऽत्रसुखंग्राह्यंदुःखंहेयमितिस्थितिः १० तत्सुखं
द्विविधंप्रोक्तंनित्यानित्यप्रभेदतः आत्मज्ञानंसुखंनित्यमनित्यंभोगजंस्मृतं ११ नाशात्मकंतुतत्त्याज्यंवेदशास्त्रार्थचिंत
कैः सौगतानांमतंचेत्त्वंस्वीकरोषिवरानने १२ तथापियौवनंप्राप्यभुंक्ष्वभोगाननुत्तमान् परलोकस्यसंदेहोयदितेऽ
स्तिकृशोदरि १३ स्वर्गभोगपरानित्यंभवभामिनिभूतले अनित्यंयौवनंदेहेज्ञात्वेतिसुकृतंचरेत् १४

ननुममनवेदांतिमतंना
पिसौगतंमतंकिंतुमीमांसकमतं तथाचतन्मतेपरलोकस्यसत्वाद्युद्धंपरलोकप्राप्त्यर्थमावश्यकमितिचेत्तत्राह परलोकस्येति १३ तन्मते
स्वर्गसुखस्यसर्वोत्तमत्वात्तत्प्राप्त्यर्थं कर्मादिकं कुर्वित्यर्थः १४ छ छ छ

१५ १६ दयाधर्मोस्येति अस्यपुरुषस्यदेहोदयाधर्मोदयैवधर्मोयस्यसदयाधर्मस्तथास्ति अथवास्यपुरुषस्यप्राणाःसत्येप्रतिष्ठिताः



परोपतापनंकार्यंवर्जनीयंसदाबुधैः अविरोधेनकर्त्तव्यंधर्मार्थकामसेवनं १५ तस्मात्त्वमपिकल्याणिमतिंधर्मेसदा कुरु अपराधंविनादैत्यान्कस्मान्मारयसेऽम्बिके १६ दयाधर्मोऽस्यदेहोऽस्तिसत्येप्राणाःप्रकीर्तिताः तस्माद्दयानयासत्यं रक्षणीयंसदाबुधैः१७ कारणंवदकस्मात्त्वंदानवानांवधेनृप देव्युवाच त्वयापृष्टंमहाबाहोकिमर्थमिहमागता १८ तदहंसंप्रवक्ष्यामिहननेचप्रयोजनं विचरामिसदादैत्यसर्वलोकेषुसर्वदा १९ न्यायान्यायौचभूतानांपश्यंतीसाक्षिरूपि णी नमेकदापिभोगेच्छानलोभोनचवैरिता २० धर्मार्थंविचराम्यत्रसंसारेसाधुरक्षणं व्रतमेतत्तुनियतंपालयामिनिजं सदा २१ साधूनांरक्षणंकार्यंहंतव्यायेऽप्यसाधवः वेदसंरक्षणंकार्यमवतारैरनेकशः २२ युगेयुगेतएवाहमवतारान्बि भर्मिच महिषस्तुदुराचारोदेवान्वैहंतुमुद्यतः २३ ज्ञात्वाहंतद्वधार्थंभोप्राप्तास्मिराक्षससाधुना तद्वनिष्येदुराचारंसुरशत्रुं महाबलं २४ गच्छवातिष्ठकामंत्वंसत्यमेतदुदाहृतं ब्रूहिवानंदुरात्मानंराजानंमहिषीसुतं २५ किमन्यान्प्रेषयस्यत्रत्वं स्वयंयुद्धंकुरुष्वह संधिंचेत्कर्त्तुमिच्छास्तिराज्ञस्त्वमयासह २६ सर्वेगच्छंतुपातालंवैरंत्यक्त्वायथासुखं देवद्रव्यंतु- यत्किंचिद्धृतंजित्वारणेसुरान् २७ तद्दत्त्वायांतुपातालंप्रह्लादोयत्रतिष्ठति व्यासउवाच तच्छ्रुत्वावचनंदेव्याअसिलोमापु रःस्थितः २८ बिडालाख्यंमहावीरंपप्रच्छप्रीतिपूर्वकं असिलोमोवाच श्रुतंतेऽद्यबिडालाख्यभवान्याकथितंवचन् २९ एवंगतेकिंकर्त्तव्योविग्रहःसंधिरेववा बिडालाख्यउवाच नसंधिकामोऽस्तिनृपोभिमानीयुद्धेचमृत्युंनियतंहिजा- नन् ३० हस्याहतान्प्रेरयतेतथास्मान्देवंहिकोतिक्रमितुंसमर्थः

सत्येनैवप्राणानांरक्षणात् तस्माद्दयासत्यंचरक्षणीयमित्याह त स्मादिति १७ १८ १९ पतःसाक्षिरूपिणीततइत्यर्थः २० साधुरक्षणमित्येतदुत्तरान्वयि २१ २२ २३ २४ २५ २६ २७ २८ २९ एवंगतेएवंप्राप्तेइत्यर्थः ३०

किं तत्कठोरवाक्यंतदाह गच्छंतीति३१ एतादृशफल्गुवाक्येन राजाकदाचिनबोधनीयोवीरैरेतादृशंनीतिशास्त्रमप्यस्तीत्याह नफल्गु

दुःसाध्यएवास्तिवह सेवकानांधर्मःसदामानविवर्जितानां ३० आज्ञापराणांवशवर्त्तिकानांपांचालिकानामिवसू
त्रभेदात् गत्वाकथंतस्यपुरस्त्वयान्नमयापिवक्तव्यमिदंकठोरं ३१ गच्छतुपातालमितश्चसर्वंदत्वाथरत्नानिधनं-
स्फुराणां प्रियंहिवक्तव्य म सत्यमेवनचप्रियंस्याद्धितकृत्तुभाषितं सत्यंप्रियंनोभवतीहकामंमौनंततोबुद्धिमतांप्र
तिष्ठितं नफल्गुवाक्यैःप्रतिबोधनीयोराजानुवीरैरितिनीतिशास्त्रं ३२ ननूनंतत्रगंतव्यंहितंवावक्तुमादरात् मृष्टुं
वापिगतेराजाकोपयुक्तोभविष्यति ३३ इतिसंचिंत्यकर्त्तव्यंयुद्धेप्राणस्यसंशये स्वामिकार्यंपरंमत्वामरणंतृणवत्त
था ३४ व्यासउवाच इतिसंचिंत्यनौवीरौसंस्थितौयुद्धतत्परौ धनुर्बाणधरौतत्रसन्नद्धौरथसंगतौ ३५ प्रथमंतुवि
डालाख्यःसप्तबाणान्मुमोचह असिलोमास्थितोदूरेप्रेक्षकःपरमास्त्रवित् ३६ चिच्छेदतांस्तथाप्राप्तानंबिकास्व
शरैःशरान् बिडालाख्यंत्रिभिर्बाणैर्जघानचशिलाशितैः ३७ प्राप्यबाणव्यथांदैत्यःपपातसमरांगणे मूर्च्छितोऽथ
ममाराशुदानवोदैवयोगतः ३८ बिडालाख्येहतेदृष्ट्वारणेशक्तिशरोत्करैः असिलोमाधनुष्पाणिःसंस्थितोयुद्ध
तत्परः ३९ ऊर्ध्वंसव्यंकरंकृत्वातामुवाचमितंवचः देविजानामिमरणंदानवानांदुरात्मनां ४० तथापियुद्धंकर्त्तव्यं
पराधीनेनवैमया महिषोमंदबुद्धिश्चनजानातिप्रियाप्रिये ४१ तदग्रेनैववक्तव्यंहितंचैवाप्रियंमया मर्त्तव्यंवीरधर्मेण
शुभंवाप्यशुभंभवेत् ४२ दैवमेवपरंमन्येधिक्पौरुषमनर्थकं पतंतिदानवास्तूर्णंतवबाणहताभुवि ४३ इत्युक्त्वा
शरवृष्टिंसचकारदानवोत्तमः देवीचिच्छेदतान्बाणैरप्राप्तांस्तुनिजांतिके ४४

वाक्यैरिति ३२ ३३ ३४ ३५ ३६
३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ७ ७ ७

४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ हतशेषादैत्याराजानंप्रतिगत्वाकिमूचुस्तदाह असिलोमेति



अन्यैर्विव्याधतंतूर्णमसिलोमानमाशुगैः वीक्षितामरसंघैश्चकोपपूर्णाननानदा ४५ शुशुभेदानवःकामंबाणैर्वि
न्नतनुःकिल स्रवद्रुधिरधारःसम्प्रफुल्लःकिंशुकोयथा ४६ असिलोमागदांगुर्वीलौहीमुद्यम्यवेगतः दुद्रावचंडिकां-
कोपात्सिंहंमूर्ध्निजघानह ४७ सिंहोऽपिनखराघातैस्तंददारभुजांतरे अगणय्यगदाघातंकृतंतेनबलीयसा ४८
उत्पत्यतरसादैत्योगदापाणिःसुदारुणः सिंहमूर्ध्निसमारुह्यजघानगदयांबिकां ४९ कृतंतेनप्रहारंतुवंचयित्वावि
शांपते खड्गेनशितधारेणशिरश्चिच्छेदकंठतः ५० छिन्नेशिरसिदैत्येंद्रःपपाततरसाक्षितौ हाहाकारोमहानासीत्से
न्येतस्यदुरात्मनः ५१ जयदेवीतिदेवास्तांतुष्टुवुर्जगदंबिकां देवदुंदुभयोनेदुर्जगुश्चनृपकिन्नराः ५२ निहतौदानवौ
वीक्ष्यपतितौचरणांगणे निहताःसैनिकाःसर्वेतत्रकेसरिणाबलात् ५३ भक्षिताश्चतथाकेचिन्निशेषंतद्रणंकृतं भ
ग्नाःकेचिद्गतामंदामहिषंप्रतिदुःखिताः ५४ चुक्रुशूरुरुषुश्चैवत्राहित्राहीतिभाषणेः असिलोमबिडालाख्यौनिह
तौनृपसत्तम ५५ अन्येयेसैनिकाराजन्सिंहेनभक्षिताश्चते एवंब्रुवंतोराजानंतदाचक्रुश्चवैशसं ५६ तच्छ्रुत्वावच
नंतेषांमहिषोदुर्मनास्तदा बभूवचिंताकुलितोविमनादुःखसंयुतः ५७ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेपं
चदशोऽध्यायः १५ व्यासउवाच तेषांतद्वचनंश्रुत्वाक्रोधयुक्तोनराधिपः दारुकंप्राहतरसारथमानयमेऽद्भुतं १
सहस्रखरसंयुक्तंपताकाध्वजभूषितं आयुधैःसंयुतंशुभ्रंसुचक्रंचारुकूबरं २ सूतोपिरथमानीयतमुवाचत्वरा
न्वितः राजन्रथोयमानीतोद्वारितिष्ठतिभूषितः ३ ५५.५६५७ इतिश्री॰देवीभा॰पंचदशोऽध्यायः१५ अर्धाधिकेःपंचषष्टिपद्यैरथ



सविस्तरं महिषासुरसंवादोदेव्याजातउदीर्यते १ पूर्वाध्यायांतेहतशेषादैत्यास्त्राहित्राहीतिभाषणैराजानंप्रतिगत्वारुरुदुरित्युक्तंतदुत्तरंजातंवृत्तमाह

तेषामिति १ २ ३ ४ माहिषदेहंत्यक्त्वामानुषदेहधारणेकारणमाह विचार्येति मांशृंगिणंमहिषंदृष्ट्वादेवीविमनाभविष्यतीतिमनसाविचार्येत्य
न्वयः ५ तमेवविचारमाह नारीणामिति ६ ७ किंचममापिमहिषदेहस्यनास्यांविजातीयायांसुखंस्याद्विषयसुखस्यसजातीयएवविद्यमान

सर्वायुधसमायुक्तोवरास्तरणसंयुतः आनीतंतंरथंज्ञात्वादानवेंद्रोमहाबलः ४ मानुषंदेहमास्थायसंग्रामेगंतुमुद्यतः
विचार्यमनसाचेतिदेवीमांप्रेक्ष्यदुर्मुखं ५ शृंगिणंमहिषंनूनंविमनासाभविष्यति नारीणांचप्रियंरूपंतथाचातुर्यमित्यपि
६ तस्माद्रूपंचचातुर्यंकृत्वायास्याम्यितांप्रति यथामांवीक्ष्यसाबालाप्रेमयुक्ताभविष्यति ७ ममापिचतदेवस्यात्सुखंनान्य
स्वरूपतः इतिसंचिंत्यमनसादानवेंद्रोमहाबलः ८ त्यक्त्वातन्माहिषंरूपंबभूवपुरुषःशुभः सर्वायुधधरःश्रीमां-
श्चारुभूषणभूषितः ९ दिव्यांबरधरःकांतःपुष्पबाणइवापरः रथोपविष्टःकेयूरस्त्रग्वीबाणधनुर्धरः १० सेनापरि
वृतोदेवींजगाममदगर्वितः मनोज्ञंरूपमास्थायमानिनीनांमनोहरं ११ तमागतंसमालोक्यदैत्यानामधिपंतदा बहुभिःसं
वृतंवीरैर्देवीशंखमवादयत् १२ सशंखनिनदंश्रुत्वाजनविस्मयकारकं समीपमेत्यदेव्यास्तुतामुवाचहसन्निव १३ देवि
संसारचक्रेस्मिन्वर्तमानोजनःकिल नरोवाथतथानारीसुखंवांछतिसर्वथा १४ सुखंसंयोगजंनॄणांनासंयोगेभवेदिह
संयोगोबहुधाभिन्नस्तान्ब्रवीमिशृणुष्वह १५ भेदान्सुप्रीतिहेतूत्थान्स्वभावोत्थाननेकशः तत्रप्रीतिभवानादौकथयामि
यथामति १६

त्वात् तस्मात्तस्याःप्रीत्यर्थंमदर्थंचमनुष्यरूपमेवमयाधार्यमित्याह ममापीति ८ ९ पुष्पबाणोमदनः १० ११ १२
१३ १४ संयोगजंपदार्थसंबंधजन्यमित्यर्थः असंयोगेपदार्थसंबंधाभावेसुखंतुनैवभवतीत्यर्थः तानिति संयोगस्यतान्भेदान्ब्रवीमीत्यन्वयः
१५ भेदानांत्रैविध्यमाह सुप्रीतीति केचित्संयोगाःप्रीत्युत्थाःप्रीतिःप्रेमतद्धेतुकाएव नान्यत्कारणांतरंलोभादिकंविद्यते यथामातापित्रोःपुत्रेणसंयोगः
प्रेमनिमित्तएवतादृशसंयोगस्यसुखजनकत्वमक्षतमेवतादृशाःकेचित्संयोगाइत्यर्थः तथाकेचिद्धेतूत्थालोभादिरूपहेतुजन्यायथाभ्रातुःसंयोगः

सच्चमामुपकरिष्यतीतिलोभमूलकएवनस्मात्तादृशाःसंयोगाहेतूत्थाइत्युच्यंते तथास्वभावोत्थास्वभावेनप्रसंगेनैवजायमानाःकेचित्संयोगायथा
पांथानांनहितेषांसंयोगेप्रीतिर्वालोभोवाकारणंसंभवतिकिंतुस्वभावएवतथाचतादृशाःसंयोगाःस्वभावोत्थाइत्युच्यंतेइत्यर्थः तत्रप्रीत्युत्थानामुदा
हरणमाह तत्रप्रीतिभवानिति १६ मातापित्रोःपुत्रेणसंयोगःप्रीतिजन्यःप्रथमःसचतादृशप्रीतिजन्यःसंयोगाउत्तमएवोत्तमसुखजनकत्वात्पुत्ररू
पप्रियपदार्थदर्शनमात्रेणैवतत्रनिरतिशयसुखस्योद्भवात् हेतूत्थानामुदाहरणमाह भ्रातुर्भ्रात्रेति कारणादिति भ्रातुर्भ्रात्रायःसंयोगःउपकार
मूलकःसुखजनकोनदर्शनमात्रेणयथापितापुत्रयोःसचसंयोगोमध्यमः भ्रात्रोपकारकृतेतत्संयोगस्यपूर्वापेक्षयाल्पसुखजनकत्वादित्यर्थः१७

मातापित्रोस्तुपुत्रेणसंयोगस्तूत्तमःस्मृतः भ्रातुर्भ्रात्रातथायोगःकारणान्मध्यमोमतः १७ उत्तमस्यसुखस्यैवदातृ
त्वादुत्तमःस्मृतः तस्मादल्पसुखस्यैवप्रदातृत्वाच्चमध्यमः १८ नाविकानांतुसंयोगःस्मृतःस्वाभाविकोबुधैः
विविधावृतचित्तानांप्रसंगपरिवर्तिनां १९ अत्यल्पसुखदातृत्वात्कनिष्ठोयंस्मृतोबुधैः अत्युत्तमस्तुसंयोगःसंसारेसु
खदःसदा २० नारीपुरुषयोःकांतेसमानवयसोःसदा संयोगोयःसमाख्यातःसएवात्युत्तमःस्मृतः २१ अत्युत्तमसु
खस्यैवदातृत्वात्सतथाविधः चातुर्यरूपवेषाद्यैःकुलशीलगुणैस्तथा २२ परस्परसमुत्कर्षःकथ्यतेहिपरस्परं अनयोःसं
योगयोःकुतोमध्यमोत्तमत्वंतदाह उत्तमस्यसुखस्येति बहुसुखदातृत्वादुत्तमत्वमित्यर्थः तस्मादल्पसुखस्यैवेति तस्मात्पूर्वसुखापेक्ष
याल्पसुखप्रदातृत्वान्मध्यमत्वमित्यर्थः १८ स्वभावोत्थसंयोगस्यस्वरूपंतत्कनिष्ठत्वंचाहनाविकानामिति नावाचरंतितेनाविकाःपांथस्थाइत्य
र्थः तेषांविविधावृतचित्तानामनेकदेशेष्वनेककार्यार्थंव्याकुलचित्तानांप्रसंगपरिवर्तिनांकार्यांतरप्रसंगेनैकत्रमिलितानांयःसंयोगःस्वाभाविकइ
त्यर्थः १९ सत्वल्पसुखदातृत्वात्कनिष्ठइत्याह अत्यल्पेति संत्येतेसंयोगास्त्रिविधाःअल्पमध्यमोत्तमसुखप्रदत्वात्त्रिप्रकारास्तथापिनतेष्वत्युत्तम
सुखदातृत्वादत्युत्तमःसंयोगोस्ति सतुभिन्नएवतेभ्योस्तीत्याह अत्युत्तमस्तुसंयोगइति यःसोत्युत्तमःसंयोगःसएवसंसारेऽत्युत्तमसुखप्रदइत्यर्थः
२०

सकोसाविति चेत्तत्राह नारीपुरुषयोरिति २१ कुतस्तस्यात्युत्तमत्वं तत्राह अत्युत्तम स्फुरवस्यैवेति तथाविधोत्युत्तम इत्यर्थः चातुर्यरूपेति २२ चातुर्यादिभिः परस्परसमुत्कर्षोन्योन्यसमुत्कर्षोहि यतः परस्परंकथ्यते स्त्रीचातुर्यादिगुणैः पुरुषंवर्णयति पुरुषश्चातुर्यादिगुणैस्स्त्रियंवर्णयतितत स्मात्सोत्युत्तम एवात्रसंयोग इत्यर्थः एतावत्पर्यंतं संयोगस्वरूपविभागकथनस्य प्रयोजनमाह तंचेदिति २३ कथंवीरत्वं तवेति चेत्तत्राह नानावि

तंचेत्करोषि संयोगं वीरेणचमयासह २३ अत्युत्तम स्फुरवस्यैव प्राप्तिः स्यात्तेनसंशयः नानाविधानि रूपाणि करोमि स्वेच्छया प्रिये २४ इंद्रादयः स्फुराः सर्वे संग्रामे विजिता मया रत्नानि यानि दिव्यानि भवनेस्मिन्ममाधुना २५ भुंक्ष्वत्वं तानि सर्वाणि यथेष्टं देहि वायथा पट्टराज्ञी भवाद्यत्वं दासोस्मि तवसुंदरि २६ वैरं त्यजेहं देवैस्तु तववाक्यान्नसंशयः यथा- त्वं स्फुरवमाप्नोषि तथाहं करवाणिवै २७ आज्ञापय विशालाक्षि तथाहं प्रकरोम्यथ चित्तमेतवरूपेण मोहितं चारुभाषि- णि २८ आतुरोऽस्मि वरारोहे प्राप्तस्ते शरणंकिल प्रपन्नंपाहि रंभोरु कामबाणैः प्रपीडितं २९ धर्मोणामुत्तमोधर्मः शर णागतरक्षणं त्वदीयोस्म्यसितापांगि सेवकोहं कृशोदरि ३० मरणांतं वचः सत्यं नान्यथा प्रकरोम्यहं पादोनतोस्मि तन्वंगित्य क्तानानायुधानिते ३१ दयांकुरु विशालाक्षि तप्तोस्मि काममार्गणैः जन्मप्रभृति चार्वंगि दैन्यं नाचरितं म या ३२ ब्रह्मादीनीश्वरान्प्राप्य त्वयितद्विदधाम्यहं चरितं मम जानंति रणे ब्रह्मादयः स्फुराः ३३ सोप्यहं तवदासोस्मि मन्मुखंपश्य भामिनि व्यास उवाच इतिब्रुवाणं तंदैत्यं देवीभगवतीहि सा ३४ प्रहस्य सस्मितं वाक्यमुवाच वरव र्णिनी देव्युवाच नाहं पुरुषमिच्छामि परमंपुरुषं विना ३५

धानीति २४ २५ २६ २७ २८ २९ ३० मरणांतमिति तेवचो मरणांतं मरणपर्यंतमन्यथा न करोमि न करिष्यामि सत्यमेतज्जानीहीत्यर्थः ३१ ३२ ३३ ३४ नाहंपुरुषमिच्छामीति अत्रभगव त्यामायाविशिष्टब्रह्मस्वरूपत्वात्पुंप्रकृत्युभयात्मकत्वेपि स्वस्य प्रकृतिरूपत्वाभिमानमाश्रित्य भगवत्येदमुच्यते ऽलंकारार्थमिति बोध्यं ३५

इच्छास्म्यहमिति परास्यशक्तिर्द्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेतिश्रुत्युक्तबलशब्दोदितेत्यर्थः इच्छाशक्तिरुमाकुमारीति-
शिवसूत्रोदिताचेत्यर्थः ३६ चैतन्यप्रतिबिंबरूपमित्यर्थः तस्यप्रतिबिंबस्यसंयोगादहंजडापिसचेतनास्मीत्यर्थः ३७ नन्वन्यसंबंधात्कथम
न्यस्यचेतनत्वमितिचेत्तद्दृष्टांतवशात्संभवतीत्याह अयस्कांतस्येति तथाचनाहंप्राकृतांगनास्मियन्मांत्वमित्थंभाषसेकिंतुसर्वैश्वर्यहमस्मीति

तस्यचेच्छास्म्यहंदैत्यसृजामिसकलंजगत् समांपश्यतिविश्वात्मातस्याहंप्रकृतिःशिवा ३६ तत्सान्निध्यवशा
देवचैतन्यंमयिशाश्वतं जडाहंतस्यसंयोगात्प्रभवामिसचेतना ३७ अयस्कांतस्यसान्निध्यादयसश्चेतनायथा नग्रा
म्यसुखवांछामेकदाचिदपिजायते ३८ मूर्खस्त्वमसिमंदात्मन्यत्स्त्रीसंगंचिकीर्षसि नरस्यबंधनार्थायशृंखलास्त्री
प्रकीर्तिता ३९ लोहबद्धोपिमुच्येतस्त्रीबद्धोनैवमुच्यते किमिच्छसिचमंदात्मन्मूत्रागारस्यसेवनं ४० शमंकुरुसु
खायत्वंशमात्सुखमवाप्स्यसि नारीसंगमहदुःखंजानन्किंत्वंविमुह्यसि ४१ त्यजवैरंसुरैःसार्द्धंयथेष्टंविचरा-
वनौ पातालंगच्छवाकामंजीवितेच्छायदस्तिते ४२ अथवाकुरुसंग्रामंबलवत्यस्मिसांप्रतं प्रेषिताहंसुरैःसर्वैः
स्तवनाशायदानव ४३ सत्यंब्रवीमियेनाद्यत्वयावचनसौहृदं दर्शितंतेनतुष्टास्मिजीवगच्छयथासुखं ४४ स
तांसप्तपदीमैत्रीतेनमुंचामिजीवितं मरणेच्छास्तिचेद्युद्धंकुरुवीरयथासुखं ४५ हनिष्यामिमहाबाहोत्वामहंनात्र
संशयः व्यासउवाच इतितस्यावचःश्रुत्वादानवःकाममोहितः ४६ भावः ननुतथापितवग्राम्यसुखेच्छास्तिवानवेतिचेत्त
त्राह नग्राम्येति ममसर्वैश्वरत्वान्नकाचित्पीडास्तीतिभावः ३८ यच्चाहंपंडितइतिमदग्रेस्वचातुर्यंदर्शयसितन्ननत्वंपंडितः किंतुमूर्खएवासीत्याह
मूर्खस्त्वमसीति तत्रहेतुमाह यत्स्त्रीसंगमिति तस्यदुष्टत्वमाह नरस्येति ३९ ४० ४१ ४२ ४३ एतादृशंमृदुवचनंनत्वद्भयान्मयोच्य
तेकिंतुत्वयावचनसौहृदमेतावत्पर्यंतंदर्शितंतद्वशादित्याह सत्यंब्रवीमीति अनोजीवन्सन्गच्छयथासुखं नयुद्धंकुर्विति भावः ४४ ४५ ४६

त्वया वारंवारं युद्धंकुर्वित्युच्यतेतत्रनतेयुद्धादहंबिभेमिकिंतुकोमलांगीकथंहंतव्येतिभयादित्याह बिभेम्यहमिति ४७ ४८ ४९ ५० ५१
केवलंशोभाभाव एवनकिंतुस्त्रीहत्यापितवहनने भविष्यतीत्याह स्त्रीहत्येति बलात्कारेणत्वांनेष्यामीत्यपिसामर्थ्यंमयिवर्ततेतथापितत्रबला
त्कारेणभोगेसुखासंभवान्नतत्क्रियतइत्याह गृहीत्वात्वामिति ५२ ५३ यतइति यतःपुरुषस्यसुखंकांतामुखांबुजादृतेनस्यात्तस्मात्तथै

उवाचश्लक्ष्णयावाचामधुरंवचनंततः बिभेम्यहंवरारोहेत्वांप्रहर्तुंवरानने ४७ कोमलाचारुसर्वांगीनारीनरविमोहिनी
जित्वाहंहरिहरादींश्चलोकपालांश्चसर्वशः ४८ किंत्वयासहयुद्धंमेयुक्तंकमललोचने रोचतेयदिचार्वंगिविवाहंकुरुमां
भज ४९ नोचेद्गच्छयथेष्टंतेदेशंयस्मात्समागता नाहंत्वांप्रहरिष्यामियतोमैत्रीकृतात्वया ५० हितमुक्तंशुभंवाक्यंत
स्माद्गच्छयथासुखं काशोभामेभवेदंतेहत्वात्वांचारुलोचनां ५१ स्त्रीहत्याबालहत्याचब्रह्महत्यादुरत्यया गृहीत्वा
त्वांगृहंनूनंगच्छाम्यद्यवरानने ५२ तथापिमेफलंनस्याद्बलाद्भोगसुखंकुतः प्रब्रवीमिसुकेशित्वांविनयावनतोयतः ५३
पुरुषस्यसुखंनस्यादृतेकांतामुखांबुजात् तत्तथैवहिनारीणांनस्याच्चपुरुषंविना ५४ संयोगेसुखसंभूतिर्वियोगेदुःख
संभवः कांतासिरूपसंपन्नासर्वाभरणभूषिता ५५ चातुर्यंत्वयिकिंनास्तियतोमांनभजस्यहो तवोपदिष्टंकेनेदंभोगानां
परिवर्जनं ५६ वंचितासिप्रियालापैर्वैरिणाकेनचित्त्विह मुंचाग्रहमिमंकांतेकुरुकार्यंसुशोभनं ५७ सुखंतवममापिस्या
द्विवाहेविहितेकिल विष्णुर्लक्ष्म्यासहाभातिसावित्र्याचसहात्मभूः ५८ रुद्रोभातिचपार्वत्याशच्याशतमखस्तथा का
नारीपतिहीनाचसुखंप्राप्नोतिशाश्वतं ५९

वनारीणामपिपुरुषंविनानस्यात्तुल्यन्यायत्वादुभयोरित्यर्थः ५४ संयोगेति इदंकिंनजाना-
सीतिशेषः ५५ इदंपुरुषसंगविषयंचातुर्यंतवकिंनास्तीत्यर्थः कांतायाइदंचातुर्यमवश्यमपेक्षितमितिभावः ननुविषयोनकर्तव्यइतिमांप्रतिकेनचिदुक्त
मस्तीत्यतआहतवोपदिष्टमिति ५६ ५७ ५८ शच्याशतमखस्तथेति तथाहमपित्वयाशोभांप्राप्स्यामीतिशेषः ५९ ७ ७

६० ६१ ६२ अथवामेहितैरिति मेममाहितैःशत्रुभिर्दैवैर्ममसुखविध्वंसिभिरयंझषध्वजोमकरध्वजोवारितःकिमित्यर्थः तेनकारणेनासौ त्वयिनप्रहरतीत्यर्थः ६३ ६४ मंदोदरीवपश्चात्तापमित्यन्वयः सातन्वंगीअनुकूलंपतिंपरित्यज्यपश्चाच्छठंपतिंचकार कदायदाकामार्ताजाना

येनत्वमसितापांगिनकरोषिपतिंशुभं कामःक्वाद्यगतःकांतेयस्त्वांबाणैःसुकोमलैः ६० मादनैःपंचभिःकामंनताडयतिमंदधीः मन्येहऽमिवकामोपिदयावांस्त्वयिसुंदरि ६१ अबलेतिचमन्वानोनप्रेरयतिमार्गणान् मनोभवस्यवैरंवाकिमप्यस्तिमयासह ६२ तेनचत्वय्यरालाक्षिनमुंचतिशिलीमुखान् अथवामेऽहितैर्दैवैर्वारितोऽसौझषध्वजः ६३ सुखविध्वंसिभिस्तेनत्वयिनप्रहरत्यपि त्वंकामांमृगशावाक्षिपश्चात्तापंकरिष्यसि ६४ मंदोदरीवतन्वंगिपरित्यज्यशुभंनृप अनुकूलंपतिंपश्चात्साचकारशठंपतिं ६५ कामार्ताचयदाजातामोहेनव्याकुलांतरा इतिश्री देवीभागवतेमहापुराणेदेवीचरित्रेषोडशोऽध्यायः १६ व्यासउवाच इतिश्रुत्वावचस्तस्यदेवीपप्रच्छदानवं कासामंदोदरीनारीकोसौत्यक्तोनृपस्तया १ शठःकोवानृपःपश्चात्तन्मेब्रूहिकथानकं विस्तरेणयथाप्राप्तंदुःखंवनितयापुनः २ महिषउवाच सिंहलोनामदेशोऽस्तिविख्यातःपृथिवीतले धनपादपसंयुक्तोधनधान्यसमृद्धिमान् ३ चंद्रसेनाभिधस्तत्रराजाधर्मपरायणः न्यायदंडधरःशांतःप्रजापालनतत्परः ४ सत्यवादीमृदुःशूरस्तितिक्षुर्नीतिसागरः शास्त्रवित्सर्वधर्मज्ञोधनुर्वेदेऽतिनिष्ठितः ५ तस्यभार्यावरारोहासुंदरीशुभगाशुभा सदाचारातिसुमुखीपतिभक्तिपरायणा ६ नाम्नागुणवतीकांतासर्वलक्षणसंयुता सुषुवेप्रथमेगर्भेपुत्रींसाचातिसुंदरीं ७

पश्चात्पूर्वपत्यलाभेनपश्चात्तापंप्राप्तवतीत्यर्थः ६५ इति॰ देवीभागवततिलकेपं॰षोडशोऽध्यायः१६ एकषष्टिश्लोकवर्यैर्मंदोदर्याःकथानकं देवीबोधायदैत्येनकथ्यतेचेतिकथ्यते १ मंदोदरीदृष्टांतंश्रुत्वालीलावशाद्देवीपृच्छतीत्याह इतिश्रुत्वेति १ वनितयामंदोदर्या २ ३ ४ ५ ६ ७ ८

८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ उत्तानचरणोत्थुत्तानपादः २२ २३ २४ २५

पिताचार्तिवसंतुष्टःपुत्रींप्राप्यमनोरमां मंदोदरीतिनामास्याःपिताचक्रेमुदान्वितः ८ इंदोःकलेवचात्यर्थंववृधेसादि
नेदिने दशवर्षायदाजाताकन्याचातिमनोहरा ९ वरार्थंनृपतिश्चिंतामवापचदिनेदिने मद्रदेशाधिपःशूरःस्रुधन्वाना
मपार्थिवः १० तस्यपुत्रोऽतिमेधावीकंबुग्रीवोऽतिविश्रुतः ब्राह्मणैःकथितोराज्ञेसयुक्तोस्यावरःशुभः ११ सर्वलक्षणसं
पन्नःसर्वविद्यार्थपारगः राज्ञापृष्टातदाराज्ञीनाम्नागुणवतीप्रिया १२ कंबुग्रीवायकन्यांस्त्वांदास्यामिवरवर्णिनी सा
तुपत्युर्वचःश्रुत्वापुत्रींपप्रच्छसादरं १३ विवाहंतेपिताकर्तुंकंबुग्रीवेणवांच्छति तच्छ्रुत्वामातरंप्राहवाक्यंमंदोदरीतदा
१४ नाहंपतिंकरिष्यामिनेच्छामेऽस्तिपरिग्रहे कौमारंव्रतमास्थायकालंनेष्यामिसर्वथा १५ स्वातंत्र्येणचरिष्यामित
पस्तीव्रंसदैवहि पारतंत्र्यंपरंदुःखंमातःसंसारसागरे १६ स्वातंत्र्यान्मोक्षमित्याहुःपंडिताःशास्त्रकोविदाः तस्मान्मु
क्ताभविष्यामिपत्यामेनप्रयोजनं १७ विवाहेवर्तमानेतुपावकस्यचसन्निधौ वक्तव्यंवचनंसम्यक्त्वदधीनास्मिसर्वदा
१८ श्वश्रूदेवरवर्गाणांदासीत्वंश्वशुरालये पतिचित्तानुवर्तित्वंदुःखाद्दुःखतरंस्मृतं १९ कदाचित्पतिरन्यांवाकामि
नींचभजेद्यदि तदामहत्तरंदुःखंसपत्नीसंभवंभवेत् २० तदेर्ष्याजायतेपत्योःक्लेशश्चापिभवेदथ संसारेक्वसुखं
मातर्नारीणांचविशेषतः २१ स्वभावात्परतंत्राणांसंसारेस्वप्नधर्मिणि श्रुतंमयापुरामातरुत्तानचरणात्मजः
२२ उत्तमःसर्वधर्मज्ञोध्रुवाद्वरजोनृपः पत्नींधर्मपरांसाध्वींपतिभक्तिपरायणां २३ अपराधंविनाकांतांत्यक्त
वान्विपिनेप्रियां एवंविधानिदुःखानिविद्यमानेतुभर्त्तरि २४ कालयोगान्मृतेतस्मिन्नारीस्याद्दुःखभाजनं वैधव्यंप
रंदुःखंशोकसंतापकारकं २५ परोषितेपतित्वेपिदुःखंस्यादधिकंगृहे मदनाग्निविदग्धायाःकिंसुखंपतिसंगजं २६ परोषिते

देववाक्यश्रवणोत्तरं पार्वतीयत्कृत्यंचकारतदाह एवंस्तुतेति १ कौशिकीति कोशान्निर्गताकौशिकी तदुक्तं शरीरकोशाद्यत्तदेस्याःपा
र्वत्यानिःसृतांबिका कौशिकीतिसमस्तेषुततोलोकेषुगीयतइति पृषोदरादित्वात्साधुत्वं तदुक्तंवैकृतिकरहस्ये गौरीदेहसमुद्भूतायासत्त्वै-
कगुणाश्रया साक्षात्सरस्वतीप्रोक्ताशुंभासुरनिबर्हिणी दधौवाष्टभुजाबाणमुसलेशूलचक्रभृत् शंखंघंटांलांगलंचकार्मुकंवसुधाधिप ए
षासंपूजिताभक्त्यासर्वज्ञत्वंप्रयच्छतीति २ निःसृतायामिति पार्वत्यास्तनुव्यत्ययाच्छरीरपरिणामात् तस्यांकौशिक्यांनिःसृतायांनिर्गतायां

व्यासउवाच एवंस्तुतातदादेवीदैवतैःशत्रुतापितैः स्वशरीरात्परंरूपंप्रादुर्भूतंचकारह १ पार्वत्यास्तुशरीराद्वै
निःसृताचांबिकायदा कौशिकीतिसमस्तेषुततोलोकेषुपठ्यते २ निःसृतायांतुतस्यांसापार्वतीतनुव्यत्ययात् कृष्णारूपा
थसंजाताकालिकासाप्रकीर्तिता ३ मषीवर्णामहाघोरादैत्यानांभयवर्द्धिनी कालरात्रीतिसाप्रोक्तासर्वकामफलप्रदा ४
अंबिकायाःपरंरूपंविरराजमनोहरं सर्वभूषणसंयुक्तंलावण्यगुणसंयुतं ५ ततोंबिकातदादेवानित्युवाचहसस्मिता
तिष्ठंतुनिर्भयायूयंहरिष्यामिरिपूनिह ६ कार्यंवःसर्वथाकार्यंविहरिष्याम्यहंरणे निशुंभादीन्वधिष्यामियुष्माकंसुखहेतवे
७ इत्युक्त्वासातदादेवीसिंहारूढामदोत्कटा कालिकांपार्श्वतःकृत्वाजगामनगरीरिपोः ८ सागत्वोपवनेतस्थावंबिका
कालिकान्विता जगावथकलंतत्रजगन्मोहनमोहनं ९ श्रुत्वातन्मधुरंगानंमोहमीयुःखगामृगाः मुदंचपरमांप्रापुरमरा
गगनेस्थिताः १० तस्मिन्नवसरेतत्रदानवौशुंभसेवकौ चंडमुंडाभिधौघोरौरममाणौयदृच्छया ११ आगतौददृशातेतुतां
तदादिव्यरूपिणीं अंबिकांगानसंयुक्तांकालिकापुरतःस्थितां १२ दृष्ट्वातांदिव्यरूपांचदानवौविस्मयान्वितौ

सत्यांसासैवकौशिकी

अथानंतरंकृष्णारूपासंजातातदासाकृष्णवर्णत्वात्कालिकेतिप्रकीर्तितेत्यर्थः ३ तस्याध्यानमाह मषीवर्णेति इयमेवकालरात्रिरित्यर्थः ४ अंबिकायाइति
यस्याःशरीरात्कौशिक्युत्पन्नातस्याःपार्वत्याइत्यर्थः ५ ततोंबिकापार्वतीत्यर्थः ६ ७ कालिकांस्वशरीरान्निर्गतांकौशिकीमित्यर्थः ८ जगन्मोहनस्य

कामस्यापिमोहनंमोहकारकं कलंमधुरंजगौ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ संसारेनिश्चितंनास्तीत्यन्वयः १९ २० २१ वैधसं-



जग्मतुस्तरसापार्श्वंशुंभस्यनृपसत्तम १३ तौगत्वातौसमासीनंदैत्यानामधिपंगृहे ऊचतुर्मधुरांवाणींप्रणम्यशिरसा
नृपं १४ राजन्हिमालयात्कामंकामिनीकाममोहिनी संप्राप्तासिंहमारूढासर्वलक्षणसंयुता १५ नेदृशीदेवलोकेस्तिन
गंधर्वपुरेतथा नदृष्टानश्रुताक्कापिपृथिव्यांप्रमदोत्तमा १६ गानंचतादृशंराजन्करोतिजनरंजनं मृगास्तिष्ठंतितत्पार्श्वेमधु
रस्वरमोहिताः १७ ज्ञायतांकस्यपुत्रीयंकिमर्थमिहचागता गृह्यतांराजशार्दूलतवयोग्यास्तिकामिनी १८ ज्ञात्वानयगृहे
भार्यांकुरुकल्याणलोचनां निश्चितंनास्तिसंसारेनारीत्वेवंविधाकिल १९ देवानांसर्वरत्नानिगृहीतानित्वयानृप कस्मान्ने
मांवराराहांगृह्णासिनृपोत्तम २० इंद्रस्यैरावतःश्रीमान्पारिजाततरुस्तथा गृहीतोश्वःसप्तमुखस्त्वयानृपबलात्किल
२१ विमानंवैधसंदिव्यंमरालध्वजसंयुतं त्वयाऽऽत्तंरत्नभूतंतद्बलेननृपचाद्भुतं २२ कुबेरस्यनिधिःपद्मस्त्वयाराजन्स-
मात्हृतः छत्रंजलपतेःशुभ्रंगृहीतंतत्त्वयाबलात् २३ पाशश्चापिनिशुंभेनभ्रात्रात्तवनृपोत्तम गृहीतोस्तिहठात्कामंव
रुणस्याजितस्यच २४ अम्लानपंकजांतुभ्यंमालांजलनिधिर्ददौ भयात्तवमहाराजरत्नानिविविधानिच २५ मृत्योःशक्ति
र्यमस्यापिदंडःपरमदारुणः त्वयाजित्वाहृतःकामंकिमन्यद्वर्ण्यतेनृप २६ कामधेनुर्गृहीताद्यवर्ततेसागरोद्भवा मेनका
द्याश्चवशेराजंस्तवतिष्ठंतिचाप्सराः २७ एवंसर्वाणिरत्नानित्वयात्तानिबलादपि कस्मान्नगृह्यतेकांतारत्नमेषावरांगना
२८ सर्वाणितेगृहस्थानिरत्नानिविशदान्यथ अनयासंभविष्यंतिरत्नभूतानिभूपते २९ त्रिषुलोकेषुदैत्येंद्रनेदृशीवर्ततेप्रिया
तस्मात्तामानयाशुत्वंकुरुभार्यांमनोहरां ३० व्यासउ॰ इतिश्रुत्वातयोर्वाक्यंमधुरंमधुराक्षरं प्रसन्नवदनःप्राहसुग्रीवंसंनि
धौस्थितं ३१ गच्छसुग्रीवदूतत्वंकुरुकार्यंविचक्षण

ब्रह्मणःसंबंधीत्यर्थः मरालोहंसः त्वयाआत्तंगृहीतमित्यर्थः २२ २३ २४ २५ २६ २७ त्वया
त्तानित्वयागृहीतानि कांतारत्नंस्त्रीरत्नं २८ २९ ३० ३१ ३२

३३ रसाभासः भेदेकपदस्यावश्यंजायमानत्वात्कपदंविनाभेदासंभवात्सनितांस्मिन्कपदेरसाभासएवभवतीत्यर्थः निग्रहेदंडे ३४ ३५ ३६

वक्तव्यंचतथानत्रयथाभ्येतिकृशोदरी ३२ उपायौद्वौप्रयोक्तव्यौकांतास्कस्कविचक्षणैः सामदानावितिप्राहुःश्रृंगाररसकोविदाः ३३ भेदेप्रयुज्यमानेपिरसाभासस्तुजायते निग्रहेरसभंगःस्यात्तस्मात्तौदूषितौबुधैः ३४ सामदानमुखैर्वा क्यैःश्लक्ष्णैर्नर्मयुतैस्तथा कानयातिवशेदूतकामिनीकामपीडिता ३५ व्यासउवाच स्कंदीवस्तुवचःश्रुत्वाशुंभोक्तंसुप्रियंपटु जगामतरसानत्रयत्रास्तेजगदंबिका ३६ सोऽपश्यत्सुमुखींकांतांसिंहस्योपरिसंस्थितां प्रणम्यमधुरंवाक्यमुवाचजगदंबिकां ३७ दूतउवाच वरोरुत्रिदशारातिःशुंभःसर्वांगसुंदरः त्रैलोक्याधिपतिःशूरःसर्वजिद्राजतेनृपः ३८ तेनाहंप्रेषितःकामंत्वत्सकाशंमहात्मना त्वद्रूपश्रवणासक्तचित्तेनातिविदूयता ३९ वचनंतस्यतन्वंगिश्रृणुप्रेमपुरस्सरं प्रणिपत्ययथाप्राहदैत्यानामधिपस्त्वयि ४० देवामयाजिताःसर्वेत्रैलोक्याधिपतिस्त्वहं यज्ञभागानहंकांतेगृह्णामीहास्थितःसदा ४१ हृतसाराकृतानूनंक्षीरोमर्यारत्नवर्जिता यानिरत्नानिदेवानांतानिचाह्रतवाहनं ४२ भोक्ताहंसर्वरत्नानांत्रिषुलोकेषुभामिनि वशानुगाःसुराःसर्वेममदैत्याश्चमानवाः ४३ त्वद्गुणैःकर्णमागत्यप्रविश्यत्त्हृदयांतरं त्वदधीनःकृतःकामंकिंकरोस्मिकरोमिकिं ४४ त्वमाज्ञापयरंभोरुतत्करोमिवशानुगः दासोऽहंतवचार्वंगिरक्षमांकामबाणतः ४५ भजमांत्वंमरालाक्षितवाधीनंस्मराकुलं त्रैलोक्यस्वामिनीभूत्वाभुंक्ष्वभोगाननुत्तमान् ४६ तवचाज्ञाकरःकांतेभवामिमरणावधि अवध्योऽस्मिवरारोहेसदेवासुरमानुषैः ४७ सदासौभाग्यसंयुक्ताभविष्यसिवरानने यत्रतेरमतेचित्तंतत्रक्रीडस्वसुंदरि ४८ इतितस्यवचश्चित्तेविमृश्यमदमंथरे वक्तव्यंयद्भवेत्प्रेम्णातद्ब्रूहिमधुरंवचः ४९ शुंभायचंचलापांगिनह्वीम्यहमाशवे ३७ ३८

३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ७ ७

५१ ५२ द्वात्रिंशल्लक्षणानिकाशीखंडेएकादशाध्याये पंचसूक्ष्मःपंचदीर्घःसप्तरक्तःषडुन्नतः त्रिपृथुर्लघुगंभीरोद्वात्रिंशल्लक्षणस्त्विति



व्यासउवाच तद्दूतवचनंश्रुत्वास्मितंकृत्वासुपेशलं ५० तंप्राहमधुरंवाचंदेवीदेवार्थसाधका श्रीदेव्युवाच जानाम्यहंनिशुं
भंचशुंभंचातिबलंनृपं ५१ जेतारंसर्वदेवानांहंतारंचैवविद्विषां राशिंसर्वगुणानांचभोक्तारंसर्वसंपदां ५२ दातारंचातिशूरं
चसुंदरंमन्मथाकृतिं द्वात्रिंशल्लक्षणैर्युक्तमवध्यंसुरमानुषैः ५३ ज्ञात्वासमागतास्म्यत्रद्रष्टुकामामहासुरं रत्नंकनक-
मायातिस्वशोभाधिकवृद्धये ५४ तत्राहंस्वपतिंद्रष्टुंदूरादेवागतास्मिवै दृष्टामयासुराःसर्वेमानवाश्चविमानदाः ५५ गं
धर्वाराक्षसाश्चान्येयेचातिप्रियदर्शनाः सर्वेशुंभभयाद्दीनावेपमानाविचेतसः ५६ श्रुत्वाशुंभगुणानत्रप्राप्तास्म्यद्यदिदृ
क्षया गच्छदूतमहाभागब्रूहिशुंभंमहाबलं ५७ निर्जनेश्लक्ष्णयावाचावचनंवचनान्मम त्वांज्ञात्वाबलिनांश्रेष्ठंसुंदराणां
चसुंदरं ५८ दातारंगुणिनंशूरंसर्वविद्याविशारदं जेतारंसर्वदेवानांदक्षंचोग्रंकुलोत्तरं ५९ भोक्तारंसर्वरत्नानांस्वाधी
नंस्वबलोन्नतं पतिकामास्म्यहंसत्यंतवयोग्यानराधिप ६० स्वेच्छयानगरेतेऽत्रसमायातामहामते ममास्तिकारणंकिंचि
द्विवाहेराक्षसोत्तम ६१ बालभावाद्धृतंकिंचित्कृतंराजन्मयापुरा क्रीडंत्याचवयस्याभिःसहैकांतेयदृच्छया ६२ स्वदेहबलदर्पे
णसर्वासांपुरतोरहः मत्समानबलःशूरोरणेमांजेष्यतिस्फुटं ६३ तंवरिष्याम्यहंकामंज्ञात्वातस्यबलाबलं जहसुर्वचनंश्रु
त्वासख्योविस्मितमानसाः ६४ किमेतयाकृतंक्रूरंव्रतमद्भुतमाशुवै तस्मात्त्वमपिराजेंद्रज्ञात्वामेहीदृशंबलं ६५ जित्वामांस्वब
लेनात्रविवाहंकुरुसुंदर "त्वंवातवानुजोभ्रातासमेत्यसमरांगणे ६६ जित्वामांस्वबलेवात्रविवाहःसंविधीयतां "इति॰दे॰
भा॰म॰पु॰पं॰स्कं॰अध्यायः २३ त्रिलघुस्त्रिगंभीरइत्यर्थः एतन्नारव्यापितत्रैवस्पष्टानि महाभारतेचप्रसिद्धितानि ५३ स्वस्यशोभायाअधिकवृद्ध्यर्थं



५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ इतिश्रीदे॰भा॰नि॰पं॰स्कं॰अध्यायः २३ अर्धाधिकैःषष्टिपद्यैर्दूतसंवादकीर्तनं क्रियतेयत्रदैत्या

नांकामार्थंमरणंस्मृतं १ तस्मात्परस्त्रियंनैवकामयेन्मतिमान्नरः इतिदर्शयितुंकामवर्णनंसम्यगीर्यते २ देवीवाक्यश्रवणोत्तरंदूतोयदाहतद्ब्रवीति देव्या इति १ २ युधिसांप्रतंयुद्धयोग्येत्यर्थः ३ ४ ५ ६ ७ ८ तेतवकेशेषुअथवातेदैत्याइत्यर्थः ९ १० ११ १२ १३

व्यासउवाच देव्यास्तद्वचनंश्रुत्वासदूतःप्राहविस्मितः किंब्रूषेरुचिरापांगिस्त्रीस्वभावाद्धिसाहसात् १ इंद्राद्यानिर्जिता येनदेवादैत्यास्तथापरे तंकथंसमरेदेविजेतुमिच्छसिभामिनि २ त्रैलोक्येनादृशोनास्तियःशुंभंसमरेजयेत् कात्वंकमलपत्राक्षि तस्याग्रेयुधिसांप्रतं ३ अविचार्यनवक्तव्यंवचनंक्वापिसुंदरि बलंस्वपरयोर्ज्ञात्वावक्तव्यंसमयोचितं ४ त्रैलोक्याधिपतिःशुंभस्तवरूपेणमोहितः त्वांचप्रार्थयतेराजाकुरुतस्येप्सितंप्रिये ५ त्यक्त्वामूर्खस्वभावंत्वंसंमान्यवचनंमम भजशुंभंनिशुंभंवाहितमेतद्ब्रवीमिते ६ शृंगारःसर्वथासर्वैःप्राणिभिःपरयामुदा सेवनीयोबुद्धिमद्भिर्नवानाशुत्तमोयतः ७ नागमिष्यसिचेद्बालेसक्रुद्धःपृथिवीपतिः अन्यानाज्ञाकरान्प्रेष्यबलान्नेष्यतिसांप्रतं ८ केशेष्वाकृष्यतेनूनंदानवाबलदर्पिताः त्वांनयिष्यंतिवामोरुतरसाशुंभसन्निधौ ९ सलज्जांरक्षतन्वंगिसाहसंसर्वथात्यज मानिनागच्छतत्पार्श्वेमानपात्रंयतोऽसिवै १० कुयुद्धंनिशितैर्बाणैःकुरुस्वरतिसंगजं सारासारंपरिच्छिद्यकुरुमेवचनंपटु ११ भजशुंभंनिशुंभंवालब्ध्वासिपरमंशुभं देव्युवाच सत्यंदूतमहाभागप्रवक्तुंनिपुणोह्यसि १२ निशुंभशुंभौजानामिबलवंतावितिध्रुवं प्रतिज्ञामेकृताबाल्यादन्यथासाकथंभवेत् १३ तस्माद्ब्रूहिनिशुंभंचशुंभंवाबलवत्तरं विनायुद्धंनमेभर्त्ताभविताकोऽपिसोऽथवा १४ जित्वामांतरसाकामंकरंगृह्णातुसांप्रतं युद्धेच्छयासमायातांविद्धिमामबलांनृप १५ युद्धंदेहिसमर्थोऽसिवीरधर्मंसमाचर बिभेषियदिशूलाग्रात्तद्गच्छपातालमाचिरं १६ त्रिदिवंचधरांत्यक्त्वाजीवितेच्छायदस्तिते इतिदूतवदाशुत्वंगत्वास्वपतिमादरात् १७ स विचार्ययथायुक्तंकरिष्यतिमहाबलः संसारेदूतधर्मोऽयंयत्सत्यंभाषणंकिल १८

१४ १५ १६ १७ १८

१९ २० २१ सत्यंप्रियंचवक्तव्यमिति प्रभोरग्रेसत्यंप्रियंचवाक्यंवक्तव्यमितिहिनीतिशास्त्रंवर्तते तेनहेतुनाहेराजन्नहंचिंतापरोस्मीत्यर्थः कु
तश्चिंतापरइतिचेत्तत्राह सत्यंप्रियंचेति यदिसत्यमुच्यतेतर्हितत्कर्णकठोरत्वादप्रियमेवभवति यदितुयथामनोरंजनंभवतितथावक्तव्यंतर्हिकार्यहानि

शत्रोःपत्नीचधर्मज्ञतथात्वंकुरुमाचिरं व्यासउवाच अथतद्वचनंश्रुत्वानीतिमद्बलसंयुतं १९ हेतुयुक्तंप्रगल्भंचविस्मि
तःप्रययौतदा गत्वादैत्यपतिंदूतोविचार्यचपुनःपुनः २० प्रणम्यपादयोःप्रह्वःप्रत्युवाचनृपंचतं राजनीतिकरंवाक्यंमृदु
पूर्वंप्रियंवचः २१ दूतउवाच सत्यंप्रियंचवक्तव्यंतेनचिंतापरोस्म्यहं सत्यंप्रियंचराजेंद्रवचनंदुर्लभंकिल २२ अप्रियंवद
तांकामंराजाकुप्यतिसर्वथा साक्षात्कुतःसमायाताकस्यवाकिंबलाबला २३ नज्ञानगोचरंकिंचित्किंब्रवीमिविचेष्टितं
युद्धकामामयादृष्टागर्विताकटुभाषिणी २४ तयायत्कथितंसम्यक्तच्छृणुष्वमहामते मयाबाल्यात्प्रतिज्ञेयंकृतापूर्वंवि
नोदतः २५ सखीनांपुरतःकामंविवाहेप्रतिसर्वथा योमांयुद्धेजयेद्धद्धाद्दर्पंचविधुनोतिवै २६ तंवरिष्याम्यहंकामं
पतिंसमबलंकिल नमेप्रतिज्ञामिथ्यासाकर्तव्यानृपसत्तम २७ तस्माद्युद्धमस्वधर्मज्ञजित्वामांस्ववशंकुरु तयेतिव्या
हृतंवाक्यंश्रुत्वाहंसमुपागतः २८ यथेच्छसिमहाराजतथाकुरुतवप्रियं सायुद्धार्थंकृतमतिःसायुधासिंहगामिनी २९
निश्चलावर्ततेभूपयद्योग्यंतद्विधीयतां व्यासउवाच इत्याकर्ण्यवचस्तस्यसुग्रीवस्यनराधिपः ३० पप्रच्छभ्रातरंशूरंस
मीपस्थंमहाबलं शुंभउवाच भ्रातःकिमत्रकर्तव्यंब्रूहिसत्यंमहामते ३१ नार्येकायोद्धुकामास्तिसमाह्वयतिसांप्रतं
अहंगच्छामिसंग्रामेत्वंवागच्छबलान्वितः ३२

रतोहिसत्यप्रियात्मकंवाक्यंदुर्लभमित्यर्थः २२ अथराजकार्यानुरोधेनसत्य
मेववक्तव्यंतदातस्यकर्णकठोरत्वाद्राजासर्वथाकुप्यतीत्यर्थः एतादृशमतिकठोरंवक्तुमयोग्यंतयोदाहृतमितिभावः अबलाकिंबलेत्यन्वयः २३
इदंकिंचिदपिज्ञानगोचरंनभवति मयाकिंवक्तव्यमित्यर्थः २४ २५ २६ २७ २८ २९ ३० ३१ ३२

यद्रोचतेतवेतिशेषः ३३ ३४ ३५ ३६ ३७ ३८ रक्षणीयानहंतव्येत्यर्थः ३९ ४० ४१ असाधूनांदैत्यानामित्यर्थः
तदुक्तं ततःषष्ट्यासहस्राणामसुराणांद्रुतंययाविति मार्कंडेयपुराणे षष्टिसहस्रासुरैःसहितइत्यर्थः ४२ रम्योपवनसंस्थितांददर्शेत्यन्वयः

यद्रोचतेनिशुंभाद्यतत्कर्तव्यंमयाकिल निशुंभउवाच नमयानत्वयावीरगंतव्यंरणमूर्द्धनि ३३ प्रेषयस्वमहारा
जत्वरितधूम्रलोचनं सगत्वातांरणेजित्वागृहीत्वाचारुलोचनां ३४ आगमिष्यतिशुंभात्रविवाहःसंविधीयतां व्या
सउवाच तन्निशम्यवचस्तस्यशुंभोभ्रातुःकनीयसः ३५ कोपात्संप्रेषयामासपार्श्वस्थंधूम्रलोचनं शुंभउवाच
धूम्रलोचनगच्छाशुसैन्येनमहतावृतः ३६ गृहीत्वानयतांमुग्धांस्ववीर्यमदमोहितां देवोवादानवोवापिमनुष्योवा
महाबलः ३७ तत्पार्ष्णिग्राहतांप्राप्तोहंतव्यस्तरसालया तत्पार्श्ववर्तिनींकालींहत्वासंगृह्यतांपुनः ३८ शीघ्रमत्र
समागच्छकृत्वाकार्यमनुत्तमं रक्षणीयात्वयासाध्वीमुंचंतीमृदुमार्गणान् ३९ यत्नेनमहतावीरमृदुदेहाकृशोदरी
तत्सहायाश्चहंतव्यायेरणेशस्त्रपाणयः ४० सर्वथासानहंतव्यारक्षणीयाप्रयत्नतः व्यासउवाच इत्यादिष्टस्तदा
राज्ञानरसाधूम्रलोचनः ४१ प्रणम्यशुंभंसैन्येनवृतःशीघ्रंययौरणे असाधूनांसहस्राणांषष्ट्यातेषांवृतस्तथा
४२ सददर्शनतोदेवींरम्योपवनसंस्थितां दृष्ट्वातांमृगशावाक्षींविनयेनसमन्वितः ४३ उवाचवचनंश्लक्ष्णंहेतु
मद्रसभूषितं शृणुदेविमहाभागेशुंभस्त्वद्विरहातुरः ४४ दूतंप्रेषितवान्पार्श्वेतवनीतिविशारदः रसभंगभयो
द्विग्नःसामपूर्वंत्वयिस्वयं ४५ तेनागत्यवचःप्रोक्तंविपरीतंवरानने वचसातेनमेभर्त्ताचिंताविष्टमनानृप ः ४६ ब
भूवरसमार्गज्ञेशुंभःकामविमोहितः दूतेनतेनतज्ञातंहेतुगर्भंवचस्तव ४७ योमांजयतिसंग्रामेयदुक्तंकठिनंवचः

४३ ४४ ४५ तेनदूतेनवचस्त्वदुक्तमित्यर्थः ४६ ४७

यदुक्तंत्वयाकठिनंगूढतात्पर्यंवचोवाक्यमित्यर्थः नज्ञातइति तवाभिप्रेतःसंग्रामस्तेनमूढेननज्ञातइत्यर्थः ४८ कोसौद्विविधःसंग्रामस्त
माह रतिजोथोत्साहजश्चेति पात्रभेदमाह रतिजस्त्वयीति ४९ इदंतवाभिप्रेतमहंजानामिनपूर्वंमेषितोमूढोदूतइत्यर्थः ५१ तस्मादहंपूर्वापे

नज्ञातस्तेनसंग्रामोद्विविधःखलुमानिनि ४८ रतिजोऽथोत्साहजश्चपात्रभेदेविवक्षितः रतिजस्त्वयिवामोरुश
त्रोरुत्साहजःस्मृतः ४९ स्त्रखदःप्रथमःकांतेदुःखदश्चासिजःस्मृतः जानाम्यहंवरारोहेभवत्यामानसंकिल ५०
रतिसंग्रामभावस्तेहृदयेपरिवर्तते इतितज्ज्ञोविदित्वामांत्वत्सकाशंनराधिपः ५१ प्रेषयामासशुंभोऽद्यबलेनमहता
वृतं चतुरासिमहाभागेश्रृणुमेवचनंमृदु ५२ भजशुंभंत्रिलोकेशंदेवदर्पनिबर्हणं पट्टराज्ञीप्रियाभूत्वाभुंक्ष्वभोगा
ननुत्तमान् ५३ जेष्यतित्वांमहाबाहुःशुंभःकामबलार्थवित् विचित्रान्कुरुहावांस्त्वंसोपिभावान्करिष्यति ५४ भ
विष्यतिकालिकेयंतत्रवैनर्मसाक्षिणी एवंसंगरयोगेनपतिर्मेपरमार्थवित् ५५ जित्वात्वांस्त्रखशय्यायांपरिश्रांतांक
रिष्यति रक्तदेहान्नखाघातैर्दंतैश्चखंडिताधरां ५६ स्वेदक्लिन्नांप्रभग्नांत्वांसंविधास्यतिभूपतिः भवितामानसःका
मोरतिसंग्रामजस्तव ५७ दर्शनादुशएवास्तेशुंभःसर्वात्मनाप्रिये वचनंकुरुमेपथ्यंहितंकृच्चापिपेशलं ५८ भज
शुंभंगणाध्यक्षंमानिनीयातिमानिनी मंदभाग्याश्वतेनूनंशस्त्रयुद्धप्रियाश्वये ५९ नत्वदर्हासिकांतेत्वंसदास्त्ररतवल्ल
भे अशोकंकुरुराजानंपादघातविकासितं ६० बकुलंसीधुसेकेनतथाकुरुबकंकुरु इतिश्रीदेवीभागव
तेमहापुराणेपंचमस्कंधेदेवीमाहात्म्येचतुर्विंशोऽध्यायः २४ व्यासउवाच

क्षयाचतुरासिवचनंममश्रृणित्याह
चतुरासीति ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ सीधुसेकेनस्यमुखमदिरासेकेनबकुलवृक्षंतथाकुरुबकवृक्षं वि कासित मिवराजानं
पादघातेनविकासितं विकसितमित्यर्थः पादघातेनाशोकवृक्षस्यसीधुसेकेनबकुलकुरुबकयोर्द्वयोर्लोकप्रसिद्धत्वात् ६० इतिश्रीदे॰ पंचमस्कंधे

चतुर्विंशोऽध्यायः २४ षष्टिश्लोकैर्महादेव्याहतोऽसौधूम्रलोचनः विचारःशंभसदसिजातइत्यपिकीर्त्यते १ धूम्रलोचनवाक्यविरामो
त्तरंजातंवृत्तमाह इत्युक्त्वाविरराभेति कालीकोशिकी १ विदूषकोसीति विदूषकश्चाडुवटौपरनिंदाकरेपिचेतिमेदिनी शैलूषोनटः

इत्युक्त्वाविरराभासौवचनंधूम्रलोचनः प्रत्युवाचतदाकालीप्रहस्यललितंवचः १ विदूषकोसिजाल्मत्वंशैलूष
इवभाषसे वृथामनोरथांश्चित्तेकरोषिमधुरंवदन् २ बलवान्बलसंयुक्तःप्रेषितोसिदुरात्मना कुरुयुद्धंवृथावादंमुंच
मूढमतेऽधुना ३ हत्वाशुंभंनिशुंभंचत्वदन्यान्वाबलाधिकान् देवीकुद्धाशराघातैर्व्रजिष्यातिनिजालयं ४ क्वासौमंद
मतिःशुंभःक्ववाविश्वविमोहिनी अयुक्तःखलुसंसारेविवाहविधिरेतयोः ५ सिंहीकिंत्वतिकामार्ताजंबुकंकुरुतेपतिं
करिणीगर्दभंवापिगवयंस्करभिःकिमु ६ गच्छशुंभंनिशुंभंचवदसत्यंवचोमम कुरुयुद्धंनचेद्याहिपातालंतरसाधुना ७
व्यासउवाच कालिकायावचःश्रुत्वासदैत्योधूम्रलोचनः तामुवाचमहाभागक्रोधसंरक्तलोचनः ८ दुर्दर्शेत्वांनि-
हत्याजौसिंहंचमदगर्वितं गृहीत्वैनांगमिष्यामिराजानंप्रत्यहंकिल ९ रसभंगभयात्कालिबिभेमित्विहसांप्रतं नो
चेत्त्वांनिशितैर्बाणैर्हन्म्यद्यकलहप्रिये १० कालिकोवाच किंविकत्थसिमंदात्मन्नायंधर्मोधनुष्मतां स्वशक्त्यामुंचविशि
खान्गंतासियमसंसदि ११ व्यासउवाच तच्छ्रुत्वावचनंदैत्यःसंगृह्यकार्मुकंदृढं कालिकांतांशरासारैर्ववर्षातिशिला
शितैः १२ देवास्तुप्रेक्षकास्तत्रविमानवरसंस्थिताः तांस्तुवंतोजयेत्यूचुर्देवींशक्रपुरोगमाः १३ तयोःपरस्परंयुद्धं
प्रवृत्तंचातिदारुणं बाणखड्गगदाशक्तिमुसलादिभिरुत्कटं १४ कालिकाबाणपातैस्तुहत्वापूर्वंखरानथ बभंजतद्र
थंव्यूढंजहासचमुहुर्मुहुः १५ २ ३ ४ ५ ६ ७ ८ आजौयुद्धे एनांसुंदरीमंबिकां अहंराजानंप्रतीत्यन्व
यः ९ तर्हितत्कार्यंकुतोनकरोषिचेत्तत्राह रसभंगेति १० नायंधर्मोमुखेनवल्गनरूपः ११ १२ १३ १४ खरान्रथवाहान्रासभान् १५

१६ १७ १८ १९ २० २१ यदेति यदायस्मिन्कालेक्षिपतेत्यर्जतितास्मिन्नेवकालेसांबिकायस्याःशरीरात्कौशिकीनिर्गतासा सुंदरी अंबिकाहुंकारेणैवहुंकारोच्चारणेनैवतंभस्मचकारकाष्ठंभस्मचकारेतिवत्प्रयोगः तथाचांबिकयासहुंकारेणनाशितोनतुकालिकया तदुक्तं

सचान्यंरथमारूढःकोपेनप्रज्वलन्निव बाणवृष्टिंचकारोग्रांकालिकोपरिभारत १६ सापिचिच्छेदतरसातस्यबाणानसंगतान् मुमोचान्यानुग्रवेगान्दानवोपरिकालिका १७ तैर्बाणैर्निहतास्तस्यपार्ष्णिग्राहाःसहस्रशः बभंजच रथंवेगात्सूतंहत्वाखरानपि १८ चिच्छेदतद्धनुःसद्योबाणैरुरगसन्निभैः मुदंचक्रेस्फुराणांसाशंखनादंतथाकरोत् १९ विरथःपरिघंगृह्यसर्वलोहमयंदृढं आजगामरथोपस्थंकुपितोधूम्रलोचनः २० वाचानिर्भर्त्सयन्कालींकरालःकालसन्निभः अद्यैवत्वांहनिष्यामिकुरूपेपिंगलोचने २१ इत्युक्त्वासहसागत्यपरिघंक्षिपतेयदा हुंकारेणैवतंभस्मचकारतरसांबिका २२ दृष्ट्वाभस्मीकृतंदैत्यंसैनिकाभयविह्वलाः चक्रुःपलायनंसद्योहातातेत्यब्रुवन्पथि २३ देवास्तंनिहतंदृष्ट्वादानवंधूम्रलोचनं मुमुचुःपुष्पवृष्टिंतेमुदितागगनेस्थिताः २४ रणभूमिस्तदाराजन्दारुणासमपद्यत निरंतैर्दानवैरश्वैःखरैश्चवारणैस्तथा २५ गृध्राःकाकावटाःश्येनावरफाजंबुकास्तथा ननृतुश्चुक्रुशुःप्रेतान्पतितान्रणभूमिषु २६ अंबिकातद्रणस्थानंत्यक्त्वादूरंस्थलांतरे गत्वाचकारचाप्युग्रंशंखनादंभयप्रदं २७ तंश्रुत्वादरशब्दंतुशुंभःसद्मनिसंस्थितः दृष्ट्वाथदानवान्भग्नानागतान्रुधिरोक्षितान् २८ छिन्नपादकराक्षांश्चभग्नान्चकारोपितानपि भग्नपृष्ठकटिग्रीवान्क्रंदमानाननेकशः २९ वीक्ष्यशुंभोनिशुंभश्चवक्वगतोधूम्रलोचनः कथंभग्नाःसमायातानानीताकिंवरानना ३०

मार्कंडेयपुराणे हुंकारेणैवतंभस्मसाचकारांबिकाननइति २२ पथिहातातेत्यब्रुवन्नित्यन्वयः २३ २४ निरंतैर्निर्गतप्राणैर्दानवादिभिर्दारुणाभयंकरासमपद्यतेत्यन्वयः २५ वटवरफाः वटवरफशब्देनपिशाचविशेषाः तदुक्तंशूलिनीमंत्रविधाने सह

स्तंभजपेन्मंत्रंशूलिन्यायंस्पृश नरः यदाश्ववरफाश्चैवनस्पृशंतिकदाचनेति चुकुशुः कोलाहलंचक्रुः रणभूमिषु प्रेतान्पतितान्दृष्ट्वेतिशेषः
२६ २७ २८ २९ ३० ३१ ३२ ३३ यदासर्वेतेनकेसरिणानिपातिताः यदानरथाभग्नाबाणपातैर्हयाश्चविनिपतित्ता
स्तदागगनस्थाइत्यन्वयः ३४ भग्नंबलंधूम्रलोचनंपातितंचदृष्ट्वाऽस्माभिर्जयोनैवभवेत्तवेतिनिश्चयः कृतइत्यर्थः ३५ ३६ ३७ ३८

सैन्यंकुत्रगतंमंदाः कथयंतुयथोचितं कस्यायंशंखनादोऽद्यश्रूयतेभयवर्द्धनः ३१ गणाऊचुः बलंचपातितंसर्वं-
निहतोधूम्रलोचनः कृतंकालिकयाकर्मरणभूमावमानुषं ३२ शंखनादोंबिकायास्तुगगनंव्याप्यराजते हर्षदः सुर
संघानांदानवानांचशोककृत् ३३ यदानिपातिताः सर्वेतेनकेसरिणाविभो रथभग्नहयाश्चैवबाणपातैर्विनाशिताः ३४
गगनस्थाः सुराश्चक्रुः पुष्पवृष्टिंमुदान्विताः दृष्ट्वाभग्नंबलंसर्वंपतितंधूम्रलोचनं ३५ निश्चयस्तुकृतोस्माभिर्जयो
नैवभवेदिति विचारंकुरुराजेंद्रमंत्रिभिर्मंत्रवित्तमैः ३६ विस्मयोयंमहाराजयदेकाजगदंबिका भवद्भिः सहयुद्धाय
संस्थितासैन्यवर्जिता ३७ निर्भयैकाकिनीबालासिंहारूढामदोत्कटा चित्रमेतन्महाराजभासतेऽद्भुतमंजसा ३८
संधिर्वाविग्रहोवाद्यस्थानान्निर्याणमेववा मंत्रयित्वामहाराजकुरुकार्यंयथारुचि ३९ तत्सन्निधौबलंनास्तितथापि
शत्रुतापन पार्ष्णिग्राहाः सुराः सर्वेभविष्यंतिकिलापदि ४० समयेतत्समीपस्थौज्ञातौचहरिशंकरौ लोकपालाः
समीपेऽद्यवर्तंतेगगनेस्थिताः ४१ रक्षोगणाश्चगंधर्वाः किन्नरामानुषास्तथा तत्सहायाश्चमंतव्याः समयेसुरतापन
४२ अस्माकंमतिमानेनज्ञायतेसर्वथेदृशं अंबिकायासहायास्तुनैवकार्यंकदाचन ४३ एकानाशयितुंशक्ताजग-
त्सर्वंचराचरं

संधिर्मैत्री नियहः शत्रुत्वं स्थानमुदासीनतयावस्थानं निर्याणंपलायनं ३९ ४० समयेति तावपिहरिशंकरौसमयेसहा
यौभविष्यतइतिशेषः ४१ रक्षोगणाः भूतगणाः ४२ वस्तुतस्तस्याः सहायापेक्षैवनास्तीत्याह. अंबिकायाइति ४३ ४४

४५ ४६ ४७ ४८ ४९ अभोग्येति अस्मात्कारणात्पराभवरूपादत्र समागतांबिकानूनमभोग्यानसेवनीयेतियुक्तंपलायनंवायुक्तं



काकथादानवानांतुसर्वेषामितिनिश्चयः ४४ इतिज्ञात्वामहाभागयथारुचितथाकुरु हितंसत्यंमितंवाक्यंवक्तव्यम
नुयायिभिः ४५ व्यासउवाच तच्छ्रुत्वावचनंतेषांशुंभःपरबलार्दनः कनीयांसंसमानीयपप्रच्छरहसिस्थितः ४६
भ्रातःकालिकयायुद्धेवनिहतोधूम्रलोचनः बलंचशातितंसर्वंगणाभग्नाःसमागताः ४७ अंबिकाशंखनादंवैकरोति
मदगर्विता ज्ञानिनांचैवदुर्ज्ञेयागतिःकालस्यसर्वथा ४८ तृणंवज्रायतेनूनंवज्रंचैवतृणायते बलवान्बलहीनःस्याद्दैव
स्यगतिरीदृशी ४९ पृच्छामित्वांमहाभागकिंकर्तव्यमितःपरं अभोग्याचांबिकानूनंकारणादत्रवागता ५० युक्तंपला
यनंवीरयुद्धंवावदसत्वरं लघुंज्येष्ठंविजानामित्वामहंकार्यसंकटे ५१ निशुंभउवाच नवापलायनंयुक्तंनदुर्गग्र
हणंतथा युद्धमेवपरंश्रेयःसर्वथैवानयानघ ५२ ससैन्योऽहंगमिष्यामिरणेतुप्रवराश्रितः हत्वानामागमिष्यामि-
तरसात्वबलामिमां ५३ अथवाबलवद्दैवादन्यथाचेद्भविष्यति मृतेमयित्वयाकार्यंविमृश्यचपुनःपुनः ५४ इतितस्य
वचःश्रुत्वाशुंभःप्रोवाचचानुजं तिष्ठत्वंचंडमुंडौद्वौगच्छेतांबलसंयुतौ ५५ शशांकग्रहणायाऽत्रनयुक्तंगजमोच
नं चंडमुंडौमहावीरौतांहंतुंसर्वथाक्षमौ ५६ इत्युक्त्वाभ्रातरंशुंभंसंभाष्यचमहाबलौ उवाचवचनंराजाचंडमुंडौ
पुरःस्थितौ ५७ गच्छतांचंडमुंडौद्वौस्वसैन्यपरिवारितौ हंतुंनामबलांशीघ्रंनिर्लज्जांमदगर्वितां ५८ गृहीत्वाथनि
हत्याजौ कालिकांपिंगलोचनां आगम्यतांमहाभागौकृत्वाकार्यंमहत्तरं ५९

युद्धंवायुक्तमित्यन्वयः ५० ५१ ५२
५३ अन्यथेति बलवद्दैवादहमेवमरिष्यामिचेदित्यर्थः तदेतिशेषाः तस्यमृतेमयीत्यत्रान्वयः ५४ ५५ ५६ ५७
नामबलांकालिकांहंतुमित्यर्थः ५८ गृहीत्वेति कालिकांनिहत्याथनामांबिकांगृहीत्वेत्यर्थः ५९ ६ ६

६० इतिश्रीदेवीभागवततिलके पंचमस्कंधे पंचविंशोऽध्यायः २५ अर्धाधिकैः पंचषष्टिपद्यैरथ भयंकरं युद्धंसमभवद्घोरं श्रीदेव्याश्चंडमुंडयोः
१ चंडमुंडाज्ञानंतरंजातं वृत्तमाह इत्याज्ञप्ताविति १ २ तुराषाडिंद्रस्तस्य विजयेनोद्धतमुन्मत्तं ३ ४ ५ स्वपरयोर्बलंविमृश्यवि-

सानायातिगृहीतापिगर्विताचांबिकायदि तदाबाणैर्महातीक्ष्णैर्हतंव्याहवमंडिता ६० इतिश्रीदेवीभागवते महा
पुराणे पंचमस्कंधे पंचविंशोऽध्यायः २५ व्यासउवाच इत्याज्ञप्तौ तदावीरौ चंडमुंडौ महाबलौ जग्मतुस्त्वरसैवाजौ सैन्ये
नमहतान्वितौ १ दृष्ट्वातत्रस्थितांदेवींदेवानांहितकारिणीं ऊचतुस्तौ महावीर्यौ तदासामान्वितंवचः २ बालेत्वंकिंनजानासि
शुंभंरूरबलार्दनं निशुंभंचमहावीर्यंतुराषाड्विजयोद्धतं ३ त्वमेकासिवरारोहेकालिकासिंहसंयुता जेतुमिच्छसिदुर्बुद्धेशु
भंसर्वबलान्वितं ४ मतिदः कोपितेनास्तिनारीवापिनरोऽपिवा देवास्त्वांप्रेरयंत्येवविनाशायतवैवते ५ विमृश्यकुरु
तन्वंगिकार्यंस्वपरयोर्बलं अष्टादशभुजत्वात्त्वंगर्वंचकुरुषेमृषा ६ किंभुजैर्बहुभिर्व्यर्थैरायुधैःकिंश्रमप्रदैः शुंभस्याग्रेसुरा
णांवैजेतुःसमरशालिनः ७ ऐरावतकरच्छेतुर्दंतिदारणकारिणः जयिनःसुरसंघानांकार्यंकुरुमनोगतं ८ वृथागर्वाय
सेकांते कुरुमेवचनंप्रियं हितंतवविशालाक्षिसुखदंसुखनाशनं ९ दुःखदानिचकार्याणित्याज्यानिदूरतोबुधैः सुख
दानिचसेव्यानिशास्त्रतत्त्वविशारदैः १० चतुरासिपिकालापेपश्यशुंभबलंमहत् प्रत्यक्षंरूरसंघानांमर्दनेनमहोदयं ११
प्रत्यक्षंचपरित्यज्यवृथैवानुमितेनकिल संदेहसहितेकार्येनविपश्चित्प्रवर्तते १२ शत्रुःरूराणांपरमःशुंभःसमरदुर्जयः
तस्मात्त्वांप्रेरयंत्यत्र देवादक्षेशपीडिताः १३ तस्मात्तद्वचनैःस्निग्धैर्वंचितासिशशन्विस्मिते दुःखायतवदेवानांशिक्षास्वार्थस्य-
साधिका १४ चार्यकार्यंकुर्वित्यर्थः ६ ७ ८ ९ १० ११ वृथैवानुमितेति देवबलमपिमहोदयंबलत्वाद्दैत्यबलवदित्यनुमिति वृथैव तत्र
दैत्यसंबंधित्वस्योपाधित्वादित्यर्थः १२ १३ तवदुःखायदेवानांशिक्षाभवतिस्वार्थस्यचसाधिकाभवतीदंकथंत्वयानज्ञातमित्यर्थः १४

१५ १६ १७ १८ १९ वरस्तुनःपत्यपेक्षाममनास्तीत्याह नमेइति स्वामिनोसर्वेश्वरीत्यर्थः २०. २१ २२ २३ २४ २५



कार्यमित्रंपरिक्षिप्यधर्ममित्रंसमाश्रयेत् देवाःस्वार्थपराःकामंत्वामहंसत्यमब्रुवं १५ भजशुंभंसुरेशानं-
जेतारंभुवनेश्वरं चतुरंसुंदरंशूरंकामशास्त्रविशारदं १६ ऐश्वर्यंसर्वलोकानांप्राप्स्यसेशुंभशासनात् नि
श्चयंपरमंकृत्वाभर्तारंभजशोभने १७ व्यासउवाच इतितस्यवचःश्रुत्वाचंडस्यजगदंबिका मेघगंभीरयाने
नदंजगर्जपुनरब्रवीत् १८ गच्छजाल्ममृषाकिंत्वंभाषसेवंचकंवचः त्यक्त्वाहरिहरादींश्चशुंभंकस्माद्भजेपतिं
१९ नमेकश्चित्पतिःकार्योनकार्यपतिनासह स्वामिनीसर्वभूतानामहमेवनिशामय २० शुंभामेबहवोदृष्टा-
निशुंभाश्चसहस्रशः घातिताश्चमयापूर्वंशतशोदैत्यदानवाः २१ ममाग्रेदेववृंदानिविनष्टानियुगेयुगे ना
शंयास्यंतिदैत्यानांयूथानिपुनरद्यवै २२ कालएवागतोस्त्यत्रदैत्यसंहारकारकः वृथात्वंकुरुषेयत्नंरक्षणा
यात्मसंततेः २३ कुरुयुद्धंवीरधर्मरक्षायैत्वंमहामते मरणंभाविदुस्त्याज्यंयशोरक्ष्यंमहात्मभिः २४ किं
तेकार्यंनिशुंभेनशुंभेनचदुरात्मना वीरधर्मंपरंप्राप्यगच्छस्वर्गंसुरालयं २५ शुंभोनिशुंभश्चैवान्येयेन्चा
त्रतवबांधवाः सर्वेतवानुगाःपश्चादागमिष्यंतिसांप्रतं २६ क्रमशःसर्वदैत्यानांकरिष्याम्यद्यसंक्षयं विषा
दंत्यजमंदात्मन्कुरुयुद्धंविशांपते २७ त्वामहंनिहनिष्यामिभ्रातरंतवसांप्रतं ततःशुंभंनिशुंभंचरक्तबी
जंमदोत्कटं २८ अन्यांश्चदानवान्सर्वान्हत्वाहंसमरांगणे गमिष्यामियथास्थानंतिष्ठवागच्छवाद्भुतं २९ गृहा
णास्त्रंवृथापुष्टकुरुयुद्धंमयाधुना किंजल्पसिमृषावाक्यंसर्वथाकातरप्रियं ३० व्यासउवाच तयेत्थंप्रेरि-
तौदैत्यौचंडमुंडौक्रुधान्वितौ ज्याशब्दंतरसाघोरंचक्रतुर्बलदर्पितौ ३१

२६ २७ २८ २९ ३० ३१

३२ ३३ ३४ ३५ कर्षकाणांक्षेत्रकर्षकाणांभयप्रदैर्धान्यादिभक्षणेनभयदायकैः शलभैरिव ३६ ३७ घनसन्निभंकृष्णव
र्णं ३८ ललाटफलकादंबिकायाललाटदेशादित्यर्थः ३९ शुष्कानिर्जलायावापीगंभीरातयासममंतर्गतगतविदुदरंयस्याअतिक्षुधिते

सापिशंखस्वनंचक्रेपूरयंतीदिशोदश सिंहोपिकुपितस्तावन्नादंसमकरोद्बली ३२ तेननादेनशक्राद्याजहृषु
रमरास्तदा मुनयोयक्षगंधर्वाःसिद्धाःसाध्याश्चकिन्नराः ३३ युद्धंपरस्परंतत्रजातंकातरभीतिदं चंडिकाचंडयो-
स्तीव्रंबाणखड्गगदादिभिः ३४ चंडमुक्तांश्शरान्देवीचिच्छेदनिशितैःशरैः मुमोचपुनरुग्रासाचंडिकापन्नगानि
व ३५ गगनंछादितंतत्रसंग्रामेविशिखैस्तदा शलभैरिवमेघांतेकर्षकाणांभयप्रदैः ३६ मुंडोपिसैनिकैःसार्द्धं
पपाततरसारणे मुमोचबाणवृष्टिंवैक्रुद्धःपरमदारुणः ३७ बाणजालंमहद्दृष्ट्वाक्रुद्धातत्रांबिकाभृशं कोपेनवद
नंतस्याबभूवघनसन्निभं ३८ कदलीपुष्पनेत्रंचभृकुटीकुटिलंतदा निष्क्रांताचतदाकालीललाटफलकाद्द्रुतं
३९ व्याघ्रचर्मांबराक्रूरागजचर्मोत्तरीयका मुंडमालाधराघोराशुष्कवापीसमोदरा ४० खड्गपाशधरातीवभी
षणाभयदायिनी खट्वांगधारिणीरौद्राकालरात्रिरिवापरा ४१ विस्तीर्णवदनाजिह्वांचालयंतीमुहुर्मुहुः वि
स्तारजघनावेगाज्जघानासुरसैनिकान् ४२ करेकृत्वामहावीरांस्तरसासारुषान्विता मुखेचिक्षेपदंतैर्यान्
पिपेषदशनैःशनैः ४३ गजान्घंटान्वितान्हस्तेगृहीत्वानिदधौमुखे सारोहान्भक्षयित्वाजौसाट्टहासंचकारह ४४
तथैवतुरगानुष्ट्रांस्तथासारथिभिःसह निक्षिप्यवक्त्रेदशनैश्चर्वयंत्यतिभैरवं ४५ हन्यमानंबलंप्रेक्ष्यचंडमुंडौ
महासुरौ छादयामासतुर्देवींबाणासारैरनंतरैः ४६ चंडश्चंडकरच्छायंचक्रंचक्रधरायुधं चिक्षेपतरसादेवीन-
नादचमुहुर्मुहुः ४७

नि तात्पर्यं ४० ४१ ४२ ४३ ४४ अतिभैरवंयथास्यात्तथाचर्वयतिवर्तमानसामीप्येभूतेलट्चचर्वेत्यर्थः ४५

अनंतरैर्व्यवधानरहितैः ४६ चंडकरच्छायंसूर्यसदृशं चक्रधरोविष्णुस्तदायुधंसुदर्शनं लक्षणयातद्वदित्यर्थः ४७ ४८ ४९ ५०

नदंतंवीक्ष्यतंकालीरथांगंचरविप्रभं बाणेनैकेनचिच्छेदसुप्रभंतत्सुदर्शनं ४८ तंजघानशरैस्तीक्ष्णैः
श्चंडचंडीशिलाशितैः मूर्छितोऽसोपपातोर्व्यांदेवीबाणार्दितोभृशं ४९ पतितंभ्रातरंवीक्ष्यमुंडोदुःखार्दित-
स्तदा चकारशरवर्षंचकालिकोपरिकोपतः ५० चंडिकामुंडनिर्मुक्तांशरवृष्टिंसुदारुणां ईषिकास्त्रैर्बलान्मु
क्तैश्चकारतिलशःक्षणात् ५१ अर्धचंद्रेणबाणेनताडयामासतंपुनः पतितोऽसौमहावीर्योमेदिन्यांमदव-
र्जितः ५२ हाहाकारोमहानासीद्दानवानांबलेतदा जहर्षुरमराःसर्वेगगनस्थागतव्यथाः ५३ विहायमूर्छांचं
डस्तुसंगृह्यमहतींगदां तरसाताडयामासकालिकांदक्षिणेभुजे ५४ वंचयित्वागदाघातंतंबबंधमहासुरं
तरसाबाणपाशेनमंत्रमुक्तेनकालिका ५५ उत्थितस्तुतदामुंडोबद्धंदृष्ट्वानुजंबलात् आजगामसुसन्नद्धः
शक्तिंकृत्वाकरेदृढां ५६ आगच्छंतंतदाकालीदानवंवीक्ष्यसत्वरं बबंधतरसातंतुद्वितीयभ्रातरंभृश ५७
गृहीत्वातौमहावीर्यौचंडमुंडौशशाविव कुर्वतीविपुलंहासमाजगामांबिकांप्रति ५८ आगत्यतामथोवाचगृ-
हाणेमौपशूप्रिये रणयज्ञार्थमानीतौदानवौरणदुर्जयौ ५९ तावानीतौतदावीक्ष्यचंडिकातौवृकाविव अंबिका
कालिकांप्राहमाधुरीसंयुतंवचः ६० वधंमाकुरुमामुंचचतुरासिरणप्रिये देवानांकार्यसंसिद्धिःकर्तव्यातरसालया ६१

मंत्रैरभिमंत्रिताईषिकाःशलाकाईषिकास्त्रं ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ यज्ञेपशुवधस्यापेक्षितत्वा
द्रणयज्ञेतदुद्देशेनेमौपशूमयानीताविस्याह रणयज्ञार्थमिति ५९ ६० वधंमाकुर्विति वधांहिंसांमाकुरु तर्हिकिंमोचनीयौतत्राह मामुंचे
ति तर्हिबध्वास्थापनीयौतत्राह चतुरासीति हेरणप्रियेचतुरासित्वंमद्वाक्ययोरर्थंविचार्यदेवानांकार्यसिद्धिस्तरसाकर्तव्यात्वयेत्यर्थः

रणेयज्ञबुद्ध्याऽनयोःपशुबुद्ध्याच हननेयागीयहिंसायाहिंसात्वाभावाद्दोषोपिनभविष्यतिदेवानांकार्यसिद्धिश्चभविष्यतीतितदभिप्रायइति
६१ कालिकादेवीमाहेत्याह इतितस्याइति ६२ महत्कार्येदेव्यर्थबलिदानकर्तव्यमितिदेव्याअभिप्रायंज्ञात्वाकालिकयाग्रेमहादैत्यवधादिमहा
कार्यसिद्ध्यर्थंपशुबुद्ध्याश्रीदेव्यग्रेतौहताविति गूढाभिसंधिः ६३ ६४ अत्रयद्यंबिकाशब्देनकौशिकीमातागृह्यतेतदांबिकायाललाटफल
कान्निःसृतायाःकाल्याश्चंडमुंडौनिहत्यागतायाअंबिकयैवचामुंडेतिनामकरणंकृतमित्यर्थःसंपद्यते यदित्वंबिकाशब्देनकौशिक्येवगृह्यतेतदाकौ
शिकीललाटफलकान्निःसृतायाःकाल्याश्चंडमुंडौनिहत्यागतायाः कौशिक्यैवचामुंडेतिनामकरणंकृतमित्यर्थःसंपद्यते मार्कंडेयपुराणेतूभयपक्षौ

व्यासउवाच इतितस्यावचःश्रुत्वाकालिकाप्राहतांपुनः शुद्धयज्ञेऽतिविख्यातेखड्गयूपेप्रतिष्ठिते ६२ आलंभंचकरि
ष्यामियथाहिंसानजायते इत्युक्त्वासातदादेवीखड्गेनशिरसीतयोः ६३ चकर्त्ततरसाकालीपपौचरुधिरंमुदा एवंदैत्यौ
हतौदृष्ट्वामुदितोवाचचांबिका ६४ कृतंकार्यंसुराणांतेददाम्यद्यवरंशुभं चंडमुंडौहतौयस्मात्तस्मात्तेनामकालिके ६५
चामुंडेतिसुविख्यातंभविष्यतिधरातले इतिश्रीदे॰भ॰पं॰चंडमुंडवधेषड्विंशोऽध्यायः २६ श्रीव्यासउवाच हतौ
तौदानवौदृष्ट्वाहतशेषाश्चसैनिकाः पलायनंततःकृत्वाजग्मुःसर्वेनृपंप्रति १ भिन्नांगाविशिखैःकेचित्केचिच्छिन्नकरास्त
था रुधिरस्रावदेहाश्चरुदंतोभिययुःपुरे २ संभवतःप्राचस्तुद्वितीयपक्षमेवसप्तशतीव्याख्यायांसमाश्रयंति परंत्वंबिकाशब्दस्य
कौशिकीजनन्यांशक्तेःपूर्वमुभयपुराणयोरुक्तत्वात्सैवात्रमात्यायुक्तत्वादितिप्रथमपक्षएवज्यायानितिममप्रतिभाति चामुंडेति पृषोदरादित्वात्सा
धुः ६५ इतिश्रीदेवीभागवतटीकायांपंचमस्कंधेदेवीभगवतीमाहात्म्येचंडमुंडवधेषड्विंशोऽध्यायः २६ अधोधिकैस्त्रिषष्ट्यात्मपद्यैरथस
विस्तरं रक्तबीजासुरस्यात्रयुद्धंसम्यगिहोच्यते १ चंडमुंडवधोत्तरंजातंवृत्तमाह हतावितावित्ति २ बुंबारवमिति हस्तमु-
खसंयोगेनक्रियमाणःशब्दोबुंबारवःकस्मिंश्चिदनर्थेसंप्राप्तेएवंतंशब्दंलोकाःकुर्वंति ३

४ दासेरकपदातिभिरिति दासेरकस्तुकरभेदासिपुत्रेचधीवरेइतिमेदिनी दासेरकाश्चपदातयश्चेति द्वंद्व कर्मधारयोवा दासेरकाउष्ट्रावा ५ कुल्यानदी शोणितमेवजलंतस्यप्रापिका मांसमेवातिशयितः कर्दमोयस्यां केशरूपशैवालवती भग्नरथास्तेषांचक्रैरावर्तस्थानापन्नैर्विराजिता

गत्वादैत्यपतिंसर्वेचक्रुर्बुंबारवंमुहुः रक्षरक्षमहाराजभक्षयत्यद्यकालिका ३ तयाहतौमहावीरौचंडमुंडौस्फुरार्द्दनौ भक्षिताःसैनिकाःसर्वेवयंभग्नाभयातुराः ४ भीतिदंचरणस्थानंकृतंकालिकयाप्रभो पातितैर्गजवीराश्वैर्दासेरकपदातिभिः ५ शोणितौघवहाकुल्याकृतामांसातिकर्दमा केशशैवलिनीभग्नरथचक्रविराजिता ६ छिन्नबाह्वादिमच्छादयाशीर्षतुंबीफलान्विता भयदाकातराणांवैस्फुराणांमोदवर्द्धिनी ७ कुलंरक्षमहाराजपातालंगच्छसत्वरं क्रुद्धादेवीक्षयंसद्यः करिष्यतिनसंशयः ८ सिंहोपिभक्षयत्याजौदानवान्दनुजेश्वर तथैवकालिकादेवीहंतिबाणैरनेकधा ९ तस्मात्त्वमपिराजेंद्रमरणायमृषामतिं करोषिस्रहितोष्णात्वाशंभेनकुपिताशयः १० किंकरिष्यतिनार्येषाक्रूराकुलविनाशिनी यस्याहेतोर्महाराज हंतुमिच्छसिबांधवान् ११ दैवाधीनौमहाराजलोकेजयपराजयौ अल्पार्थायमहद्दुःखंबुद्धिमान्नप्रकल्पयेत् १२ चित्रंपश्यविधेःकर्मयदधीनंजगत्प्रभो निहताराक्षसाःसर्वेस्त्रियापश्यैकयानया १३ जेतात्वंलोकपालानांसैन्ययुक्तोहिसांप्रतं एकाप्रार्थयतेबालायुद्धायेतिस्फुसंभ्रमः १४ पुरात्वयातपस्तप्तंपुष्करेदेवनायने वरदानायसंप्राप्तोब्रह्मालोकपितामहः १५ धात्रोक्तस्त्वंमहाराजवरंवरयसुव्रत तदालयामरत्वंचप्रार्थितंब्रह्मणःकिल १६ देवदैत्यमनुष्येभ्योनभवेन्मरणंमम सर्वकिन्नरयक्षेभ्यःपुल्लिंगवाचकादपि १७ तस्मात्त्वांहंतुकामैषाप्राप्तायोषिद्वराप्रभो युद्धंमाकुरुराजेंद्रविचार्यैवंप्रियाधुना १८ देवीत्वेषामहामायाप्रकृतिःपरमामना कल्पांतकालेराजेंद्रसर्वसंहारकारिणी १९

छिन्नायेबाहुपादास्तएवमत्स्यास्तैर्युक्ता शीर्षाण्येवतुंबीफलानितद्युक्ता ७ ८ ९ १० किंकरिष्यतीति किमनयाफलमित्यर्थः ११ १२ १३ सुसंभ्रमआश्चर्यं १४ १५ १६ १७ १८ १९

२० २१ २२ २३ २४ २५ जीविताशायुष्माकंबलीयस्यस्तीत्यर्थः २६ ममदैवाधीनत्वनिश्चयात्सानास्तीत्याह दैवाधीनमिति २७

उत्पादयित्रीलोकानांदेवानामीश्वरीशुभा त्रिगुणातामसीदेवीसर्वशक्तिसमन्विता २० अजय्याचाक्षयानित्यासर्वज्ञाचसदार्दिना वेदमाताचगायत्रीसंध्यासर्वस्थलालया २१ निर्गुणासगुणासिद्धासर्वसिद्धिप्रदाऽव्यया आनंदानंददागौरी देवानामभयप्रदा २२ एवंज्ञात्वामहाराजवैरभावंत्यजानया शरणंव्रजराजेंद्रदेवीत्वांपालयिष्यति २३ आज्ञाकरोभवेत्तस्याःसंजीवयनिजंकुलं हतशेषाश्चयेदैत्यास्तेभवंतुचिरायुषः २४ व्यासउवाच इतितेषांवचःश्रुत्वाशुंभःसुरबलार्दनः उवाचवचनंतथ्यंवीरवर्यगुणान्वितं २५ शुंभउवाच मौनंकुर्वंतुभोमंदायूयंभग्नारणाजिरात् शीघ्रंगच्छंतुपातालंजीविताशाबलीयसी २६ दैवाधीनंजगत्सर्वंकाचिंताऽत्रजयेमम देवास्तथैवब्रह्माद्यादैवाधीनावयंयथा २७ ब्रह्माविष्णुश्चरुद्रोयंयमोग्निर्वरुणस्तथा सूर्यश्चंद्रस्तथाशक्रःसर्वेदैववशाःकिल २८ काचिंतातर्हिमेमंदायद्भावितद्भविष्यति उद्यमस्तादृशोभूयाद्यादृशीभवितव्यता २९ सर्वथैवंविचार्यैवनशोचंतिबुधाःक्वचित् स्वधर्मंनत्यजंतीहज्ञानिनोमरणाद्भयात् ३० सुखंदुःखंतथैवायुर्जीवितंमरणंनृणां कालेभवतिसंप्राप्तेसर्वथादैवनिर्मितं ३१ ब्रह्मापततिकालेस्वेविष्णुश्चपार्वतीपतिः नाशंगच्छंत्यायुषोंतेसर्वेदेवाःसवासवाः ३२ तथाहमपिकालस्यवशगःसर्वथाधुना नाशंजयंवागंतास्मिस्वधर्मपरिपालनात् ३३ आहूतोप्यनयाकामंयुद्धायाबलयाकिल कथंपलायनपरोजीवेयंशरदांशतं ३४ करिष्याम्यद्यसंग्रामंयद्भावितद्भवत्विह जयोवामरणंवापिस्वीकरोमियथातथा ३५ दैवंमिथ्येतिविद्वांसोवदंत्युद्यमवादिनः युक्तियुक्तंवचस्तेषांयेजानंत्यभिभाषितं ३६

२८ २९ ३० ३१ ३२ इत्थंकालवशत्वेसर्वेषांसमाने यथातेयुद्धंत्यजतितथाहमपीत्याह तथाहमपीति ३३ ३४ ३५ दैवाधीनत्वपक्षेपीदमुत्तरंमयादत्तं उद्यमाधीनत्वपक्षेतुसर्वथायोद्धव्यमित्येवायातीत्या

ह दैवंमिथ्येति तेषांवचोयुक्तियुक्तं इत्थंयेभिभाषितंशास्त्रंजानंतितेवदंतीत्यर्थः ३६ तत्रयुक्तिमाह उद्यमेनविनेति तद्भविष्यतीति अत्रेतिशेषः
३७ तस्यसत्त्वेकिमिति तस्यदृष्टस्यसत्त्वेकिंप्रमाणंनप्रमाणमस्तीत्यर्थः अदृश्यमदृष्टंकथंदृश्यतेतस्मादहृश्यत्वाभावान्नप्रत्यक्षंप्रमाणमदृष्टसत्त्वेइत्यर्थः
३८ तस्माद्दृष्टाभावादवलंबंविनैवाश्चर्यंविनेवैषाचित्तस्यधारणास्थापनादुःखेदुःखविषये ३९ चक्रीति वर्तुलंपाषाणद्वयंपिष्टसाधनंचक्रीपदवाच्यंलोके
चक्कीतिवदंति ४० ननूद्यमेकृतेपिकचित्कार्यंनभवतितस्मादुद्योगोप्यकिंचित्करःकिंतुदैवमेवप्रधानमितिचेत्तत्राह कदाचिदिति कार्यानुरूपोद्योगेभवत्येवका
र्यं कार्यबाहुल्येउद्योगन्यूनतायांनकार्यंभवतीतिनतन्निर्वाहार्थमदृष्टापेक्षास्तीत्यर्थः ४१ प्रत्यक्षप्रमाणाभावेप्यागमस्यादृष्टविषयेप्रामाण्यमस्त्येवेतिचेद्येवेदप्रा

उद्यमेनविनाकामंनसिध्यंतिमनोरथाः कातराएवजल्पंतियद्भाव्यंतद्भविष्यति ३७ अदृष्टंबलवन्मूढाःप्रवदंतिनपंडि
ताः प्रमाणंतस्यसत्त्वेकिमदृश्यंदृश्यतेकथं ३८ अदृष्टंक्वापिदृष्टंस्यादेषामूर्खविभीषिका अविलंबंविनैवैषादुःखेचित्त
स्यधारणा ३९ चक्रीसमीपेसंविष्टासंस्थितापिष्टकारिणी उद्यमेनविनापिष्टंनभवत्येवसर्वथा ४० उद्यमेचकृतेकार्य-
सिद्धिःस्यात्येवसर्वथा कदाचित्तस्यन्यूनत्वेकार्यंनैवभवेदपि ४१ देशंकालंचविज्ञायस्वबलंशत्रुजंबलं कृतंकार्यंभवत्येवबृ
हस्पतिवचोयथा ४२ व्यासउवाच इतिनिश्चित्यदैत्येंद्रोरक्तबीजंमहासुरं प्रेषयामाससंग्रामेसैन्येनमहतावृतं ४३ शुंभ
उवाच रक्तबीजमहाबाहोगच्छत्वंसमरांगणे कुरुयुद्धंमहाभागयथातेबलमाहितं ४४ रक्तबीजउवाच महाराजनते
कार्याचिंतास्वल्पतरापिवा अहमेनांहनिष्यामिकरिष्यामिवशेतव ४५ पश्यमेयुद्धचातुर्यंक्वेयंबालासुरप्रिया दासींतेऽहं
करिष्यामिजित्वेमांसमरेबलात् ४६ व्यासउवाच इत्याभाष्यकुरुश्रेष्ठरक्तबीजोमहासुरः जगामरथमारुह्यस्वसैन्यपरिवा
रितः ४७

माण्यवादिनस्तान्प्रतीत्थंवक्तव्यं नवयंतादृशाःकिंतुप्रत्यक्षमेकेचार्वाकाइति नास्तिकमतावलंबिनइत्याह देशंकालंचेति देशकालावप्युद्योग
स्यसामग्रीभूतेकल्प्येतेइतिभावः कोभवतामाचार्यइतिचेत्तत्राह बृहस्पतीतिबार्हस्पत्यंशास्त्रमित्यर्थः४२ ४३ अयंरक्तबीजोमहिषासुरस्योत्पत्तिसमयेचितामध्यान्निर्गतोदे
हांतरेणरंभासुरएवेतिपूर्वमुक्तं ४४ ४५ ४६ ४७

शैलोपरिस्थितामिति यद्यपि देवी शंभस्योपवने स्थितेति पूर्वमुक्तं तथापि चंडमुंडवधानंतरं सर्वदैत्यानां वधे विस्तीर्णस्थलस्यापेक्षितत्वाल्लोकासंकुलिते विस्तीर्णे देशे हिमालये गतवती भगवतीति वा शैलोपर्येव तस्योपवनमासीदिति वा बोध्यं ४८ ४९ ५० ५१ ५२ ५३ परंतु यत्किंचिन्मयोच्यते न

हस्त्यश्वरथपादातिवृंदैश्च परिवेष्टितः निर्जगाम रथारूढो देवीं शैलोपरिस्थितां ४८ तमागतं समालोक्य देवी शंखमवादयत् भयदं सर्वदैत्यानां देवानां मोदवर्द्धनं ४९ श्रुत्वा शंखस्वनं चोग्रं रक्तबीजोऽतिवेगवान् गत्वा समीपे चामुंडां बभाषे वचनं मृदु ५० रक्तबीज उवाच बाले किं मां भीषयसि मत्वा त्वं कातरं किल शंखनादेन तन्वंगि वेत्सि किं धूम्रलोचनं ५१ रक्तबीजोऽस्मि नाम्नाहं त्वत्सकाशमिहागतः युद्धेच्छा चेत्प्रिकालापे सज्जा भव भयं न मे ५२ पश्याद्य मे बलं कांते दृष्टा ये कातरास्त्वया नाहं पंक्तिगतस्तेषां कुरु युद्धं यथेच्छसि ५३ वृद्धाश्च सेविताः पूर्वं नीतिशास्त्रं श्रुतं त्वया पठितं चार्थविज्ञानं विद्वद्गोष्ठीकृता यथवा ५४ साहित्यतंत्रविज्ञानं चेदस्ति नवकंदरि शृणु मे वचनं पथ्यं तथ्यं प्रमितिबृंहितं ५५ रसानां च नवानां वै द्वावेव मुख्यतां गतौ शृंगारकः शांतिरसो विद्वज्जनसभासु च ५६ तयोः शृंगार एवादौ नृपभावे प्रतिष्ठितः विष्णुर्लक्ष्म्या सहास्ते वै सावित्र्या चतुराननः ५७ शच्येंद्रः शैलसुतया शंकरः सह शेरते वल्या वृक्षो मृगो मृग्या कपोत्या च कपोतकः ५८ एवं सर्वे प्राणभृतः संयोगरसिका भृशं अप्राप्तभोगविभवा ये चान्ये कातरा नराः ५९ भवंति यतयस्ते वै मूढा दैवेन वंचिताः असंसाररसज्ञास्ते वंचिता वंचनापरैः ६० मधुरालापनिपुणैरतः शांतिरसे हिते क्व ज्ञानं क्व च वैराग्यं वर्तमाने मनोभवे ६१

च श्रुत्वा पथ्यात् युद्धं कुर्वित्याह वृद्धाश्चेति सर्वेषां वाक्यानां चेदस्तीत्यनेनान्वयः ५४ ५५ रसानामिति विद्वत्सभासु शृंगाररसः शांतिरसश्चेति द्वावेव मुख्यत्वेन गणितौ ५६ नृपभावे संसारशक्तिरूपे नृपस्वभावे इत्यर्थः अस्मिन् रसे के सक्ता इति चेत्तत्राह विष्णुर्लक्ष्म्येति ५७ ५८ शांतिरसे के सक्ता इति चेद्धतभाग्या इत्याह अप्राप्तभोगविभवा इति ५९ ६० ये कुत्राप्युपयोगिनो न संति अंधपंगुमूढादयस्ते शांतिरसे निमग्ना इत्यर्थः किंच ज्ञानं

भवतिचेत्सापिशांतिः रसोस्तुनदेवतुसर्वथादुर्लभमित्याह कृत्तानमिति ६१ ६२ ६३ चामुंडाललाटान्निःसृताकालिकाकोशान्निर्गता अंबिकानयोर्जननी इतिश्रीदेवीभा॰पं॰सप्तविंशोऽध्यायः २७ त्रिषष्टिश्लोकवर्यैस्तुरक्तबीजासुरेणह देव्यासहमहायुद्धमभूदितिचवर्ण्यते १ रक्त-



लोभेक्रोधेचदुर्द्धर्षेमोहेमतिविनाशके तस्मात्त्वमपिकल्याणिकुरुकांतंमनोहरं ६२ शुंभंसुराणांजेतारंनिशुंभंवामहाबलं व्यासउवाच इत्युक्त्वारक्तबीजोऽसौविररामपुरःस्थितः ६३ श्रुत्वाजहासचामुंडाकालिकाचांबिकातथा इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेसप्तविंशोऽध्यायः २७ व्यासउवाच कृत्वाहास्यंततोदेवीतमुवाचविशांपते मेघगंभीरयावाचायुक्तियुक्तमिदंवचः १ पूर्वमेवमयाप्रोक्तंमंदात्मन्किंविकत्थसे दूतस्याग्रेयथायोग्यंवचनंहितसंयुतं २ सदृशोममरूपेणबलेनविभवेनच त्रिलोक्यांयदिकोपिस्यात्तंपतिंप्रवृणोम्यहं ३ ब्रूहिशुंभंनिशुंभंचप्रतिज्ञामेपुराकृता तस्माद्युध्यस्वजित्वामांविवाहंविधिवत्कुरु ४ त्वंवैतदाज्ञयाप्राप्तस्तस्यकार्यार्थसिद्धये संग्रामंकुरुपातालंगच्छवापतिनासह ५ व्यासउवाच तच्छ्रुत्वावचनंदेव्याःसदैत्योऽमर्षपूरितः मुमोचतरसाबाणान्सिंहस्योपरिदारुणान् ६ अंबिकातांञ्शरान्वीक्ष्यगगनेपन्नगोपमान् चिच्छेदसायकैस्तीक्ष्णैर्लघुहस्ततयाक्षणात् ७ अन्यैर्जघानविशिखैरक्तबीजंमहासुरं अंबिकाचापनिर्मुक्तैःकर्णाकृष्टैःशिलाशितैः ८ देवीबाणहतःपापोमूर्च्छामापरथोपरि पतितेरक्तबीजेतुहाहाकारोमहानभूत् ९ सैनिकाश्चुक्रुशुःसर्वेहताःस्मइतिचाब्रुवन् ततोडुंबारवंश्रुत्वाशुंभःपरमदारुणं १०

बीजवाक्यंश्रुत्वादेवीयदाहतदुच्यते कृत्वाहास्यमिति १ पूर्वमेवेति हेमंदात्मन्पूर्वंप्रेषितस्यदूतस्याग्रेयथायोग्यंहितसंयुतंवचनंमयापूर्वमेवप्रोक्तंपुनस्त्वंकिमर्थंविकत्थसइत्यन्वयः २ तत्किमुक्तमितिचेत्तदाह सदृशोममेति प्रवृणोमिवर्तमानसामीप्येभविष्यतिलड्वरिष्यामीत्यर्थः ३ इतिप्रतिज्ञेत्यर्थः ४ ५ ६ ७ अन्यैरितिस्थूलाग्रैरित्यर्थः ८ तेनचरक्तंननिर्गतंमूर्च्छाचजातेत्युभयंयुक्तमेव ९ १०

११ १२ १३ १४ कालीविस्तारितानना सतीतेन नादेन मुक्ता जाता तथा तेषां नादं स्वमुखेनाकरोदित्यर्थः १५ १६ आयते विस्तीर्णे

उद्योगं सर्वसैन्यानां दैत्यानामादिदेश ह शुंभ उवाच निर्यांतु दानवाः सर्वे कांबोजाः स्वबलैर्वृताः ११ अन्येऽप्यतिबलाः शूराः कालकेया विशेषतः व्यास उवाच इत्याज्ञप्तं बलं सर्वं शुंभेन च चतुर्विधं १२ निर्जगाम मदाविष्टं देवी समरमंडले त मागतं समालोक्य चंडिका दानवं बलं १३ घंटानादं चकाराशु भीषणं भयदं मुहुः ज्यास्वनं शंखनादं च चकार जगदंबि का १४ तेन नादेन सा जाता काली विस्तारितानना श्रुत्वा तन्निनदं घोरं सिंहो देव्याश्च वाहनं १५ जगर्ज सोऽपि बल वान् जनयन्भयमद्भुतं तन्निनादमुपश्रुत्य दानवाः क्रोधमूर्छिताः १६ सर्वे चिक्षिपुरस्त्राणि देवीं प्रति महाबलाः त स्मिन्नेवायने युद्धे दारुणे लोमहर्षणे १७ ब्रह्मादीनां च देवानां शक्तयश्चंडिकां ययुः यस्य देवस्य यद्रूपं यथाभूषणवाहनं १८ तादृग्रूपास्तदा देव्यः प्रययुः समरांगणे ब्रह्माणी वरटारूढा साक्षसूत्रकमंडलुः १९ आगता ब्रह्मणः शक्तिः ब्रह्मा णी ति प्रतिश्रुता वैष्णवी गरुडारूढा शंखचक्रगदाधरा २० पद्महस्ता समायाता पीतांबरविभूषिता शांकरी तु वृषारूढा त्रिशूलवरधारिणी २१ अर्धचंद्रधरा देवी तथाहिवलया शिवा कौमारी शिखिसंरूढा शक्तिहस्ता वरानना २२ युद्धका मा समायाता कार्तिकेयस्वरूपिणी इंद्राणी सुष्टुवदना श्वेतगजवाहना २३ वज्रहस्तातिभूषाढ्या संग्रामाभिमुखी ययौ वाराही सूकराकारा प्रोद्यमेनासनामता २४ नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः याम्या च महिषारूढा दंड हस्ताभयप्रदा २५ समायाताथ संग्रामे यमरूपा सुविस्मिता तथैव वारुणी शक्तिः कौबेरी च मदोत्कटा २६ एवंविधा स्तथाकारा ययुः स्वस्वबलैर्वृताः आगतास्ताः समालोक्य देवी मुदमवाप च २७

१७ १८ वरटो हंसः १९ २० २१ शिखिसंरूढा मयूरा रूढेत्यर्थः २२ २३ २४ २५ २६ तथाकाराः यस्य देवस्य या शक्तिस्तस्य देवस्य आकारस्तथाकारो यासां ता इत्यर्थः २७

२८ २९ येचान्येदानवाःस्थितास्तान्दैत्यबलंचसर्वंहत्वेत्यर्थः ३० ३१ ३२ ३३ अतिविशिष्टतेजसः कौशिक्याः सविधेस्वयंगंतुमशक्त
स्तादेवशक्तीरीशानोदेव्यैदर्शयित्वा कौशिक्याः स्वशक्तेःपार्वत्याःसकाशात्प्रादुर्भूतत्वेनधृष्टतयाईशानएवतथोक्तवानितिभावः स्वस्यापिसहायन

स्वस्थासुमुदिरेदेवादैत्याश्चभयमाययुः ताभिःपरिवृतस्तत्रशंकरोलोकशंकरः २८ समागम्यचसंग्रामेचंडिकामिदमु
वाचह हन्यंतामसुराःशीघ्रंदेवानांकार्यसिद्धये २९ निशुंभंचैवशुंभंचयेचान्येदानवाःस्थिताः हत्वादैत्यबलंसर्वंकृत्वा
चनिर्भयंजगत् ३० स्वानिस्वानिचधिष्ण्यानिसमागच्छंतुशक्तयः देवायज्ञभुजःसंतुब्राह्मणायजनेरताः ३१ प्राणि
नःसंतुसंतुष्टाःसर्वेस्थावरजंगमाः शमंयांतुतथोत्पाताईतयश्चतथापुनः ३२ घनाःकालेप्रवर्षंतुकृषिर्बहुफलात-
था व्यासउवाच एवंब्रुवतिदेवेशेशंकरेलोकशंकरे ३३ चंडिकायाःशरीरात्तुनिर्गताशक्तिरद्भुता भीषणातिप्रचंडा
चशिवाशतनिनादिनी ३४ घोररूपाथपंचास्यमित्युवाचस्मितानना देवदेवव्रजाशुत्वंदैत्यानामधिपंप्रति ३५ दूतत्वं
कुरुकामारेब्रूहिशुंभंस्मराकुलं निशुंभंचमदोत्सिक्तंवचनान्ममशंकर ३६ मुत्काचित्रिविष्टपंयांतुयूयंपातालमाशु
वै देवाःस्वर्गंसुखंयांतुनराःषाड्स्वासनंशुभं ३७ प्राप्नोतुत्रिदिवंस्थानंयज्ञभागांश्चदेवताः जीवितेच्छास्तयुष्माकं
यदिस्यात्तुमहत्तरा ३८ तर्हिगच्छंतुपातालंतरसायत्रदानवाः अथवाबलमास्थाययुद्धेच्छामरणायचेत् ३९ तदाग
च्छंतुतृप्यंतुमच्छिवाःपिशितेनवः व्यासउवाच तच्छ्रुत्वावचनंतस्याःशूलपाणिस्त्वरान्वितः ४० गत्वाहदैत्यराजानं
शुंभंसदसिसंस्थितं शिवउवाच राजन्दूतोहमंबायास्त्रिपुरांतकरोहरः ४१

प्रदर्शनेनेषद्दुष्प्रभगवतीतस्योत्तरंनाह किंतुतस्याः
सकाशादुत्पन्नाकाचिच्छक्तिरित्याह चंडिकायाःशरीरात्विति शिवाशतनिनादिनी शतशब्दोनंतवाची शिवानांशतेननिनादिनीतिविग्रहः निनदद्नंतशि-
वास्वतेत्यर्थः ३४ ३५ ३६ ३७ ३८ ३९ मच्छिवाः यामयासहानिनदंत्यःप्रादुर्भूताःपिशितंमांसं ४० ४१ ७

४२ ४३ इत्युवाचमहाराज्ञीति त्यक्त्वास्वर्गमिति पारभ्याश्रुवैएतत्पर्यंतमितिशब्दार्थः ४४ देवीवाक्यंदेव्यावाक्यंहितकृदमृतसन्निभंत्र्या

त्वत्सकाशमिहायातोहितंकर्त्तुंतवाखिलं त्यक्त्वास्वर्गंतथाभूमिंयूयंगच्छंतुसत्वरं ४२ पातालंयत्रप्रल्हादोबलिश्च बलिनांवरः अथवामरणेच्छाचेत्तर्ह्यागच्छंतुसत्वरं ४३ संग्राममेवोहनिष्यामिसर्वानेवाहमाशुवै इत्युवाचमहाराज्ञीयुष्म त्कल्याणहेतवे ४४ व्यासउ० इतिदैत्यवरान्देवीवाक्यममृतसन्निभं हितकृच्छ्रावयित्वासमत्यायातश्चमूलभृत् ४५ ययासौप्रेरितःशंभुर्दूतत्वदानवान्प्रति शिवदूतीतिविख्याताजातात्रिभुवनेखिले ४६ तेपिश्रुत्वावचोदेव्याःशंकरोक्तंसुदु ष्करं युद्धायनिर्ययुःशीघ्रंदंशिताःशस्त्रपाणयः ४७ तरसारणमागत्यचंडिकांप्रतिदानवाः निर्जघ्नुश्चशरैस्तीक्ष्णैःकर्णा कृष्टैःशिलाशितैः ४८ कालिकाशूलपातैस्तान्गदाशक्तिविदारितान् कुर्वतीव्यचरत्तत्रभक्षयंतीचदानवान् ४९ कमंडलुजलाक्षेपगतप्राणान्महाबलान् ब्रह्माणीचाकरोत्तत्रदानवान्समरांगणे ५० माहेश्वरीवृषारूढात्रिशूलेनाति रंहसा जघानदानवान्संख्येपातयामासभूतले ५१ वैष्णवीचक्रपातेनगदापातेनदानवान् गतप्राणांश्चकाराशुच्चोत्त मांगविवर्जितान् ५२ ऐंद्रीवज्रप्रहारेणपातयामासभूतले ऐरावतकराघातपीडितान्दैत्यपुंगवान् ५३ वाराहीतुंडघातेन दंष्ट्राग्रपातनेनच जघानक्रोधसंयुक्ताशतशोदैत्यदानवान् ५४ नारसिंहीनखैस्तीव्रैर्दारितान्दैत्यपुंगवान् भक्षयंतीच चाराजौननादचमुहुर्मुहुः ५५ शिवदूतीसाट्टहासैःपातयामासभूतले तांश्चखादाथचामुंडाकालिकाचत्वरान्विता ५६ शि खिसंस्थाचकौमारीकर्णाकृष्टैःशिलाशितैः निजघानरणेशत्रून्देवानांचहितायवै ५७ वारुणीपाशसंबद्धान्दैत्यान्समर मस्तके पातयामासतत्पृष्ठेमूर्च्छितान्गतचेतनान् ५८ वर्धित्वाश्मूलभृच्छिवःप्रत्यायातइत्यर्थः ४५ययेति कौशिकीतउद्भूतयेत्यर्थः

४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८

५९ ६० ६१ ६२ ६३ इतिश्रीदेवीभागवततिलके पंचमस्कंधेऽष्टाविंशोऽध्यायः २८ षष्टिश्लोकै रक्तबीजवधाख्यानं सविस्तरं कीर्तयि
त्वाथ शुंभस्य युद्धायोद्योगईर्यते १ रक्तबीजस्य प्रभावं वर्णयति वरदानमिदं तस्येति शिवेनार्पितं समर्पितं रंभासुर एवाग्निमध्यान्निर्गतो रक्त



एवंमातृगणेनाजावतिवीर्यपराक्रमं मर्दितं दानवंसैन्यंपलायनपरंत्वभूत् ५९ हुंकारवस्तुरुमहानभूत्तत्रबलार्णवे
पुष्पवृष्टिंतदादेवाश्चक्रुर्देव्यागणोपरि ६० तच्छ्रुत्वानिनदंघोरंजयशब्दंचदानवाः रक्तबीजश्चुकोपाशु दृष्ट्वादैत्यान्पला
यितान् ६१ गर्जमानांस्तथादेवान्वीक्ष्यदैत्योमहाबलः रक्तबीजस्तु तेजस्वीरणमभ्याययौतदा ६२ सायुधोरथसंविष्टः
कुर्वंज्याशब्दमद्भुतं आजगामतदादेवींक्रोधरक्तेक्षणोद्यतः ६३ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेऽ
ष्टाविंशोऽध्यायः २८ व्यासउवाच वरदानमिदंतस्य दानवस्याशिवार्पितं अत्यद्भुततरंराजन्शृणुतत्प्रब्रवीम्यहं १
तस्यदेहाद्रक्तबिंदुर्यदापततिभूतले समुत्पतंतिदैत्यास्तद्रूपास्तत्पराक्रमाः २ असंख्यानामहावीर्यादानवारक्तसंभ
वाः भववंचितिरुद्रेण दत्तोऽस्त्यसद्भुतोवरः ३ सतेनवरदानेनदर्पितःक्रोधसंयुतः अभ्यगात्तरसासंख्येहंतुंदेवींस
कालिकां ४ सदृष्ट्वावैष्णवींशक्तिंगरुडोपरिसंस्थितां शक्त्याजघानदैत्येंद्रस्तांवैकमललोचनां ५ गदयावारयामा
सशक्तिःसाशक्तिसंयुता अताडयच्चचक्रेणरक्तबीजंमहासुरं ६ रथांगाहतदेहात्तु बहुस्रुश्रावशोणितं वज्राहतगि-
रेःशृंगान्निर्झरइवगैरिकाः ७ यत्रयत्रयदाभूमौपतंतिरक्तबिंदवः समुत्तस्थुस्तदाकाराःपुरुषाश्चसहस्रशः ८
ऐंद्रीतमसुरंघोरंवज्रेणाभिजघानच रक्तबीजंक्रुद्धाविष्टानिःससारचशोणितं ९ ततस्तत्क्षतजाज्जातारक्तबीजा
स्त्वनेकशः तद्वीर्यास्तत्तदाकाराःसायुधायुद्धदुर्मदाः १०

बीजोजात इति महिषासुरोत्पत्तौ पूर्वमुक्तं स एव पश्चात्तपस्ययाशिवाद्वरंलब्ध
वानित्याह अत्यद्भुततरमिति तद्वरदानमत्यद्भुततरंनैतत्सदृशमन्यत्रक्वापिदृष्टमित्यर्थः १ २ ३ ४ ५ ६ ७ ८ ९ क्षतजाद्रुधिरात् १०

११ तुंडघातेन वाराही देव्यहनत् १२ १३ १४ १५ १६ १७ १८ १९ २० आगमिष्यनीति आगमिष्यति

ब्रह्माणी ब्रह्मदंडेन कुपिताऽप्यहनद्भृशं माहेश्वरी त्रिशूलेन दारयामास दानवं ११ नारसिंही नखाघातैस्तं विव्याध महास्वरं अहनत्तुंडघातेन क्रुद्धा तं राक्षसाधमं १२ कौमारी च तथा शक्त्या वक्षस्येनमताडयत् सोऽपि क्रुद्धः शरासारैर्बिभेद निशितैश्च ताः १३ गदाशक्तिप्रहारैस्तु मातॄः सर्वाः पृथक्पृथक् शक्तयस्तं शराघातैर्विविधुस्तत्प्रकोपिताः १४ तस्य शस्त्राणि चिच्छेद चंडिका स्वशरैः शितैः जघानान्यैश्च विशिखैस्तं देवी कुपिता भृशं १५ तस्य देहाच्च सुस्राव रुधिरं बहुधा तु यत् तस्मात्तत्सदृशाः शूराः प्रादुरासन्सहस्रशः १६ रक्तबीजैर्जगद्व्याप्तं रुधिरौघसमुद्भवैः सन्नद्धैः सायुधैः कामं कुर्वद्भिर्युद्धमद्भुतं १७ प्रहृष्टतश्च तान्दृष्ट्वा रक्तबीजाननेकशः भयभीताः सुरास्तत्र विषण्णाः शोककर्षिताः १८ कथमद्य क्षयं दैत्या गमिष्यंति सहस्रशः महाकाया महावीर्या दानवा रक्तसंभवाः १९ एकैव चंडिका त्वत्रास्ति तथा काली च मातरः एताभिर्दानवाः सर्वे जेतव्याः कष्टमेव तत् २० निशुंभो वाथ शुंभो वा सहसा बलसंवृतः आगमिष्यति संग्रामे ततोऽनर्थो महान्भवेत् २१ व्यास उवाच एवं देवा भयोद्विग्नाश्चिंतामापुर्महत्तरां यदा तदांबिका प्राह कालीं कमललोचनां २२ चामुंडे कुरु विस्तीर्णं वदनं त्वरिता भृशं मच्छस्त्रपातसंभूतं रुधिरं पिब सत्वरा २३ भक्षयंती चर रणे दानवानद्य कामतः हनिष्यामि शरैस्तीक्ष्णैर्गदासिमुसलैस्तथा २४ तथा कुरु विशालाक्षि पानं तद्रुधिरस्य च बिंदुमात्रं यथा भूम्यां न पतेदपि सांप्रतं २५ भक्ष्यमाणास्तदा दैत्या न चोत्पत्स्यंति चापरे एवमेषां क्षयो नूनं भविष्यति न चान्यथा २६

चेदित्यर्थः २१ २२ २३ दानवान्भक्षयंती रणे चर व्रजेत्यर्थः अहं दैत्यान्हनिष्यामि त्वं तान्हतान्भक्षयेत्यर्थः २४ किंच तथेति तद्रुधिरस्य पानमपि तथा कुरु यथा भूम्यां बिंदुमात्रमपि लेशमात्रमपि सांप्रतं न पतेदित्यर्थः २५ किमनेन भविष्यतीति चेत्तत्राह भक्ष्यमाणा इति २६

घातयिष्यास्यहमितिपूर्वानुवादंकृत्वाग्रेकर्तव्यमाह घातयिष्यामीति २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५

घातयिष्याम्यहं दैत्यंत्वंभक्षयचसत्वरा पिबंतीक्षतजंसर्वंयतमानारिसंक्षये २७ इत्थंदैत्यक्षयंकृत्वा दत्वाराज्यंसुरालयं इंद्रायसुस्थिरंसर्वंगमिष्यामोयथासुखं २८ व्यासउवाच इत्युक्तांबिकयादेवीचामुंडाचंडविक्रमा पपौचक्षतजं सर्वंरक्तबीजशरीरजं २९ अंबिकातंजघानाशुखड्गेनमुसलेनच चखाददेहशकलांश्चामुंडातान्कृशोदरी ३० सोपिक्रुद्धोगदाघातैश्चामुंडांसमघातयत् तथापिचपपावाशुक्षतजंतमभक्षयत् ३१ येऽन्येरुधिरजाःक्रूरारक्तबीजामहाबलाः तेपिनिष्पातितासर्वभक्षितागतशोणिताः ३२ कृत्रिमाभक्षिताःसर्वेयस्तस्वाभाविकोसुरः सोपिप्रपातितोहत्वाखड्गेनातिविखंडितः ३३ रक्तबीजेहतेरौद्रेयेचान्येदानवारणे पलायनंततःकृत्वागतास्तेभयकंपिताः ३४ हाहेतिविब्रुवंतस्तेशंभंमोचुःसुविह्वलाः रुधिरारक्तदेहाश्चविगतास्त्राविचेतसः ३५ राजन्नंबिकयारक्तबीजोसौविनिपातितः चामुंडानस्यदेहात्तुपपौसर्वंचशोणितं ३६ येचान्येदानवाःशूरावाहनेनातिरंहसा सिंहेननिहताःसर्वेकाल्याचभक्षिताःपरे ३७ वयंत्वांकथितुंराजन्नागतायुद्धचेष्टितं चरितंचतथादेव्याःसंग्रामेपरमाद्भुतं ३८ अजेयेयंमहाराजसर्वथादैत्यदानवैः गंधर्वासुरयक्षैश्चपन्नगोरगराक्षसैः ३९ अन्यास्तत्रागतादेव्यइंद्राणीप्रमुखाभृशं युध्यमानामहाराजवाहनैरायुधैर्युताः ४० ताभिःसर्वंहतंसैन्यंदानवानांवरायुधैः रक्तबीजोपिराजेंद्रतरसाविनिपातितः ४१ एकापिदुःसहादेवीकिंपुनस्ताभिरन्विता सिंहोपिहंतिसंग्रामेराक्षसानमितप्रभः ४२ अतोविचार्यसचिवैर्यद्युक्तंतद्विधीयतां नवैरमनयायुक्तंसंधिरेवसुखप्रदः ४३ आश्चर्यमेतदखिलंयन्नारीहंतिराक्षसान् रक्तबीजोपिनिहतःपीतंतस्यापिशोणितं ४४ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४

४५ ४६ ४७ ४८ ४९ ५० नान्स्वकीयान्सर्वान्निहत्यविपुलंयशोयुद्धमरणंजहित्वास्वप्राणत्राणायगच्छामिगमिष्यामिकिमि

अन्येनिपातितादैत्याःसंग्रामेंबिकयानृप चामुंडयाचमांसंवैभक्षितंसकलंरणे ४५ वरंपातालगमनंनस्याःसेवाथवाव
रा ननुयुद्धंमहाराजकार्यमंबिकयासह ४६ ननारीप्राकृतात्ह्येषादेवकार्यार्थसाधिनी मायेयंप्रबलादेवीक्षपयंतीयमुत्थिता
४७ व्यासउवाच इतितेषांवचस्तथ्यंश्रुत्वाकालविमोहितः मुमूर्षुःप्रत्युवाचेदंशुंभःप्रस्फुरिताधरः ४८ शुंभउवाच
यूयंगच्छंतुपातालंशरणंवाभयातुराः हनिष्याम्यहमद्यैवतांचनाश्वसमुद्यतः ४९ जित्वासर्वान्सुरानाजौकृत्वाराज्यं
सुपुष्कलं कथंनारीभयोद्विग्नःपातालंप्रविशाम्यहं ५० निहत्यपार्षदान्सर्वान्रक्तबीजमुखान्रणे प्राणत्राणायगच्छा
मिहित्वाकिंविपुलंयशः ५१ मरणंत्वनिवार्यंवैप्राणिनांकालकल्पितं तद्भयंजन्मनोपात्तंत्यजेत्कोदुर्लभंयशः ५२ नि
शुंभाहंगमिष्यामिरथारूढोरणाजिरे हत्वातामागमिष्यामिनागमिष्यामिचान्यथा ५३ त्वंतुसेनायुतोवीरपार्ष्णिग्राहोभ
वस्वमे तरसानांशरैस्तीक्ष्णैर्नारीनिंनययमालये ५४ निशुंभउवाच अहमद्यहनिष्यामिगत्वादुष्टांचकालिकां आगमि
ष्याम्यहंशीघ्रंगृहीत्वातामथांबिकां ५५ माचिंतांकुरुराजेंद्रवराकायास्त्वत्कारणे क्वैषाबालाक्वमेबाहुवीर्यंविश्ववश
करं ५६ त्यक्त्वार्तिविपुलांभ्रातर्भुंक्ष्वभोगाननुत्तमान् आनयिष्याम्यहंकामंमानिनींमानसंयुतां ५७ मयितिष्ठतितेरा
जन्नयुक्तंगमनंरणे गत्वाहमानयिष्यामितवार्थेविजयश्रियं ५८ व्यासउवाच इत्युक्त्वाभ्रातरंज्येष्ठंकनीयान्बलगर्वितः
रथमास्थायविपुलंसन्नद्धःस्वबलावृतः ५९ जगामतरसातूर्णंसंगरेकृतमंगलः संस्तुतोबंदिसूतैश्चसायुधःसपरिष्क
रः ६०

त्यर्थः ५१ मरणंत्विति प्राणिनांकालकल्पितंमरणमनिवार्यमेवयदाजन्मगृहीतंतंदैवतद्भयमुपात्तंनतस्माद्भयाद्दुर्लभंयशःकस्त्यजेन्नकोपीत्यर्थः
५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० इतिश्रीदेवीभागवततिलकेपंचमस्कंधेएकोनत्रिंशोध्यायः २९

चतुःषष्टिमहापद्येर्निशुंभवधउच्यते यत्रदेव्यादानवानांपराक्रमउदीर्यते १ निशुंभेनयुद्धार्थंकृतनिश्चयानंतरंजातंवृत्तमाह निशुंभइति १ २

इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेएकोनत्रिंशोऽध्यायः २९ व्यासउवाच निशुंभोनिश्चयंकृत्वामरणायजयायवा सोद्यमःसबलःशूरोरणेदेवीमुपाययौ १ नामाजगामशुंभोपिस्वबलेनसमावृतः प्रेक्षकोभूद्रणेराजासंग्रामरसपंडितः २ गगनेसंस्थितादेवास्तदाभ्रपटलावृताः दिदृक्षवस्तुसंग्रामेसेंद्रायक्षगणास्तथा ३ निशुंभोथरणेगत्वाधनुरादायशार्ङ्गकं चकारशरवृष्टिंसभीषयंजगदंबिकां ४ मुंचंतंशरजालानिनिशुंभंचांडिकारणे वीक्ष्यादायधनुःश्रेष्ठंजहाससुस्वरंमुहुः ५ उवाचकालिकांदेवीपश्यमूर्खत्वमेतयोः मरणायागतौकालिमत्समीपमिहाधुना ६ दृष्ट्वादैत्यवधंघोरंरक्तबीजात्ययंतथा जयाशांकुरुतस्त्वेतौमोहितौमममायया ७ आशाबलवतीह्येषानजहातिनरंक्वचित् भग्नंहृतबलंनष्टंगतपक्षंविचेतनं ८ आशापाशनिबद्धौद्वौयुद्धायसमुपागतौ निहंतव्यौमयाकालिरणेशुंभनिशुंभकौ ९ आसन्नमरणावेतौसंप्राप्तौदैवमोहितौ पश्यतांसर्वदेवानांहनिष्याम्यहमद्यतौ १० व्यासउवाच इत्युक्त्वाकालिकांचंडीकर्णाकृष्टशरोत्करैः छादयामासतरसानिशुंभंपुरतःस्थितं ११ दानवोपिशरांस्तस्याश्चिच्छेदनिशितैःशरैः तयोःपरस्परंयुद्धंबभूवातिभयानकं १२ केसरीकेशजालानिधुन्वानःसैन्यसागरं गाहयामासबलवान्सरसींवारणोयथा १३ नखैर्दंतप्रहारैस्तुदानवान्पुरतःस्थितान् चखादचविशीर्णांगान्गजानिवमदोत्कटान् १४ एवंविमथ्यमानेतुसैन्येकेसरिणातदा अभ्यधावन्निशुंभोथविकृष्टवरकार्मुकः १५

अभ्रपटलावृताइत्यनेनदेव्युपरिच्छायार्थमभ्रपटलमागतमितिबोधितं ३ ४ ५ ६ रक्तबीजस्यात्ययोध्वंसः ममायायामोहितावित्यनेनस्वस्यब्रह्मत्वं स्वमायाशक्तेरतिशयितोमहिमास्तीतिचबोधितं ७ ८ ९ १० ११ १२ गाहयामासप्रविवेशइत्यर्थः १३ १४ १५ छ छ छ छ छ

१६ १७ १८ १९ २० २१ २२ २३ २४ २५ धावमान इति असिनामूर्ध्निसिंहं जघान जगदंबिकां च जघानेत्यर्थः २६ २७ २८

अन्येपिक्रुद्धादैत्येंद्रादेवींहंतुमुपाययुः संदष्टदंतरसनारक्तनेत्राह्यनेकशः १६ तत्राजगामतरसाशुंभःसैन्यसमावृ
तः निहत्यकालिकांकोपाद्गृहीतुंजगदंबिकां १७ तत्रागत्सद्ददर्शाजावंबिकांचपुरःस्थितां रौद्ररसयुतांकांतांशृंगाररससं
युतां १८ तांवीक्ष्यविपुलापांगींत्रैलोक्यवरसुंदरीं स्फुरत्कनयनांरम्यांक्रोधरक्तेक्षणांतथा १९ विवाहेच्छांपरित्यज्य
जयाशांदूरतस्तथा मरणेनिश्चयंकृत्वातस्थावाहितकार्मुकः २० तंतथादानवंदेवीस्मितपूर्वमिदंवचः बभाषेशृणुवतांतेषां
दैत्यानांरणमस्तके २१ गच्छध्वंपामरायूयंपातालंवाजलार्णवं जीविताशांस्थिरांकृत्वात्यक्त्वात्रैवायुधानिच २२ अथ
वामच्छराघातहृतप्राणारणाजिरे प्राप्यस्वर्गस्फुरद्वंसर्वेक्रीडंतुविगतज्वराः २३ कातरत्वंचभूरत्वंनभवत्येवसर्वथा
ददाम्यभयदानंवेयांतुसर्वेयथासुखं २४ व्यासउवाच इत्याकर्ण्यवचस्तस्यानिशुंभोमदगर्वितः निशितंखड्गमा-
दायचर्मनैवाष्टचंद्रकं २५ धावमानस्तुतरसासिनासिंहंमदोत्कटं जघानातिबलान्मूर्ध्निभ्रामयन्जगदंबिकां २६
ततोदेवीस्वगदयावंचयित्वासिपातनं ताडयामासतंबाह्वोर्मूलेपरशुनातदा २७ खड्गेनानिहतःसोपिबाहुमूलेमहामदः
संस्तभ्यवेदनांभूयोजघानचंडिकांतदा २८ सापिघंटास्वनंघोरंचकारभयदंनृणां पपौपुनःपुनःपानंनिशुंभंहंतुमिच्छ
ति २९ एवंपरस्परंयुद्धंबभूवातिभयप्रदं देवानांदानवानांचपरस्परजयैषिणां ३० पलादाःपक्षिणःक्रूराःसारमेयाश्च
जंबुकाः ननृतुश्चातिसंतुष्टागृध्राःकंकाश्चवायसाः ३१ रणभूर्भातिभूयिष्ठपतितासुरवर्ष्मकैः रुधिरस्रावसंयुक्तैर्ग-
जाश्वदेहसंकुला ३२ पतितान्दानवान्दृष्ट्वानिशुंभोतिरुषान्वितः प्रययौचंडिकांतूर्णंगदामादायदारुणां ३३

निशुंभंहंतुमिच्छति या सेत्यर्थः २९ ३० पलादामांसाशिनः सारमेयाःश्वानः ३१ असुरवर्ष्मकैरसुरशरीरैःगजाश्वदेहसंकुलारणभूरित्यन्वयः ३२ ३३

३४ ३५ ततोयमसादनंगंतासीत्यर्थः ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ परमांगनासर्वकारणभूतासंवि



सिंहंजघानगदयामस्तकेमदगर्वितः प्रहृत्यचस्मितंकृत्वापुनर्देवीमताडयत् ३४ सापितंकुपितातीवनिशुंभंपुरतःस्थितं प्र
हरंतंसमीक्ष्याथदेवीवचनमब्रवीत् ३५ देव्युवाच तिष्ठमंदमतेतावद्यावत्खड्गमिदंतव ग्रीवायांप्रेरयाम्यस्माद्गंतासियमसा
दनं ३६ व्यासउवाच इत्युक्त्वातरसादेवीकृपाणेनसमाहिता चिच्छेदमस्तकंतस्यनिशुंभस्याशुचंडिका ३७ सछिन्नमस्त
कोदेव्याकबंधोतीवदारुणः बभ्रामचगदापाणिस्त्रासयन्देवतागणान् ३८ देवीतस्याशितैर्बाणैश्चिच्छेदचरणौकरौ
पपातोर्व्यांततःपापोगतासुःपर्वतोपमः ३९ तस्मिन्निपतितेदैत्येनिशुंभेभीमविक्रमे हाहाकारोमहानासीत्तत्सैन्येभयकंपि
ते ४० त्यक्त्वायुधानिसर्वाणिसैनिकाःक्षतजाप्लुताः जग्मुर्बुंबारवंसर्वेकुर्वाणाराजमंदिरं ४१ तानागतान्सुसंप्रेक्ष्यशु
भःशत्रुनिषूदनः पप्रच्छक्वनिशुंभोसौकथंभग्नाःपलायिताः ४२ तच्छ्रुत्वावचनंराज्ञस्तेप्रोचुःप्रणताभृशं राजंस्तेनिह
तोभ्राताशेतेसमरमूर्द्धनि ४३ तथानिपातिताःशूरायेचतेप्यनुजानुगाः वयंत्वांकथितुंसर्वंवृत्तांतंसमुपागताः ४४ नि
शुंभोनिहतस्तत्रतयाचंडिकयाधुना नहियुद्धस्यकालोद्यतवराजन्रणांगणे ४५ देवकार्यंसमुद्दिश्यकापीयंपरमांगना
हंतुंदैत्यकुलंनूनंप्राप्तेतिपरिचिंतय ४६ नेषाप्राकृतयोषैवदेवीशक्तिरनुत्तमा अचिंत्यचरिताक्वापिदुर्ज्ञेयादैवतैरपि ४७ ना
नारूपधरातीवमायामूलविशारदा विचित्रभूषणादेवीसर्वायुधधराशुभा ४८ गहनागूढचरिताकालरात्रिरिवापरा अ
पारपारगापूर्णासर्वलक्षणसंयुता ४९ अंतरिक्षस्थितादेवास्तांस्तुवंत्यकुतोभयाः देवकार्यंचकुर्वाणांश्रीदेवींपरमाद्भुतां ५०
पलायनंपरोधर्मःसर्वथादेहरक्षणं रक्षितेकिलदेहेस्मिन्कालेस्मत्सुखवतांगते ५१

रूपिणीश्रीभगवत्यस्तीत्यर्थः ४६ ४७ ४८



४९ ५० ततश्चाधुनेदंकर्तव्यमित्याह पलायनंपरोधर्मइति कालेऽस्मत्सुखवतांगतेऽनुकूलेआगतेइत्यर्थः ५१ ७ ७

५२ ५३ ५४ ५५ ५६ ५७ ५८ अबलयेतिछेदः ५९ ६० इत्थंज्ञात्वायदिच्छसितत्कुर्वित्याह यथातेइति नात्रहेतुरि

संग्रामेविजयोराजन्भवितातेनसंशयः कालःकरोतिबलिनंसमयेनिर्बलंक्वचित् ५२ तंपुनःसबलंकृत्वाजयायोपद
धातिहि दातारंयाचकंकालःकरोतिसमयेक्वचित् ५३ भिक्षुकंधनदातारंकरोतिसमयांतरे विष्णुःकालवशेनूनंब
ह्मावापार्वतीपतिः ५४ इंद्राद्यानिर्जराःसर्वेकालएवप्रभुःस्वयं तस्मात्कालंप्रतीक्षस्वविपरीतंतवाधुना ५५ संसु-
खोदेवतानांचदैत्यानांनाशहेतुकः एकैवचगतिर्नास्तिकालस्याकिलभूपते ५६ नानारूपधराप्यस्तिज्ञातव्यंतस्यचेष्टितं
कदाचित्संभवोनृणांकदाचित्प्रलयस्तथा ५७ उत्पत्तिहेतुःकालोन्यःक्षयहेतुस्तथापरः प्रत्यक्षंतेमहाराजदेवाःसर्वेसवास
वाः ५८ करदास्तेकृताःपूर्वंकालेनसंमुखेनच तेनैवविमुखेनाद्यबलिनोऽबलयास्कृताः ५९ निहतानितरांकालःकरोति
चशुंभाशुंभं नैवात्रकारणंकालीनैवदेवाःसनातनाः ६० यथातेरोचतेराजंस्तथाकुरुविमृश्यच कालोयंनात्रहेतुस्ते-
दानवानांतथापुनः ६१ त्वदग्रतोगतःशक्रोभग्नःसंख्येनिरायुधः तथाविष्णुस्तथारुद्रोवरुणोधनदोयमः ६२ तथा
त्वमपिराजेंद्रवीक्ष्यकालवशंजगत् पातालंगच्छतरसाजीवन्भद्रमवाप्स्यसि ६३ मृतेत्वयिमहाराजशत्रवस्तेमुदान्वि
ताः मंगलानिप्रगायंतोविचरिष्यंतिसर्वतः ६४ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेत्रिंशोध्यायः ३०
व्यासउवाच इतितेषांवचःश्रुत्वाशुंभोदैत्यपतिस्तथा उवाचसैनिकान्नाशुकोपाकुलितलोचनः १ शुंभउवाच
जाल्माःकिंब्रूतदुर्वाच्यंकृत्वाजीवितुमुत्सहे निहत्यसचिवान्भ्रातॄन्निर्लज्जोविचरामिकिं २

ति हेतुःस्करवहेतुरनुकूलोनास्तो
त्यर्थः ६१ ६२ ६३ ६४ इतिश्रीदेवीभा०पं० अऽध्यायः ३० एकोनसप्ततिश्लोकैःशुंभासुरवधाश्रिता कथाप्रारभ्यतेदेव्याजगतोमंगलं
कृतं १ निशुंभवधानंतरंजातंकृत्यमाह इतितेषामिति १ दुर्वाच्यंकर्मकृत्वाहंजीवितुमुत्सहेकिमित्यर्थः दुर्वाच्यंकर्मस्वयमेवाह निहत्येति विचरामिकिं-

विचरिष्यामिकिमित्यर्थः २ किंचममयदिमरणकालः समागतः स्यात्तदाकुत्रापिमयागतेसतिकिंमांत्यक्ष्यतीतिवदन्कालस्यमहिमानमाह कालःकर्त्तेति अरूपकेरूपरहितेनास्मिन्नीशेसतीत्यर्थः ३ ४ ननुकालस्यैवाराधनंकर्त्तव्यंतेनसनबाधिष्यतइतिचेत्तत्राह सकालोपीति भावितआ राधितोपिदैवापेक्षयान्यथाकर्त्तुंकश्चित्कार्श्चिदपिनेशतेनसमर्थोभवतीत्यर्थः तस्मात्कालापेक्षयापिदैवमेवमुख्यमितिभावः कालस्यैवमुख्यत्वेतत्त त्कालिकंकार्यंतत्तत्कालेकुतोनस्यात्तस्मान्नकालोमुख्यइत्याह नवर्षतिचेति ५ ६ कस्तर्हिमुख्यइतिचेत्तत्राह कालोनिमित्तमात्रंत्विति ७

कालःकर्त्ताशुभानांवाशुभानांबलवत्तरः काचिंतामममद्वार्यैतस्मिन्नीशेऽप्यरूपके ३ यद्भवतितद्भवतु यत्करोति करोतुतत् नमेचिंतास्तिकुत्रापिमरणाज्जीवनात्तथा ४ सकालोप्यन्यथाकर्त्तुंभावितोनेशतेकश्चित् नवर्षतिचपर्जन्यः श्रावणेमासिसर्वथा ५ कदाचिन्मार्गशीर्षेवापौषेमाघेथफाल्गुने अकालेवर्षतीवाशुतस्मान्मुख्योनचास्त्ययं ६ कालो निमित्तमात्रंतुदैवंहिबलवत्तरं दैवेननिर्मितंसर्वंनान्यथाभवतीत्सदः ७ दैवमेवपरंमन्येधिक्पौरुषमनर्थकं जेतायःसर्व देवानांनिशुंभोप्यनयाहतः ८ रक्तबीजोमहाशूरःसोपिनाशंगतोयदा तदाहंकीर्तिमुत्सृज्यजीविताशांकरोमिकिं ९ प्रा प्तेकालेस्वयंब्रह्मापरार्धद्वयसंमिते निधनंयातितत्रसाजगत्कर्त्तास्वयंप्रभुः १० चतुर्युगसहस्रंतुब्रह्मणोदिवसेकिल प तंतिभवनात्पंचनवचेंद्रास्तथापुनः ११ तथैवद्विगुणेविष्णुर्मरणायोपकल्पते तथैवद्विगुणेकालेशंकरःशांतिमेतिच १२

ननुत्वयापूर्वंजैनमतमाश्रित्यप्रत्यक्षमेकंचार्वाकाइतिबार्हस्पत्यशास्त्रावलंबेतदैवंवेदसिद्धंखंडयित्वापौरुषमेवकार्यसाधकंसाधितमधुनातुकथंदैवंका र्यसाधकमुच्यतइतिचेत्तत्राह दैवमेवपरमिति पौरुषेसत्यपिकार्यस्याजातत्वादनर्थकंकार्यसाधकंपौरुषंधिगित्यर्थः अनेककार्यकारणभावप्रतिबध्यप्रतिबं धकभावकल्पनापेक्षयावेदप्रमाणसिद्धंदैवमेवपरंमुख्यंकार्यसाधकंमन्येइत्यर्थः तस्मात्सर्वस्यदैवाधीनत्वाद्यद्भाविष्यतितद्भवतु मयायोद्धव्यमेवेतिभावः किंचलोकदृष्ट्याप्यधुनाजीविताशांकिंचित्करेत्याह जेतेति ८ करोमिकिंकरिष्यामिकिमित्यर्थः ९ १० ११ १२

१३ १४ १५ तुहिनाचलेहिमाचले निशुंभयुद्धसमयेयुद्धंविहायगृहंगतः पुनःभयर्योगतवानित्यर्थः १६ १७ १८ १९ २०
२१ धैर्येयुद्धधैर्यं २२ २३ कामकांतारतिस्तत्समा रूपेणरतिसदृशीत्यर्थः अतिलावण्यवतीशृंगारंनिजकर्मविहायसर्वान्महाबलान्हंतिवीरक
र्मकरोतिकिमेतदित्यर्थः २४ ममसन्निधौमरालाक्षीहंसलोचनातस्याःसाधनेवशीकारेसमर्थामंत्राअपिनसंतीत्यर्थः २५ किंचसर्वमंत्रमयीय

काचिंतामरणेमूढानिश्चलेदैवनिर्मिते महीमहीधराणांचनाशःसूर्यशशांकयोः १३ जातस्यहिध्रुवंमृत्युर्ध्रुवंजन्मम्रृ
तस्यच अध्रुवेस्मिन्शरीरेतुरक्षणीयंयशःस्थिरं १४ रथोमेकल्प्यतांशीघ्रंगमिष्यामिरणाजिरे जयोवामरणंवापिभवत्व
द्यैवदैवतः १५ इत्युक्त्वासैनिकान्शुंभोरथमास्थायसत्वरः प्रययावंबिकायत्रसंस्थितातुहिनाचले १६ सैन्यंप्रचलि
तंतस्यसंगेतत्रचतुर्विधं हस्त्यश्वरथपादातिसंयुतंसायुधंबहु १७ तत्रगत्वाचलेशुंभःसंस्थितांजगदंबिकां त्रैलोक्य
मोहिनींकांतामपश्यत्सिंहवाहिनीं १८ सर्वाभरणभूषाढ्यांसर्वलक्षणसंवृतां स्तूयमानांसुरैःखस्थैर्गंधर्वयक्षकिन्नरैः
१९ पुष्पैश्चपूज्यमानांचमंदारपादपोद्भवैः कुर्वाणांशंखनिनदंघंटानादंमनोहरं २० दृष्ट्वातांमोहमगमच्छुंभःकामविमो
हितः पंचबाणाहतःकामंमनसासमचिंतयत् २१ अहोरूपमिदंसम्यगहोचातुर्यमद्भुतं सौकुमार्यंचधैर्यंचपरस्परवि-
रोधियत् २२सुकुमारातिनन्वंगीसद्यःप्रकटयौवना चित्रमेतदसौबालाकामभावविवर्जिता २३ कामकांतासमारूपेसर्व
लक्षणलक्षिता अंबिकेयंकिमेतत्तुहंतिसर्वान्महाबलान् २४ उपायःकोत्रकर्तव्योयेनमेवशगाभवेत् नमंत्रावामराला
क्षीसाधनेसन्निधौमम २५ सर्वमंत्रमयीत्येषामोहिनीमदगर्विता सुंदरीयंकथंमेस्याद्वशगावरवर्णिनी २६ पाताल
गमनंमेद्यनयुक्तंसमरांगणात् सामदानविभेदैश्चनेयंसाध्यामहाबला २७ मस्तीतिनकश्चिन्मंत्रएनांवशीकुर्यादित्यभि-
प्रायेणाह सर्वमंत्रमयीति हियतःसर्वमोहिनीनतःसर्वमंत्रमयीत्यर्थः २६ २७ ५ ५ ५

विषमेसंकटे अत्रस्त्रीकृतंस्त्रीहस्तेनकृतंजातंमरणंचमरणमपिनोत्तमंयतस्तद्यशोपहृत्यशोहारकमेवतत इत्यर्थः २८ तदेवस्पष्टयति
मरणमिति २९ अबलेतिछेदः ३० वृथेति सांप्रतमस्मिन्कालेकिंयोज्यानिकिमर्थंयोज्यानि नायंकालः सामवाक्यानामितिभावः तदेवा

किंकर्तव्यंक्वगंतव्यंविषमेसमुपस्थिते मरणंनोत्तमंचात्रस्त्रीकृतंतुयशोपहृत् २८ मरणंऋषिभिःप्रोक्तंसंगरेमं
गलास्पदं यत्तत्समानबलयोर्योधयोर्युध्यतोःकिल२९ प्राप्तेयंदैवरचितानारीनरशतोत्तमा नाशायास्यकुलस्येहस
र्वथातिबलाऽबला ३० वृथाकिंसामवाक्यानिमयायोज्यानिसांप्रतं हननायागताह्येषाकिंतुसाम्नाप्रसीदति ३१ न
दानैश्चालितुंयोग्यानानाशस्त्रविभूषिता भेदस्तत्रविफलःकामंसर्वदेववशानुगा ३२ तस्मात्तुमरणंश्रेयोनसंग्रामे
पलायनं जयोवामरणंवाद्यभवत्येवयथाविधि ३३ व्यासउवाच इतिसंचिंत्यमनसाशुम्भःसत्वाश्रितोभवत् युद्धा
यस्फास्थिरोभूत्वातामुवाचपुरःस्थितां ३४ देवियुध्यस्वकांतेद्यवृथायंतेपरिश्रमः मूर्खासिकिलनारीणांनायंधर्मःक
दाचन ३५ नारीणांलोचनेबाणाभ्रुवावेवशरासनं हावभावास्तुशस्त्राणिपुमाँल्लक्ष्यंविचक्षणः ३६ सन्नाहश्चांगरा-
गोत्ररथश्चापिमनोरथः मंदप्रजल्पितंभेरीशब्दोनान्यःकदाचन ३७ अन्यास्त्रधारणंस्त्रीणांविडंबनमसंशयं लज्जैवभू
षणंकांतेनत्वधार्ष्ट्यंकदाचन ३८ युध्यमानावरानारीकर्कशेवाभिदृश्यते स्तनौसंगोपनीयौवाधनुषःकर्षणंकथं ३९
क्वमंदागमनंकुत्रगदामादायधावनं बुद्धिदाकालिकातत्रचामुंडापरनायका ४०

ह हननायेति ३१ नदानैरिति यतोनानाश
स्त्रविभूषितासर्वसाधनसंपादनेसमर्थातनोयर्किंचिद्धनदानैर्नचालयितुंयोग्यास्तीत्यर्थः भेदस्त्विति यतःसर्वेदेवाअस्यावशाअनुगाःसेवका
श्चसंतिततोभेदोप्यत्रविफलइत्यर्थः ३२ यथाविधियथादैवं ३३ सत्वाश्रितोधैर्याश्रितः ३४ ३५ ३६ सन्नाह उद्योगः अंगरागोहरिचंदनादिः
३७ ३८ ३९ चामुंडापरनायकापरोन्योनायकोयस्याःसापरनायकाचतुरानपरनायकाअनतुरेत्यर्थः ४० छ छ

मंत्रमध्यस्थामंत्रदात्री लालनेपि अरूक्षस्वराकठोरस्वरानत्वेतादृशयालालनंसंभवतीत्यर्थः अतएनांविहायमन्निकटे आगच्छेतिभावः ४१
४२ विलोचनां धा ४३ ४४ ४५ कामकांतारतिः ४६ ४७ प्रेक्षकाहमिति यदिमयिप्रहारंकर्तुंतवहस्तोनप्रसीदति तर्हियथा

चंडिकामंत्रमध्यस्थालालनेऽरूक्षस्वराशिवा वाहनंमृगराडास्तेसर्वसत्त्वभयंकरः ४१ वीणानादंपरित्यज्य घंटानादं
करोषियत् रूपयौवनयोःसर्वविरोधिवरवर्णिनि ४२ यदितेसंगरेच्छास्तिकुरूपाभवभामिनि लंबोष्ठीकुनखीक्रू
राध्वांक्षवर्णाविलोचना ४३ लंबपादाकुदंतीचमार्जारनयनाकृतिः ईदृशंरूपमास्थायतिष्ठयुद्धेस्थिराभव ४४
कर्कशंवचनंब्रूहिततोयुद्धंकरोम्यहं ईदृशींस्कदतींदृष्ट्वानमेपाणिःप्रसीदति ४५ हंतुंत्वांमृगशावाक्षिकामकांतोप
मेमृधे व्यासउवाच इतिब्रुवाणंकामार्त्तंवीक्ष्यतंजगदंबिका ४६ स्मितपूर्वमिदंवाक्यमुवाचभरतोत्तम देव्युवाच
किंविषीदसिमंदात्मन्कामबाणविमोहितः ४७ प्रेक्षकाहंस्थितामूढकुरुकालिकयामृधं चामुंडयावाकुर्वेतेनवयो-
ग्येरणांगणे ४८ प्रहरस्वयथाकामंनाहंत्वांयोद्धुमुत्सहे इत्युक्त्वा कालिकांप्राहदेवीमधुरयागिरा ४९ जह्येनंकालि
केक्रूरेकुरुमेप्रियमाहवे व्यासउवाच इत्युक्त्वाकालिकाकालप्रेरिताकालरूपिणी ५० गदांप्रगृह्यनरसातस्थावाजौक्रु
तोद्यमा तयोःपरस्परंयुद्धंबभूवातिभयानकं ५१ पश्यतांसर्वदेवानांमुनीनांचमहात्मनां गदामुद्यम्यशुंभोथजघान
कालिकांरणे ५२ कालिकादैत्यराजानंगदयान्यहनद्भृशं बभंजास्यरथंचंडीगदयाकनकोज्ज्वलं ५३ खरान्हत्वाजघाना
शुदारुकंदारुणस्वना सपदातिर्गदांगुर्वींसमादायक्रुधान्वितः ५४ कालिकाभुजयोर्मध्येप्रहसन्नहनत्तदा वंचयित्वा
गदापातंखड्गमादायसत्वरा ५५

युद्धार्थंगुरुलंबोष्ठीत्यादिलक्षणांप्रार्थयसितथाकालिकेयमास्तितयैवयुद्धंकुरु अहंकेवलंप्रेक्षिकास्मिप्र
वामि ततोनमयिप्रहारापेक्षेत्यर्थः अथवाचामुंडयाललाटादुद्भूतयाकुरुयुद्धं एतेकौशिकीचामुंडेतवरणांगणेयोग्येभवतइत्यर्थः ४८ ४९ ५० ५१ ५२ ५३
दारुकं—

सारथिं५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ अत्रदेवस्कृत्स्तुत्तरंभगवत्सावरदानं तस्याश्चां
तर्धानमनुक्तमपिमार्कंडपुराणादवसेयं ६८ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेएकत्रिंशोऽध्यायः ३१ त्रिषष्टिश्लोकवर्यैस्तुचरित्रत्रयसेव
कौ राजवैश्यौप्रसिद्धौयौतयोर्वार्तातुकथ्यते १ अत्रपूर्वाध्यायेचारित्रत्रयपाठस्यतच्छ्रवणस्यचसर्वकामप्रदत्वंमोक्षप्रदत्वंचाभिहितं तत्रचरित्रत्रय
पाठेनश्रवणेनवाकस्यसिद्धिर्जातेतिभक्तिमान्राजापृच्छति महिमावर्णितःसम्यगिति केनचाराधितेति ननुभगवत्याःसर्वेब्रह्मादयोदेवाःसर्वेदेवर्ष

चिच्छेदास्यभुजंसव्यंसायुधंचंदनार्चितं सच्छिन्नबाहुर्विरथोगदापाणिःपरिप्लुतः ५६ रुधिरेणसमागम्यकालिकाम
हनत्तदा ॥ कालीचकरवालेनभुजंतस्याथदक्षिणं ५७ चिच्छेदप्रहसंतीसासगदंकिलसांगदं कर्त्तुंपादप्रहारंसकु
पितःप्रययौजवात् ५८ कालीचिच्छेदचरणौखड्गेनास्यत्वरान्विता सच्छिन्नकरपादोपितिष्ठतिष्ठेतिचाब्रुवन् ५९ धाव
मानोययावाशुकालिकांभीषयन्निव तमागच्छंतमालोक्यकालिकाकमलोपमं ६० चकर्त्तमस्तकंकंठाद्रुधिरौघवहंभृशं छि
न्नेसौमस्तकेभूमौपपातगिरिसन्निभः ६१ प्राणाविनिर्ययुस्तस्यदेहादुत्क्रम्यसत्वरं गतासुंपतितंदैत्यंदृष्ट्वादेवाःसवास
वाः ६२ तुष्टुवुस्तांतदादेवींचामुंडांकालिकांतथा ववुर्वाताःशिवास्तत्रदिशश्चविमलाभृशं ६३ बभूवुश्चाग्नयोहोमेप्रद
क्षिणाशिखाःशुभाः हतशेषाश्चयेदैत्याःप्रणम्यजगदंबिकां ६४ त्यक्त्वायुधानितेसर्वेपातालंप्रययुर्नृप एतत्तेसर्वमाख्या
तंदेव्याश्चरितमुत्तमं ६५ शुंभादीनांवधंचैवसुराणांरक्षणंतथा एतदाख्यानकंसर्वेपठंतिभुविमानवाः ६६ शृण्वंतिचसदा
भक्त्यातेकृतार्थाभवंतिहि अपुत्रोलभतेपुत्रान्निर्धनश्चधनंबहु ६७ रोगीचमुच्यतेरोगात्सर्वान्कामानवाप्नुयात् शत्रुतोनभयंतस्य
यइदंचरितंशुभं शृणोतिपठतेनित्यंमुक्तिमान्जायतेनरः ६८ इति॰दे॰भा॰पं॰शुंभवधो॰अध्यायः जनमेजयउ॰ महिमावर्णि
तेसम्यक्चंडिकायास्त्वयामुने केनचाराधितापूर्वंचरित्रत्रययोगतः १ यःसर्वेराजर्षयःसर्वेब्रह्मर्षयोगौरीलक्ष्म्यादिमहादेवताश्चकिंबहुनामा-

णिजातं सर्वमाराधकमस्ति सुरथमात्रं भगवत्याराधनेनैव भवतीति तदाराधनफलं मोक्षकाममुनिभिराराधनान्मोक्षफलं च पूर्वमुक्तमेवेति चेत्तत्राह चरित्रत्रय योगत इति सत्यं पूर्वमुक्तं तथापि भगवत्याराधनमनेकमंत्रजपध्यानसमाधिपूजास्तोत्रपाठैरनेकविधं भवति तत्र चरित्रत्रयस्य क्रमाच्चरित्रत्रयपाठेन श्रवणेन वा कस्य सिद्धिर्जातेति विशेषेण चरित्रत्रयमात्रपाठश्रवणफलं कस्य जातमिति मया पृच्छ्यत इति भावः चरित्रत्रययोगतः केनाराधितेत्यन्वयः १ केन प्राप्तं फल मिति अत्रापि चरित्रत्रययोगत इत्यनुषंजनीयं २ किंचोपासनविधिमपि ब्रूहीत्याह उपासनेति ३ ४ स्वारोचिषेंतर इति स्वारोचिषाधिकारो

प्रसन्ना कस्य वरदा केन प्राप्तं फलं महत् आराध्य कामदां देवीं कथयस्व कृपानिधे २ उपासनाविधिं ब्रह्मन् तथा पूजाविधिं वद विस्तरेण महाभाग होमस्य च विधिं पुनः ३ सूत उवाच इति भूपवचः श्रुत्वा प्रीतः सत्यवतीसुतः प्रत्युवाच नृपं कृष्णो महामायाप्रपूजनं ४ व्यास उवाच स्वारोचिषेंतरे पूर्वं सुरथो नाम पार्थिवः बभूव परमोदारः प्रजापालनतत्परः ५ सत्यवादी कर्मपरो ब्राह्मणानां च पूजकः गुरुभक्तिरतो नित्यं स्वदारगमने रतः ६ दानशीलोऽविरोधी च धनुर्वेदैकपारगः एवं पालयतो राज्यं म्लेच्छाः पर्वतवासिनः ७ बलाच्छत्रुत्वमापन्नाः सैन्यं कृत्वा चतुर्विधं हस्त्यश्वरथपादातिसहितास्तु मदोत्कटाः ८ कोलाविध्वंसिनः प्राप्ताः पृथ्वीग्रहणतत्पराः सुरथः सैन्यमादाय संमुखः समपद्यत ९ युद्धं समभवद्घोरं तस्य तैरतिदारुणैः म्लेच्छानां तु बलं स्वल्पं राज्ञस्तु बलमद्भुतं १०

पलक्षित द्वितीयमन्वंतर इत्यर्थः पूर्वमिति कथाकालापेक्षया ५ ६ अविरोधीति छेदः कस्यापि न शत्रुरित्यर्थः म्लेच्छाः पर्वतवासिन इति यद्यपि ध्रुवस्य पौत्रो नंदिरुन्नामको मुरुबलेन युद्धार्थमागत इति भक्तानिरखंडे उक्तं तथापि तेन स्व सहायार्थं म्लेच्छा आनीता इति बोध्यं अत एव तेषां शत्रुत्वाभावेपि साहाय्यार्थमागतत्वाद्बलाच्छत्रुत्वमापन्ना इत्युक्तं ७ बलाच्छत्रुत्वमिति अनेनाकृत्रिमशत्रुत्वे इत्यर्थः ८ कोलाविध्वंसिन इति कोलाशब्दो नामैकदेशेन नामग्रहणमिति न्यायात्कोलाहलवाचकः तथा च कोलाहलेनान्यायेनैव शत्रुराज्यविध्वंसनशीलाः न तु युद्धनीत्या बलिन इत्यर्थः तथा ते राज्ञा न जिता एव स्युरिति भावः यद्वा कोलाशब्देन राज्ञो नगरीति ब्रह्मवैवर्तके प्रकृतिखंडे दुर्गोपाख्याने उक्तं तस्याः कोलानगर्या विध्वंसिन इति वा ९ १०

पराजितइति दैवयोगादन्यायिनांयुद्धप्रसंगेन्यायवान् राजाकथमन्यायंकुर्यादितिपराजित इत्यर्थः ११ विमनाः सन्प्रधानान्दृष्ट्वेत्यन्वयः १२



तथापितैर्जितोयुद्धे दैवाद्राजापराजितः भग्नश्चस्वपुरप्राप्तः स्वरक्षंदुर्गमंडितं ११ चिंतयामासमेधावीराजानीतिविच
क्षणः प्रधानान्विमनादृष्ट्वाशत्रुपक्षसमाश्रितान् १२ स्थानंगृहीत्वाविपुलंपरिखादुर्गमंडितं कालप्रतीक्षाकर्त्तव्याकिंब्र
युद्धंवरंमतं १३ मंत्रिणःशत्रुवशगामंत्रयोग्याननेकिल किंकरोमीतिमनसाभूपतिःसमचिंतयत् १४ कदाचित्तेगृहीत्वा
मांपापाचाराःपराश्रिताः शत्रुभ्योथप्रदास्यंतितदाकिंवाभविष्यति १५ पापबुद्धिषुविश्वासोनकर्त्तव्यःकदाचन किंनतेवै
प्रकुर्वंतियेलोभवशगानराः १६ भ्रातरंपितरंमित्रंसुहृदंबंधवंतथा गुरुंपूज्यंद्विजं द्वेष्टिलोभाविष्टःसदानरः १७ तस्मा-
न्मयानकर्त्तव्योविश्वासःसर्वथाधुना मंत्रिवर्गेतिपापिष्ठेशत्रुपक्षसमाश्रिते १८ इतिसंचिंत्यमनसाराजापरमदुर्मनाः ए
काकीहयमारुह्यनिर्जगामपुरात्ततः १९ असहायोथनिर्गत्यगहनंवनमाश्रितः चिंतयामासमेधावी क्वगंतव्यंमयापुनः २०
योजनत्रयमात्रेतुमुनेराश्रममुत्तमं ज्ञात्वाजगामभूपालस्तापसस्यसुमेधसः २१ बहुवृक्षसमायुक्तंनदीपुलिनसंश्रितं
निर्वैरश्वापदाकीर्णंकोकिलारावमंडितं २२ शिष्याध्ययनशब्दाढ्यंमृगयूथशतावृतं नीवारान्नसुपक्काढ्यंसुपुष्पफल
पादपं २३ होमधूमसुगंधेनप्रीतिदंप्राणिनांसदा वेदध्वनिसमाक्रांतंस्वर्गादपिमनोहरं २४ दृष्ट्वातमाश्रमंराजाब-
भूवासौमुदान्वितः भयंत्यक्त्वामतिंचक्रेविश्रमायद्विजाश्रमे २५ आसज्यपादपेश्वंतुजगामविनयान्वितः दृष्ट्वातंमुनिमा
सीनंसालच्छायासुसंश्रितं २६ मृगाजिनासनंशांतंतपसातिकृशंक्रतुं अध्यापयंतंशिष्यांश्चवेदशास्त्रार्थदर्शिनं २७

चिंतामेवाह स्थानंगृहीत्वेति १३ १४ १५ १६ १७ १८ १९ २० सुमेधसस्तस्यतन्नामकस्यमुनेरित्यर्थः
२१ २२ २३ २४ २५ सालच्छायासुसालवृक्षच्छायासु २६ २७ ७ ७

२८ २९ वृसीमासवं ३० ३१ ३२ ३३ ३४ ३५ शत्रुभ्योमेभयंघोरंवर्ततइत्येकंवाक्यं प्राप्तोस्म्यद्यतवांतिकंमांत्रायस्वे

रहितंक्रोधलोभाद्यैर्द्वंद्वातीतंविमत्सरं आत्मज्ञानरतंसत्यवादिनंशमसंयुतं २८ तंवीक्ष्यभूपतिर्भूमौपपातदंडव
त्तदा तदग्रेश्रुजलापूर्णनयनःप्रेमसंयुतः २९ उत्तिष्ठोत्तिष्ठभद्रंतेनतमुवाचतदामुनिः शिष्योददौवृसींतस्मैगुरुणानोदि
तस्तदा ३० उत्थायनृपतिस्तस्यांसमासीनस्तदाज्ञया अर्घ्यपाद्यार्हणंचक्रेस्कमेधाविधिपूर्वकं ३१ पप्रच्छात्रकुतःप्रा
प्तःकुरुत्वंचिंतापरःकथं कथयस्वयथाकामंस्ववृत्तकारणंत्विह ३२ किमागमनकृत्यंतेब्रूहिकार्यंमनोगतं करिष्येवां
च्छितंकाममसाध्यमपियत्तव ३३ राजोवाच सुरथोनामराजाहंशत्रुभिश्चपराजितः त्यक्त्वाराज्यंगृहंभार्यामहंते
शरणंगतः ३४ यदाज्ञापयसेब्रह्मंस्तदहंभक्तितत्परः करिष्यामिनमेत्रातात्वदन्यःपृथिवीतले ३५ शत्रुभ्योमेभ
यंघोरंप्राप्तोस्म्यद्यतवांतिकं त्रायस्वंमुनिशार्दूलशरणागतवत्सल ३६ ऋषिरुवाच निर्भयंवसराजेंद्रनात्रतेशत्रवःकि
ल आगमिष्यंतिबलिनोनिश्चयंतपसोबलात् ३७ नात्रहिंसाप्रकर्तव्यावनवृत्यानृपोत्तम कर्तव्यंजीवनंशस्तेनीवारफल
मूलकैः ३८ व्यासउवाच इतितस्यवचःश्रुत्वानिर्भयःसनृपस्तदा उवासाश्रमएवासौफलमूलाशनःशुचिः ३९
कदाचित्सनृपस्तत्र वृक्षच्छायांसमाश्रितः चिंतयामासचिंतार्तोगृहएवगताशयः ४० राज्यंमेशत्रुभिःप्राप्तंम्लेच्छैःपा
परतैःसदा संपीडिताःस्युर्लोकास्तैर्दुराचारैर्गतत्रपैः ४१ गजाश्वतुरगाःसर्वेदुर्बलाभक्ष्यवर्जिताः जाताःस्युर्नात्रसंदे
हःशत्रुणापरिपीडिताः ४२ सेवकाममसर्वेतेशत्रूणांवशवर्तिनः दुःखिताएवजाताःस्युःपालितायेमयापुरा ४३ धनंमे
सुदुराचारैरसद्व्ययपरैःपरैः द्यूतासवभुजिष्यादिस्थानेस्यात्प्रापितंकिल ४४

त्यन्वयः ३६ ३७ ३८ ३९
गृहेगताशयोगतचित्तः ४० ४१ ४२ ४३ भुजिष्यावेश्या ४४ ७ ७ ७ ७

म्लेच्छाः पापबुद्धयो मंत्रिणोपि मे पापबुद्धय एव ४५ ४६ कौशिका जानिस्ते इत्यर्थः ४७ कुतः कस्माद्देशादित्यर्थः किंनामते इत्यर्थः कस्मात्कारणादि



कोशक्षयं करिष्यंति व्यसनैः पापबुद्धयः नपात्रदाननिपुणाम्लेच्छास्ते मंत्रिणोपि मे ४५ इतिचिंतापरोराजा वृक्षमूल स्थितोयदा तदाजगाम वैश्यस्तु कश्चिदार्तिपरस्तथा ४६ नृपेणपुरतोदृष्टः पार्श्वेतत्रोपवेशितः पप्रच्छतंनृपः कोसि- कुतएवागतोवनं ४७ कोसिकस्माच्चदीनोसि हरिणः शोकपीडितः ब्रूहिसत्यंमहाभागमैत्रीसाप्तपदीमता ४८ व्यासउवा च तच्छ्रुत्वावचनंराज्ञस्तमुवाचविशोत्तमः उपविश्यस्थिरोभूत्वामत्वासाधुसमागमं ४९ वैश्यउवाच मित्राहं वैश्य जातीयःसमाधिर्नामविश्रुतः धनवान्धर्मनिपुणः सत्यवागनसूयकः ५० पुत्रदारैर्निरस्तोहंधनलुब्धैरसाधुभिः "कृप णेतिमिषंकृत्वात्यक्तामायांसुदुस्त्यजां" स्वजनेनचसंत्यक्तः प्राप्तोस्मिवनमाशुवै ५१ कोसित्वंभाग्यवान्भासिकथ- यस्वप्रियाधुना राजोवाच सुरथोनामराजाहंदस्युभिःपीडितोभृशं ५२ प्राप्तोस्मिगतराज्योत्रमंत्रिभिःपरिवंचितः दिष्ट्या त्वमत्रमित्रंमेमिलितोसिविशोत्तम ५३ सुखेनविहरिष्यावो वनेत्रशुभपादपे शोकंत्यजमहाबुद्धेस्वस्थोभवविशोत्तम ५४ "अत्रैवचयथाकामंसुखंवर्तिष्वमयासह" वैश्यउवाच कुटुंबंमेनिरालंबंमयाहीनंसुदुःखितं भविष्यति चचिंतातेव्याधिशोकोपतापितं ५५ भार्यादेहेसुखंनोवा पुत्रदेहेनवासुखं इतिचिंतातुरंचेतोनमेशाम्यतिभूमिप ५६ कदाद्रक्ष्येसुतंभार्यांगृहंस्वजनमेवच स्वस्थंनमन्मनोराजन्गृहचिंताकुलंभृशं ५७ राजोवाच यैर्निरस्तोसिपुत्राद्यै रसद्वृत्तैःसुबालिशैः तांदृष्ट्वाकिंसुखंतेद्यभविष्यतिमहामते ५८ हितकारीवरःशत्रुर्दुःखदाःसुहृदःकुतः त स्मात्स्थिरंमनःकृत्वाविहरस्वमयासह ५९ वैश्यउवाच मनोमेनस्थिरंराजन्भवत्यद्यसुदुःखितं चिंतयात्रकुटुंबस्य दुस्त्यजस्यदुरात्मभिः ६०

त्यर्थः ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ये दुःखदास्ते सुहृदः कुतः नैव सुहृदइ त्यर्थः ६०

६१ ६२ ६३ इतिश्रीदेवीभागवततिलकेपंचमस्कंधेद्वात्रिंशोऽध्यायः ३१ अर्धाधिकैःपंचषष्टिपद्यैर्माहात्म्यमुच्यते श्रीमद्भुवनसुंदर्याराज्ञेपृष्ट
वतेधुना १ मुनिंप्रतिराजागत्वाकिंचकारतदाह मुनेवैश्योयमिति १ २ ३ ४ ५ ६ मानसोमोहोनैवापसरतितत्कारणंकिमित्यर्थः

राजोवाच ममापिराज्यजंदुःखंदुनोतिकिलमानसं पृच्छावोद्यमुनिंशांतंशोकनाशनमौषधं ६१ व्यासउवाच इतिकृ
त्वामतिंतौतुराजावैश्यश्चजग्मतुः मुनिंतौविनयापेतौप्रष्टुंशोकस्यकारणं ६२ गत्वातंप्रणिपत्याहराजाऋषिमनुत्तमं आसीनंस
म्यगासीनःशांतंशांतिमुपागतः ६३ इतिश्रीदेवीभागवतेमहापुराणेपंचमस्कंधेद्वात्रिंशोऽध्यायः ३२ राजोवाच मुने
वैश्योयमधुनावनेमेमित्रतांगतः पुत्रदारैर्निरस्तोयंप्राप्तोत्रममसंगमं १ “ कुटुंबविरहेणासौदुःखितोऽतीवदुर्मनाः नशां
तिमुपयात्येषतथापिममसांप्रतं गतराज्यस्यदुःखेनशोकार्तोस्मिमहामते ” निष्कारणंचमेचिंतात्हृदयान्ननिवर्तते हयामेदुर्ब
लाःस्युःकिंगजाःशत्रुवशंगताः २ भृत्यवर्गस्तथादुःखीजातःस्यात्तुमयाविना कोशक्षयंकरिष्यंतिरिपवोतिबलात्क्षणात् ३ इ
त्येवंचिंतयानस्यनमेनिद्रानवैसुखं जानामीदंजगन्मिथ्यास्वप्नवत्सर्वमेवहि ४ जानतोपिमनोभ्रांतंनस्थिरंभवतिप्रभो को
हंकेऽश्वागजाःकेमीननमेस्तिसहोदराः ५ नपुत्रानचमित्राणियेषांदुःखंदुनोतिमां शत्रोयमितिजानामितथापिममानसः ६
मोहोनैवापसरतिकिंतत्कारणमद्भुतं स्वामिंस्त्वमसिसर्वज्ञःसर्वसंशयनाशकृत् ७ कारणंब्रूहिमोहस्यममास्यचदयानिधे
व्यासउवाच इतिपृष्टस्तदाराज्ञासुमेधामुनिसत्तमः ८ तमुवाचपरंज्ञानंशोकमोहविनाशनं ऋषिरुवाच शृणुराजन्प्र
वक्ष्यामिकारणंबंधमोक्षयोः ९ महामायेतिविख्यातासर्वेषांप्राणिनामिह ब्रह्माविष्णुस्तथेशानस्तुषाराड्वरुणोनिलः १०

७ ८ कारणंबंधमोक्षयोरिति बंधमोक्षयोःकारणेकथितेतदंतर्गतस्यमोहस्यापितदेवकारणमित्यर्थात्कथितंभवतीतिभावः ९ महामायेति गुणत्रयसाम्या
वस्थात्मिका मूलप्रकृतिर्यामहामायेतिव्याख्यातासासर्वेषांप्राणिनांबंधमोक्षयोःकारणमित्यर्थः ब्रह्मादयोपितदधीनाः संतीत्याह ब्रह्माविष्णुरिति १०

११ मायाधीनाश्चेति नत्वद्वैतेब्रह्मणिमायांविनाकश्चित्पदार्थोभासते ततोमायाधीनमेवसर्वमित्यर्थः ननुकर्त्रधीनंकार्यंभवितुमर्हतिनतुमायाधीनमितिचेत्सैवक र्त्र्यस्तिनान्यः कर्त्तास्तीत्याह तयेति १२ यदेवंसर्वंमायामोहजालेनयंत्रितं तदात्वंपामरः कथमहंमोहजालेनयंत्रितइतिकिमाश्चर्यंकरोषीत्याह त्वंकियानिति १३ ननुममब्रह्मज्ञानंवर्ततेततः कुतोनमोहोनष्टइतिचेत्तत्राह ज्ञानिनामपीति तदुक्तंमार्कंडेयपुराणे ज्ञानिनामपिचेतांसिदेवीभगवतीहिसा बलादाकृष्यमोहायमहामायाप्र

सर्वेदेवामनुष्याश्चगंधर्वोरगराक्षसाः वृक्षाश्चविविधावल्ल्यःपशवोमृगपक्षिणः ११ मायाधीनाश्चतेसर्वेभाजनंबंधमोक्षयोः तया सृष्टमिदंसर्वंजगत्स्थावरजंगमं १२ तद्वशेवर्ततेनूनंमोहजालेनयंत्रितं त्वंकियान्मानुषेष्वेकःक्षत्रियोरजसाविलः १३ ज्ञानिनामपि चेतांसिमोहयत्यनिशंहिसा ब्रह्मेशवासुदेवाद्या ज्ञानेसत्यपिशेषतः १४ तेपिरागवशाल्लोकेभ्रमंतिपरिमोहिताः पुरासत्ययुगेराजन् विष्णुर्नारायणःस्वयं १५ श्वेतद्वीपंसमासाद्यचकारविपुलंतपः वर्षाणामयुतंयावद्ब्रह्मविद्याप्रसक्तये १६ अनश्वरसुखवायासौ चिंतयानस्ततःपरं एकस्मिन्निर्जनेदेशेब्रह्मापिपरमाद्भुते १७ स्थितस्तपसिराजेंद्रमोहस्यविनिवृत्तये कदाचिद्वासुदेवोसौस्थलांतरम तिर्हरिः १८ तस्माद्देशात्समुत्थायजगामान्यदिदृक्षया चतुर्मुखोपिराजेंद्रतथैवनिःसृतःस्थलात् १९ मिलितौमार्गमध्येतुचतुर्मुख चतुर्भुजौ अन्योन्यंपृष्टवंतौतौकस्त्वंकस्त्वमितिस्मह २० ब्रह्माप्रोवाचतंदेवंकर्त्ताहंजगतःकिल विष्णुस्तमाहभोमूर्खजगत्कर्त्ताहमच्युतः २१ त्वंकियान्बलहीनोसिरजोगुणसमाश्रितः सत्त्वाश्रितंहिमांविद्धिवासुदेवंसनातनं २२

प्रच्छतीति ननुकेषांज्ञानिनांसयाचित्ता- निमोहितानीतितत्राह ब्रह्मेशेति ननुब्रह्मज्ञानेनतेषांमायाकार्यस्यमोहस्यकुतोननाशसंभवइतिचेत्तत्राह शेषइति प्रारब्धकर्मभोगपर्यंतंमायाशेषस्यविद्यमान- त्वात्तस्माच्छेषादेवमोहःसंभविष्यतीतिभावः १४ ननुब्रह्मादीनांमोहः कदादृष्टइतिचेद्बहुवारंदृष्टोस्तितत्रैकमुदाहरणमुच्यतइत्याह पुरासत्ययुगेइति १५ ब्रह्मवि द्याप्रसक्तयेतस्याःस्थिरतायैइत्यर्थः अनश्वरसुखवायनित्यानंदस्याखंडितप्राप्त्यर्थंजीवन्मुक्तिदशासिद्ध्यर्थमितियावत् १६ १७ १८ १९ कस्त्वंकस्त्वमिति पितृपुत्रत्वज्ञानमेवप्रथमतोमोहेननष्टं इदमेवप्रथमंमोहस्वरूपमितिभावः २० द्वितीयंमोहमाह ब्रह्माप्रोवाचेति २१ २२ ७

अद्येवेति समीपकालेइत्यर्थः नत्वद्येववर्षाणामयुतंतपश्चरणात् दानवाभ्यांमधुकैटभाभ्यां २३ २४ २५ २६ २७ २८ २९ ३० ३१

मयात्वंरक्षितोद्येव कृत्वायुद्धंसुदारुणं शरणंमेसमायातो दानवाभ्यांप्रपीडितः २३ मयातौनिहतौकामंदानवौमधुकैटभौ कथंगर्वायसेमंदमोहोयंत्यज्यसांप्रतं २४ नमत्तोप्यधिकःकश्चित्संसारेस्मिन्महामते ऋषिरुवाच एवंप्रवदमानौतौब्रह्मवि ष्णूपरस्परं २५ स्फुरदोष्ठौवेपमानौलोहिताक्षौबभूवतुः प्रादुर्बभूवसहसातयोर्विवदमानयोः २६ मध्येलिंगंसुधाश्वेतं- विपुलंदीर्घमद्भुतं आकाशेतरसातत्र वागुवाचाशरीरिणी २७ तौसंबोध्यमहाभागौविवदंतौपरस्परं ब्रह्मन्विष्णोविवादंमा कुरुतांवांपरस्परं २८ लिंगस्यास्यपरंपारमधस्तादुपरिध्रुवं योयातियुवयोर्मध्येसश्रेष्ठोवांसदैवहि २९ एकःप्रयातुपाता लमाकाशमपरोधुना प्रमाणंमेवचःकार्यंस्यत्क्वावादंनिरर्थकं ३० मध्यस्थःसर्वदाकार्योविवादेस्मिन्द्वयोरिह ऋषिरुवाच तच्छ्रुत्वावचनंदिव्यंसज्जीभूतौकृतोद्यमौ ३१ जग्मतुर्मातुमग्रस्थंलिंगमद्भुतदर्शनं पातालमगमद्विष्णुर्ब्रह्माप्याकाशमेव च ३२ परिमातुंमहालिंगंस्वमहत्त्वविवृद्धये विष्णुर्गत्वाकियद्देशंश्रांतःसर्वात्मनायतः ३३ नप्रापांतंसलिंगस्यपरिव- त्यययौस्थलं ब्रह्मागच्छन्ततश्चोर्ध्वेपतितंकेतकीदलं ३४ शिवस्यमस्तकात्प्राप्यपरावृत्तोमुदावृतः आगत्यतरसाब्रह्मावि ष्णवेकेतकीदलं ३५ दर्शयित्वाचवितथमुवाचमदमोहितः लिंगस्यमस्तकादेतद्गृहीतंकेतकीदलं ३६ अभिज्ञानाय चानीतंतवचित्तप्रशांतये श्रुत्वानद्ब्रह्मणोवाक्यंदृष्ट्वाचकेतकीदलं ३७ हरिस्तंप्रत्युवाचेदंसाक्षीकःकथयाधुना यथार्थवा दीमेधावीसदाचारःशुचिःसमः ३८ साक्षीभवतिसर्वत्रविवादेसमुपस्थिते ब्रह्मोवाच दूरदेशात्समायातिसाक्षीकःसमयेधु ना ३९ यत्सत्यंतद्वचःसेयंकेतकीकथयिष्यति इत्युक्त्वाप्रेरितातत्र ब्रह्मणाकेतकीस्फुटं ४०

मातुंपरिच्छेतुं ३२ ३३ ३४

शिवस्यमस्तकात्पतितमित्यन्वयः ३५ वितथमनृत ३६ ३७ ३८ दूरदेशादिति अस्मिन्समयेदूरदेशाद्यस्मिन्स्थलेशिवमस्तकंदृष्टं तस्माद्देशात्कःसाक्षीसमा यातिनकोपीत्यर्थः ३९ ४०

४१ अस्यशिवलिंगमस्तकस्य ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० तस्मादित्येवंनिदर्शनात् ज्ञानिनोपिमोहिताएव महामाययेत्याह ज्ञानिनामपीति ५१ नकेवलंमोहकर्त्री किंतुज्ञानदाबंधमोक्षदापिसैवेत्याह ययेति आत्मनोनिर्विकारस्यैकविधत्वात्तदतिरिक्तस्यसर्वस्यवेद्यजातस्यमायामयत्वादितिभावः ५२ इत्थंपराशक्तेर्महिमानंश्रुत्वाराजापृच्छति भगवन्निति तस्यामेमत्स्वरूपंब्रूहितथाबलंब्रूहितस्याउ-

वचनंप्राहतरसाशार्ङ्गिणंप्रत्यबोधयत् शिवमूर्ध्निस्थितांब्रह्मागृहीत्वामांसमागतः ४१ संदेहोत्रनकर्तव्यस्त्वया विष्णोकदाचन ममवाक्यंप्रमाणंहिब्रह्मापारंगतोस्म्यहं ४२ गृहीत्वामांसमायातःशिवभक्तैःसमर्पितां केतक्यावचनंश्रुत्वाहरिराहस्मयन्निव ४३ महादेवःप्रमाणंमेयद्यसौवचनंवदेत् ऋषिरुवाच तदाकर्ण्यहरेर्वाक्यंमहादेवःसनातनः ४४ कुपितःकेतकींप्राहमिथ्यावादिनिमावद गच्छतोमध्यतःप्राप्तापतितामस्तकान्मम ४५ मिथ्याभिभाषिणीत्यक्तामयात्वंसर्वदैवहि ब्रह्मालज्जापरोभूत्वाननाममधुसूदनं ४६ शिवेनकेतकीत्यक्तातद्दिनात्कुसुमेषुवै एवंमायाबलंविद्धिज्ञानिनामपिमोहदं ४७ अन्येषांप्राणिनंराजन्काकावार्तोविभ्रमंप्रति देवानांकार्यसिद्ध्यर्थंसर्वदैवरमापतिः ४८ दैत्यान्वंचयतेचाशुत्यक्त्वापापभयंहरिः अवतारकरोदेवोनानायोनिषुमाधवः ४९ त्यक्त्वानंदसुखंदैत्ययुद्धंचैवाकरोद्विभुः नूनंमायाबलंचैतन्माधवेपिजगद्गुरौ ५० सर्वज्ञेदेवकार्येशेकावार्तान्यस्यभूपते ज्ञानिनामपिचेतांसिपरमाप्रकृतिःकिल ५१ बलादाकृष्यमोहायप्रयच्छतिमहीपते ययाव्याप्तमिदंसर्वंभगवत्याचराचरं ५२ मोहदाज्ञानदासैवबंधमोक्षप्रदासदा राजोवाच भगवन्ब्रूहिमेतस्याःस्वरूपंबलमुत्तमं ५३ उत्पत्तिकारणंवापिस्थानंपरमकंचयत् ऋषिरुवाच नचोत्पत्तिरनादित्वान्नृपतस्याःकदाचन ५४

त्पत्तेःकारणंतत्स्थानंचब्रूहीत्यर्थः ५३ तत्रतृतीयप्रश्नसमाधानमाह नचोत्पत्तिरिति तत्रहेतुमाह अनादित्वादिति तथाचोत्पत्तेरभावादुत्पत्तिकारणस्याभावइत्यर्थः ५४

नित्यैवेति आमोक्षपर्यंतंविद्यमानत्वादित्यर्थः बलमाह कारणानांचकारणंनिरतिशयपराक्रमवतीसर्वजनकत्वरूपमेवबलमस्याइत्यर्थः स्थान
माह वर्ततेइति सर्वपदार्थेषुशक्तेर्विद्यमानत्वात्सर्वमस्यास्थानंभवतिसर्वव्यापिनीत्यर्थः ५५ तत्रव्यतिरेकमाह शववदिति रूपमाह चिच्छक्ति
रिति यतइयंसर्वव्यापकस्यचितोब्रह्मणइयंशक्तिस्ततोस्यारूपंतदेवब्रह्मैवनचान्यत् नह्यग्निशक्तेरग्निभिन्नंरूपंदृश्यते किंत्वग्निरेव तद्वदियमपि
ब्रह्माभिन्नत्वात्ब्रह्मरूपैवेत्यर्थः तथाचमायोपासनायांमायाविशिष्टब्रह्मरूपमेवोपास्यं तदेवभगवतीरूपमितिफलितं स्फुटीकृतंचैतदस्माभिः स
प्तशत्यंगषट्कव्याख्यानेउपोद्घातेच ५६ ननुदेवैस्तुतासतीउत्पन्नेतिव्यवहारःकिमभिप्रायकइतिचेदाविर्भावतिरोभावमूलकइत्याह आविर्भावेति

नित्यैवसापरादेवीकारणानांचकारणं वर्ततेसर्वभूतेषुशक्तिःसर्वात्मनानृप ५५ शववच्छक्तिहीनस्तुप्राणीभवतिस
र्वथा चिच्छक्तिःसर्वभूतेषुरूपंतस्यास्तदेवहि ५६ आविर्भावतिरोभावौदेवानांकार्यसिद्धये यदास्तुवंतितांदेवामनुजा
श्चविशांपते ५७ प्रादुर्भवतिभूतानांदुःखनाशायचांबिका नानारूपधरादेवीनानाशक्तिसमन्विता ५८ आविर्भवतिका-
र्यार्थस्वेच्छयापरमेश्वरी दैवाधीनानसादेवीयथासर्वेसुरानृप ५९ नकालवशगानित्यंपुरुषार्थप्रवर्तिनी अकर्त्तापुरु
षोद्रष्टादृश्यंसर्वमिदंजगत् ६० दृश्यस्यजननीसैवदेवीसदसदात्मिका पुरुषंरंजयत्येकाकृत्वाब्रह्मांडनाटकं ६१ रं
जितेपुरुषेसर्वंसंहरत्यतिरंहसा तयानिमित्तभूतास्तेब्रह्मविष्णुमहेश्वराः ६२ कल्पिताःस्वस्वकार्येषुप्रेरितालीलयात्व
मी स्वांशंतेषुसमारोप्यकृतास्तेबलवत्तराः ६३

५७ ५८ ५९ नकालेति दैवस्यकालस्यचतस्याःसकाशादेवोत्पन्नत्वादित्यर्थः अक
र्त्तेति अकर्ता आत्माद्रष्टातदतिरिक्तंसर्वंदृश्यंतस्यसर्वस्यजननीतस्मात्स्वतंत्रेत्यर्थः ६० सदसदात्मिका सत्कारणमसत्कार्यंतदात्मिकाअस्याः पुरुषरंज
नार्थायात्मरंजनार्थायैवस्वेच्छयाजगत्कारणत्वंनतुपराधीनतयेत्यर्थः ६१ यदारंजनादुपरतातदेयमेवसंहरतीत्याह रंजितेइति ननुब्रह्मादयः सृष्टिस्थिति
संहृतिकर्त्तारइतिलोकेप्रवादःकथमितिचेदज्ञानमूलकइत्याह तयेति ६२ कल्पिताइति राजाज्ञयाप्रधानस्यव्यवहारवदत्रापिभगवत्याःशक्त्यातेषांव्यव

हार इति भगवत्येव सृष्ट्यादिकर्त्रीति भावः ६२ अत एव ते ब्रह्मादयो देवास्तां ध्यायंतीत्याह तेतामिति ६४ नाहं तं जानामीति तथा च श्रुतिः यस्या अंतो न विद्यते तस्मादुच्यते ऽनंतेति मायास्वरूपं तन्महिमा च नृसिंहोत्तरतापनीये माया च तमोरूपानुभूतेरित्यादिग्रंथेन विशेषतः स्पष्टीकृत स्तद्भाष्ये च व्याख्यात स्तत एवावधार्यः ६५ इति श्रीदेवीभागवततिलके पंचमस्कंधे त्रयस्त्रिंशोऽध्यायः ३३ चतुर्भिरधिकैश्चत्वारिंशत्पद्यैः समर्चनं परांबायाः पृष्टवते राज्ञे प्रोवाच तापसः १ पूर्वाध्याये भगवतीस्वरूपं महत्त्वं च तस्याः सर्वोत्तरं श्रुत्वा तत्पूजनादिकं बुभुत्सू राजा पृच्छति भगवन्निति १ पूजाविधेः

दत्तास्त्र शक्तयस्तेभ्यो गीर्लक्ष्मीर्गिरिजा तथा तेतां ध्यायंति देवेशाः पूजयंति परां मुदा ६४ ज्ञात्वा सर्वेश्वरीं शक्तिं सृष्टि-स्थितिविनाशिनीं एतत्ते सर्वमाख्यातं देवीमाहात्म्यमुत्तमं ६५ मम बुद्ध्यनुसारेण नाहं तं जानामि भूपते इति श्रीदेवीभागवते महापुराणे पंचमस्कंधे त्रयस्त्रिंशोऽध्यायः ३३ राजोवाच भगवन्ब्रूहि मे सम्यक्तस्या आराधने विधिं पूजाविधिं च मंत्रांश्च तथा होमविधिं वद १ ऋषिरुवाच शृणु राजन्प्रवक्ष्यामि तस्याः पूजाविधिं शुभं कामदं मोक्षदं नृणां ज्ञानदं दुःखनाशनं २ आदौ स्नानविधिं कृत्वा शुचिः शुक्लांबरो नरः आचम्य प्रयतः कृत्वा शुभमायतनं निजं ३ ततोऽवलिप्तभूम्यां तु संस्थाप्यासनमुत्तमं तत्रोपविश्य विधिवच्छिराचम्य मुदान्वितः ४ पूजाद्रव्यं सुसंस्थाप्य यथाशक्त्यनुसारतः प्राणा-यामं ततः कृत्वा भूतशुद्धिं विधाय च ५ कुर्यात्प्राणप्रतिष्ठां तु संभारं प्रोक्ष्य मंत्रतः कालज्ञानं ततः कृत्वा न्यासं कुर्याद्यथा विधि ६

फलमाह कामदमिति २ स्नानविधिं वैदिकं तांत्रिकं च कृत्वा यथोक्तवैदिकसंध्यां मंत्रसंध्यां च कृत्वेत्यर्थः ३ ४ भूतशुद्धिं विधायचेति भुवं जले जलं वन्हौ वन्हिं वायौ नभस्यमुं विलाप्य खमहंकारे महत्त्वेऽप्यहंकृतिं महांतं प्रकृतौ मायामात्मनि प्रविलापयेदित्यादिशरीरोत्पत्तिपर्यंतं विधायेत्यर्थः ५ प्राणप्रतिष्ठांत्विति तुशब्दश्चार्थस्तेन मातृकान्यासांतं कर्म कृत्वेत्यर्थः मंत्रतः जप्यमानमंत्रस्यारुद्रमंत्रेणेत्यर्थः केवलं फडितिमंत्रेण वा कालज्ञानं अद्येत्यादिसंकल्पविधिस्तं कृत्वा न्यासं मातृकान्यासादि निजमंत्रन्यासांतं कृत्वा निजदेहे धर्मादिभिः पीठं कल्पयित्वा तत्रांतरपूजां कृत्वा बाह्य पूजामारभेदित्यनुक्तमप्यर्थाद्बोध्यं ध

बाह्यपूजायांयंत्रमाह शुभेइति चकारेणाष्टगंधेनवा अष्टकोणमष्टपत्रंचकाराद्भूपुरमपिविलिखेदित्यर्थः ७ नवाक्षरमंत्रस्येतिदेव्यग्र
पत्रमारभ्याष्टपत्रेष्वष्टावक्षराणिलिखि त्वानवममक्षरंमध्येकर्णिकायांदेव्यग्रेलिखेदित्यर्थः कृत्वेतिप्राणप्रतिष्ठामंत्रेणेत्यर्थः वेदोक्तांवेदमंत्रेणवेत्य
र्थः तत्रमध्येआधारशक्त्यादिपीठमंत्रांतंसंपूज्यदेवीमावाह्यतांमूलमंत्रेणासनाद्युपचारैःपूजयित्वाषट्कोणेषुषडंगानिमंत्रस्यपूजयेत् तत्रक्रमस्तु
शारदायामुक्तः अग्निनैर्ऋत्यवायव्यमध्येदिक्ष्वंगपूजनमितिनवस्वक्षरेषुशैलपुत्र्याद्यानवदुर्गाःपूजयेत् भूपुरेष्विंद्रादीन्वज्रादींश्चपूजयेदिति
यंत्रपूजाप्रकारः ८ यंत्राभावेप्रतिमांवाभगवत्याधातुनिर्मितांकुर्यादित्याह अर्चांवेति प्रतिमांवेत्यर्थः धातवींस्वर्णादिधातुनिर्मितांशिवो

शुभेताम्रमयेपात्रेचंदनेनसितेनच षट्कोणंविलिखेद्यंत्रंचाष्टकोणंततोबहिः ७ नवाक्षरस्यमंत्रस्यबीजा
निविलिखेत्ततः कृत्वायंत्रप्रतिष्ठांचवेदोक्तांसंविधायच ८ अर्चांवाधातवींकुर्यात्पूजामंत्रैःशिवोदितैः पूजनं
पृथिवीपालभगवत्याःप्रयत्नतः ९ कृत्वावाविधिवत्पूजामागमोक्तांसमाहितः जपेन्नवाक्षरंमंत्रंसततंध्यानपूर्व
कं १० होमंदशांशतःकुर्याद्दशांशेनचतर्पणं भोजनंब्राह्मणानांचतद्दशांशेनकारयेत् ११ चरित्रत्रयपाठंच
नित्यंकुर्याद्विसर्जयेत् नवरात्रव्रतंचैवविधेयंविधिपूर्वकं १२

-दितैः यामलादितंत्रोक्तैः तेचमंत्राः प्रपंचसारविवरणेस्पष्टाः
मूलमंत्रेणवापूजाकर्तव्या पूजामुपसंहरतिपूजनमिति ९ कृत्वावेति वाशब्देनवैदिकमंत्रैर्वापूजांकृत्वेत्यर्थः जपेदिति पूजानंतरंऋष्यादि-
न्यासपूर्वकंध्यात्वाजपेदित्यर्थः १० तत्रजपोद्विविधोनित्यः पौरश्चरणिकश्चेति तत्रनित्यजपेनित्यहोमविधिस्तंत्रांतरोक्तउपसंहर्तव्यः नैमित्तिकेतु
पुरश्चरणेदशांशमित्याह होमंदशांशतइति होमद्रव्यंतुतत्तत्कल्पोक्तमेव ११ इत्थंजपंसमाप्यदेव्यग्रेचरित्रत्रयपाठंकुर्यादित्याह चरित्रत्रयमि
ति पाठेचरित्रत्रयंतुयद्यपिदेवीभागवतेऽस्मिन्स्कंधेचरित्रद्वयंप्रथमस्कंधेप्रथमचरित्रमस्तितथावामनपुराणेप्यस्ति तथापिमार्कंडेयपुराणोक्तमेवसं
क्षिप्तत्वाद्ग्राह्यं सचपाठोनित्यः ततःपाठानंतरंदेवींविसर्जयेदित्यर्थः अथावश्यंकर्तव्यंनित्यंनवरात्रव्रतमाह नवरात्रव्रतंचैवेति १२

तत्कालमाह अश्विनेति १३ जप्यमंत्रैर्यस्यमंत्रस्यजपःक्रियतेतन्मंत्रैरनेकमंत्रापेक्षयाबहुवचनं स्रुसंस्कृतैरित्यंतमेकमेवपायसंद्रव्यं आ
हुतिबाहुल्यापेक्षयाबहुवचनं १४ छागमांसेनवेति इदंक्षत्रियपरं कालिकापुराणादिषुवैदिकस्यब्राह्मणस्यनत्राधिकारानुक्तत्वात् १५ अष्टम्या



आश्विनेचतथाचैत्रेशुक्लपक्षेनराधिप नवरात्रोपवासोवैकर्तव्यःशुभमिच्छता १३ होमःस्रुविपुलःकार्योज-
प्यमंत्रैःस्रुपायसैः शर्कराघृतमिश्रैश्चमधुयुक्तैःस्रुसंस्कृतैः १४ छागमांसेनवाकार्योबिल्वपत्रैस्तथाशुभैः ह
यारिकुसुमैरक्तैस्तिलैर्वशिकूरायुतैः १५ अष्टम्यांचचतुर्दश्यांनवम्यांचविशेषतः कर्तव्यंपूजनंदेव्याब्राह्मणानांच
भोजनं १६ निर्धनोधनमाप्नोतिरोगीरोगात्प्रमुच्यते अपुत्रोलभतेपुत्राञ्शुभांश्चवशवर्तिनः १७ राज्यभ्रष्टोनृ
पोराज्यंप्राप्नोतिसार्वभौमिकं शत्रुभिःपीडितोहंतिरिपुमार्याप्रसादतः १८ विद्यार्थीपूजनंयस्तुकरोतिनियतेंद्रियः
अनवद्यांशुभांविद्यांविंदतेनात्रसंशयः १९ ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवाभक्तिसंयुतः पूजयेज्जगतांधात्रींस
सर्वसुखभाग्भवेत् २० नवरात्रव्रतंकुर्यान्नरनारीगणश्चयः वांछितंफलमाप्नोतिसर्वदाभक्तितत्परः २१ आ
श्विनेशुक्लपक्षेतुनवरात्रव्रतंशुभं करोतिभावसंयुक्तःसर्वान्कामानवाप्नुयात् २२ विधिवन्मंडलंकृत्वापू
जास्थानंप्रकल्पयेत् कलशंस्थापयेत्तत्रवेदमंत्रविधानतः २३ यंत्रंस्रुरुचिरंकृत्वास्थापयेत्कलशोपरि वाप-
यित्वायवांश्चारून्पार्श्वतःपरिवर्तितान् २४

दितिथिषुतुविशेषपूजापिनियमेनकर्तव्येत्याह अष्टम्यामिति १६ १७ १८ १९ २० २१ २२ नवरात्रविधिमाह
विधिवदिति मंडलंक्षेत्रमृत्तिकयान्नतुरस्रमित्यर्थः २३ यंत्रंपूर्वोक्तंपार्श्वतः कलशस्यसमंततोमूलमंत्रेणयवान्विकिरेदित्यर्थः २४

२५ २६ २७ कन्यकाविधिस्तन्मंत्राश्च तृतीयस्कंधेऽक्ताः २८ २९ होमंपूर्वोक्तद्रव्यैः ३० ३१ ३२ परमंस्थानंमणिद्वीपंदेवीलोकं

कृत्वोपरिवितानंच पुष्पमालासमावृतं धूपदीपसमायुक्तंकर्तव्यंचंडिकागृहं २५ त्रिकालंतत्रकर्तव्यापूजाशक्त्य
नुसारतः वित्तशाठ्यंनकर्त्तव्यंचंडिकायाश्च पूजने २६ धूपैर्दीपैःसनैवेद्यैःफलपुष्पैरनेकशः गीतवाद्यैस्तोत्र-
पाठैर्वेदपारायणैस्तथा २७ उत्सवस्तत्रकर्त्तव्योनानावादित्रसंयुतैः कन्यकानांपूजनंचविधेयंविधिपूर्वकं २८ चंद
नैर्भूषणैर्वस्त्रैर्भक्ष्यैश्चविविधैस्तथा स्रगंधतैलमाल्यैश्चमनसोरुचिकारकैः २९ एवंसंपूजनंकृत्वाहोमंमंत्रविधान
तः अष्टम्यांवानवम्यांवाकारयेद्विधिपूर्वकं ३० ब्राह्मणान्भोजयेत्पश्चात्पारणांदशमीदिने कर्तव्यंशक्ति-
तोदानंदेयंभक्तिपरैर्नृपैः ३१ एवंयःकुरुतेभक्त्यानवरात्रव्रतंनरः नारीवासधवाभक्त्याविधवावापतिव्रता ३२
इहलोकेसुखंभोगान्प्राप्नोतिमनसेप्सितान् देहांतेपरमंस्थानंप्राप्नोतिव्रततत्परः ३३ जन्मांतरेंबिकाभक्तिर्भवत्य
व्यभिचारिणी जन्मोत्तमकुलेप्राप्यसदाचारोभवेद्धिसः ३४ नवरात्रव्रतंप्रोक्तंव्रतानामुत्तमंव्रतं आराधनंशिवाया
स्तुसर्वसौख्यकरंपरं ३५ अनेनविधिनाराजन्समाराधयचंडिकां जित्वारिपूनस्खलितंराज्यंप्राप्स्यस्यनुत्तमं
३६ सुखंचपरमंभूपदेहेऽस्मिन्स्वगृहेपुनः पुत्रदारान्समासाद्यलप्स्यसेनात्रसंशयः ३७ वैश्योत्तमत्वमेवाद्यस
माराधयकामदां देवींविश्वेश्वरींमायांसृष्टिसंहारकारिणीं ३८ स्वजनानांचमान्यस्त्वंभविष्यसिगृहेगतः सुखं
संसारिकंप्राप्ययथाभिलषितंपुनः ३९ देवीलोकेशुभेवासोभवितातेनसंशयः नाराधिताभगवतीयैस्तेनरकभाजि
नः ४० इहलोकेतिदुःखार्तानानारोगैःप्रपीडिताः भवंतिमानवाराजन्शत्रुभिश्चपराजिताः ४१ निष्कलत्राह्यपुत्रा
श्चतृष्णार्ताःस्तब्धबुद्धयः बिल्वीदलैःकरवीरैःशतपत्रैश्चचंपकैः ४२

३३ ३४ ३५ ३६ ३७ ३८ ३९ देवीलोकेमणिद्वीपे ४० ४१ ४२

४२ ४४ इतिश्रीदेवीभागवततिलके पंचमस्कंधे चतुस्त्रिंशोऽध्यायः ३४ अर्धाधिकैश्चतुःपंचाशत्पद्यैरथभूपतिः वैश्यश्चदेव्याः प्रत्यक्षं दर्शनंप्रापतुर्भृशं १ देवीपूजाविधिंराजावैश्यश्चश्रुत्वामंत्रोपदेशार्थमुभौप्रार्थयेतेइत्याह इतितस्येति १ २ ३ ४ ५ ६ ७ ८

अर्चिताजगतांधात्रीयैस्तेतीर्थविलासिनः भवंतिकृतपुण्यास्तेशक्तिभक्तिपरायणाः ४३ धनविभवसुखाढ्या-मानवामानवंतः सकलगुणगणानांभाजनंभारतीशाः निगमपठितमंत्रैःपूजितायैर्भवानीनृपतितिलकमुख्यास्तेभवंतीहलोके ४४ इतिश्रीदेवीभा॰म॰पं॰चतुस्त्रिंशोऽध्यायः ३४ व्यासउवाच इतितस्यवचःश्रुत्वा दुःखितौ वैश्यपार्थिवौ प्रणिपत्यमुनिंप्रीत्याप्रश्रयावनतौभृशं १ हर्षेणोत्फुल्लनयनावूचतुर्वाक्यकोविदौ कृतांजलिपुटौशांतौभक्तिप्रवणचेतसौ २ भगवन्भाविनावद्यशांतौर्दानौशक्त्यान्वितौ तवसूक्तसरस्वत्यागंगयेवभगीरथः ३ साधवःसंभवंतीहपरोपकृतितत्पराः अकृत्रिमगुणारामाःसुखदाःसर्वदेहिनां ४ पूर्वपुण्यप्रसंगेनप्राप्तोयमाश्रमःशुभः तवावाभ्यामहाभागमहादुःखविनाशकः ५ भवंतिमानवाभूमौबहवःस्वार्थतत्पराः परार्थसाधनेदक्षाःकेचित्क्वापिभवादृशाः ६ दुःखितोहंमुनिश्रेष्ठवैश्योयंचातिदुःखितः उभौसंसारसंतप्तौतवाश्रमपदेमुदा ७ दर्शनादेवहेविद्वन्गतंदुःखमिहावयोः देहजंमानसंवाक्यश्रवणादेवसांप्रतं ८ धन्यावावांकृतकृत्यौजातौसूक्तिसुधारसात् पावितौभवताब्रह्मन्कृपयाकरुणार्णव ९ गृहाणास्मत्करौसाधोनयपारंभवार्णवे मग्नौश्यांताविति ज्ञात्वामंत्रदानेनसांप्रतं १० तपःकृत्वातिविपुलंसमाराध्यसुखप्रदां संप्राप्यदर्शनंभूयोयास्यावोनिजमंदिरं ११ वदनात्तवसंप्राप्यदेवीमंत्रंनवाक्षरं स्मरणंचकरिष्यावोनिराहारौधृतव्रतौ १२

९ भवार्णवेमग्नावित्यर्थः मंत्रदानेनपारंनयेत्यन्वयः १० मंत्रंगृहीत्वाकिंकरिष्यतइतिचेत्तत्राह तपःकृत्वेति सुखप्रदांभगवतींसमाराध्येत्यर्थः ततोदर्शनंतस्याःप्राप्यनिजमंदिरंयास्यावइत्यर्थः ११ १२

१३ गुरुदेवतौमंत्रस्यऋषिच्छंदोदैवतंबीजशक्तयश्चार्थात्प्राप्येत्यर्थः अनंतरंमुनिंसंमंत्र्यतदनुज्ञांगृहीत्वाजग्मतुरित्यन्वयः १४ १५ १६ १७

व्यास उवाच इतिसंचोदितस्ताभ्यांसुमेधामुनिसत्तमः ददौमंत्रंशुभंताभ्यांध्यानबीजपुरःसरं १३ तौचप्राप्य मुनेर्मंत्रंसंमंत्र्यगुरुदेवतौ जग्मतुर्वैश्यराजानौनदीतीरमनुत्तमं १४ एकांतेविजनेस्थानेकृत्वासनपरिग्रहं उपविष्टौ स्थिरप्रज्ञौनात्यतीवकृशोदरौ १५ मंत्रजाप्यरतौशांतौचरित्रत्रयपाठकौ निन्यतुर्मासमेकंतुतत्रध्यानपरायणौ १६ तयोर्मासव्रतेनैवजाताप्रीतिरनुत्तमा पादांबुजेभवान्यास्तुस्थिराबुद्धिस्तथाप्यलं १७ कदाचित्पादयोर्गत्वामुनेस्त स्यमहात्मनः कृतप्रणामावागत्यतस्थतुश्चकुशासने १८ नान्यकार्यपरौक्वापिबभूवतुःकदाचन देवीध्यानपरौ नित्यंजपमंत्ररतौसदा १९ एवंजातेसदापूर्णेतत्रसंवत्सरेनृप बभूवतुःफलाहारंत्यक्त्वापर्णाशनौनृप २० वर्षमेकं तपस्तत्रचक्रतुर्वैश्यपार्थिवौ शुष्कपर्णाशनौदांतौजपध्यानपरायणौ २१ पूर्णेवर्षद्वयेजातेकदाचिद्दर्शनंचतौ प्राप तुःस्वप्नमध्येतुभगवत्यामनोहरं २२ रक्तांबरधरांदेवींचारुभूषणभूषितां कदाचिन्नृपतिःस्वप्नेऽप्यपश्यज्जगदंबि कां २३ वीक्ष्यस्वप्नेचतौदेवींप्रीतियुक्तौबभूवतुः जलाहारेस्तृतीयेतुस्थितौसंवत्सरेतुतौ २४ एवंवर्षत्रयंकृत्वा ततस्तौवैश्यपार्थिवौ चक्रतुस्तौतदाचिंतांचित्तेदर्शनलालसौ २५ प्रत्यक्षदर्शनंदेव्यानप्राप्तंशांतिदंनृणां देहत्यागं करिष्यावोदुःखितौभृशमातुरौ २६ इतिसंचिंत्यमनसाराजाकुंडंचकारह त्रिकोणंसुस्थिरंसौम्यंहस्तमात्रप्र- माणतः २७ संस्थाप्यपावकंराजातथावैश्योऽतिभक्तिमान् जुहावासौनिजंमांसंछित्वाछित्वापुनःपुनः २८ तथावैश्योपिदीप्ताग्नौस्वमांसंप्राक्षिपत्तदा रुधिरेणबलिंचास्यैददतुस्तौकृतोद्यमौ २९

दिनमध्येगुरोर्दर्शनंप्राप्याभितिनिय मात्तावन्मात्रकालएवजपध्यानविरामोनान्यकालेइत्यभिप्रायेणाह कदाचिदिति १८ १९ २० २१ २२ २३ २४ दर्शनलालसौप्रत्यक्षदर्शनलालुसौ- २५ २६ २७ २८ रुधिरेणेति

अयंमांसहोमोबलिदानंस्वगात्ररुधिरेणचेतिद्वयंब्राह्मणातिरिक्तविषयमितिकालिकापुराणादिषुस्पष्टं २९ ३० ३१ ३२ ३३ ३४



तदाभगवतीदत्त्वाप्रत्यक्षंदर्शनंतयोः प्राहप्रीतिभरोद्भ्रांतौदृष्ट्वातौदुःखितौभृशं ३० श्रीदेव्युवाच वरंवरय
भोराजन्यत्तेमनसिवांछितं तुष्टाहंतपसातेऽद्यभक्तोसितंमतोमम ३१ वैश्यंप्राहतदादेवीप्रसन्नाहंमहामते
किंतेभीष्टंददाम्यद्यप्रार्थयाशुमनोगतं ३२ व्यासउवाच तच्छ्रुत्वावचनंराजाताम्रुवाचमुदान्वितः देहिमेद्यनिजं-
राज्यंहृतशत्रुबलंबलात् ३३ तमुवाचतदादेवीगच्छराजन्निजंगृहं शत्रवःक्षीणसत्वास्तेगमिष्यंतिपराजिताः
३४ मंत्रिणस्तेसमागम्यतेपतिष्यंतिपादयोः कुरुराज्यंमहाभागनगरेस्वेयथासुखं ३५ कृत्वाराज्यंसुविपुलंव
र्षाणामयुतंनृप देहांतेजन्मसंप्राप्यसूर्याद्भविताम्नुः ३६ व्यासउवाच वैश्यस्तामप्युवाचेदंकृतांजलिपुटः
शुचिः नमेगृहेणकार्यंवैनपुत्रेणधनेनवा ३७ सर्वंबंधकरंमातःस्वप्नवन्नश्वरंस्फुटं ज्ञानंमेदेहिविशदंमो-
क्षदंबंधनाशनं ३८ असारेस्मिंश्चसंसारेमूढामज्जंतिपामराः पंडिताःसंतरंतीहतस्मान्नेच्छंतिसंसृतिं ३९
व्यासउवाच तदाकर्ण्यमहामायावैश्यंप्राहपुरःस्थितं वैश्यवर्यतवज्ञानंभविष्यतिनसंशयः ४० इतिदत्त्वा
वरंताभ्यांतत्रैवांतरधीयत अदर्शनंगतायांतुराजातंमुनिसत्तमं ४१ प्रणम्यहयमारुह्यगमनायमनोद
धे तदैवतस्यसचिवास्तत्रागत्यनृपंप्रजाः ४२ प्रणेमुर्विनयोपेतास्तमूचुःप्रांजलिस्थिताः राजंस्तेशत्रवः
सर्वेपापाश्चनिहतारणे ४३ राज्यंनिष्कंटकंभूपकुरुष्वपुरमास्थितः तच्छ्रुत्वावचनंराजानत्वातंमुनिसत्तमं
४४ आपृच्छ्यनिर्ययौतत्रमंत्रिभिःपरिवारितः संप्राप्यचनिजंराज्यंदारान्स्वजनबांधवान् ४५ ३५ सूर्याज्ज-
न्मसंप्राप्यसावर्णिर्मनुर्भवितेत्यर्थः ३६ ३७ ३८ ३९ ४० ४१ ४२ निहतारणेइति अस्माभिर्युद्धंकृत्वातेरणेनिहताइत्यर्थः ४३ ४४ ४५.

४६ ४७ आराधनेति चरित्रत्रयेणाराधनेनेत्यर्थः ४८ ४९ ५० ५१ ५२ संहितांसंहितैकदेशपंचमस्कंधमित्य-
र्थः ५३ तदेवाह चरितंचंडिकायास्त्विति ५४ ५५ श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजःसुधीः श्रीलक्ष्मीगर्भसंभूतोनी

बुभुजे पृथिवींसर्वांततःसागरमेखलां वैश्योपिज्ञानमासाद्यमुक्तसंगःसमंततः ४६ कालातिवाहनं
तत्रमुक्तबंधश्चकारह तिर्थेषुविचरन्गायन्भगवत्यागुणानथ ४७ एतत्तेकथितंदेव्याश्चरितंपरमाद्भुतं
आराधनफलप्राप्तिर्यथावद्भूपवैश्ययोः ४८ दैत्यानांहननंप्रोक्तंप्रादुर्भावस्तथाशुभः एवंप्रभावासादेवी
भक्तानामभयप्रदा ४९ यःशृणोतिनरोनित्यमेतदाख्यानमुत्तमं सप्राप्नोतिनरःसत्यंसंसारसुखमद्भुतं ५०
ज्ञानदंमोक्षदंचैवकीर्तिदंसुखदंतथा पावनंश्रवणान्नूनमेतदाख्यानमद्भुतं ५१ अखिलार्थप्रदंनृणांस
र्वधर्मसमावृतं धर्मार्थकाममोक्षाणांकारणंपरमंमतं ५२ सूतउवाच जनमेजयेनराज्ञासोपृष्टःसत्यव
तीसुतः उवाचसंहितांदिव्यांव्यासःसर्वार्थतत्त्ववित् ५३ चरितंचंडिकायास्तुशुंभदैत्यवधाश्रितं क
थयामासभगवान्कृष्णःकारुणिकोमुनिः ५४ इतिवःकथितःसारःपुराणानांमुनीश्वराः इतिश्री
देवीभागवतेमहापुराणेपंचमस्कंधेपंचत्रिंशोऽध्यायः ३५ श्रीकृष्णार्पणमस्तु श्रीमज्जगदं
बार्पणमस्तु छ छ छ छ छ छ छ छ

लकंठोभिधानतः १ देवीभागवतस्यास्यव्याख्यानरहितस्यच तिलकाख्यांमहाव्याख्यांसम्यग्यःकृतवाञ्शुभां २ पंचमस्कंध
एतस्याःसमाप्तोभूच्छुभार्थदः प्रीयतांतेनमेदेवीभुवनेशीमहेश्वरी ३ इतिश्रीशैवकुलोत्पन्नरंगनाथात्मजश्रीलक्ष्मीगर्भजनीलकंठ
कृतेदेवीभागवतव्याख्यानेतिलकाभिधेपंचमस्कंधेपंचत्रिंशोऽध्यायः ३५ समाप्तः छ छ

श्रीगणेशायनमः दरांदोलितदीर्घाक्षीं शृंगाररसवारिधिं कुलीनांकलयेकांचित्कामिनींकाममंजरीं १ षष्ठिश्लोकैर्वृत्रदैत्यवधोदेव्याकथंकृतः इत्याशं-
क्यकथातस्यविस्तरेणोपवर्ण्यते २ तत्रप्रथमतःस्वभक्तिप्रदर्शनेनश्रोतारोमुनयोवक्तारंसूतमुत्साहयंति सूतसूतेति द्विरुक्तिरादरार्था द्वैपायनेति द्वै-
पायनेनकृतमुत्पादितंत्वन्मुखान्निःसृतमित्यर्थः १ वेदेपीति बव्हृचब्राह्मणेपीत्यर्थः २ संख्ये युद्धे ३ ब्रह्मयोनिर्ब्राह्मणः ४ सात्विकानांदे-
वानामेतत्क्रूरंकर्मानुचितमित्याह देवाइति ५ इत्थंदेवानांसात्विकत्वेसतिक्रूरकर्मकरणेमहान्विरोधइत्याह विरोधोत्रेति छलेनेति नहिसात्वि

ऋषयऊचुः सूतसूतमहाभागमिष्टतेवचनामृतं नतृप्ताःस्मोवयंपीत्वाद्वैपायनकृतंशुभं १ पुनस्त्वांप्रष्टुमिच्छामः कथांपौ
राणिकींशुभां वेदेपिकथितांरम्यांप्रसिद्धांपापनाशिनीं २ वृत्रासुरइतिख्यातोवीर्यवांस्त्वष्टुरात्मजः सकथंनिहतःसंख्ये
वासवेनमहात्मना ३ त्वष्टावैसुरपक्षीयस्तत्पुत्रोबलवत्तरः शक्रेणघातितःकस्माद्ब्रह्मयोनिर्महाबलः ४ देवाःसत्वगु-
णोत्पन्नामानुषाराजसास्मृताः तिर्यंचस्तामसाःप्रोक्ताःपुराणागमवादिभिः ५ विरोधोत्रमहान्भातिनूनंशतमखेनह
छलेनबलवान्वृत्रःशक्रेणविनिपातितः ६ विष्णुःप्रेरयितातत्रसतुसत्वधरःपरः प्रविष्टःपविमध्येसछद्मनाभगवान्प्रभुः
७ संधिंविधायसत्येवंमंत्रितोसौमहाबलः हरिभ्यांसत्यमुत्सृज्यजलफेनेनशातितः ८ कृतमिंद्रेणहरिणाकिमेतत्सूत
साहसं महांतोपिचमोहेनवंचिताःपापबुद्धयः ९ अन्यायवर्तिनोत्यर्थंभवंतिसुरसत्तमाः सदाचारेणयुक्तेनदेवाःशिष्ट-
त्वमागताः १० एवंविशिष्टधर्मेणशिष्टत्वंकीदृशंपुनः हत्वावृत्रंतुविश्वस्तंशक्रेणछद्मनापुनः ११

केषुछलसंभवस्तस्यरजोगुणा
दुत्पत्तेरितिभावः ६ किंचसात्विकस्येंद्रस्यप्रेरयिताविष्णुस्तुमहासात्विकस्तेनकथंप्रेरितः क्रूरकर्मणिस्वयमपिकपटेनवज्रमध्येकथंप्रविष्टइत्याह
विष्णुरिति पविर्वज्रं ७ किंच विश्वासघातोप्यनुचितःकथंकृतइत्याह संधिमिति संधिर्मैत्री सत्यंसत्यवाक्यंनाहंहनिष्यामीत्येवंरूपं शातितोना
शितः ८ ९ सदाचारेति युक्तेनशास्त्रानुमतेनसदाचारेणदेवाःशिष्टत्वमागताःप्राप्ताइत्यर्थः १० एवमिति एवंविशिष्टेनैतादृशेनधर्मेणाचरणंतेषांदेवानां

कीदृशंपुनःशिष्टत्वंनकथमपीत्यर्थः ११ किंचैनादृशब्रह्मवध्यायाःफलंतेनेंद्रेणप्राप्तमथवानेत्ययमपिप्रश्नोस्तीत्याह प्राप्तमिति प्रश्नोत्तरमप्याह किं
किंचेति यत्त्वयापुराचतुर्थस्कंधेप्रोक्तं श्रीदेव्यावृत्रासुरवधःकृतइति तच्चापितदुक्तमपिनोस्मान्मोहयतिवृत्रासुरवधःकिंदेव्याकृतअहोस्विदिंद्रेणकृ
तइत्यविवेकमुत्पादयतीत्यर्थः तदुक्तंचतुर्थस्कंधेचतुर्विंशाध्याये वृत्रासुरादयोदैत्यालीलयैवयया हताइति तथादित्यपुराणेपि याजम्रेमहिषंदैत्यंक्रू
रंवृत्रासुरंतथा साधरक्तासुरंहत्वास्वाराज्यंतेप्रदास्यतीति १२ इत्यनेकान्मुनिप्रश्नान्श्रुत्वासूतआहश्रृणवंत्विति १३ १४ सयदाहेति सव्यासस्त्वंराजानं

प्राप्तंपापफलंनोवाब्रह्महत्यासमुद्भवं किंचत्वयापुराप्रोक्तंवृत्रासुरवधःकृतः १२ श्रीदेव्याइतितच्चापिचित्तंमोहयतीहनः
सूतउवाच श्रृण्वंतुमुनयोवृत्तंवृत्रासुरवधाश्रयं १३ यथेंद्रेणचसंप्राप्तंदुःखंहत्यासमुद्भवं एवमेवपुरापृष्टोव्यासःसत्यव
तीसुतः १४ पारीक्षितेनराज्ञापिसयदाहचतद्ब्रुवे जनमेजयउवाच कथंवृत्रासुरःपूर्वंहतोमघवतामुने १५ सहायंविष्णुमा
साद्यछद्मनासात्त्विकेनह कथंचदेव्यानिहतोदैत्योसौकेनहेतुना १६ कथमेकवधोद्वाभ्यांकृतःस्यान्मुनिपुंगव तदेतच्छ्रोतु
मिच्छामिपरंकौतूहलंहिमे १७ महतांचरितंश्रृण्वन्कोविरज्येतमानवः कथयांबावैभवंत्वंवृत्रासुरवधाश्रितं १८ व्या-
सउवाच धन्योसिराजंस्तवबुद्धिरीदृशीजातापुराणश्रवणेऽतिसादरा पीत्वामृतंदेववरास्तुसर्वथापानेवितृष्णाःप्रभवंति
वैपुनः १९ दिनेदिनेऽतेधिकभक्तिभावःकथासुराजन्महनीयकीर्तेः श्रोतायदैकप्रवणःश्रृणोतिवक्तातदाप्रीतमनाब्रवीति
२०

यदाहतदेवाहंब्रुवेकथयामीत्यर्थः राजप्रश्नमाह कथमिति विष्णुसहायमासाद्यवृत्रासुरःपूर्वंकथंकेनप्रकारेणमघवताहतइत्येकःप्रश्नः १५ द्वितीयप्र-
श्नमाह कथंचेति योमघवतानिहतइत्युक्तःसकथंदेव्यानिहतःकेनचहेतुनाकारणेनदेव्यानिहतइतितृतीयःप्रश्नः १६ कथमेकवधइति द्वाभ्यांसमर्था
भ्यामेकस्यवधःकथंकृतइत्याश्चर्यंप्रतिभातीत्यर्थः यद्यपिद्वाभ्यामेकस्यवधोनाश्चर्यभूतस्तथापिश्रुताविंद्रेणकृतइत्युक्तं पुराणेषुतुदेवीकृतइत्युच्यत
इत्याश्चर्यमित्यर्थः १७ १८ पीत्वामृतमिति अमृतंपीत्वातत्स्वादंजानंतोपिदेववराःपानेसुधापानेवितृष्णाभवंति त्वंवैतावत्पर्यंतंश्रुत्वापिनवितृष्णोभ
वसीतिभावः १९ तदेवाह दिनेदि-

नेतइति इदमेवश्रोतुर्युक्तं तदैववक्तापिवक्तुंप्रसीदतीत्याह श्रोनेति २० युद्धमिति वेदेबव्हृचब्राह्मणे तथैवलब्धं यथाकर्मदुर्घटंकृतंतथैवदुःखम-
पिलब्धमित्यर्थः २१ यत्त्वयोक्तंसात्त्विकेनवासवेनक्रूरकर्मकथंकृतमितितत्राह चित्रंकिमत्रेति येमुनयोदेहदुःखंप्रत्यक्षमनुभवंतोनएवपापाड्डीतास्तेपि-
मायामोहिताःसंतोनिंद्यंकर्मचक्रुर्बहवस्तदानित्यंदुःखासंस्पृष्टंस्वर्गसुखंमदांधादेवाअनुभवंतःकथंनमाययामोहिताः तथाचमाययामोहितत्वादिंद्रहरिभ्यां
छद्मनाविनिहतस्त्रिशिराअग्रेवक्ष्यमाणोब्राह्मणस्तथावृत्रोदैत्योविनिहतोत्रऽकिंचित्रंनकिमपीत्यर्थः मायामोहिताःसर्वेकुर्वंतीतिभावः २२ तत्किं

युद्धंपुरावासववृत्रयोर्यद्वेदेप्रसिद्धंचतथापुराणे दुःखंसुरेंद्रेणतथैवलब्धंहत्वारिपुंत्वाष्ट्रमपायमेव २१ चित्रंकिमत्रनृ
पतेहरिवज्रभृद्भ्यांयच्छद्मनाविनिहतस्त्रिशिरोथवृत्रः मायाबलेनमुनयोपिविमोहितास्तेचक्रुश्चनिंद्यमनिशंकिलपा-
पभीताः २२ विष्णुःसदैवकपटेनजघानदैत्यान्सत्त्वात्ममूर्तिरपिमोहमवाप्यकामं कोन्योस्तितांभगवतींमनसापिजेतुं
शक्तःसमस्तजनमोहकरींभवानीं २३ मत्स्यादियोनिषुसहस्रयुगेषुसद्यःसाक्षाद्भवत्यपिययाविनियोजितोत्र नारा
यणोनरसखोभगवाननंतःकार्यंकरोतिविहिताविहितंकदाचित् २४ देहंधनंगृहमिदंस्वजनामदीयंपुत्राःकलत्रमि-
तिमोहमुपेत्यसर्वः पुण्यंकरोत्यथचपापचयंकरोतिमायागुणैरतिबलैर्विकलीकृतोयत् २५ नजातुमोहंक्षपितुंन
रःक्षमःकश्चिद्भवेद्भूपपरावरार्थवित् विमोहितस्तैस्त्रिभिरेवमूलतोवशीकृतात्माजगतीतलेभृशं २६ अथतौमायया
विष्णुवासवौमोहितौभृशं जघ्नतुश्छद्मनावृत्रंस्वार्थसाधनतत्परौ २७

विष्णुरपिमायावशएवेतिचेदस्त्येवेत्याह विष्णुःसदैवे
ति कपटेनेति नैतन्मायामोहितत्वाभावेसंभवतीतिभावः यदाविष्णुरपिमायांजेतुमसमर्थस्तदातदन्यःकःसमर्थःस्यादित्याह कोन्योस्तीति २३ त
देवमायामोहितत्वंसर्वेषांविशदयति मत्स्यादीति ययाविनियोजितइति माययेतिशेषः २४ यद्यस्मान्मायागुणैर्विकलीकृतोमोहितइत्यर्थः अद्वैतेब्र
ह्मणिद्वैतस्यमायाकल्पितत्वान्मायाधीनंसर्वेषांहिताहितकर्तृत्वमुक्तंयुक्तमेव २५ परावरार्थवित् परोर्थःकारणंअवरोर्थःकार्यंतयोविंदपीत्यर्थः मूलतआदितः २६ यत-

एवमतआह्अथेति २७ प्रश्नसमाधानमुपसंहृत्यकथारंभंप्रतिजानीते तदहमिति २८ २९ ३० ३१ ३२ ३३ पादपाग्रेपादयोर्निवेशनं
तथाचाधोमुखनाफलिता ३४ ३५ ३६ ३७ शातयिष्यतिनाशयिष्यति ३८ ३९ ४० ४१ ४२

तदहंसंप्रवक्ष्यामिवृत्तांतमवनीपते कारणंपूर्ववैरस्य वृत्रवासवयोर्मिथः २८ त्वष्टाप्रजापतिर्ह्यासीद्देवश्रेष्ठोमहातपाः देवानांकार्यकर्त्ताचनिपुणोब्राह्मणप्रियः २९ सपुत्रंवैत्रिशिरसमिंद्रद्वेषात्किलासृजत् विश्वरूपेतिविख्यातंनाम्नारूपेणमोहनं ३० त्रिभिःसवदनैःश्रेष्ठैर्व्यरोचतमनोहरैः त्रिभिर्भिन्नानिकार्याणिमुखैःसमकरोन्मुनिः ३१ वेदानेकेनसोधीतेसुरांचैकेनसोपिबत् तृतीयेनदिशःसर्वायुगपच्चनिरीक्षते ३२ त्रिशिराभोगमुत्सृज्यतपश्चक्रेसुदुष्करं तपस्वीसमृदुर्दांतोधर्ममेवसमाश्रितः ३३ पंचाग्निसाधनंकालेपादपाग्रेनिवेशनं जलमध्येनिवासंचहेमंतेशिशिरेतथा ३४ निराहारोजितात्मासौत्यक्तसर्वपरिग्रहः तपश्चचारमेधावीदुष्करंमंदबुद्धिभिः ३५ तंचदृष्ट्वातपस्यंतंखेदमाप शचीपतिः विषादमगमत्तत्रशक्रोयंमास्मभूदिति ३६ दृष्ट्वातस्यतपोवीर्यंसत्यंचामिततेजसः चिंतांचमहतींप्राप त्वनिशंपाकशासनः ३७ विवर्द्धमानस्त्रिशिरामामयंशातयिष्यति नोपेक्ष्यःसर्वथाशत्रुर्वर्धमानबलोबुधैः ३८ तस्मादुपायःकर्तव्यस्तपोनाशायसांप्रतं कामस्तुतपसांशत्रुःकामान्नश्यतिवैतपः ३९ तथैवाद्यप्रकर्तव्यंभोगासक्तोभवेद्यथा इतिसंचिंत्यमनसाबुद्धिमान्बलमर्दनः ४० आज्ञापयत्सोप्सरसस्त्वष्टृपुत्रप्रलोभने उर्वशींमेनकांरंभांघृताचींचतिलोत्तमां ४१ समाहूयाब्रवीच्छक्रस्तास्तदारूपगर्विताः प्रियंकुरुध्वंमेसर्वाःकार्येऽद्यसमुपस्थिते ४२ यूतोमेद्यमहाञ्छत्रुस्तपस्तपतिदुर्जयः कार्यंकुरुतगच्छध्वंप्रलोभयतमाचिरं ४३ शृंगारवेषैर्विविधैर्हावैर्देहसमुद्भवैः प्रलोभयतभद्रंवःशमयध्वंज्वरंमम ४४

यत्तइति संयत्तइत्यर्थः ४३ ४४ ७ ७ ७

४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ मूकांधबधिरइवास्थितः दिष्ट्येति अस्मद्भाग्येनेत्यर्थः नशाप्ता



अस्वस्थोहंमहाभागास्तस्यज्ञात्वातपोबलं बलवानासनंमेद्यगृहीष्यत्यविलंबितः ४५ भयंमेसमुपायातंक्षिप्रंनाशयता
बलाः उपकुर्वंतुसहिताःकार्येद्यसमुपस्थिते ४६ तच्छ्रुत्वावचनंनार्यऊचुस्तंप्रणताःपुरः माभयंकुरुदेवेशयतिष्यामः
प्रलोभने ४७ यथानस्याद्भयंतस्मात्तथाकार्यंमहाद्युते नृत्यगीतविहारैश्चमुनेस्तस्यप्रलोभने ४८ कटाक्षैरंगभेदैश्चमो
हयित्वामुनिंविभो लोलुपंवशमस्माकंकरिष्यामोनियंत्रितं ४९ व्यासउवाच इत्याभाष्यहरिंनार्योययुस्त्रिशिरसोंति
कं कुर्वंत्योविविधान्भावान्कामशास्त्रोचितानपि ५० गायंत्यस्तालभेदैस्तान्नृत्यंत्यःपुरतोमुनेः तंप्रलोभयितुंचक्रुर्ना
नाभावान्वरांगनाः ५१ नापश्यत्सतपोराशिरंगनानांविडंबनं इंद्रियाणिवशेकृत्वामूकांधबधिरस्थितः ५२ दिनानिक
तिचित्तस्थुर्नार्यस्तस्याश्रमेवरे कुर्वंत्यागाननृत्यादिप्रपंचानतिमोहदान् ५३ नचचालयदाकामंध्यानात्त्रिशिरामु-
निः परावृत्यतदादेव्यःपुनःशक्रमुपस्थिताः ५४ कृतांजलिपुटाःसर्वादेवराजमथाब्रुवन् श्रांतादीनाभयत्रस्ता
विवर्णवदनाभृशं ५५ देवदेवमहाराजयत्नश्चपरमःकृतः नसशक्योदुराधर्षोधैर्याच्चालयितुंविभो ५६ उपायोन्यः
प्रकर्तव्यःसर्वथापाकशासन नास्माकंबलमेतस्मिंस्तापसेविजितेंद्रिये ५७ दिष्ट्यावयंनशप्ताःस्मयदनेनमहात्मना
मुनिनावन्हितुल्येनतपसाद्योतितेनहि ५८ विसृज्याप्सरसःशक्रश्चिंतयामाससमंदधीः तस्यैवचवधोपायंपापबुद्धिर
सांप्रतं ५९ विसृज्यलोकलज्जांसतथापापभयंभृशं चकारपापबुद्धिंतुतद्वधायमहीपते ६० इतिश्रीदेवीभाग-
वतेमहापुराणेषष्ठस्कंधेप्रथमोध्यायः १ व्यासउवाच अथसलोभमुपेत्यसुराधिपःसमधिगम्यगजासनसंस्थितः त्रि-
शिरसप्रतिदुष्टमतिस्तदामुनिमपश्यदमेयपराक्रमं १

इति यत्नादिष्ट्येत्यन्वयः ५९ ६० इतिश्रीदे॰तिषेषष्ठ॰प्रथमो॰१ त्रिपंचाशतध -

वर्यैस्त्रिशिरोवधवर्णनं कृत्वा वृत्रासुरोत्पत्तिर्विस्तरेणोपवर्ण्यते १ पूर्वाध्याये पापबुद्धिं तद्धाय चकारेत्युक्तं तदुत्तरं जातं वृत्तमाह अथेति सइंद्रः लोभमु
पेत्य प्राप्य त्रिशिरसं प्रति समधिगम्य गत्वा तं मुनिमपश्यदित्यन्वयः १ परमापदं खेदं २ आसनकामुकः मदीयासने च्छावान् कथमुपेक्ष्य इत्यर्थः

तमभिवीक्ष्य दृढासनसंस्थितं जितगिरं सुसमाधिवशंगतं रविविभावसुसन्निभमोजसा सुरपतिः परमापदमभ्यगात्
२ कथमसौ विनिहंतुमहो मया सुनिरपापमतिः किल संमतः रिपुरयं सुसमिद्धतपोबलः कथमुपेक्ष्य इहासनकामुकः ३
इति विचिंत्य पविं परमायुधं प्रतिमुमोच मुनिं तपसि स्थितं शशिदिवाकरसन्निभमाशुगं त्रिशिरसं सुरसंघपतिः स्व-
यं ४ तदभिघातहतः स धरातले किल पपात ममार च तापसः शिखरिणः शिखरं कुलिशार्दितं निपतितं भुवि वाद्भुत
दर्शनं ५ तं निहत्य मुदमाप सुरेशश्चुक्रुशुश्च मुनयस्तु संस्थिताः हाहतेति भृशमार्तनिस्वनाः किं कृतं शतमखेन पा
पिना ६ विनापराधं तपसां निधिर्हतः शचीपतिः पापमतिर्दुरात्मा फलं किलायं तरसा कृतस्य प्राप्नोतु पापी हननोद्भवस्य ७
तं निहत्य तरसासुरराजो निर्जगाम निजमंदिरमाशु सहतोपि विरराज महात्मा जीवमान इव तेजसां निधिः ८ तं हतं क्षापतितं
भूमौ जीवंतमिव वृत्रहा चिंतामापातिखिन्नांगः किं वा जीवेदयं पुनः ९ विमृश्य मनसातीव तक्षाणं पुरतः स्थितं मघवा वी
क्ष्य तं प्राह स्वकार्यसदृशं वचः १० तक्षंश्छिंधि शिरांस्यस्य कुरुष्व वचनं मम माजीवतु महातेजा भाति जीवन्निव स्वयं ११
इत्याकर्ण्य वचस्तस्य तक्षोवाच विगर्हयन् तक्षोवाच महास्कंधो भृशं भाति परशुर्न तरिष्यति १२ ततो नाहं करिष्यामि का
र्यमेतद्विगर्हितं त्वया वै निंदितं कर्म कृतं सद्भिर्विगर्हितं १३

३ ४ वाद्भुतदर्शनमित्यत्र वाशब्द इवार्थकः भुवि निपतितमिवेत्येवं यो-
ज्यः ५ ६ ७ सहतोपीति हतो मृतोपि जीवमान इव जीववद्विरराज यतस्तेजसां निधिरित्यर्थः ८ किंवेति किं मूर्च्छां प्राप्तोयं पुनर्जीवेदित्यर्थः ९
१० ११ महास्कंध इति स्कंधः कंठो महागजवदच्छेद्यो भाति अत्र मम परशुश्छेदनाय त्वं न तरिष्यति कार्यं कर्तुं समर्थो न भविष्यतीत्यर्थः १२ १३

यज्ञेनानेनापूर्वेकृते सति दिव्यंजन्मविधीयते प्राप्यतेइत्यर्थः अतोदेवदेहंनृदेहंवायत्तेमनसिवांछितंभवतितंदेहंवरयेत्यर्थः १० इत्यइति
यथात्तेपुरोधाउपाध्यायोवसिष्ठस्तच्छापात्पूर्वदेहंत्यक्त्वायथासुखंमृत्युलोके एवतद्देहसदृशद्वितीयदेहधारणंकृत्वाहसोगर्वितस्तिष्ठति त-
थातवापेक्षितंचेत्तदपिवरयेत्यर्थः निमेरात्मेति अनेनचराज्ञावसिष्ठशापेनदेहाभिमानंत्यक्त्वागंतुकामोब्राह्मणैर्मंत्रबलेनस्तंभितस्तद्देहाभि
मानंत्यक्त्वालिंगात्माभिमानेनस्थितइतिबोधितं ११ सर्वसत्वानांसर्वजीवानांदृष्टौममवासोभवत्वित्यर्थः १२ १३ एतत्त्वयाप्रार्थितंदातुम-

यज्ञेनानेनराजर्षेवरंजन्मविधीयते देवदेहंनृदेहंवायत्तेमनसिवांछितं १० इत्युक्तः कामंपुरोधास्तेमृत्युलोकेयथासुखं
एवमुक्तोनिमेरात्मासंतुष्टस्तानुवाचह ११ नदेहेममवांछास्तिसर्वदैवविनश्वरे वासोमेसर्वसत्वानांदृष्टावस्तुसुरो
त्तमाः १२ नेत्रेषुसर्वभूतानांवायुभूतश्चराम्यहं एवमुक्ताः सुरास्तत्रनिमेरात्मानमब्रुवन् १३ प्रार्थयत्वंमहा-
राजदेवींसर्वेश्वरींशिवां मखेनानेनसंतुष्टासातेभीष्टंविधास्यति १४ सदेवैरेवमुक्तस्तुप्रार्थयामासदेवतां स्तो
त्रैर्नानाविधैर्दिव्यैर्भक्त्यागद्गदयागिरा १५ प्रसन्नासातदादेवीप्रत्यक्षंदर्शनंददौ कोटिसूर्यप्रतीकाशंरूपंप्रलय
पदीपितं १६ दृष्ट्वाप्रमुदिताः सर्वेकृतकृत्याश्चचेतसि प्रसन्नायांदेवतायांराजावव्रेवरंनृप १७ ज्ञानंतद्विमलंदे
हियेनमोक्षोभवेदपि नेत्रेषुसर्वभूतानांनिवासोमेभवेदिति १८ ततःप्रसन्नादेवेशीप्रोवाचजगदंबिका ज्ञानं
तेविमलंभूयात्प्रारब्धस्यावशेषतः १९ नेत्रेषुसर्वभूतानांनिवासोपिभविष्यति निमिषंयांतिचक्षूंषित्वत्कृ
तेनैवदेहिनां २०

स्माकंशक्तिर्नास्तिपरतंत्राणांयस्मिन्यस्मिन्कार्येवयंभगवत्यानियुक्तास्तदेवकर्तुंशक्नुमोयदितवतथेच्छास्ति
तर्हिभगवतीमेवप्रार्थयेत्याह प्रार्थयत्वमिति १४ देवतांसच्चिदानंदरूपिणींभगवतीं १५ रूपमिति तृतीयस्कंधोक्तप्रकारकं १६ १७
राज्ञाप्रथमंज्ञानंयाचितमित्याह ज्ञानंचेति किंचयावत्प्रारब्धंकर्मनभुक्तंतावन्नेत्रेषुवासोभवत्विति द्वितीयंवरंवव्रेइत्याह नेत्रेष्विति १८ १९
निवासोवायुरूपेणेत्यर्थः २०

सनिमिषानेत्रनिमीलनवंतइत्यर्थः निमीलनादेर्वायुकार्यत्वादितिभावः पुनश्चानिमिषाइति येसनिमिषास्तएवानिमिषाअपिभविष्यंति नव वायुरूपस्य निवासादित्यर्थः अनिमिषाउन्मीलनवंतइत्यर्थः नकेवलंमानवाएवएतादृशाः किंतुसुराअपिइत्याह सुराइति २१ २२ समा



नववासात्सनिमिषामानवाःपशवस्तथा पतंगाश्चभविष्यंति पुनश्चानिमिषाःसुराः २१ इतिदत्त्वावरंतस्मैतदा श्रीपरदेवता आमंत्र्यचमुनीन्सर्वांस्तत्रैवांतर्हिताभवत् २२ अंतर्हितायांदेव्यांतुमुनयस्तत्रसंस्थिताः वि- चिंत्यविधिवत्सर्वेनिमेर्देहंसमाहरन् २३ अरणिंतत्रसंस्थाप्य ममंथुर्मंत्रवत्तदा मंत्रहोमैर्महात्मानः पुत्रहेतोर्नि- मेरथ २४ अरण्यांमथ्यमानायांपुत्रःप्रादुरभूत्तदा सर्वलक्षणसंपन्नःसाक्षान्निमिरिवापरः २५ अरण्याम थनाज्जातस्तस्मान्मिथिरितिस्मृतः येनायंजनकाज्जातस्तेनासौजनकोभवत् २६ विदेहस्तुनिमिर्जातो यस्मा त्तस्मात्तदन्वये समुद्भूतास्तुराजानोविदेहाइतिकीर्तिताः २७ एवंनिमिसुतोराजाप्रथितोजनकोभवत् नग- रीनिर्मितातेन गंगातीरेमनोहरा २८ मिथिलेतिसुविख्यातागोपुराट्टालसंयुता धनधान्यसमायुक्ताहट्टशा- लाविराजिता २९ वंशेस्मिन्येपिराजानस्तेसर्वेजनकास्तथा विख्यानाज्ञानिनः सर्वेविदेहाःपरिकीर्तिताः ३० एतत्तेकथितंराजन्निमेराख्यानमुत्तमं शापाद्यस्यविदेहत्वंविस्तरादुदितंमया ३१ राजोवाच भगवन्भवताप्रो क्तं निमिशापस्यकारणं श्रुत्वासंदेहमापन्नंमनोमेनीवचंचलं ३२ वसिष्ठोब्राह्मणःश्रेष्ठोराज्ञश्चैवपुरोहितः पु त्रःपंकजयोनेस्तुराज्ञाशप्तःकथंमुनिः ३३ गुरुंचब्राह्मणंज्ञात्वानिमिनानकृताक्षमा यज्ञकर्मशुभंकृत्वाकथं क्रोधमुपागतः ३४ ज्ञात्वाधर्मस्यविज्ञानंकथमिक्ष्वाकुसंभवः क्रोधस्यवशमापन्नःशप्तवान्ब्राह्मणंगुरुं ३५

हरन्मथनार्थंगृहीतवंतः २३ २४ २५ मिथिरिति पृषोदरादित्वात्साधुत्वं अनेनकारणेनजनकनामाभवदित्यर्थः २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५

३६ ३७ तेनापिपुरुषेणदेहमध्यस्थाएतेरिपवोदुर्ज्ञेयाइत्यर्थः जेतुमशक्याइतितात्पर्यं ३८ ३९ ४० ४१ ४२ ४३ ४४
सत्वैकांतव्यवस्थितौसत्त्वस्यनिरंतरमवस्थिताविर्त्यर्थः सर्वत्रदेवादिसर्वप्राणिमात्रदेहेष्वित्यर्थः ४५ समभावः साम्यावस्थानंक
दापीत्यर्थः ४६ एकंपरमात्मानमेकांमायांचहित्वासर्वेगुणत्रयेणबद्धाइत्याह निर्गुणइति ४७ ४८ तयोरैक्यमिति चंद्रचंद्रिकयो-

व्यासउवाच क्षमातिदुर्लभाराजन्प्राणिभिरजितात्मभिः क्षमावान्दुर्लभोलोकेसुसमर्थोविशेषतः ३६ स
र्वसंगपरित्यागीमुनिर्भवतुतापसः निद्राक्षुधोर्विजेताचयोगाभ्यासेसुनिष्ठितः ३७ कामःक्रोधस्तथालोभो
ह्यहंकारश्चतुर्थकः दुर्ज्ञेयादेहमध्यस्थारिपवस्तेनसर्वथा ३८ नभूतपूर्वःसंसारेनचैववर्त्ततेधुना भवितानपु
मान्कश्चिद्योजयेत्तरिपूनिमान् ३९ नस्वर्गेनचभूलोकेब्रह्मलोकेहरेःपदे कैलासेनेदृशःकश्चिद्योजयेत्तरिपूनि
मान् ४० मुनयोब्रह्मपुत्राश्चतथान्येतापसोत्तमाः तेपिगुणत्रयाविद्धाःकिंपुनर्मानवाभुवि ४१ कपिलःसां-
ख्यवेत्ताचयोगाभ्यासरतःशुचिः तेनापिदैवयोगाद्धिप्रदग्धाःसगरात्मजाः ४२ तस्माद्राजन्नहंकारात्संजा
तंभुवनत्रयं कार्यकारणभावात्तुनहियुक्तंकथंभवेत् ४३ ब्रह्मागुणत्रयाविष्टोविष्णुश्चैवाथशंकरः प्रभवं-
तिशरीरेषुतेषांभावाःपृथक्पृथक् ४४ मानवानांचकावार्तासत्वेकांतव्यवस्थितौ गुणानांसंकरोराजन्सर्वत्र
समवस्थितः ४५ कदाचित्सत्त्ववृद्धिःस्यात्कदाचिद्रजसःकिल कदाचित्तमसोवृद्धिःसमभावःकदाचन ४६
निर्गुणःपरमात्मासौनिर्लेपःपरमोव्ययः अलक्ष्यःसर्वसत्वानामप्रमेयःसनातनः ४७ तथैवपरमाशक्तिर्निर्गु-
णाब्रह्मसंस्थिता दुर्ज्ञेयाचाल्पमतिभिःपूर्वभूतव्यवस्थितिः ४८ परात्मनःस्तथाशक्तेस्तयोरैक्यंसदैवहि अ-
भिन्नंतद्वपुर्ज्ञात्वामुच्यतेसर्वदोषतः ४९

रिवद्वह्निदाहकतयोरिवेतिभावः नहिशक्तिमतःशक्तिःक्वचित्पृथगुपलभ्यतइति सा-

चशक्तिर्यदांऽतर्मुखातिष्ठतितदाब्रह्माभेदेनभासते यदापुनर्बहिर्मुखातिष्ठतितदाचैतन्यात्पृथक्भासतेतथाचाभिन्नंतद्वपुरित्यनेनांत
र्मुखशक्तिविशिष्टमभिन्नब्रह्ममायारूपमुक्तंभवतितद्वपुर्ज्ञात्वासर्वदोषादविद्यारूपाद्गुणत्रयादिरूपान्मुच्यतइत्यर्थः ४९ अयमेवस
र्ववेदसिद्धांतइत्याह तज्ज्ञानादेवेति तथाचश्रुतिः तेध्यानयोगानुगताअपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामितिश्वेताश्वेतरे तदु-
क्तंमुमासंहितायां मायांतुप्रकृतिंविद्यान्मायाविब्रह्मशाश्वतं अभिन्नंतद्वपुर्ज्ञात्वामुच्यतेभवबंधनादिति अंतर्मुखाशक्तिरेवविद्येति

तज्ज्ञानादेवमोक्षःस्यादितिवेदांतडिंडिमः योवेदसविमुक्तोस्मिन्संसारेत्रिगुणात्मके ५० ज्ञानंतुद्विवि
धंप्रोक्तंशाब्दिकंप्रथमंस्मृतं वेदशास्त्रार्थविज्ञानात्तच्चवेद्बुद्धियोगतः ५१ विकल्पास्तत्रबहवोभवंतिमति
कल्पिताः “ कुतर्ककल्पिताःकेचित्सुतर्ककल्पिताःपरे वितर्कैर्विभ्रमोत्पत्तिर्विभ्रमाद्बुद्धिभ्रंशता बु
द्धिभ्रंशाज्ज्ञाननाशःप्राणिनांपरिकीर्तितः ” अनुभवाख्यंद्वितीयंतुज्ञानंतद्दुर्लभंनृप ५२ तत्तदाप्राप्यते
तस्यवेत्तुःसंगोयदाभवेत् शब्दज्ञानान्नकार्यस्यसिद्धिर्भवतिभारत ५३ तस्मान्नानुभवंज्ञानंसंभवत्य
तिमानुष अंतर्गतंतमश्छेत्तुंशाब्दबोधोहिनक्षमः ५४ यथाननश्यतितमःकृतयादीपवार्तया तत्कर्मय
न्नबंधायसाविद्यायाविमुक्तये ५५ आयासायापरंकर्मविद्यान्याशिल्पनैपुणं शीलंपरहितत्वंचकोपाभा-
वःक्षमाधृतिः ५६ संतोषश्चेतिविद्यायाःपरिपाकोज्वलंफलं विद्ययातपसावापियोगाभ्यासेनभूपते ५७

शैवागमाच्च ५० शाब्दिकमितिशब्दश्रवणमात्रेणजायमानंपरोक्षमित्यर्थः ५१ तत्रमतिकल्पिताविर्तकाः संशयविपर्यासादिरूपाबह
वोजायंतइतिनतज्ज्ञानंमोक्षदायकमित्यर्थः अनुभवाख्यमिति अपरोक्षमित्यर्थः ५२ तत्तदेति तदपरोक्षज्ञानंयदावेत्तुरनुभवितुःसं
गोभवेत्तदैवभवेदित्यर्थः ५३ संभवत्यतिमानुषमिति सहजतयानसंभवतिकिंतुमहतायासेनेतिभावः ५४ ५५ ५६ इदमेतावत्पर्यंत

मप्रकृतंकिमर्थमुक्तंतत्राह विद्ययेति ५७ कामादिशत्रुनाशसाधनमुक्तमित्यर्थः ५८ तथाचनिमेस्तादृशसाधनाभावेनमनोजयाभावात्क्रोधादेः संभवान्निमिनामुनौक्षमानविहितेत्यर्थः ५९ कृताक्षमेतिशेषः यथाययातिनापूर्वंशुक्रेकृतागसिक्षमाकृतातथानिमिनानकृतेत्यर्थः संक्षेपतस्तांकथामाह भृगुपुत्रेणेति ६० ६१ कश्चित्सौम्यइत्यत्रययातिदृष्टांतः कश्चित्क्रूरइत्यत्रहैहयदृष्टांतइत्याह हैहयाइति ६२ पातकंपृष्ठतःकृत्वातदगण

विनाकामादिशत्रूणांनैवनाशःकदाचन " मनस्तुचंचलंराजन्स्वभावादतिदुर्ग्रहं तादृशःसर्वथाप्राणीत्रिविधोभुवनत्रये " कामक्रोधाद्योभावाश्चित्तजाःपरिकीर्तिताः ५८ तेतदानभवंत्येवयदावैनिर्जितंमनः तस्मात्तुनिमिना राजन्नक्षमाविहितामुनौ ५९ यथाययातिनापूर्वंकृताशुक्रेकृतागसि भृगुपुत्रेणशप्तोपिययातिर्नृपसत्तमः ६० नशशापमुनिंक्रोधाज्जरांराजागृहीतवान् कश्चित्सौम्योभवेत्कश्चित्क्रूरोभवतिपार्थिवः ६१ स्वभावभेदान्नृपते कस्यदोषोऽत्रकल्प्यते हैहयाभार्गवान्पूर्वंधनलोभात्पुरोहितान् ६२ ब्राह्मणान्मूलतःसर्वांश्चिच्छिदुः क्रोधमूर्च्छिताः पातकंपृष्ठतःकृत्वाब्रह्महत्यासमुद्भवं ६३ इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेपंचदशोऽध्यायः १५ जनमेजयउवाच कुलेकस्यसमुत्पन्नाःक्षत्रियाहैहयाश्चये ब्रह्महत्यामनादृत्यनिजघ्नुर्भार्गवांश्चये १ वैरस्यकारणंतेषांकिंमेब्रूहिपितामह निमित्तेनविनाक्रोधंकथंकुर्वंतिसत्तमाः २ वैरंपुरोहितैःसार्द्धंकस्मात्तेषामजायत नाल्पहेतोर्हितद्वैरंक्षत्रियाणांभविष्यति ३ अन्यथाब्राह्मणान्पूज्यान्कथंजघ्नुरनागसः बाहुजाबलवंतोपि पापभीताःकथंनते ४

यित्वेत्यर्थः ६३ इतिश्रीदेवीभागवततिलकेषष्ठस्कंधेपंचदशोऽध्यायः १५ एकाधिकेश्चपंचाशत्सर्वैरथतुहैहयैः भार्गवानिहतालोभाद्ब्राह्मणाइतिकथ्यते १ पूर्वाध्यायांते हैहयाभार्गवान्पूर्वंधनलोभात्पुरोहितानितिश्रुत्वाराजापृच्छति कुलेकस्येति १ २ ३ अन्यथामहत्कारणाभावे बाहुजाःक्षत्रियाः ४ ७ ७ ७ ७

५ ६ पारीक्षितेइतिसंबोधनमार्षःप्रयोगः ७ ८ हरेरिवहरेरेवेत्यर्थः निपातानामनेकार्थत्वात् शाक्तःपराशक्तेरुपासकः ९ १० ११



स्वल्पेपराधेकोहन्याद्बाडवान्क्षत्रियर्षभः संदेहोमेमुनिश्रेष्ठकारणंवक्तुमर्हसि ५ सूतउवाच इतिपृष्टस्त-
दानेनराज्ञासत्यवतीसुतः उवाचपरमप्रीतःकथांसंस्मृत्यचेतसा ६ व्यासउवाच शृणुपरीक्षितेवार्तांक्ष
त्रियाणांपुरातनीं आश्चर्यकारिणींसम्यग्विदितांचपुरामया ७ कार्तवीर्येतिनाम्नाभूद्धैहयःपृथिवीपतिः
सहस्रबाहुर्बलवानर्जुनोधर्मतत्परः ८ दत्तात्रेयस्यशिष्योभूदवतारोहरेरिव सिद्धःसर्वार्थदःशाक्तोभृगूणां-
याज्यएवसः ९ यज्वापरमधर्मिष्ठःसदादानपरायणः ददौवित्तंभृगुभ्योसौकृत्वायज्ञाननेकशः १० धनि
नस्तेद्विजाजाताभृगवोनृपदानतः हयरत्नसमृद्ध्याढ्याःसंजाताःप्रथिताभुवि ११ स्वर्यातेनृपशार्दूले
कार्तवीर्यार्जुनेपुनः हैहयानिर्द्धनाजाताःकालेनमहतानृप १२ धनकार्यसमुत्पन्नेहैहयानांकदाचन या-
चितुंवैभिजग्मुस्तान्भृगूंस्तेहैहयान्नृप १३ विनयंक्षत्रियाःकृत्वाप्ययाचंतधनंबहु नददुस्तेतिलो
भार्त्तानास्तिनास्तीतिवादिनः १४ भूमौचनिदधुःकेचिद्भृगवोधनमुत्तमं ददौकेचिन्द्विजातिभ्योज्ञात्वाक्ष
त्रियतोभयं १५ कृत्वास्थानांतरेद्रव्यंब्राह्मणाभयविह्वलाः त्यक्त्वाश्रमान्ययुःसर्वेभृगवस्तृष्णयान्विताः १६
याज्यांश्चदुःखितान्दृष्ट्वानददुर्लोभमोहिताः पलायित्वागताःसर्वेगिरिदुर्गानुपाश्रिताः १७ ततस्तेहैहया
स्तानदुःखिताःकार्यगौरवात् भृगूणामाश्रमाञ्जग्मुर्द्रव्यार्थेक्षत्रियर्षभाः १८ भृगूंस्तुनिर्गतान्वीक्ष्यशू
न्यांस्त्यक्त्वागृहानथ चखनुर्भूतलंतेत्रद्रव्यार्थंहैहयाभृशं १९ खननाधिगतंवित्तंकेनचिद्भृगुवेश्मनि ददृशुःक्ष
त्रियाःसर्वेतद्वित्तंश्रमकर्शिताः २०

१२ १३ १४ १५ आश्रमान्गृहाणिययुः पर्वतादिषु १६ याज्यान्यजमानान् १७ १८ १९ खन-

तारवननकर्त्राकेनचित्पुरुषेण २० यत्रतत्रेति अन्येष्वपिस्थलेषुखननादुत्पन्नंभूरिद्रव्यमित्यर्थः २१ निर्भिद्यखनित्वेत्यर्थः २२ अति
चिन्वत्सुअतिशयेनान्वेषणंकुर्वत्सु निजघ्नुरिति युष्माकंनिकटेद्रव्येसतिनास्तिद्रव्यमितिभवद्भिः कथमुक्तमित्यपराधेनेत्यर्थः २३ २४

यत्रतत्रसमुत्पन्नंभूरिद्रव्यंमहीतलात् तदातेपार्श्वभागस्थब्राह्मणानांगृहाण्यपि २१ निर्भिद्यहैहयाद्र-
व्यंददृशुर्धनलिप्सया ब्राह्मणाश्चुक्रुशुःसर्वेभीताश्चशरणंगताः २२ अतिचिन्वत्सु विप्राणांभवनान्निसृ
तंबहु निजघ्नुस्तांच्छरैःकोपाद्द्विजांच्छरणागतान् २३ ययुस्तेगिरिदुर्गांश्चयत्रवैभृगवःस्थिताः आगर्भादनु
कृंततश्चेरुश्चैवमहीमिमां २४ प्राप्तान्प्राप्तान्भृगून्सर्वान्निजघ्नुर्निशितैःशरैः आबालवृद्धानपरानवमन्यच
पातकं २५ एवमुत्पाद्यमानेषुभार्गवेषुयतस्ततः हन्युर्गर्भांश्चनारीणांगृहीत्वाहैहयाभृशं २६ रुरुदुस्ताः
स्त्रियःकामंकुरर्यइवदुःखिताः गर्भाश्चकृंतितायासांक्षत्रियैःपापनिश्चयैः २७ अन्येप्याहुश्चतान्दृष्टान्मु
नयस्तीर्थवासिनः मुंचंतुक्षत्रियाःक्रोधंब्राह्मणेषुभयावहं २८ अयुक्तमेतदारब्धंभवद्भिःकर्मगर्हितं यं
द्गर्भान्भृगुपत्नीनांनिहन्युःक्षत्रियर्षभाः २९ अत्युग्रपुण्यपापानामिहैवफलमाप्नुयात् तस्माज्जुगुप्सितं
कर्मत्यक्तव्यंभूतिमिच्छता ३० तानाहुर्हैहयाःक्रुद्धामुनीनथदयापरान् भवंतःसाधवःसर्वेनार्थज्ञाःपाप
कर्मणां ३१ एभिर्हृतंधनंसर्वंपूर्वजानांमहात्मनां वंचयित्वाछलाभिज्ञैर्मणिपाटच्चौरैरिव ३२ एतेभ्यनार-
कादंभास्ताद्दशाबकवृत्तयः उत्पन्नेचमहाकार्येप्रार्थितावियेनते ३३ नददुःप्रार्थितंविप्राःपादस्वल्पमपि-
याचिताः नास्तीतिवादिनस्तस्मादुःखितान्वीक्ष्ययाजकान् ३४

२५ एवमुत्पाद्यमानेषुनश्यमानेषुब्राह्मणेषुपश्चाद्गर्भान्
हन्युरित्यर्थः २६ २७ २८ २९ ३० पापकारिणामर्थज्ञाअभिप्रायज्ञाभवंतोनेत्यर्थः ३१ पाटच्चौरैश्चौरैरिवेत्यर्थः ३२ ३३ पादस्वल्पमपीति एक

मुद्रिकायाः सपादमुद्रिकांदास्यामइतिपादद्दत्ध्येत्यर्थः याज्यकान् स्वार्थेकप्रत्ययोयाज्यानित्यर्थः ३४ ३५ ३६ ३७ ३८ ३९
४० ४१ ४२ ४३ ४४ ४५ कथंहैहयैर्धार्मिकैःस्वगुरवोहिंसिताइतियत्पृष्टंराज्ञातत्समाधानमाह लोभएवेत्यादिना



धनंप्राप्तंकार्तवीर्याद्भिक्षितंकेनहेतुना नकृताः क्रतवः किंतैर्दानंचार्थिषुभूरिशः ३५ नसंचितव्यंविप्रैस्तुध
नंक्वापिकदाचन यष्टव्यंविधिवद्देयंभोक्तव्यंचयथासुखं ३६ द्रव्येचौरभयंप्रोक्तंतथाराजभयंद्विजाः वन्हे-
र्भयंमहाघोरंतथाधूर्तभयंमहत् ३७ येनकेनाप्युपायेन धनंत्यजतिरक्षकं अथवासौमृतोयातिद्रव्यंत्यक्त्वा
त्वसद्गतिं ३८ पादेद्दन्द्यातथास्माभिः प्रार्थितंविनयान्वितैः तथापिलोभसंदिग्धैर्नदत्तंनःपुरोहितैः ३९
दानंभोगस्तथानाशोधनस्यगतिरीदृशी दानभोगौकृतीनांचनाशःपापात्मनांकिल ४० नदातानचयोभो
क्ताकृपणोगुप्तितत्परः राज्ञासौसर्वथादंड्योसंचकोदुःखभाङ्नरः ४१ तस्माद्वयंगुरूनेतान्वंचकान्
ब्राह्मणाधमान् हंतुंसमुद्यतांसर्वेनक्रोद्धव्यंमहात्मभिः ४२ व्यासउवाच इत्युक्त्वाहेतुमद्वाक्यंतानाश्वा
स्यमुनीनथ विचेरुश्चविचिन्वानाभृगुदारानुनेकशः ४३ भयार्ताभृगुपत्न्यस्तुहिमवंतंधराधरं प्रपेदिरे
रुदत्यश्चवेपमानाःकृशाभृशं ४४ एवंतेहैहयैर्विप्राःपीडिताधनकामुकैः निहताश्चयथाकामंसंर-
ब्धैःपापकर्मभिः ४५ लोभएवमनुष्याणांदेहसंस्थोमहारिपुः सर्वदुःखाकरःप्रोक्तोदुःखदःप्राणना
शकः ४६ सर्वपापस्यमूलंहि सर्वदातृष्णयान्वितः विरोधकृत्त्रिवर्णानांसर्वार्तिःकारणंतथा ४७ लो-
भात्त्यजतिधर्मंवैकुलधर्मंतथैवहि मातरंभ्रातरंहंतिपितरंबांधवंतथा ४८ गुरुंमित्रंतथाभार्यांपुत्रंचभगिनींत-
था लोभाविष्टोनकिंकुर्यादकृत्यंपापमोहितः ४९

४६ ४७ ४८ ४९

तथाक्रोधात्कामादहंकारात्किंन कुर्यादित्यन्वयः ५० ५१ इतिश्रीदेवीभागवततिलके षष्ठस्कंधेषोडशोध्यायः १६ एकोनस-
प्ततिश्लोकैः श्रीदेवीरूपयाततः भृगुवंशास्थितिंप्रोच्यहैहयोत्पत्तिरुच्यते १ भृगूणांपत्न्योगिरिदुर्गादिषुगताइतिपूर्वाध्यायेउक्तं

क्रोधात्कामादहंकाराल्लोभएवमहारिपुः प्राणांस्त्यजतिलोभेनकिंपुनस्यादनावृतं ५० "पूर्वजास्तेमहारा
जधर्मज्ञाःसत्पथेस्थिताः पांडवाःकौरवाश्चैवलोभेननिधनंगताः १ यत्रभीष्मश्चद्रोणश्चकृपःकर्णश्चबाल्हि
कः भीमसेनोधर्मपुत्रस्तथैवार्जुनकेशवौ २ तथापियुद्धमत्युग्रंकृतंतैश्चपरस्परं कुटुंबकदनंभूरिकृतं
लोभातुरैरिह ३ हतोद्रोणोहतोभीष्मस्तथैवपांडवात्मजाः भ्रातरःपितरःपुत्राःसर्वेवैनिहताःरणे ॥ त-
स्माल्लोभाभिभूतस्तुकिंनकुर्यान्नरःकिल हैहयैर्निहताःसर्वेभृगवःपापबुद्धिभिः ५१ इतिश्रीदेवीभागवते
महापुराणेषष्ठस्कंधेषोडशोऽध्यायः १६ जनमेजयउवाच कथंताश्चस्त्रियःसर्वाभृगूणांदुःखसागरात्
मुक्तावंशःपुनस्तेषांब्राह्मणानांस्थिरोभवत् १ हैहयैःकिंकृतंकार्यंहत्वाताऩ्ब्राह्मणानपि क्षत्रियैर्लोभसं
युक्तैःपापाचारैर्वदस्वतत् २ नतृप्तिरस्तिमेब्रह्मन्पिबतस्तेकथामृतं पावनंसुखदंनृणांपरलोकेफलप्रदं ३
व्यासउवाच शृणुराजन्प्रवक्ष्यामिकथांपापप्रणाशिनीं यथास्त्रियस्तुतामुक्तादुःखात्तस्माद्दुरत्ययात् ४
भृगुपत्न्योयदाराजन्हिमवंतंगिरिंगताः भयत्रस्तातिभम्राशाहैहयैःपीडिताभृशं ५ गौरींतत्रतुसंस्थाप्य
मृन्मयींसरितस्तटे उपोषणपराश्चक्रुर्निश्चयंमरणंप्रति ६ स्वप्नेगत्वातदादेवीप्राहताःप्रमदोत्तमाः युष्मासु
मध्येकस्याश्चिद्भविताचोरुजःपुमान् ७

तदुत्तरंजातंवृत्तंराजापृच्छति कथंताश्चेति कथंमुक्ताइत्यन्वयः किंचतेषां
ब्राह्मणानामनंतरंवंशःकथंस्थिरोभवत्अचलितइत्यर्थः १ किंच हैहयैरप्यनंतरंकिं कृतमितिपृच्छति हैहयैरिति २ ३ ४ ५ ६ ७

योयुष्मासुमध्येकस्याश्चित्स्त्रियःऊरुंभित्वापुमान्भविष्यतिसमदंशोभवतीतिभगवतीप्राहेत्याह मदंशइति शक्तिसंभिन्नोमच्छ-



मदंशशक्तिसंभिन्नःसवःकार्यंविधास्यति इत्यादिश्यपरांबासापश्चाद‌ंतर्हिताभवत् ८ जागृतास्तुततःसर्वा
मुदमापुर्वरांगनाः काचित्तासांभयोद्विग्नाकामिनीचतुराभृशं ९ दधारचोरुणेकेनगर्भंसाकुलसंन्दूये पला
यनपराहृष्टाक्षत्रियैर्ब्राह्मणीयदा १० विव्हलातेजसायुक्तातदातेदुद्रुवुर्भृशं गृह्यतांवध्यतांनारीसगर्भा-
यातिसत्वरा ११ इतिब्रुवंतःसंप्राप्ताःकामिनींखड्गपाणयः साभयार्तातुतान्दृष्ट्वारुरोदसमुपागतान् १२
गर्भस्यरक्षणार्थंसाचुक्रोशातिभयातुरा रुदतींमातरंश्रुत्वादीनांत्राणविवर्जितां १३ निराधारांक्रंदमा-
नांक्षत्रियैर्भृशतापितां गृहीतामिवसिंहेनसगर्भांहरिणींतथा १४ साश्रुनेत्रांवेपमानांसंक्रुध्य बालक-
स्तदा भित्वोरुंनिर्जगामाशुगर्भःसूर्यइवापरः १५ मुष्णन्दृष्टीःक्षत्रियाणांतेजसाबालकःशुभः दर्शना-
त्बालकस्याशुसर्वेजाताविलोचनाः १६ बभ्रमुर्गिरिदुर्गेषुजन्मांधाइवक्षत्रियाः चिंतितंमनसासर्वैःकि
मेतदितिसांप्रतं १७ सर्वेचक्षुर्विहीनायज्जाताःस्मबालदर्शनात् ब्राह्मण्यास्तुप्रभावोयंसतीव्रतबलंम
हत् १८ क्षणाद्धामोघसंकल्पाःकिंकरिष्यंतिदुःखिताः इतिसंचिंत्यमनसानेत्रहीनानिराश्रयाः १९
ब्राह्मणींशरणंजग्मुर्हैहयागतचेतसः प्रणेमुस्तांभयत्रस्ताःकृतांजलिपुटाश्चते २० ऊचुश्चैनांभयोद्वि
ग्नांदृष्ट्यर्थंक्षत्रियर्षभाः प्रसीदसुभगेमातःसेवकास्तेवयंकिल २१

क्तियुक्तइत्यर्थः ८ ९ दधारेति इयमपि
शक्तिस्तस्याःश्रीभगवत्यनुग्रहादेवलब्धेतिबोध्यं १० ११ १२ १३ १४ १५ मुष्णन्नपहरन्पराशक्त्यंशत्वात्विलोच-
नाअंधाः १६ सांप्रतमस्मिन्कालेकिमेतदित्यर्थः १७ १८ १९ २० २१ ७

२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ हेपुत्रकाहेराजानः ३३ ३४ गर्भस्थेनानेनेत्यर्थः ३५ कुतःप्रतापोयंबा-

कृतापराधारंभोरुक्षत्रियाःपापबुद्धयः दर्शनात्तवतन्वंगिजाताःसर्वेविलोचनाः २२ मुखंतेनैवपश्यामोजन्मांधाइव
भामिनि अद्भुतंतेतपोवीर्यंकिंकुर्मःपापकारिणः २३ शरणंतेप्रपन्नाःस्मदेहिचक्षूंषिमानदे अंधत्वंमरणादुग्रंकृपां
कर्तुंत्वमर्हसि २४ पुनर्दृष्टिप्रदानेनसेवकान्क्षत्रियान्कुरु उपरम्यचगच्छेमसहिताःपापकर्मणः २५ अतःपरं
नकर्तव्यमीदृशंकर्मकर्हिचित् भार्गवाणांतुसर्वेषांसेवकाःस्मवयंकिल २६ अज्ञानाद्यत्कृतंपापंक्षंतव्यंतत्त्वया
धुना वैरंनातःपरंक्वापिभृगुभिःक्षत्रियैःसह २७ कर्त्तव्यंशपथैःसम्यग्वर्तितव्यंतुहेहयैः सपुत्राभवसुश्रोणि
प्रणताःस्मवयंचते २८ प्रसादंकुरुकल्याणिनद्विष्यामःकदाचन व्यासउवाच इतितेषांवचःश्रुत्वाब्राह्मणीविस्मया
न्विताऽऽश्वतानाहप्रणतान्दुःस्थानाश्वास्यगतलोचनान् गृहीतानमयादृष्टिर्युष्माकंक्षत्रियाःकिल ३० नाहंरुषा-
न्वितासत्यंकारणंशृणुताद्ययत् अयंचभार्गवोनूनमूरुजःकुपितोद्यवः ३१ चक्षूंषितेनयुष्माकंस्तंभितानिरुषा
नृपाः स्वबंधून्निहतान्ज्ञात्वागर्भस्थानपिक्षत्रियैः ३२ अनागसोधर्मपरांस्तापसान्धनकाम्यया गर्भानपिय
दायूयंभृगूणांघ्नतपुत्रकाः ३३ तदायमूरुणागर्भोमयावर्षशतंधृतः षडंगश्चाखिलोवेदोगृहीतोनेनचांजसा
३४ गर्भस्थेनापिबालेनभृगुवंशविवृद्धये सोपिपितृवधान्नूनंक्रोधेद्धोहंतुमिच्छति ३५ भगवत्याःप्रसादेन
जातोयंममबालकः तेजसायस्यदिव्येनचक्षूंषिमुषितानिवः ३६ तस्मादौर्वंसुतंमेद्ययाचध्वंविनयान्विताः
प्रणिपातेनतुष्टोसौदृष्टिंवःप्रतिमोक्ष्यति ३७ व्यासउवाच तच्छ्रुत्वावचनंतस्याहेहयास्तुष्टुवुश्चतं प्रणेमुर्विनयो
पेताऊरुजंमुनिसत्तमं ३८

लस्येतिचेत्तत्राह भगवत्याइति ३६ औौर्वमूरुभवं ३७ ३८ ७ ७ ७

ममाख्यानकृतंवचः ममाख्यानेनकृतंलब्धमिदंवक्ष्यमाणंवचनमित्यर्थः तद्वैराग्यार्थेपठध्वमित्यभिप्रायः ३९ किंतद्वचनंतदाह अवश्यंभावि



सुसंतुष्टोबभूवाथतानुवाचविचक्षुषः गच्छध्वंस्वगृहान्भूपाममाख्यानकृतंवचः ३९ अवश्यंभाविभावास्तेभवं
तिदेवनिर्मिताः नात्रशोकस्तुकर्तव्यःपुरुषेणविजानता ४० पूर्ववद्दृषयःसर्वेप्राप्नुवंतुयथासुखं व्रजंतुवि
गतक्रोधाभवनानियथासुखं ४१ इतितेनसमादिष्टाहैहयाःप्राप्तलोचनाः और्वमामंत्र्यजग्मुस्तेसदनानियथारु
चि ४२ ब्राह्मणीतंसुतंदिव्यंगृहीत्वास्वाश्रमंगता पालयामासभूपालतेजस्विनमतंद्रिता ४३ एवंतेकथितंरा
जन्भृगूणांतुविनाशनं लोभाविष्टैःक्षत्रियैश्चयत्कृतंपातकंकिल ४४ जनमेजयउवाच श्रुतंमयामहत्कर्म
क्षत्रियाणांचदारुणं कारणंलोभएवात्रदुःखदश्चोभयोस्तुसः ४५ किंचित्प्रष्टुमिहेच्छामिसंशयंवासवीसुत हैं
हयास्तेकथंनाम्नाख्याताभुविनृपात्मजाः ४६ यदोस्तुयादवाःकामंभरताद्भारतास्तथा हैहयःकोपिराजाभूत्ते
षांवंशेप्रतिष्ठिताः ४७ तदहंश्रोतुमिच्छामिकारणंकरुणानिधे हैहयास्तेकथंजाताःक्षत्रियाःकेनकर्मणा ४८
व्यासउवाच हैहयानांसमुत्पत्तिंशृणुभूपसविस्तरां पुरातनांसुपुण्यांचकथांपापप्रणाशिनीं ४९ कस्मिंश्चित्सम
येभूपसूर्यपुत्रःसुशोभनः रेवंतनामाविख्यातोरूपवानमितप्रभः ५० उच्चैःश्रवसमारुह्यहयरत्नंमनोहरं ज
गामविष्णुसदनंवैकुंठंभास्करात्मजः ५१ भगवद्दर्शनाकांक्षीहयारूढोयदागतः हयस्थस्तुयदादृष्टोलक्ष्म्या
सौरविनंदनः ५२ रमावीक्ष्यहयंदिव्यंभ्रातरंसागरोद्भवं रूपेणविस्मितातस्यतस्थौस्तंभितलोचना ५३ भ
गवानपितंदृष्ट्वाहयारूढंमनोहरं आगच्छंतंरमांविष्णुःपप्रच्छप्रणयात्प्रभुः ५४ ७ ७ ७



भावाइति ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४

स्मरतेजस्तनुःस्मरवत्तेजोयस्याः सातनुर्यस्येत्यर्थः ५५ ५६ ५७ हरिमश्वंदृष्ट्वा ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७

कोयमायातिचार्वंगिहयारूढइवापरः स्मरतेजस्तनुःकांतेमोहयन्भुवनत्रयं ५५ प्रेक्ष्यमाणानदालक्ष्मीस्त-
च्चित्तादैवयोगतः नोवाचवचनंकिंचित्स्पृष्टापिचपुनःपुनः ५६ व्यासउवाच अश्वासक्तमतिंवीक्ष्यकामिनीम-
तिमोहितां पश्यंतींपरमप्रेम्णाचंचलाक्षींचचंचला ५७ तामाहभगवान्क्रुद्धःकिंपश्यसिसुलोचने मोहिता-
चहरिंदृष्ट्वापृष्टानैवाभिभाषसे ५८ सर्वत्ररमसेयस्माद्रमातस्माद्भविष्यसि चंचलत्वाच्चलेत्येवंसर्वथैवन
संशयः ५९ प्राकृताचयथानारीनूनंभवतिचंचला तथात्वमपिकल्याणिस्थिरानैवकदाचन ६० त्वंहयंमत्स-
मीपस्थासमीक्ष्ययदिमोहिता वडवाभववामोरुमर्त्यलोकेतिदारुणे ६१ इतिशप्तारमादेवीहरिणादैवयोगतः
रुरोदवेपमानासाभयभीतातिदुःखिता ६२ तमुवाचरमानाथंशंकितात्वारुहासिनी प्रणम्यशिरसादेवंस्वप
तिंविनयान्विता ६३ देवदेवजगन्नाथकरुणाकरकेशव स्वल्पेऽपराधेगोविंदकस्माच्छापंददासिमे ६४ न
कदाचिन्मयादृष्टःक्रोधस्तेहीदृशःप्रभो क्वगतस्तेमयिस्नेहःसहजोनतुनश्वरः ६५ वज्रपातस्तुशत्रौवैकर्त्त
व्योनसुहृज्जने सदाहंवरयोग्यातेशापयोग्याकथंकृता ६६ प्राणांस्त्यक्ष्यामिगोविंदपश्यतोऽद्यतवाग्रतः
कथंजीवेत्वयाहीनाविरहानलतापिता ६७ प्रसादंकुरुदेवेशशापादस्मात्सुदारुणात् कदामुक्तासमीपंते
प्राप्नोमिसुखदंविभो ६८ हरिरुवाच यदातेभविताप्रुत्रःपृथिव्यांमत्समःप्रिये तदामांप्राप्यतन्वंगिसुखिता
त्वंभविष्यसि ६९ इतिश्रीदेवीभागवतेम०पु०षष्ठस्कंधेसप्तदशोऽध्यायः १७ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

६८ ६९ इतिश्रीदेवीभागवततिलकेषष्ठस्कंधेसप्तदशोऽध्यायः १७ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

द्विषष्टिश्लोकवर्यैस्तुहैहयस्यकथोच्यते भगवत्याः प्रसादेनवंशोयमितिकीर्त्यते १ भगवनालक्ष्म्यांशप्तायामनंतरंकिं वृत्तंजातामिति



जनमेजयउवाच इतिशप्ताभगवतासिंधुजाकालयोगतः कथंसावडवाजातारेवंतेनचकिंकृतं १ कस्मिन्देशे
स्थितादेवीवडवारूपधारिणी संस्थितैकाकिनीबालापरोषितपतिकायथा २ कालंकियंतमायुष्मन्वियुक्ता
पतिनारमा संस्थिताविजनेरण्येकिंकृतंचतयापुनः ३ समागमंकदाप्राप्तावासुदेवस्यसिंधुजा पुत्रःकथंत-
याप्राप्तोनारायणवियुक्तया ४ एत दृत्तांतमार्यैशकथयस्वसविस्तरं श्रोतुकामोस्मिविप्रेंद्रकथाख्यानम
नुत्तमं ५ सूतउवाच इतिपृष्टस्तदाव्यासःपरिक्षित्तनयेनवै कथयामासभोविप्राःकथामेतांसुविस्तरां ६
व्यासउवाच शृणुराजन्प्रवक्ष्यामिकथांपौराणिकींशुभां पावनींसुखदांकर्णेविशदाक्षरसंयुतां ७ रेवंतस्तु
रमांदृष्ट्वाशप्तांदेवेनकामिनीं भयार्तःप्रययौदूरात्प्रणम्यजगतांपतिं ८ पितुःसकाशंत्वरितोवीक्ष्यकोपंजगे
त्पतेः निवेदयामासकथांभास्करायसशापजां ९ दुःखितासारमादेवीप्रणम्यजगदीश्वरं आज्ञप्तामानुषंलो
कंप्राप्ताकमललोचना १० सूर्यपत्न्यातपस्तप्तंयत्रपूर्वंसुदारुणं तत्रैवसायययावाशुवडवारूपधारिणी ११ का
लिंदीतमसासंगेसुपर्णाक्षस्यचोत्तरे सर्वकामप्रदेस्थानेसुरम्यवनमंडिते १२ तत्रस्थितामहादेवंशंकरंवां-
छितप्रदं दध्यौचैकेनमनसाशूलिनंचंद्रशेखरं १३ पंचाननंदशभुजंगौरीदेहार्द्धधारिणं कर्पूरगौरदेहाभं-
नीलकंठंत्रिलोचनं १४ व्याघ्राजिनधरंदेवंगजचर्मोत्तरीयकं कपालमालाकलितंनागयज्ञोपवीतिनं १५

पृच्छति इतिशप्तेति १ २ ३ ४ ५ ६ कर्णेकर्णयोरित्यर्थः ७ ८ ९ रेवंतकथांसमाप्यरमायाःकथामाह दुःखितेति १० सूर्य
पत्न्याछायया ११ तदेवस्थलमाह कालिंदीतमसेति तमसानाम्नीनदी १२ १३ १४ १५ ७

१६ परंदेवंमहादेवं १७ १८ अश्विनीवडवा १९ २० २१ २२ यादृशस्तादृशइति यादृशोस्तिसाधुर्वाऽसाधुर्वातादृशः सेव्य

सागरस्यसुताकृत्वाहयीरूपंमनोहरं तस्मिंस्तीर्थेरमादेवी चकारदुश्चरंतपः १६ ध्यायमानापरंदेवंवैराग्यंसमुपाश्रिता दिव्यंवर्षसहस्रंतु गतंतत्रमहीपते १७ ततस्तुष्टोमहादेवोवृषारूढस्त्रिलोचनः प्रत्यक्षोभून्महेशानः पार्वतीसहितः प्रभुः १८ तत्रेत्यसगुणःशंभुस्तामाहहरिवल्लभां तपस्यंतींमहाभागामश्विनीरूपधारिणीं १९ किंतपस्यसिकल्याणिजगन्मातर्वदस्वमे सर्वार्थदःपतिस्तेस्ति सर्वलोकविधायकः २० हरिंत्यक्त्वाद्यमांकस्मात्स्तौषिदेविजगत्पतिं वासुदेवंजगन्नाथंभुक्तिमुक्तिप्रदायकं २१ वेदोक्तंवचनंकार्यंनारीणांदेवताप-तिः नान्यस्मिन्सर्वथाभावःकर्तव्यःकर्हिचित्क्वचित् २२ पतिशुश्रूषणंस्त्रीणांधर्मएवसनातनः यादृशस्तादृशःसेव्यःसर्वथाशुभकाम्यया २३ नारायणस्तुसर्वेषांसेव्योयोग्यःसदैवहि तंत्यक्त्वादेवदेवेशंकिंमांध्याय-सिसिंधुजे २४ लक्ष्मीरुवाच आशुतोषमहेशानशप्ताहंपतिनाशिव मांसमुद्धरदेवेशशापादस्माद्दयानिधे २५ तदोक्तंहरिणाशंभोशापानुग्रहकारणं विज्ञप्तेनमयाकामंदयायुक्तेनविष्णुना २६ यदातेभविता पुत्रस्तदाशापस्यमोक्षणं भविष्यतिचवैकुंठवासस्तेकमलालये २७ इत्युक्त्वाहंतपस्तप्तुमागतास्मितपोव-ने आराधितोमयादेवत्वंसर्वार्थप्रदायकः २८ पतिसंगंविनापुत्रंदेवदेवलभेकथं सतुतिष्ठतिवैकुंठेत्य-क्त्वादीनामनागसं २९ वरंमेदेहिदेवेशयदितुष्टोसिशंकर तवतस्यद्विधाभावोनास्तिनूनंकदाचन ३०

इत्यर्थः २३ २४ आशुतोषशीघ्रंप्रसादकर २५ तदोक्तमिति यदाशापोदत्तस्तदा मयाप्रार्थितेनविष्णुनोक्तमित्यर्थः

२६ २७ २८ वामांस्त्रियमनागसमनपराधिनीं २९ ३० ६५ ७

यस्त्वंसोसौविष्णुः योसौविष्णुः सत्वमित्यर्थः ३१ अन्यथायुवयोः शिवविष्ण्वोर्भेदसत्त्वे ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४०



मयैतद्गिरिजाकांतज्ञातंपत्युःपुरोहर यस्त्वंसोऽसौपुनर्योसौसत्वंनास्त्यत्रसंशयः ३१ एकत्वंचमयाज्ञात्वाम-यातेस्मरणंकृतं अन्यथाममदोषस्त्वामाश्रयंत्याभवेच्छिव ३२ शिवउवाच कथंज्ञातस्त्वयादेविममतस्यचसु-दरि ऐक्यभावोहरेर्नूनंसत्यमेवदसिंधुजे ३३ एकत्वंचनजानंतिदेवाश्चमुनयस्तथा ज्ञानिनोवेदतत्त्वज्ञाः कुतर्कोपहताःकिल ३४ मद्भक्तावासुदेवस्यनिंदकाबहवस्तथा विष्णुभक्तास्तुबहवोममनिंदापरायणाः ३५ भवंतिकालभेदेनकलौदेविविशेषतः कथंज्ञातस्त्वयाभद्रेदुर्ज्ञेयोत्यकृतात्मभिः ३६ सर्वथालैक्यभावस्तु हरेर्ममचदुर्लभः व्यासउवाच इतिसाशंभुनापृष्टातुष्टेनहरिवल्लभा ३७ वृत्तांतंतस्यविज्ञातंप्रवक्तुमुपचक्र मे शिवंप्रतिरमातत्रप्रसन्नवदनाभृशं ३८ लक्ष्मीरुवाच एकदादेवदेवेशविष्णुर्ध्यानपरोरहः दृष्टोम-यातपःकुर्वन्पद्मासनगतोयदा ३९ तदाहंविस्मितादेवंतमपृच्छंपतिंकिल प्रबुद्धंसुप्रसन्नंचज्ञात्वावि नयपूर्वकं ४० देवदेवजगन्नाथयदाहंनिर्गतार्णवात् मथ्यमानात्सुरैर्दैत्यैःसर्वैर्ब्रह्मादिभिःप्रभो ४१ वी क्षिताश्चमयासर्वेपतिकामतयातदा वृतस्त्वंसर्वदेवेभ्यःश्रेष्ठोसीतिविनिश्चयात् ४२ त्वंकंध्यायसिसर्वे-शसंशयोयंमहान्मम प्रियोसिकैटभारेमेकथयस्वमनोगतं ४३ विष्णुरुवाच शृणुकांतेप्रवक्ष्यामियंध्या यामिसुरोत्तमं आशुतोषंमहेशानंगिरिजावल्लभंहृदि ४४ कदाचिद्देवदेवोमांध्यायत्यमितविक्रमः ध्यायाम्यहंचदेवेशंशंकरंत्रिपुरांतकं ४५ शिवस्याहंप्रियःप्राणःशंकरस्तुतथामम उभयोरंतरंनास्तिमि थःसंसक्तचेतसोः ४६

४१ ४२ ४३ ४४ ४५ ४६

नरकंयांतितेनूनंयेद्विषंतिमहेश्वरं भक्तामम विशालाक्षिसत्यमेतद्ब्रवीम्यहं ४७ इत्युक्तंदेवदेवेनविष्णुना
प्रभविष्णुना एकांतेकिलपृष्टेनमयाशैलसुताप्रिय ४८ तस्मात्त्वांवल्लभांविष्णोर्ज्ञात्वाध्यानवतीत्यहं तथा-
कुरुमहेशानयथामेप्रियसंगमः ४९ व्यासउवाच इतिश्रियोवचःश्रुत्वाप्रत्युवाचमहेश्वरः तामाश्वास्यप्रि
यैर्वाक्यैर्यथार्थवाक्यकोविदः ५० स्वस्थाभवपृथुश्रोणितुष्टोहंतपसातव समागमस्तेपतिनाभविष्यतिन
संशयः ५१ अत्रैवहयरूपेणभगवाञ्जगदीश्वरः आगमिष्यतितेकामंपूर्णंकर्तुंमयेरितः ५२ तथाहंप्रेर
यिष्यामितंदेवंमधुसूदनं यथासौहयरूपेणत्वामेष्यतिमदातुरः ५३ पुत्रस्तेभवितासुभ्रुनारायणसमःक्षि
तौ भविष्यतिसभूपालःसर्वलोकनमस्कृतः ५४ सुतंप्राप्यमहाभागेत्वंतेनपतिनासह गंतासिदिविवै-
कुंठंप्रियातस्यभविष्यसि ५५ एकवीरेतिनाम्नासौख्यातिंयास्यतितेसुतः तस्मात्तुहैहयोवंशोभुविवि
स्तारमेष्यति ५६ परंतुविस्मृतासित्वंत्वद्धृदिस्थांपरमेश्वरीं मदांधामत्तचित्ताचतेनतेफलमीदृशं ५७ अत-
स्तद्दोषशांत्यर्थंत्वद्धृदिस्थांपरदेवतां शरणंयाहिसर्वात्मभावेनजलधेःसुते ५८ अन्यथातवचित्तंतुकथंग-
च्छेद्धयोत्तमे व्यासउवाच इतिदत्त्वावरंदेव्यैभगवान्भैलजापतिः ५९ अंतर्धानंगतःसाक्षाद्रुमयासहि-
तःशिवः सापितत्रैवचार्वंगीसंस्थिताकमलासना ६० ध्यायंतीचरणांभोजंदेव्याःपरमशोभनं देवासुरशिरोरत्न
निघृष्टनखमंडलं ६१ परंत्वेतत्कार्यसिद्ध्यर्थमहमेकंरहस्यंवदामितच्छृण्वित्याह परंतु विस्मृतासित्वमिति ५७ ५८ अन्यथेति यदि-
सच्चिदानंदरूपिण्यांभगवत्यांतवचित्तमासक्तंस्यात्तर्हिहयोत्तमेसूर्यस्याश्वेकथंचित्तंगतंस्यात्तस्माद्भगवत्यांतवचित्तस्यासक्तिर्नास्तीत्यर्थः ५९ ६० निघृ

ष्टनखमंडलंचरणांभोजमित्यर्थः ६१ ६२ इति॰दे॰भा॰टी॰ षष्ठस्कंधे अष्टादशोऽध्यायः १८ पंचाधिकैश्च पंचाशत्पद्यैरथ हरेर नात् अभिन्याभभ·



प्रेमगद्गदयावाचातुष्टावचमुहुर्मुहुः प्रतीक्ष्यमाणाभर्तारंहयरूपधरंहरिं ६२ इतिश्रीदेवीभा॰ म॰ षष्ठस्कंधेऽष्टादशोऽध्यायः १८ व्यासउ॰ तस्यैदत्त्वावरंशंभुः कैलासंत्वरितोययौ रम्यंदेवगणैर्जुष्टमप्सरोभिश्चमंडितं १ तत्रगत्वा चित्ररूपंगणंकार्यविशारदं प्रेषयामासवैकुंठेलक्ष्मीकार्यार्थसिद्धये २ शिवउ॰ चित्ररूपहरिंगत्वाब्रूहित्वंवचनान्मम यथासौदुःखितांपत्नींविशोकांचकरिष्यति ३ इत्युक्तश्चित्ररूपोथनिर्जगामत्वरान्वितः वैकुंठंपरमंस्थानंवैष्णवैश्चगणैर्वृतं ४ नानाद्रुमगणाकीर्णवापीशतविराजितं संजुष्टंहंसकारंडमयूरशुककोकिलैः ५ उच्चप्रासादसंयुक्तंपताकाभिरलंकृतं नृत्यगीतकलापूर्णमंदारद्रुमसंयुतं ६ बकुलाशोकतिलकचंपकालिविमंडितं कूजितैर्विहगानांतुकर्णाल्हादकरैर्युतं ७ संवीक्ष्यभवनंविष्णोर्द्वास्थौप्राहप्रणम्यच जयविजयनामानौवेत्रपाणीस्थितावुभौ ८ चित्ररूपउवाच भोनिवेदयतांशीघ्रंहरयेपरमात्मने दूतंप्राप्तंहरस्यात्रप्रेरितंशूलपाणिना ९ तच्छ्रुत्वावचनंतस्यजयःपरमबुद्धिमान् गत्वाहरिंप्रणम्याहकृतांजलिपुटःपुरः १० देवदेवरमाकांतकरुणाकरकेशव द्वारितिष्ठतिदूतोत्रशंकरस्यसमागतः ११ आज्ञापयप्रवेष्टव्योनवेतिगरुडध्वज चित्ररूपधरोप्यस्तिनजानेकार्यगौरवं १२ इत्याकर्ण्यहरिःप्राहजयंप्रज्ञातकारणः प्रवेशयात्ररुद्रस्यभृत्यंसमयसंस्थितं १३ इत्याकर्ण्यजयस्तूर्णंगत्वातंपरमाद्भुतं एहीत्याकारयामासजयःशंकरसेवकं १४ प्रवेशितोजयेनाथचित्ररूपस्तथाकृतिः प्रणम्यदंडवद्विष्णुंकृतांजलिपुटःस्थितः १५

वत्पुत्रइतिसम्यगिहोच्यते १ शंभुवरदानोत्तरंजातंवृत्तंव्यासआह तस्यै दत्त्वेति १ २ ३ ४ ५ ६ चंपकालिश्चंपकपंक्तिः ७ ८ ९ १० ११ १२ प्रज्ञातकारणः सर्वज्ञत्वात् १३ १४ ७ ७ ७

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ अरिमंडलेशत्रुमंडलेनिंदितमित्यर्थः

दृष्ट्वातंविस्मयंप्राप्भगवान्गारुडध्वजः चित्ररूपधरंशंभोःसेवकंविनयान्वितं १६ पप्रच्छतंस्मितंकृत्वाचित्ररूपं
रमापतिः कुशलंदेवदेवस्यसकुटुंबस्यचानघ १७ कस्मात्त्वंप्रेषितोस्यत्रब्रूहिकार्यंहरस्यकिं अथवादेवतानांच
किंचित्कार्यंसमुत्थितं १८ दूतउवाच किमज्ञातंतवास्तीहसंसारेगरुडध्वज वर्तमानंत्रिकालज्ञयदहंप्रब्रवीमिवै
१९ प्रेषितोस्मिभवेनात्रविज्ञप्तुंत्वांजनार्दन हरस्यवचनाद्वाक्यंप्रब्रवीमित्वयिप्रभो २० तेनोक्तमेतद्देवेशभार्यातै
कमलालया तपस्तपतिकालिंदीतमसासंगमेविभो २१ हयीरूपधरादेवीसर्वार्थसिद्धिदायिनी ध्यातुंयोग्यामरग
णैर्मानवैर्यक्षकिन्नरैः २२ विनातयानरःकोपिसुखभागीभवेद्भुवि तांत्यक्त्वापुंडरीकाक्षप्राप्नोषिकिंसुखंहरे २३
दुर्बलोपिस्त्रियंयातिनिर्धनोपिजगत्पते विनापराधंचविभोकिंत्यक्ताजगदीश्वरी २४ दुःखंप्राप्नोतिसंसारे
यस्यभार्याजगद्गुरो धिक्तस्यजीवितंलोकेनिंदितंत्वरिमंडले २५ सकामारिपवस्तेघदृष्ट्वातांदुःखितांभृशं
त्वांवियुक्तंचरमयाहसिष्यंतिदिवानिशं २६ रमांरमयदेवेशत्वदुत्संगगतांकुरु सर्वलक्षणसंपन्नांसुशीलां-
चसुरूपिणीं २७ सुखितोभवतांप्राप्यवल्लभांचारुहासिनीं कांताविरहजंदुःखंस्मराम्यहमनातुरः २८
ममभार्यामृताविष्णोदक्षयज्ञेसतीयदा तदाहंदुःसहंदुःखंभुक्तवानंबुजेक्षण २९ संसारेस्मिन्नरःकोपिमा
भून्मत्सदृशोपरः मनसाकरवंशोकंतस्याविरहपीडितः ३० कालेनमहताप्राप्तामयागिरिसुतापुनः तपस्त
प्त्वातिदुःसाध्यंदग्ध्वाकामंरुषाविभो ३१ हरेकिंसुखमापन्नंत्वयासंत्यज्यकामिनीं एकाकीतिष्ठताकालंसहस्र
वत्सरात्मकं ३२

२५ दुःस्थितांदुःखितामित्यर्थः रमयावियुक्तंत्वामित्यन्वयः २६ २७ स्मराम्यहमितिशिवोक्तिः २८ २९ ३० ३१
३२

३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० वडवायाइदंवाडवं ४१ ४२ ४३ ४४ सदयंममममनः सुतंत्यक्त्वागंतुंक



गत्वाश्वास्यमहाभागांसमानयनिजालयं माभूत्कोपीहसंसारेविमुक्तोरमयातया ३३ कृत्वातुरगरूपंत्वंभजना
त्कमलालयां उत्पाद्यपुत्रमायुष्मंस्तामानयशुचिस्मितां ३४ व्यासउवाच हरिराकर्ण्यतद्वाक्यंचित्ररूपस्यभा
रत तथेत्युक्त्वातुतंदूतंप्रेषयामासशंकरं ३५ गतेदूतेथभगवान्वैकुंठात्कामसंयुतः जगामधृत्वातत्राशुवा
जिरूपंमनोहरं ३६ यत्रसावडवारूपंकृत्वातपतिसिंधुजा विष्णुस्तंदेशमासाद्यतामपश्यन्हयींस्थितां ३७
सापितंवीक्ष्यगोविंदंहयरूपधरंपतिं ज्ञात्वावीक्ष्यस्थितासाध्वीविस्मितासाश्रुलोचना ३८ तयोस्तुसंगमस्तत्र
प्रवृत्तोमन्मथार्त्तयोः कालिंदीतमसासंगेपावनेलोकविश्रुते ३९ सगर्भासातदाजातावडवाहरिवल्लभा सुषुवे
सुंदरंबालंतत्रैवसुगुणोत्तरं ४० तामाहभगवान्वाक्यंप्रहस्यसमयाश्रितं त्यजाद्यवाडवंदेहंपूर्वदेहाभवाधुना
४१ गमिष्यावःस्ववैकुंठमावांकृत्वानिजंवपुः तिष्ठत्वत्रकुमारोयंत्वयाजातःसुलोचने ४२ लक्ष्मीरुवा॰
स्वदेहसंभवंपुत्रंकथंहित्वाव्रजाम्यहं स्नेहःसुदुस्त्यजःकामंस्वात्मजस्यसुरर्षभ ४३ कागतिःस्यादमेयात्म
न्बालस्यास्यनदीतटे अनाथस्यासमर्थस्यविजनेल्पतनोरिह ४४ अनाश्रयंसुतंत्यक्त्वाकथंगंतुंमनोमम स-
मर्थंसदयंस्वामिन्भवेदंबुजलोचन ४५ दिव्यदेहौततोजातौलक्ष्मीनारायणावुभौ विमानवरसंविष्टौस्तूयमानौ
सुरैर्दिवि ४६ गंतुकामंपतिंप्राहकमलाकमलापतिं गृहाणेमंसुतंनाथनाहंशक्तास्मिहापितुं ४७ प्राणप्रियो-
स्तिमेपुत्रःकांत्यात्वत्सदृशःप्रभो गृहीत्वैनंगमिष्यावोवैकुंठंमधुसूदन ४८ हरिरुवाच माविषादंप्रियेकर्तुंत्वम
र्हसिवरानने तिष्ठत्वयंसुखेनात्ररक्षामेविहितात्विह ४९ थंसमर्थंभवेदित्यन्वयः ४५ ४६ ४७ ४८ ४९

५० ५१ ५२ ५३ ५४ ५५ इतिश्रीदेवीभागवततिलके षष्ठस्कंधे एकोनविंशोऽध्यायः १९ चतुर्भिरधिकैः पंचाशद्भिः पद्यैः सुत

कार्यंकिमपिवामोरुवर्ततेमहदद्भुतं निबोधकथयाम्यद्यसुतस्यात्रविमोचने ५० तुर्वसुर्नामविख्यातोययातिन
नुजोभुवि हरिवर्मेतिपित्रास्यकृतंनामसुविश्रुतं ५१ सराजापुत्रकामोद्यतपस्तपतिपावने तीर्थेवर्षशतंजातंन
स्यवैकुर्वतस्तपः ५२ तस्यार्थेनिर्मितः पुत्रोमयायंकमलालये तत्रगत्वानृपंसुभ्रुप्रेरयिष्यामिसांप्रतं ५३ त-
स्मैदास्याम्यहंपुत्रंपुत्रकामस्यकामिनि गृहीत्वास्वगृहंराजाप्रापयिष्यतिबालकं ५४ व्यासउ० इत्याश्वास्य
प्रियांपद्मांकृत्वारक्षांचबालके विमानवरमारुह्यप्रययौप्रिययासह ५५ इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कं
धेएकोनविंशोऽध्यायः १९ जनमेजयउवाच संशयोयंमहानत्रजातमात्रः शिशुस्तथा मुक्तः केनगृहीतोसा
वेकाकीविजनेवने १ कागतिस्तस्यबालस्यजातासत्यवतीसुत व्याघ्रसिंहादिभिर्हिंस्रैर्गृहीतोनातिबालकः
२ व्यासउवाच लक्ष्मीनारायणौतस्मात्स्थानाच्चचलितौयदा तदैवतत्रचंपाख्यः प्राप्तोविद्याधरः किल ३
विमानवरमारूढः कामिन्यासहितोनृप मदनालसयाकामंक्रीडमानोयदृच्छया ४ विलोक्यतंशिशुंभूमावेका
किनमनुत्तमं देवपुत्रप्रतीकाशंरममाणंयथासुखं ५ विमानात्तरसोत्तीर्यचंपकस्तंशिशुंजवात् जग्राहेचसुदं
प्रापनिधिंप्राप्ययथाधनः ६ गृहीत्वाचंपकः प्रादाद्देव्यैतंमदनोपमं मदनालसायैबालंजातमात्रंमनोहरं ७ सा-
गृहीत्वाशिशुंप्रेम्णासरोमांचासविस्मया मुखंचुचुंबबालस्यकृत्वातुहृदयेभृशं ८ आलिंगितश्चुंबितश्च
तयासोप्रीतिपूर्वकं उत्संगेचकृतस्तन्व्यापुत्रभावेनभारत ९ स्यह हरेः कथानकंसम्यग्जयीजातस्यचोच्यते १ सुतमरण्ये
त्यक्त्वानारायणेगतेसतिसंशयितोराजापृच्छति संशयोयमिति १ नातिबालकइति अतिबालकोव्याघ्रादिभिः कथंनभक्षितइत्यर्थः २ ३ ४ ५
६ ७ ८ तन्व्याकृशांग्या ९ ५

१० त्र्यंबकपाणिनात्र्यंबकं धनुस्तत्पाणौयस्यतेनशिवेन ११ १२ अमुंपुत्रंकरिष्यामिवेदमंत्रेणेत्यर्थः १३ तांगृहीत्वा तंचबालकं



कृत्वांकेतौसमारूढौविमानंदंपतीमुदा पतिंपप्रच्छचार्वंगीप्रहस्यमदनालसा १० कस्यायंबालकः कांतत्यक्तः के
नचकानने पुत्रोयंममदेवेनदत्तस्त्र्यंबकपाणिना ११ चंपकउवाच प्रियेगत्वाद्यपृच्छेयंशक्रंसर्वज्ञमाशुवै देवो
वादानवोवापिगंधर्वोवाशिशुः किल १२ तेनाज्ञप्तः करिष्यामिपुत्रंप्राप्तंवनादमुं अदृष्ट्वानैवकर्तव्यंकार्यंकिंचि-
न्मयाध्रुवं १३ इत्युक्त्वातांगृहीत्वातंविमानेनाथचंपकः ययौशक्रपुरंतूर्णंहर्षेणोत्फुल्ललोचनः १४ प्रणम्य
पादयोः प्रीत्याचंपकस्तुशचीपतिं निवेद्यबालकंप्राहकृतांजलिपुटः स्थितः १५ देवदेवमयालब्धस्तीर्थेपरमपा
वने कालिंदीतमसासंगेबालकोयंसमप्रभः १६ कस्यायंबालकः कांतः कथंत्यक्तः शचीपते आज्ञाचेत्तवदे
वेशकुर्वेहंबालकंसुतं १७ अतीवसुंदरोबालः प्रियायावल्लभः सुतः कृत्रिमस्तुसुतः प्रोक्तोधर्मशास्त्रेषुसर्व
था १८ इंद्रउवाच पुत्रोयंवासुदेवस्यवाजिरूपधरस्यह हैहयोयंमहाभागलक्ष्म्यांजातः परंतपः १९ उत्पादि
तोभगवताकार्यार्थेकिलबालकः दातुंनृपतयेनूनंययातितनयायच २० हरिणाप्रेरितः सोद्यराजापरमधार्मि
कः आगमिष्यतिपुत्रार्थंतीर्थेतास्मिन्मनोरमे २१ तावत्त्वंगच्छतत्रैवगृहीत्वाबालकंशुभं यावन्नयातिनृपति
र्ग्रहीतुंहरिणेरितः २२ गत्वातत्रविमुंचैनंविलंबंमाकृथावर अदृष्ट्वाबालकंराजादुःखितश्चभविष्यति २३ त-
स्माच्चंपकमुंचैनंराजाप्राप्नोतुपुत्रकं एकवीरेतिनाम्नायंख्यातः स्यात्पृथिवीतले २४

गृहीत्वेत्यर्थः १४ १५ तम-
सासंगेसंगमे १६ १७ कृत्रिमस्तुसुतइति तथाचमनुः सदृशंतुप्रकुर्याद्यंगुणदोषविचक्षणं पुत्रंपुत्रगुणैर्युक्तंसविज्ञेयश्चकृत्रिमइति १८
१९ २० २१ २२ वरेतिसंबोधनं २३ एकवीरेति इदंद्वितीयंनाम एकवीरेतिबाहुलकात्साधु २४ ❀ ❀ ❀

२५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ अनुद्घातरथेन अप्रतिहतगतिमतारथेनेत्यर्थः

व्यासउवाच इतितस्यवचःश्रुत्वाचंपकस्त्वरयान्वितः जगामपुत्रमादायस्थलेतस्मिन्महीपतिः २५ मुमोचबालकं
तत्रयत्रपूर्वस्थितोत्यभूत् आरुत्यस्वविमानंतुययोस्वाश्रममंडलं २६ तंदेवकमलाकांतोलक्ष्म्यासहजगद्गुरुः वि
मानवरमारूढोजगामनृपतिंप्रति २७ दृष्टस्तदातेननृपेणविष्णुःसमुत्तरंस्तत्रविमानमुख्यात् जहर्षराजाहरिद-
र्शनेनपपातभूमौखलुदंडवच्च २८ उत्तिष्ठवत्सेतिहरिःपतंतमाश्वासयद्भूमिगतंस्वभक्तं सोप्युत्सुकोवासुदे
वंपुरःस्थंतुष्टावभक्त्यामुखरीकृतोथ २९ देवाधिदेवाखिललोकनाथकृपानिधेलोकगुरोरमेश मंदस्यमेते
खिलदर्शनंयत्सुदुर्लभंयोगिजनैरलभ्यं ३० येनिःस्पृहास्तेविषयैरपेतास्तेषांत्वदीयंखलुदर्शनंस्यात् आ
शापरोहंभगवन्ननंतयोग्योनतेदर्शनेदेवदेव ३१ इतिस्तुतस्तेननृपेणविष्णुस्तमाहवाक्येनसुधामयेन वृणी
ष्वराजन्मनसेप्सितंतेददामितुष्टस्तपसातवेति ३२ तंतांनृपस्तंप्रणिपत्यपादयोःप्रोवाचविष्णुंपुरतःस्थितं
च तपस्तुतस्मंहिमयासुतार्थेपुत्रंददस्वात्मसमंमुरारे ३३ श्रुत्वानृपप्रार्थितमादिदेवस्तमाहराजानममो
घवाक्यं ययातिसूनोव्रजतत्रतीर्थेकलिंदकन्यातमसाप्रसंगे ३४ मयाद्यपुत्रस्तुयथेप्सितस्तेतत्रैवमुक्तो
स्त्यमितप्रभावः लक्ष्म्याःप्रसूतोममवीर्यजश्चकृतस्तवार्थेथगृहाणराजन् ३५ श्रुत्वाहरेर्वाक्यमतीवमृष्टंसंतु
ष्टचित्तःप्रबभूवराजा हरिस्तुदत्वेतिवरंजगामवैकुंठलोकंरमयायुतश्च ३६ गतेहरौसोथययातिसूनुर्य-
यावनुद्घातरथेनराजा प्रेमान्वितस्तत्रसुतोस्तियत्रवचोनिशम्येतिजनार्दनस्य ३७ सतत्रगत्वातिमनोहरंतंदद
र्शबालंभुविखेलमानं मुखेनिवेश्यैककरेणकृत्वाश्लक्ष्णंपदांगुष्ठमनन्यसत्त्वः ३८ निशम्येतिजनार्दनस्येति इतिपूर्वोक्तप्रका-
रकं ३७ ३८

३९ ४० नेत्रांबुनाश्रुजलेनावरुद्धकंठ अवमदुःखंनीचदुःखं नरकपातजन्यंतद्भीतेरित्यर्थः ४१ ४२ ४३ ४४ ४५ गायन-



तंवीक्ष्यपुत्रंमदनस्वरूपंनारायणांशंकमलाप्रसूतं हरिप्रभावंहरिवर्मनामा हर्षप्रफुल्लाननपंकजोभूत् ३९ गृह्णन्सुवेगात्करपंकजाभ्यांबभूवप्रेमार्णवमग्नदेहः मूर्द्धन्युपाघ्रायमुदान्वितोसौनंदराजासुतमालिलिंग ४० मुखंसमीक्ष्यातिमनोहरंतमुवाचनेत्रांबुनिरुद्धकंठः दत्तोसिदेवेनजनार्दनेन मांत्राहिपुत्रावमदुःखभीतेः ४१ तप्तंमयापुत्रतपस्त्वदर्थंसुदुष्करंवर्षशतंचपूर्णं तेनैवतुष्टेनरमाप्रियेणदत्तोसिसंसारसुखोदयाय ४२ मातारमात्वांतनुजंमदर्थेत्यक्त्वागतासाहरिणासमेता धन्यातुसायाप्रहसंतमेकंकृत्वासुतंत्वांमुदितानना स्यात् ४३ त्वमेवसंसारसमुद्रनौकारूपःकृतःपुत्रलक्ष्मीधरेण इत्येवमुक्त्वानृपतिःसुतंतंमुदासमादाययौगृहाय ४४ पुरीसमीपेनृपमागतंतमाकर्ण्यसर्वेसचिवास्तुराज्ञः ययुःसमीपेनृपतेश्चलोकाःसोपायनास्तेसपुरोहिताश्च ४५ बंदीजनागायनकाश्चसूताःसमाययुःसंमुखमाशुराज्ञः नृपःपुरंप्राप्यपुरःसमागतंजनंसमाश्वास्यवाक्यैश्चदृष्ट्या ४६ सपूजितःपौरजनेनराजाविवेशपुत्रेणयुतोनगर्यां मार्गेषुलाजैःकुसुमैःसमंताद्विकीर्यमाणोनृपतिर्जगाम ४७ गृहंसमृद्धंसचिवैःसमेतःसुतंसमादायमुदाकराभ्यां राज्ञ्यैददौचाथसुतंमनोज्ञंसद्यःप्रसूतंचमनोभवाभं ४८ राज्ञीगृहीत्वाभिनवंतनूजंपप्रच्छराजानमनिंदितासा राजन्कुतश्चैषसुतःसुजन्माप्राप्तस्त्वयामन्मथतुल्यरूपः ४९ केनैषदत्तःकथयाशुकांतवृत्तोमदीयंप्रदत्तं सुतेन नृपस्तदोवाचमुदान्वितोसौप्रियेरमेशेनसुतोहिमत्थं ५० लोलाक्षिदत्तःकमलासमुत्थोजनार्दनांशोयमहीनसत्त्वः सातंगृहीत्वामुदमापराज्ञीराजाचकारोत्सवमद्भुतंच ५१

काःगायकाः ४६ ४७ ४८ ४९ ५० ५१

५२ ५३ ५४ इतिश्रीदेवीभागवततिलके षष्ठस्कंधेविंशोऽध्यायः २० अर्द्धाधिकैकषष्ट्यातुश्लोकानामभिषेचने एकवीर-

ददौचदानंकिलयाचकेभ्योगीतानिवाद्यानिबहूनिनेदुः कृत्वोत्सवंभूपतिरात्मजस्यनामैकवीरेतिचकारविश्रुतं ५२ सुखंचसंप्राप्यमुदान्वितोसौननंददेवाधिपतुल्यवीर्यः पुत्रंहरेरूपगुणानुरूपंसंप्राप्यवंशस्यऋणाच्चमुक्तः ५३ इतिसकलसुराणामीश्वरेणार्पितंतं सकलगुणगणाढ्यंपुत्रमासाद्यराजा विविधसुखविनोदैर्भार्ययासेव्यमानोव्यहरतनिजगेहे शक्रतुल्यप्रतापः ५४ इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेविंशोऽध्यायः २०
व्यासउवाच जातकर्मादिसंस्कारांश्चकारनृपतिस्तदा दिनेदिनेजगामाशुवृद्धिंबालःसुलालितः १ नृपःसंसारजंप्राप्यसुखंपुत्रसमुद्भवं ऋणत्रयविमोक्षंचमेनेनेनमहात्मना २ षष्ठेन्नप्राशनंतस्यकृत्वामासियथाविधि तृतीयेथतथावर्षेचूडाकरणमुत्तमं ३ चकारब्राह्मणान्द्रव्यैःसंपूज्यविविधैर्धनैः गोभिश्चविविधैर्दानैर्याचकानितरानपि ४ वर्षेचैकादशेतस्यमौंजीबंधनकर्मवै कारयित्वाधनुर्वेदमध्यापयतपार्थिवः ५ अधीतवेदंपुत्रंतंराजधर्मविशारदं दृष्ट्वातस्याभिषेकायमतिंचक्रेजनाधिपः ६ पुष्यार्कयोगसंयुक्तेदिवसेनृपसत्तमः कारयामाससंभारानभिषेकार्थमादरात् ७ द्विजानाहूयवेदज्ञान्सर्वशास्त्रविचक्षणान् अभिषेकंचकारासौविधिवत्स्वात्मजस्यह ८ जलमानीयतीर्थेभ्यःसागरेभ्यश्चपार्थिवः स्वयंचकारविधिवदभिषेकंशुभेदिने ९ धनंदत्त्वाथविप्रेभ्योराज्यंपुत्रेनिवेश्यसः जगामवनमेवाशुस्वर्गकामःसभूपतिः १० एकवीरंनृपंकृत्वासंमान्यसचिवानथ भार्ययासहभूपालःप्रविवेशवनंवशी ११

स्यचकृतेऽनंतरंवृत्तमुच्यते १ राज्ञःपुत्रःप्राप्त्युत्तरंजातंवृत्तमाह जातकर्मादीति १ मेनेमानितवान् षष्ठेमासीत्यन्वयः २ याचकानितरानपिमूकांधादीन्संपूज्यचूडाकरणंचकारेत्यन्वयः ४ ५ ६ ७ ८ ९ १० ११

पार्वतींभगवतींचिंतयामासेत्यर्थः १२ दिष्टांतेप्रारब्धकर्मसमाप्तावित्यर्थः १३ १४ १५ १६ १७ १८ होमधूमेनावृतआका



मैनाकशिखरेराजाकृत्वानार्नीयमाश्रमं नित्यंपत्रफलाहारश्चिंतयामासपार्वतीं १२ एवंसनृपतिःकृत्वादिष्टांतेस
हभार्यया मृतोसौवासवंलोकंगतःपुण्येनकर्मणा १३ इंद्रलोकंपिताप्राप्तइतिश्रुत्वाथहैहयः चकारवेदनिर्दिष्टंक
र्मचैवौर्ध्वदैहिकं १४ कृत्वोत्तराःक्रियाःसर्वाःपितुःपार्थिवनंदनः राज्यंचकारमेधावीपित्रादत्तंसुसंमतं १५
एकवीरोथधर्मज्ञःप्राप्यराज्यमनुत्तमं बुभुजेविविधान्भोगान्सचिवैश्चसुमानितः १६ एकस्मिन्दिवसेराजामंत्रि
पुत्रैःसमन्वितः जगामजान्हवीतीरेहयारूढःप्रतापवान् १७ संपश्यन्पादपान्रम्यान्कोकिलालापसंयुतान् पुष्पि
तान्फलसंयुक्तान्षट्पदालिविराजितान् १८ मुनीनामाश्रमान्दिव्यान्वेदध्वनिनिनादितान् होमधूमावृताका-
शान्मृगशावसमावृतान् १९ केदारान्शालिसंपक्वान्गोपिकाभिःसुरक्षितान् प्रफुल्लपंकजारामान्निकुंजांश्चम
नोरमान् २० प्रेक्षमाणःपियालांस्तुचंपकान्पनसद्रुमान् बकुलांस्तिलकान्नीपान्मंदारांश्चप्रफुल्लितान् २१ शा-
लांस्तालतमालांश्चजंबूचूतकदंबकान् सगच्छन्जान्हवीतोयेप्रफुल्लंशतपत्रकं २२ पंकजंचातिगंधाढ्यमप-
श्यदवनीपतिः दक्षिणेजलजस्याथपार्श्वेकमललोचनां २३ कनकाभांसुकेशींचकंबुग्रीवांकृशोदरीं बिंबोष्ठीं
सुंदरींकिंचित्समुद्यत्तनुपयोधरां २४ सुनासांचारुसर्वांगीमपश्यत्कन्यकांनृपः रुदतींतांसखींत्यक्त्वाविव्हलांदुः
खपीडितां २५ साश्रुनेत्रांक्रंदमानांविजनेकुररीमिव संवीक्ष्यराजापप्रच्छकन्यकांशोककारणं २६ सुनसेब्रू-
हिकासित्वंकस्यपुत्रीशुभानने गंधर्वीदेवकन्याथकथंरोदिषिसुंदरि २७

शोयेषुतेआश्रमाइत्यर्थः १९ २० २१
२२ २३ किंचित्समुद्यत्तनुपयोधरांअंकुरितयौवनामित्यर्थः २४ तांसखींवक्ष्यमाणां २५ २६ २७ ७ ७ ७

२८ अरालभ्रु कुटिलभ्रु इतितस्याः संबोधनं २९ ३० ३१ ३२ दैवंचमानुषं दैवंमानुषमुभयमपीत्यर्थः ३३ ३४ विपत्तिरहितइ

कथमेकाकिनीबालेत्यक्ताकेनपिकस्वरे पतिस्तेक्वगतः कांतेपितावाब्रूहिसांप्रतं २८ किंतेदुःखमरालभ्रुकथयाद्य ममांतिके करोमिदुःखनाशंतेसर्वथैवकृशोदरि २९ नराज्येममतन्वंगिपीडांकोपिकरोत्यलं नभयंचौरजंकां तेनराक्षसभयंतथा ३० मयिशासतिभूपालेनोत्पातादारुणाभुवि भयंनव्याघ्रसिंहेभ्योनभयंकस्यचिद्भवेत् ३१ वदवामोरुकस्मात्त्वंविलापंजान्हवीतटे करोषित्राणहीनात्रकिंतेदुःखंवदस्वमे ३२ हन्म्यहंदुःखमत्युग्रं प्राणिनांपृथिवीतले दैवंचमानुषंकांतेव्रतमेतन्ममाद्भुतं ३३ विशाललोचनेब्रूहिकरोमितवचिंतितं इत्युक्तेव चनेराज्ञाश्रुत्वोवाचमृदुस्वना ३४ शृणुराजेंद्रवक्ष्यामिममशोकस्यकारणं विपत्तिरहितःप्राणीकथंरुदतिभू-पते ३५ प्रब्रवीमिमहाबाहोयदर्थंरोरवीम्यहं तवराज्यादन्यदेशेराजापरमधार्मिकः ३६ रम्योनाममहाराजसं तानरहितोभृशं तस्यभार्यासुविख्यातारुक्मरेखेतिनामतः ३७ सुरूपाचतुरासाध्वीसर्वलक्षणसंयुता अपु त्रादुःखिताकांतमित्युवाचपुनःपुनः ३८ किंजीवितेनमेनाथधिग्वृथाजीवितंमम वंध्यायाःसुखहीनायात्वपु-त्रायाधरातले ३९ इत्येवंभार्ययाभूपःप्रेरितोमखमुत्तमं चकारब्राह्मणांस्तज्ज्ञानाहूयविधिवत्तदा ४० पुत्र कामोधनंभूरिददावथयथोदितं हूयमानेघृतेत्यर्थंपावकादतिसुप्रभात् ४१ आविर्बभूवचार्वंगीकन्यकाशुभ लक्षणा बिंबोष्ठीसुदतीसुभ्रूःपूर्णचंद्रनिभानना ४२ कनकाभासुकेशांतारक्तपाणितलामृदुः सुरक्तनयना तन्वीरक्तपादतलाभृशं ४३ हुताशनात्समुद्भूताहोत्रासास्वीकृतातदा होताप्रोवाचराजानंगृहीत्वातांसुमध्य मां ४४

ति विपत्तिहीनः कथंरुदतिनैवरुदतीत्यर्थः तस्माद्रोदनेनविपत्त्यनुमानंकुर्वित्यर्थः ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४

एकावलीवमुक्तामालेव ४५ ४६ ४७ ४८ हेसुभगेसुतांगृहाणेत्येवमाभाष्येत्यर्थः ४९ ५० ५१ पुत्रवृद्ध्यापुत्रवर्द्धनसमानवर्द्धनेनेत्यर्थः ५२ पुत्रींसुतस्थानीयामत्वासुतजन्मनिजायमानउत्सवः तस्यराज्ञोगृहेतद्दिनेसंप्रवृत्तः ५३ सुबुद्धेमन्मथाकृ-



राजन्पुत्रींगृहाणेमांसर्वलक्षणसंयुतां एकावलीवसंभूताहूयमानाद्धुताशनात् ४५ नाम्नाचैकावलीलोकेख्याता पुत्रीभविष्यति सुखितोभवभूपालपुत्र्यापुत्रसमानया ४६ संतोषंकुरुराजेंद्रदत्तादेवेनविष्णुना होतुर्वाक्यंनृपःश्रुत्वादृष्ट्वातांकन्यकांशुभां ४७ जग्राहपरमप्रीतोहोत्रादत्तांसुसंमतां गृहीत्वानृपतिस्तांतुददौपत्न्यैवराननां ४८ आभाष्यरुक्मरेखायैगृहाणसुभगेसुतां सातांकमलपत्राक्षींप्राप्यकन्यांमनोरमां ४९ जहर्षमुदिताराज्ञी पुत्रंप्राप्ययथासुखं चकारमंगलंकर्मजातकर्मादिकंशुभं ५० पुत्रजन्मसमुत्थंयत्तत्सर्वंविधिवत्ततः समाप्यचमरवंराजाद्विजेभ्योदक्षिणांशुभां ५१ दत्त्वाविसृज्यविप्रेंद्रान्मुदंप्रापमहीपतिः दिनेदिनेऽसितापांगीपुत्रवृद्ध्याभृशंबभौ ५२ मुदंचपरमांप्रापनृपभार्यासुतान्विता उत्सवस्तद्दिनेतस्यप्रवृत्तःसुतजन्मनः ५३ पुत्रीपुत्रसमात्यर्थंबभूववल्लभाकिल राज्ञोमंत्रिसुताचाहंसुबुद्धेमन्मथाकृते ५४ यशोवतीचमेनामसमानंवयआवयोः वयस्याहंकृताराज्ञाक्रीडनायतयासह ५५ सदासहचरीजाताप्रेमयुक्तादिवानिशं एकावलीगंधवंतियत्रपद्मानिपश्यति ५६ तत्रसारमतेबालानान्यत्रसुखमाप्नुयात् सुदूरेजान्हवीतीरेभवंतिकमलान्यपि ५७ रममाणातत्रयातामत्समेतासखीयुता मयानिवेदितंराजन्पुत्रीतेकमलाकरान् ५८

नेइतिराज्ञःसंबोधनंतेनचत्वयिममासक्तिर्वर्ततेइतियशोवत्याबोधितं ५४ आवयोःराजकन्यायाःममचेत्यर्थः वयस्यासखी ५५ एकावल्याःस्वभावमाह गंधवंतीति ५६ ५७ तस्यास्तत्कर्मजान्हवीतीरदूरदेशस्थकमलग्रहणरूपंमयाराज्ञेनिवेदितं कथंनिवेदितंतत्राह राजन्निति ५८ ॥ ॥

निर्जनेवनेतथाचकस्मिंश्चिद्दिवसेव्याघ्रादिभिरुपद्रुतास्यादितिभावः इत्थंमयानिवेदितेसति गृहेजलाशयान् कृत्वातत्रपुष्पितान्भ्रमरावृता
न्कमलान्पुंस्त्वमार्ष वापयित्वारोपयित्वा ऽ सौकन्यापित्राथजान्हवीनीरंगंतुंनिवारिता तथापीत्युत्तेरश्लोकेनान्वयः ५९
६० ६१ ७ इतिश्रीदेवीभागवतनिलकेषष्ठस्कंधेएकविंशोऽध्यायः २१ ७ ७ पंचषष्टि-

प्रेक्षमाणातिदूरेसाप्रयातिनिर्जनेवने निषेधिताथपित्रासौगृहेकृत्वाजलाशयान् ५९ कमलान्वापयित्वाथपुष्पि
तान्भ्रमरावृतान् तथापिनिर्ययौबालाकमलासक्तचेतना ६० तदाराज्ञारक्षपालाःप्रेरिताःशस्त्रपाणयः एवंर
क्षायुतातन्वीमत्तसमेतासखीयुता ६१ क्रीडार्थंजान्हवीतोयेनित्यमायातियातिच इतिश्रीदेवीभागवतेमहापुरा
णेषष्ठस्कंधेएकविंशोऽध्यायः २१ यशोवत्युवाच प्रातरुत्थायतन्वंगीचलितावसखीयुता चामरैर्वीज्यमाना-
सारक्षिताबहुरक्षिभिः १ सायुधैश्चातिसन्नद्धैःसहितावरवर्णिनी क्रीडार्थमत्रराजेंद्रसंप्राप्तानलिनींशुभां २ अ
हमप्यनयासार्द्धंगंगातीरेसमागता अप्सरोभिःसमेताचकमलैःक्रीडमानया ३ एकावलीतथाचाहंजातेक्रीडाप
रेयदा सहसैवतदायातोदानवोबलसंयुतः ४ कालकेतुरितिख्यातोराक्षसैर्बहुभिर्युतः परिघासिगदाचापबाण
तोमरपाणिभिः ५ दृष्टाचैकावलीतेनरूपयौवनशालिनी द्वितीयाकामपत्नीचक्रीडमानासुपंकजैः ६ मयोक्तैकावली
राजन्कोयंदैत्यःसमागतः गच्छावोरक्षपालानांमध्येपंकजलोचने ७ विमृश्यैवंसखीचाहंत्वरयैवगतेभयात् मध्ये
वैसैनिकानांतुसायुधानानांनृपात्मज ८ कालकेतुस्तुतांदृष्ट्वामोहिनींमदनातुरः गदांगुर्वींगृहीत्वातु धावमानःसमागतः ९

श्लोकवर्यैरेकावल्याःकथानकं यशोवतीप्राहराज्ञेइतिसम्यगिहोच्यते १ पूर्वाध्यायोक्तवृत्तोत्तरंयशोवतीवृत्तंकथयतिप्रातरुत्थायेति १ २ ३
४ ५ ६ रक्षपालानांमध्येयास्यावइतिमयातदेकावल्युक्ता ७ तदनंतरंतयैवंविमृश्याहंसासखीएकावलीचोभेसैनिकानांमध्येदैत्यभयात्त्वरयैव
गतेइत्यन्वयः ८ ९

१० एनामेकावलींत्यजमांगृहाणइतिमयोक्तोपीत्यर्थः ११ १२ १३ १४ १५ १६ १७ १८ १९ रत्याक्रीडयाहंतवदासोस्मिकस्मा

रक्षकान्दूरतःकृत्वाजग्राहांबुजलोचनां त्रस्तांवेपथुसंयुक्तांक्रंदमानांकृशोदरीं १० त्यजैनांमांगृहाणेतिमयाचोक्तो
पिदानवः नमांजग्राहकामार्तस्तांगृहीत्वाविनिःसृतः ११ तिष्ठतिष्ठेतिभाषंतोरक्षकास्तंमहाबलं प्रतिषिध्युतुसं
ग्रामंचक्रुर्विस्मयकारकं १२ तस्यापिराक्षसाःक्रूराःसर्वतःशस्त्रपाणयः युयुधूरक्षकैःसार्धंस्वामिकार्यकृतोद्य
माः १३ संग्रामस्तुतदाजातःकालकेतोस्तथारणे निहत्यरक्षकान्सर्वान्गृहीत्वैनांमहाबलः १४ युक्तोराक्षससै
न्येननिर्जगामपुरंप्रति वीक्ष्यतांरुदतींबालांगृहीतांदानवेनतु १५ पृष्ठतोहंगतातत्रयत्रनीतासखीमम विक्रोशं
तीयथासामांपश्येदितिपदानुगा १६ सापिमामागतांवीक्ष्यकिंचित्स्वस्थाभवत्तदा गताहंतत्समीपेतुतामाश्लाष्यपु
नःपुनः १७ सामांप्राप्यातिदुःखार्तास्तंभस्वेदसमाकुला कंठेगृहीत्वामांभूपरुरोदभृशदुःखिता १८ समामाह
कालकेतुःप्रीतिपूर्वमिदंवचः समाश्वासयभीतांत्वंसखींचंचललोचनां १९ प्राप्तंममाद्यनगरंदेवलोकसमंप्रिये
दासोस्मितवरत्याहिकस्माक्रंदसिकातरा २० कथयैनांसखींतेघस्वस्थाभवसुलोचने इत्युक्त्वामांसखींपार्श्वे
समारोप्यरथोत्तमे २१ जगामतरसादुष्टःपुरेस्वस्यमनोहरे सैन्येनमहतायुक्तःप्रफुल्लवदनांबुजः २२ एकावलीं
तथामांचसंस्थाप्यधवलेगृहे राक्षसान्गृहरक्षार्थंकल्पयामासकोटिशः २३ द्वितीयेदिवसेसोथमामुवाचरहोनृपः
प्रबोधयसखींबालांशोचंतींविरहातुरां २४ पत्नीमेभवसुश्रोणिसुखंभुंक्ष्वयथेप्सितं राज्यंत्वदीयेचंद्रास्येसेवको
हंसदातव २५ पुनरुक्तंमयावाक्यंश्रुत्वातद्भाषितंखरं नाहंक्षमाप्रियंवक्तुंत्वमेनांकथयप्रभो २६

क्रंदसिरोदिषीतिसखींक-
थयेत्युत्तरेणान्वयः २० हेसुलोचनेस्वस्थाभवेत्यपिकथयेत्यन्वयः २१ २२ २३ २४ २५ अप्रियमिति छेदः २६ ५२ ५२ ५२ ५२

इत्युक्तेति इतिमयावचनेउक्तेसतीत्यर्थः २७ मंत्रोवशीकरणइत्यर्थः अनेनत्वय्यहमत्यंतंमोहितोस्मीतिबोध्यते २८ २९ ३० राजसुतायदातुंपित्राकल्पितेनेस
र्थः मयाचमनसाहैहयएववृतइत्यर्थः ३१ ३२ ३३ ३४ ३५ रारटीमिवल्गानांकरोमीत्यर्थः ३६ ३७ सांप्रतमस्मिन्काले ३८ हैहयइति यद्यपिहय्याअपत्यमित्यर्थेस्त्रीप्रत्यये

इत्युक्तेवचनेदुष्टोमदनक्षतमानसः उवाचविनयादेनांसखीक्षामोदरींप्रियां २७ कृशोदरित्वयामंत्रोनिक्षिप्तोस्ति
ममोपरि तेनमेत्हृदयंकांतेत्वत्तंनेवशतांगतं २८ तेनाहंतवदासोद्यकृतोस्मीतिविनिश्चयः भजमांकामबाणेनपी-
डितंविवशंभृशं २९ यौवनंयातिरंभोरुचंचलंदुर्लभंतथा सफलंकुरुकल्याणिपतिंमांपरिरभ्यच ३० एकावल्यु
वाच पित्राहंकल्पितापूर्वंदातुंराजसुतायवै हैहयस्तुमहाभागसमयामनसावृतः ३१ कथमन्यंभजेकांतंत्यक्त्वा
धर्मंसनातनं कन्याधर्मंविहायाद्यवेत्सिशास्त्रविनिश्चयं ३२ यस्मैदद्यात्पिताकामंकन्यातंपतिमाप्नुयात् परतंत्रास
दाकन्यानस्वातंत्र्यंकदाचन ३३ इत्युक्तोपितयापापीविरराामनमोहितः नमुमोचविशालाक्षींमांचपार्श्वस्थितांतथा
३४ पातालविवरेतस्यपुरंपरमसंकटे राक्षसैरक्षितंदुर्गमंडितंपरिखावृतं ३५ तत्रतिष्ठतिदुःखार्तासखीमेप्राणव
ल्लभा तेनाहंविरहेणात्ररारटीमिसुदुःखिता ३६ एकवीरउवाच कथंत्वमत्रसंप्राप्तापुरात्तस्यदुरात्मनः विस्मयो
मेमहानत्रतत्त्वंब्रूहिवरानने ३७ त्वयात्वकथितंवाक्यंसंदिग्धंभातिभामिनि हैहयार्थेकल्पितासापित्रेतिममसांप्र
तं ३८ हैहयोनामराजाहंनान्योस्तिपृथिवीपतिः मदर्थेकथितासाकिंसखीतवसुलोचना ३९ ढगितिटकिहायेवइत्येकरूपंनसिध्यति

तथापिपृषोदरादित्वान्हैहयपदस्यसाधुत्वंबोध्यं यद्वाहेशब्देननामैकदेशेननामग्रहणमितिन्यायान्हेषाशब्दस्यग्रहणं तथाचहेशब्देनहेषाश
ब्देनतंशब्दंकुर्वन्हयपतिगच्छतीतिहेहयोश्वस्तस्यायंहैहयइति यद्वाहेभक्तइत्युच्चार्यहयनिगच्छतीतिहेहयोविष्णुस्तस्यायंहैहयइतिव्युत्प
त्यासाधुत्वंबोध्यं मदर्थेकथितासाकिमिति यदिमदर्थेसाकथितातर्हिममैवसास्त्रीसंकटेपतितेत्यर्थः ३९ ७ ७ ७

४० इदंवर्तमानंराज्ञेनिवेदितंकिंवानेतिवदेतिशेषः ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५०



एतन्मेसंशयंसुभ्रुछेत्तुमर्हसिभामिनि अहंतामानयिष्यामितंहत्वाराक्षसाधमं ४० स्थानंदर्शयमेतस्ययदिजानासि सुव्रते राज्ञेनिवेदितंकिंवातत्पित्रेचातिदुःखिता ४१ यस्यैषावल्लभापुत्रीनकिंजानातितांहृतां नोद्यमःकिंकृ-तस्तेनततोमोचनहेतवे ४२ बंदीकृतांसुतांज्ञात्वाकथंतिष्ठतिसुस्थिरः असमर्थोनृपःकिंवाकारणंब्रूहिसत्वरं ४३ त्वयामेपहृतंचेतोगुणानुक्त्वात्यमानुषान् सख्याःपंकजपत्राक्षिकृतःकामवशोभृशं ४४ कदापश्यामितांकांतांमो-चयित्वातिसंकटात् इतिमेहृदयंचाद्यकरोत्यतिमनोरथं ४५ ब्रूहिमेगमनोपायंपुरेतस्यातिदुर्गमे कथंत्वमागतात-स्मात्संकटाद्वनहृद ४६ यशोवत्युवाच बालभावान्मयामंत्रोभगवत्याविशांपते प्राप्तोस्तिब्राह्मणात्सिद्धात्स बीजध्यानपूर्वकः ४७ तत्रावस्थितयाराजन्मयाचित्तेविचारितं आराधयामिसततंचंडिकांचंडविक्रमां ४८ सा-देवीसेवितकामंबंधमोक्षंकरिष्यति भक्तानुकंपिनीशक्तिःसमर्थासर्वसाधने ४९ याविश्वंसृजतेशक्त्यापालय त्येवसापुनः कल्पांतेसहरत्येवनिराकारानिराश्रया ५० इतिसंचिंत्यमनसादेवींविश्वेश्वरींशिवां ध्यात्वारक्तांबरां-सौम्यांसुरक्तनयनांहृदि ५१ संस्मृत्यमनसारूपंमंत्रजाप्यपराभवं उपासितामयादेवीमासमेकंसमाधिना ५२ स्वप्नेममसमायाताभक्तिभावेनतोषिता मामाहामृतयावाचाकिंसुप्तासीतिचंडिका ५३ उत्तिष्ठयाहितरसागंगा तीरंमनोहरं आगमिष्यतितत्रासौहैहयोनृपपुंगवः ५४ एकवीरोमहाबाहुःसर्वशत्रुविमर्दनः दत्तात्रेयेणमन्मंत्रो महाविद्याभिधःपरः ५५ दत्तोस्मैसोपिसततंमामुपास्तेऽतिभक्तितः मय्यासक्तमतिर्नित्यंममपूजापरायणः ५६



५१ ५२ ५३ ५४ महाविद्याभिधःश्रीविद्यामंत्रइत्यर्थः ५५ ५६ छ छ छ छ छ छ

मामेवसर्वभूतेष्वितिं सर्वंमदात्मकंपश्यतीत्यर्थः ५७ मासुतोलक्ष्मीसुतइत्यर्थः ५८ ५९ ६० ६१ ६२ तस्माज्जायमानात्त्वमाद्
पसरणंगमनंयुक्तमितिमत्वेत्यर्थः ६३ महादेवीप्रसादतोमार्गज्ञानंशीघ्रगतिर्मयाप्राप्तेत्यन्वयः ६४ कस्त्वंकस्येति यद्यपि हैहयोना-
मराजाहंनान्योस्तिपृथिवीपतिरित्यनेनराजवाक्येनसंदेहस्यनिवृत्तत्वात्क स्त्वमितिप्रश्नोनयुक्तस्तथापिएकावलीलोभार्थमिदंराज्ञोक्तंवासु-

मामेवसर्वभूतेषुध्यायन्नास्तेचमत्परः सतेदुःखविनाशंवैकरिष्यतिमहामतिः ५७ मासुतोविहरंस्तत्रतवत्राता
भविष्यति हत्वातंराक्षसंघोरंमोचयिष्यतिमानिनीं ५८ एकावलीमेकवीरःसर्वशास्त्रविशारदः पश्चात्सेवप
तिःकार्यस्त्वयाराजसुतःशुभः ५९ इत्युक्त्वांतर्दधेदेवीप्रबुद्धाहंतदैवहि कथितंस्वप्नवृत्तांतंदेव्याश्चाराधनंतथा
६० प्रसन्नवदनाजाताश्रुत्वासाकमलेक्षणा विशेषेणचसंतुष्टामामुवाचशुचिस्मिता ६१ गच्छतत्रत्वरायुक्ताकु-
रुकार्यंममप्रिये सत्यवाक्याभगवतीसावांमोक्षंविधास्यति ६२ इत्याज्ञप्तातयाचाहंसख्यावैप्रेमयुक्तया मत्वो
पसरणंयुक्तंतस्मात्स्थानात्तदानृप ६३ चलिताहंततःशीघ्रंमहादेवीप्रसादतः मार्गज्ञानंशीघ्रगतिर्मयाप्राप्तानृपा-
त्मज ६४ इत्येतत्कथितंसर्वंकारणंममदुःखजं कस्त्वंकस्यसुतश्चेतिवदवीरयथातथा ६५ इतिश्रीदेवीभागव
तेमहापुराणेषष्ठस्कंधेद्वाविंशोऽध्यायः २२ व्यासउवाच तस्यास्तुवचनंश्रुत्वारमापुत्रःप्रतापवान् प्रफुल्लवदनां
भोजस्तामुवाचविशांपते १ राजोवाच रंभोरुयस्त्वयापृष्टोवृत्तांतोविशदाक्षरः हैहयोहंचैकवीरनाम्नासिंधुसुतासु
तः २

ख्यत्वेनसराजायमेवास्तीतितद्दशादुक्तमितिसंदेहाविष्टायशोवतीपुनःपृच्छति कस्त्वंकस्येति यथातथासत्यंवदेत्यर्थः
६५ इतिश्रीदेवीभागवतति० षष्ठस्कंधेद्वाविंशोध्यायः २२ अर्धाधिकैश्चषट्षष्टिश्लोकैर्हैहयभूभृता कालकेतोर्महायुद्धंजातमित्येतदुच्य
ते१ यशोवतीवाक्यंश्रुत्वाराजोवाचेत्याह तस्यास्त्विति १ रंभेरुयायःपृष्टोवृत्तांतोमद्विषयकस्तंश्रृणुविशेषः २ ७ ७ ७

३ ४ ५ किंतद्वाक्यंतदाह एकावल्यायचइति मयाहेहयोवृतस्त्वंहैहयं विनान्यंनवृणोमीतिनिश्चय इतिदानवाग्रेवचएकावल्या॰
प्रोक्तमित्यन्वयः ६ तेनवाक्येनेति श्राविनेतेनेतिशेषः वांयुवयोः ७ ८ वदमामिति उपायमितिशेषः प्रापयितुंक्षमेति यतस्त्वस्मात्स्थ-

मनोमेयत्त्वयानूनंपरतंत्रंकृतंकिल किंकरोमिक्वगच्छामिविरहेणातिपीडितः ३ प्रथमंरूपमाख्यातंसर्वलोका
तिगंत्वया तेनमेविह्वलंजातंकामबाणाहतंमनः ४ ततस्तस्यागुणाःप्रोक्तास्तैस्तुचित्तंहृतंपुनः यत्त्वयोक्तंपुन-
र्वाक्यंतेनमेविस्मयोभवत् ५ एकावल्याश्चवचःप्रोक्तंदानवाग्रेमयावृतः हैहयस्त्वंविनानान्यंवृणोमीतिविनिश्चयः
६ तेनवाक्येनतन्वंगिभृत्योहमधुनाकृतः त्वयातस्याःसुकेशांतेब्रूहिकिंकरवाणिवां ७ स्थानंतस्यनजानामि
राक्षसस्यदुरात्मनः गतिर्मेनास्तिगमनेपुरेतस्मिन्सुलोचने ८ वदमांत्वंविशालाक्षितत्रमांप्रापयितुंक्षमा प्रा
पयाशुसखींतेसायत्रतिष्ठतिसुंदरी ९ हत्वातंराक्षसंक्रूरंमोचयिष्यामिसांप्रतं विवशांशोकसंतप्तांराजपुत्रीं
तवप्रियां १० विमुक्तदुःखांकृत्वाशुप्रापयिष्यामितेपुरं पित्रेचास्याःप्रदास्यामिकन्यामेकावलीमहं ११ पश्चा
द्विवाहकर्त्तासौराजापुत्र्याःपरंतपः एवंतेमनसःकामोममचापिप्रियंवदे १२ भविष्यतिसुसंपूर्णःसाधनेनतवा-
धुना दर्शयाशुपुरंतस्यपश्यमेत्वंपराक्रमं १३ यथाहन्मिदुराचारंपरदारापहारकं तथाकुरुप्रियंकर्तुंशक्तासि
वरवर्णिनि १४ मार्गंदर्शयतस्याद्यपुरस्यदुर्गमस्यच व्यासउवाच तन्निशम्यप्रियंवाक्यंमुदिताचयशोवती १५
तमुवाचस्मापुत्रंगमनोपायमादरात् मंत्रंगृहाणराजेंद्रभगवत्यास्तुसिद्धिदं १६ दर्शयिष्यामितस्याद्यपुरंराक्षसपा
लितं सज्जोभवमहाभागगमनायमयासह १७

लान्त्वमागतासिनतस्तदुपायाभिज्ञासीत्यर्थः ९ १० ११ १२ १३ यथाह
न्मिहनिष्यामितथाकुर्वित्यर्थः इत्येतत्प्रियंकर्तुंत्वंशक्तासिनवदेवीभक्तियुक्तत्वात् १४ १५ १६ १७ ६

१८ १९ २० दत्तात्रेयाद्दैवयोगात्प्राप्तमादिति दैवयोगात्काकतालीयन्यायेन प्राप्तादित्यर्थः योगेश्वरीमहामंत्रमिति त्रिलोक्यास्तिलक
वद्भूषणभूतत्वात्त्रिलोकीतिलकइत्यभिधायस्य सत यावि धंमंत्रं ह्रीं गौरिरुद्रदयिते योगेश्वरी हुं फट् स्वाहेत्येतद्रूपं योगेश्वरीमंत्रंजग्राहेत्यर्थः अ

सैन्येनमहतायुक्तस्तत्रयुद्धंभविष्यति कालकेतुर्महावीरोराक्षसैर्बलिभिर्वृतः १८ तस्मान्मंत्रंगृहीत्वात्वंव्रजत-
त्रमयासह दर्शयिष्यामितेमार्गंपुरस्यास्यदुरात्मनः १९ हत्वातंपापकर्माणंमोचयाशुसखींमम श्रुत्वातद्वचनंवीरो
मंत्रंजग्राहसत्वरः २० दत्तात्रेयाद्दैवयोगात्प्राप्ताज्ज्ञानिवराच्छुभात् योगेश्वरीमहामंत्रंत्रिलोकीतिलकाभिधं २१
तेनसर्वज्ञताजातासर्वांतश्चारितातथा तयासहजगामाशुपुरंतस्यसुदुर्गमं २२ रक्षितंराक्षसैर्घोरैःपातालमिवप
न्नगैः यशोवत्याचसैन्येनमहतासंयुतोनृपः २३ तमायांतंसमालोक्यदूतास्तस्यभयातुराः क्रोशंतोभिययुःपा
र्श्वंकालकेतोस्तरस्विनः २४ तमूचुःसहसागत्वाराक्षसंकाममोहितं एकावलीसमीपस्थंकुर्वंतंविनयान्बहून् २५
दूताऊचुः राजन्यशोवतीनारीकामिन्याःसहचारिणी आयातिसहसैन्येनराजपुत्रेणसंयुता २६ जयंतोवामहा
राजकार्तिकेयोथवानुकिं आगच्छतिबलान्मत्तोवाहिनीसहितःकिल २७ संयतोभवराजेंद्रसंग्रामःसमुपस्थि
तः देवपुत्रेणयुध्यस्वत्यजवाकमलेक्षणां २८ इतोदूरेस्तिसैन्यंतद्योजनत्रयमात्रतः सज्जोभवमहीपालदुं-
दुभिंघोषयाशुवै २९ व्यासउवाच तेषांतद्वचनंश्रुत्वाराक्षसःक्रोधमूर्च्छितः राक्षसान्प्रेरयामाससायुधान्सब
लान्बहून् ३० गच्छध्वंराक्षसाःसर्वेसम्मुखाःशस्त्रपाणयः तानाज्ञाप्यकालकेतुःपप्रच्छप्रणयान्वितः ३१

यंमंत्रोगौरीतंत्रादिषुप्रसिद्धोन्यासादिकंशारदातिलकटीकायामुक्तंनवमपटले घटार्गलायंत्रविधाने २१ सर्वांतश्चारितेति तेनमंत्रप्रभा
वेनपृथिव्यादिभूतभेदेनशक्तिश्चजातेत्यर्थः २२ २३ २४ २५ २६ जयंतोवेति इंद्रपुत्रइत्यर्थः २७ २८ २९ ३० ३१

३२ ३३ ३४ ३५ ३६ ३७ ३८ एवंवदंत्यमीति तेयशोवतीवयस्यासखीनंवीरंसमानीयकृतोद्यमास्तेतिष्ठतीत्ये



एकावलींसमीपस्थांविवशांभृशदुःखितां कोयमायातितन्वंगिपितातेवापरःपुमान् ३२ त्वदर्थेसैन्यसंयुक्तो ब्रूहिसत्यंकृशोदरि पितातेयदिसंप्राप्तोनेतुंत्वांविरहातुरः ३३ ज्ञात्वातेपितरंसम्यक्संग्रामंनकरोम्यहं आनयित्वा गृहेपूजांरत्नैर्वस्त्रैर्हयैः शुभैः ३४ करोमितस्यचातिथ्यंगृहेप्राप्तस्यसर्वथा अन्यश्चेद्यदिसंप्राप्तस्तंहन्मिनिशितैः शरैः ३५ आनीतःकिलकालेनमरणायमहात्मना तस्माद्वदविशालाक्षिकोयमायातिमंदधीः ३६ अज्ञात्वामां दुराधर्षंकालरूपंमहाबलं एकावल्युवाच नजानेहंमहाभागकोयमायातिसत्वरः ३७ नमेस्तिविदितःकोपि-स्थितायास्तवबंधने नायंपितामेनभ्राताकोप्यन्योस्तिमहाबलः ३८ किमर्थमिहचायातिनाहंवेदविनिश्चयं दैत्य उवाच एवंवदंत्यमीदूतावयस्यातेयशोवती ३९ समानीयचतंवीरमागतेतिकृतोद्यमा क्वगतासासखीकांतेविद-ग्धाकार्यनिश्चये ४० नान्यःकोपिममारातिर्योमेप्रतिबलोभवेत् व्यासउ॰ एतस्मिन्नंतरेदूतास्तत्रान्येवैसमा गताः ४१ तेहोचुस्त्वरितानाभीताःकालकेतुंगृहेस्थितं किंस्वस्थोसिमहाराजसमीपेसैन्यमागतं ४२ निर्गच्छ नगरात्तूर्णंसैन्येनमहतावृतः इतितेषांवचःश्रुत्वाकालकेतुर्महाबलः ४३ रथमारुह्यत्वरितोनिर्ययौस्वपुराद्बहिः एकवीरोपिसहसाहयारूढःप्रतापवान् ४४ आगतस्तत्रकामिन्याविरहेणसमाकुलः युद्धंतयोरभूत्तत्रवृत्रवास वयोरिव ४५ शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगंतरं वर्तमानेतदायुद्धेकातरणांभयावहे ४६ गदयाताडयामासदै-त्यंसिंधुसुतात्मजः सगतासुःपपातोर्व्यांवज्राहतइवाचलः ४७

वममीदूतावदंतीत्यन्वयः ३९ तथाचसासखीत्वयैवप्रेषिता स्यात्सा कुत्रयाप्रेषितेतिवदेत्याह क्वगतेति ४० त्वत्कृतएवायंशत्रुरस्तिनान्यइत्याह ४१ ४२ ४३ ४४ ४५ ४६ ४७

४८ ४९ स्कंधावारेग्रामप्रांतभागे स्कंधावारः पुरांतः स्यादितिकोशः स्कंधावारः सेनावा स्कंधावारस्तुकटकइतित्रिकांडशेषः ५० ५१ क
थितेति तस्याग्रेत्वंमयाकथितातेनहेतुनासौत्वयिपूर्णानुरागः परिपूर्णप्रेमाजानइत्यर्थः ५२ ५३ कौमारप्राप्तयेति कौमारेणवयसाप्राप्ता-

पलायित्वागताः सर्वेराक्षसाभयपीडिताः यशोवतीततोगत्वावेगादेकावलींतदा ४८ उवाचमधुरांवाणींवि-
स्मितांमुदिताभृशं एत्थालिनृपपुत्रेणदानवोसौनिपातितः ४९ एकवीरेणधीरेणयुद्धंकृत्वासुदारुणं स्कं-
धावारेप्यसौराजातिष्ठत्यद्यभ्रमातुरः ५० दर्शनंकांक्षमाणस्तेश्रुतरूपगुणास्तव पश्यतंकुटिलापांगि मनोभवसमं
नृप ५१ कथितात्वंमयापूर्वंतस्याग्रेजान्हवीतटे पूर्णानुरागः संजातस्तेनासौविरहातुरः ५२ वांछतित्वांचारुरूपां
द्रष्टुंनृपतिनंदनः सातस्यावचनंश्रुत्वागमनायमनोदधे ५३ लज्जमानाभृशंभीत्याकौमारप्राप्तयातया कथंत
स्यमुखंद्रक्ष्येकुमारीत्यवशाभृशं ५४ समांग्र ह्लातिकामार्तइतिचिंताकुलासती यशोवत्यासुतातत्रनरयान
स्थितायर्यौ ५५ स्कंधावारेतिमलिनामलिनांबरधारिणी नामागतांविशालाक्षींदृष्ट्वाराजसुतोब्रवीत् ५६ दर्श-
नंदेहितन्वंगितृषितेनयनेमम कामातुरंचतंवीक्ष्यतांचलज्जाभरावृतां ५७ नीतिनिज्ञाशिष्टमार्गज्ञातमुवाचयशो-
वती राजपुत्रपिताप्यस्यास्त्वामेनांदातुमिच्छति ५८ एषापित्वद्वशानूनंभवितासंगमस्तव कालंप्रतीक्ष्यरा-
जेंद्रनयेनांपितुरंतिकं ५९ सविवाहविधिंकृत्वादास्यतीतिविनिश्चयः सेतस्यावचनंतथ्यंमत्वासैन्यसमन्वि-
तः ६० समेतःकामिनीभ्यांतुययौतत्पितुराश्रमं राजपुत्रींतथायातांश्रुत्वाप्रेमसमन्वितः ६१

यात्भीतिस्तयाभीत्या
लज्जमानेत्यन्वयः कौमारात्कथंभीत्युद्भवस्तदाह कथंतस्येति बलात्कारेणमांग्र ह्रीष्य तीतिहेतोरित्यर्थः ५४ तदेवाह समांग्र ह्लातीति
ग्र ह्रीष्यतीत्यर्थः ५५ ५६ ५७ ५८ भवितेति विवाहोत्तरंसंगमोभविष्यतीत्यर्थः ५९ ६० ६१ ६२ ६३ ६४

६२ ६३ ६४ यशोवत्यासमन्वितामिति तस्मैयशोवत्यपि दत्तेत्यर्थः ६५ ६६ इतिश्रीदेवीभागवततिलके षष्ठस्कंधेत्रयोविंशोध्यायः
२३ एकषष्टिश्लोकवर्यैर्ज्ञानिप्रारब्धयोगतः विक्षेपशक्तिकार्यंतुतिष्ठत्येवेतिचोच्यते १ हैहयकथांश्रुत्वासंशयितोराजापृच्छति भगवंस्त्वन्मु

प्रययौसम्मुखस्तूर्णंसन्निवैःपरिवेष्टितः बहुभिर्दिवसैर्दृष्टापुत्रीसामलिनांबरा ६२ यशोवत्यातुवृत्तांतःकथितोविस्त
रात्पुनः एकवीरंमिलित्वासौगृहमानीयचादरात् ६३ पुण्येऽह्निकारयामासविवाहंविधिपूर्वकं पारिबर्हंततोद-
त्वासंपूज्यविधिवत्तदा ६४ पुत्रींविसर्जयामासयशोवत्यासमन्वितां एवंविवाहेसंवृत्ते रमापुत्रोमुदान्वितः ६५
गृहंप्राप्यबहून्भोगान्बुभुजेप्रिययासमं बभूवतस्यांपुत्रस्तु कृतवीर्याभिधः किल ६६ तत्सुतःकार्तवीर्यस्तुवं-
शोयंकथितोमया इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेत्रयोविंशोऽध्यायः २३ राजोवाच भगवंस्त्वन्मु-
खांभोजाच्छ्रुतंदिव्यकथारसं नतृप्तिमधिगच्छामिपिबंस्तुसुधयासमं १ विचित्रमिदमाख्यानंकथितंभव-
तामम हैहयानांसमुत्पत्तिर्विस्तराद्विस्मयप्रदा २ परंकौतूहलंमेत्रयद्विष्णुःकमलापतिः देवदेवोजगन्नाथःसृ
ष्टिस्थित्यंतकारकः ३ सोप्यश्वभावमापन्नोभगवान्हरिरच्युतः परतंत्रःकथंजातःस्वतंत्रःपुरुषोत्तमः ४ ए
तन्मेसंशयंब्रह्मञ्छेत्तुमर्हसिसांप्रतं सर्वज्ञस्त्वंमुनिश्रेष्ठब्रूहिवृत्तांतमद्भुतं ५ व्यासउवाच शृणुराजन्प्रव-
क्ष्यामिसंदेहस्यास्यनिर्णयं यथाश्रुतमयापूर्वंनारदान्मुनिसत्तमात् ६

खांभोजादित्यादिना १ २ कोसौविस्मयस्तमाह प
रंकौतूहलंमेत्रेति ३ ४ ५ अयंभावःविष्ण्वादयःकिंज्ञानिनउताज्ञानिनःयदिज्ञानिनस्तदातेषांमायायाअविवेकस्यचनाशात्कथमेतदविवेक
जन्यहयरूपधारणादिकमाचरणमथयद्यज्ञानिनस्तर्हिसंसारेकेपिज्ञानिनोनसंतीतिविवेकोपदेशप्रतिपादकंशास्त्रंकर्मोपासनाप्रतिपादकं शा-
स्त्रंचव्यर्थंस्यात्तद्धिचित्तशुद्धिसंपादनद्वाराज्ञानेउपयुज्यते यदितुज्ञानमेवदुर्लभंतदातदुपयोगार्थंतदाचरणस्यानर्थक्यमेवेति शृणुरा-

जन्निति अत्रसमाधानकर्तुरयमभिप्रायः विष्यवादयोमहांतोज्ञानिनएव परंतुमायायाःशक्तिद्वयमस्ति एकमावरणशक्त्यात्मकंरूपमपरं
विक्षेपशक्त्यात्मकंरूपंतत्रज्ञानेनतेषामावरणशक्तिरूपेनष्टेपिविक्षेपशक्तिरूपंयावत्कालपर्यंतंप्रारब्धकर्मणादेहस्तिष्ठतितावत्कालप
र्यंतंतिष्ठत्येव तथाचतेषांज्ञानित्वेपिप्रारब्धकर्मप्रेरितविक्षेपशक्त्याहयरूपधारणादिकंपरतंत्रतादिकंचसर्वंसंभवत्येवेति नज्ञानिपुरुषो-
च्छेदोनवाकर्मोपासनाज्ञानकांडानांवैय्यर्थ्यं तस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंपत्स्यइतिश्रुत्यातदावरणशक्तिनाशमात्रेणजीवन्मुक्ते

ब्रह्मणोमानसःपुत्रोनारदोनामतापसः सर्वज्ञःसर्वगःशांतःसर्वलोकप्रियःकविः ७ सचैकदामुनिश्रेष्ठोविचर
न्पृथिवीमिमां वादयन्महतींवीणांस्वरतानसमन्विताम् ८ बृहद्रथंतरादीनांसाम्नांभेदाननेकशः गायन्गायत्रमभृ
तंसंप्राप्तोथममाश्रमं ९ शम्याप्राशंमहातीर्थंसरस्वत्याःसुपावनं निवासंमुनिमुख्यानांशर्मदंज्ञानदंतथा १० त
मागतमहंप्रेक्ष्यब्रह्मपुत्रंमहाद्युतिं अभ्युत्थानादिकंसर्वंकृतवानर्चनादिकं ११ अर्घ्यपाद्यविधिंकृत्वातस्यासन-
स्थितस्यच उपविष्टःसमीपेहंमुनेरमिततेजसः १२ दृष्ट्वाविश्रमिणंशांतंनारदंज्ञानपारदं तमपृच्छमहंराजन्य-
त्पृष्टोहंत्वयाधुना १३ असारेस्मिंस्तुसंसारेप्राणिनांकिंसुखंमुने नपश्यामिविनिश्चित्यकदाचित्कुत्रचित्क्वचित्
१४ द्वीपेजातोजनन्याहंसंत्यक्तस्तत्क्षणादपि अनाश्रयोवनेवृद्धिंप्राप्तःकर्मानुसारतः १५ तपस्तप्तंमयाचोग्रंप
र्वतेबहुवार्षिकं पुत्रकामेनदेवर्षेशंकरःसमुपासितः १६

विदेहमोक्षस्यचसंभवादिति एतदर्थेपिष्टंभावार्थमेवायंसर्वोपिस्कंध
समाप्तिपर्यंतोग्रंथोवेदितव्यस्तदुक्तंवाराहे ज्ञानेनावरणेनष्टेविक्षेपस्त्ववशिष्यतइति ६ ७ ८ ९ निवासंस्थानभूतं १० ११ १२ तमपृच्छम-
हमिति त्वयायःप्रश्नःकृतस्तत्रममाप्यज्ञानंपूर्वंस्थितमितिभावः १३ कुत्रचित्क्वचिदिति तथाचसुखाभावेकिमर्थंमहांतोपिसंसारमोहिताःकर्मा
णिकुर्वंतीतिभावः १४ ननुसंसारेसुखंनास्तीतित्वयाकथंनिश्चितमितिचेत्स्वानुभवेनैवेत्याह द्वीपेजातइति १५ १६ ७ ७ ७

वेदानांसारंश्रीदेवीभागवतं आदितः प्रथमतः आरंभत इत्यर्थः १७ १८ कृत्वाचिंतयित्वेत्यर्थः १९ मिथ्येतिजानन्नपिमायापाशेननियंत्रि-
तोबद्धः २० राज्ञाशंतनुना २१ २२ गंगापुत्रेणभीष्मेण २३ २४ २५ स्त्रीराज्यविमुखेनेति स्त्रीविमुखेनराज्यविमुखेनचभीष्मेणेत्यर्थः

ततोमयाशुकः प्राप्तः पुत्रोज्ञानवतांवरः पाठितस्तुमयासम्यग्वेदानांसारमादितः १७ सत्यक्त्वामांगतः क्वापिरुदंतंवि
रहातुरं लोकाल्लोकांतरंसाधोवचनात्तवबोधितः १८ ततोहंपुत्रसंतप्तस्त्यक्त्वामेरुंमहागिरिं मातरंमनसाकृत्वासंप्रा
प्तःकुरुजांगलं १९ पुत्रस्नेहादनितरांकृशांगः शोकसंयुतः जानन्मिथ्येतिसंसारंमायापाशनियंत्रितः २० ततोरा-
ज्ञाहृतांज्ञात्वामातरंवासवींशुभां स्थितोत्रैवाश्रमंकृत्वासरस्वत्यास्तटेशुभे २१ शंतनुःस्वर्गतिंप्राप्तोविधुरा
जननीस्थिता पुत्रद्वययुतासाध्वीभीष्मेणप्रतिपालिता २२ चित्रांगदःकृतोराजागंगापुत्रेणधीमता कालेन
सोपिमेभ्राताभृतःकामसमद्युतिः २३ ततःसत्यवतीमातानिमग्नाशोकसागरे चित्रांगदंमृतंपुत्रंरुरोदभृ-
शमातुरा २४ संप्राप्तोहंमहाभागज्ञात्वातांदुःखितांसतीं आश्वासितामयात्यर्थंभीष्मेणचमहात्मना २५
विचित्रवीर्यस्त्वपरोवीर्यवान्पृथिवीपतिः कृतोभीष्मेणभ्रातावैस्त्रीराज्यविमुखेनह २६ काशिराजसु-
तेरम्येविजित्यपृथिवीपतीन् भीष्मेणानीयस्वबलात्कन्यकेद्वेसमर्पिते २७ सत्यवत्याशुभेकालेविवाहःपरि
कल्पितः भ्रातुर्विचित्रवीर्यस्यतदाहंसुखितोभवं २८ पुनःसोपिमृतोभ्रातायक्ष्मणापीडितोभृशं अनपत्यायु
वाधन्वीमातामेदुःखिताभवत् २९ काशिराजसुतेद्वेतुमृतंदृष्ट्वापतिंतदा पतिव्रताधर्मपरेभगिन्यौसंबभूवतुः ३०
तेऊचतुःसतींश्वश्रूंरुदतींभृशदुःखितां पतिनासहगामिन्यौभविष्यावोहुताशने ३१ पुत्रेणसहतेश्वश्रुस्वर्गंगत्वाथनं
दने सुखेनविहरिष्यावः पतिनासहसंयुते ३२

२६ २७ २८ २९ ३० तेकाशिराजसुतेऊचतुः ३१ श्वश्रुइतिसंबोधनंसंयुते

मिलितेसपत्न्यौ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१

निवारितेतदामात्रावध्वौतस्मान्महोद्यमात् स्नेहभावंसमाश्रित्यभीष्मस्यवचनात्तदा ३३ गांगेयेनचमात्रामे
संमन्त्र्यचपरस्परं कृत्वौर्ध्वदैहिकंसर्वंसंस्मृतोहंगजाव्हये ३४ स्मृतमात्रस्तुमात्रावैज्ञात्वाभावंमनोगतं तरसैवा
गतश्चाहंनगरंनागसाव्हयं ३५ प्रणम्यमातरंमूर्ध्नासंस्थितोथकृतांजलिः तामब्रवंसुतसागींपुत्रशोकेनकर्शि
तां ३६ मातरस्त्वयाकिमाहूतोमनसाहंतपस्विनि आज्ञापयमहत्कार्यंदासोस्मिकरवाणिकिं ३७ त्वंमेतीर्थं
परंमातर्दैवश्चप्रथितःपरः आगतश्चिंतितश्चात्रब्रूहिकृत्यंतवप्रियं ३८ व्यासउवाच इत्युक्त्वाहंस्थितस्तत्रमा
तुरग्रेयदामुने तदासामामुवाचेदंपश्यंतीभीष्ममंतिके ३९ पुत्रतेद्यमृतोभ्राताषीडितोराजयक्ष्मणा तेनाहं
दुःखिताजातावंशच्छेदभयादिह ४० तस्मात्त्वमद्यमेधाविन्मयाहूतःसमाधिना गांगेयस्यमतेनात्रपाराशर्या
र्थसिद्धये ४१ कुलंस्थापयनष्टंत्वंशंतनोर्नामकारणात् रक्षमांदुःखतःकृष्णवंशच्छेदभयाद्रुतं ४२ का
शिराजसुतेभार्येभ्रातुस्तवयवीयसः साधोर्विचित्रवीर्यस्यरूपयौवनभूषिते ४३ ताभ्यांसंगम्यमेधाविन्
पुत्रोत्पादनकंकुरु रक्षस्वभारतंवंशंनात्रदोषोस्तिकर्हिचित् ४४ व्यासउ० इतिमातुर्वचःश्रुत्वाजातश्चि
तातुरोप्यहं लज्जयाकुलचित्तस्तामब्रुवंविनयानतः ४५ मातःपापाधिकंकर्मपरदाराभिमर्शनं ज्ञात्वाधर्म
पथंसम्यक्करोमिकथमादरात् ४६ तथायवीयसोभ्रातुर्वधूःकन्याप्रकीर्तिता व्यभिचारंकथंकुर्यामधीत्यनि
गमानहं ४७ अन्यायेननकर्तव्यंसर्वथाकुलरक्षणं नतरंतिहिसंसारात्सितरःपापकारिणः ४८ लोकाना
मुपदेष्टायःपुराणानांप्रवर्तकः सकथंकुत्सितंकर्मज्ञात्वाकुर्यान्महाद्भुतं ४९ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९

यापुत्रशोकातितप्तातयामात्रेत्यन्वयः ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ भविष्यतिसुतःपुत्रेति हेपुत्र सुतोभवि-
ष्यतिकिमित्यर्थः रात्रौगर्भधारणमनयाकृतंनवेतिप्रश्नार्थः ५९ ६० कथंपुत्रेति हेपुत्रव्यास ते पुत्रोंधो भविष्यतीतिकथंत्वयाशापोदत्तो

पुनरुक्तोत्यहंमात्रारुदत्याभृशमंतिके पुत्रशोकातितप्तायावंशरक्षणकाम्यया ५० पाराशर्यनतेदोषोवचनान्ममपुत्रक
गुरूणांवचनंतथ्यंसदोषमपिमानवैः ५१ कर्त्तव्यमविचार्यैवशिष्टाचारप्रमाणतः वचनंकुरुमेपुत्रनतेदोषोत्रमानद
५२ पुत्रस्यजननंकृत्वासुखिनींकुरुमातरं विशेषेणतुसंतप्तांमग्नांशोकार्णवेसुत ५३ इतितांब्रुवतींश्रुत्वातदासुरन-
दीसुतः मामुवाचविशेषज्ञःसूक्ष्मधर्मस्यनिर्णये ५४ द्वैपायनविचारोत्रनकर्त्तव्यस्त्वयानघ मातुर्वचनमादायवि
हरस्वयथासुखं ५५ व्यासउवाच इतितस्यवचःश्रुत्वामातुश्चप्रार्थनंतथा निःशंकोहंतदाजातःकार्येतस्मिन्जु
गुप्सिते ५६ अंबिकायांप्रवृत्तोहमृतुमत्यांमुदानिशि मयिविमनसायांतुतापसेकुत्सितेभृशं ५७ शप्तामया
सासुश्रोणीप्रसंगेप्रथमेतदा अंधस्तेभवितापुत्रोयतोनेत्रेनिमीलिते ५८ द्वितीयेन्हिमुनिश्रेष्ठपृष्टोमात्रारहःपु
नः भविष्यतिसुतःपुत्रकाशिराजसुतोदरे ५९ मयोक्ताजननीतत्रव्रीडानम्रमुखेनह विनेत्रोभवितापुत्रोमातःशा
पान्ममैवहि ६० तयानिर्भर्त्सितस्तत्रकठोरवचसासुने कथंपुत्रत्वयाशप्तापुत्रस्तेंधोभविष्यति ६१ इतिश्रीदे-
वीभागवतेमहापुराणेषष्ठस्कंधेचतुर्विंशोऽध्यायः २४ व्यासउवाच वासवीचकिताजाताश्रुत्वामेवाक्यमीदृशं दा
शेयीमामुवाचेदंपुत्रार्थेभृशमातुरा १

नेदमुचितंकृतमितिभावः ६१ इतिश्रीदेवीभागवततिलकेषष्ठस्कंधेचतुर्विंशोऽ
ध्यायः २४ त्रिषष्टिश्लोकवर्यैस्तुस्वमोहमुपपादयन् व्यासोज्ञानिवराणांचमोहेपृच्छतिकारणं १ पुनरपिव्यासःस्वमोहंस्वदुःखमुप-
पादयति वासवीचकितेति दाशेयीदाशादाशपत्नीनस्याःकन्यासत्यवतीस्त्रीभ्योढगितिढक् यद्यपिसामत्स्योदरेजाता तथापिसादाशे

नकन्यात्वेनस्वीकृतेतितत्पत्न्याअपिसाकन्याजातेति सत्यवतीदाशेयी १ २ संगंतस्यांकृत्वापुत्रंजनयेत्यर्थः ३ ४ ५
६ ७ रूपेति कामातुरेमयिप्रीत्यकरणाद्रोषसंभवइत्यभिप्रायः ८ मामननुरूपं दृष्ट्वागर्वेणस्वसौंदर्याभिमानेनयदियतस्त्वं पांडुवर्णाजाता

अंबालिकावधूर्धन्याकाशिराजसुतासुत भार्याविचित्रवीर्यस्यविधवाशोकसंयुता २ सर्वलक्षणसंपन्नारूप-
यौवनशालिनी तस्यांजनयसंगंत्वंकृत्वापुत्रंसुसंमतं ३ नांधोराज्याधिकारीस्यात्तस्मात्पुत्रंमनोहरं उत्पादय
राजपुत्र्यांवच्चनान्ममानद ४ इत्युक्तोहंतदामात्रास्थितस्तत्रगजाह्वये यावदृतुमतीजाताकाशिराजसुतासुते
५ एकांतेशयनागारेप्राप्तासामसन्निधौ लज्जमानासुकेशांतास्वश्वश्रूवचनात्तदा ६ दृष्ट्वामांजटिलंदांतंता
पसंरसवर्जितं सास्वेदवदनाजातापांडुराविमनाभृशं ७ कुपितोहंनदादृष्ट्वाकामिनींनिशिसंगतां वेपमानांस्थि
तांपार्श्वेत्वब्रवंनामहंरुषा ८ दृष्ट्वामांयदिगर्वेणपांडुवर्णासमावृता अतस्तेतनयःपांडुर्भविष्यतिसुमध्यमे ९
इत्युक्त्वानिशितत्रैवस्थितोंबालिकयायुतः भुक्त्वातांनिशिनिर्यातःस्थानमापृच्छ्यमातरं १० ततस्ताभ्यां
सुतौकालेप्रसूतावंधपांडुरौ धृतराष्ट्रश्चपांडुश्चप्रथितौसंबभूवतुः ११ मातामेविमनाजातातादृशौवीक्ष्यतौसुतौ
ततःसंवत्सरस्यांतेमामाहूयतदाब्रवीत् १२ द्वैपायनसुतौजातौराज्ययोग्यौननादृशौ अन्यंमनोहरंपुत्रंसमुत्पादय
मेप्रियं १३ तथेतिसामयाप्रोक्तामुदिताजननीतदा अंबिकांप्रार्थयामाससुतार्थेकालआगते १४ पुत्रिव्यासंसमा
लिंग्यपुत्रमुत्पादयाद्भुतं कुरुवंशस्यकर्तारंराज्ययोग्यंवरानने १५ वधूर्लज्जान्विताकिंचिन्नोवाचवचनंतदा ग
तोहंशयनागारमातुस्तद्वचनान्निशि १६ दासींविचित्रवीर्यस्यरूपयौवनसंयुता प्रेषितांबिकयातत्रविचित्राभ
रणांबरा १७

ननइत्यर्थः ९ तांभुक्त्वानिर्यातइत्यर्थः १० ११ १२ १३ १४ १५ १६ १७

१८ १९ २० २१ मयाहेतुनात्रयःपुत्राअभवन्नित्यर्थः मायाद्वन्द्विगतेति परक्षेत्रोद्भवेपुत्रेन्यस्त्रीषुजायमानेपुत्रेममायाद्वन्द्विगतेत्यर्थः ममपुत्राएतेइति-
भावोजातइत्यर्थः २२ तदेवाह विस्मृतइति २३ २४ तयामाययाकिंकृतंतदाह मातरिस्नेहेति संवृतमासक्तं एतादृशंममचित्तंमायामो-

चंदनारक्तदेहासापुष्पमालाविभूषिता आयाताहावसंयुक्तासुकेशीहंसगामिनी १८ पर्य्यंकेमांसमावेश्यसं-
स्थिताप्रेमसंयुता प्रसन्नोहंतदातस्याविलासेनाभवंमुने १९ रात्रौसंक्रीडितंप्रेम्णा तयासहमयाभृशं वरोद
त्तःपुनस्तस्यैप्रसन्नेनतुनारद २० सुभगेभवितापुत्रःसर्वलक्षणसंयुतः सुरूपःसर्वधर्मज्ञःसत्यवादीशमे
रतः २१ सतदाविदुरोजातस्त्रयःपुत्रामयाभवन् मायाद्वन्द्विगतासाधो परक्षेत्रोद्भवेमम २२ विस्मृतःशु
कसंबंधीविरहःशोककारणं दृष्ट्वात्रीन्स्वसुतान्कामंवीर्यवान्वीर्यसंमतान् २३ मायाबलवतीब्रह्मन्दु-
स्त्यजाप्यकृतात्मभिः अरूपाचनिरालंबाज्ञानिनामपिमोहिनी २४ मातरिस्नेहसंबद्धंतथापुत्रेषुसंवृ-
तं नमेचित्तंवनेशांतिमगान्मुनिवरोत्तम २५ दोलारूढंमनोजातंकदाचिद्धस्तिनापुरे पुनःसरस्वतीतीरे
नचैकत्रव्यवस्थितिः २६ कदाचिच्चिंतयन्ज्ञानंमानसेप्रतिभातिवै केमीपुत्राःक्कमोहोयंनश्राद्धार्हामृत
स्यमे २७ व्यभिचारोद्भवाःकिंमेसुखदाःस्युःसुताःकिल मायाबलवतीमोहंवितनोतिहिमानसे २८ जानन्मो
हांधकूपेस्मिन्पतितोहंमृषामुने इत्यकुर्वंरहस्तापंकदाचित्सुसमाहितः २९

हितंवनेशांतिंनागात्नप्राप्तवदित्यर्थः २५ २६
ननुतवविवेकाभावान्मायामोहितत्वंयुक्तमेवेतिचेद्विवेकोप्यतिनिर्मलोस्ति तथापिमायामोहितत्वमस्तीत्याश्चर्यमित्याह कदाचिदितिचिंतय न्विचार
यन्स्थितोहंयदातदाकदाचिन्ममानसेइत्यर्थः केमीति अमीपुत्राः केमेमृतस्यश्राद्धार्हाअपिन श्राद्धकारिणोनभवंतितथासतितेष्वयंमोहःक्क
निरर्थकस्तेषुमोहइतिज्ञानमित्यर्थः २७ २८ तथाचज्ञानिनोपिमेमायाऽवमोहोनगच्छतिदुःखादिकंचजायतइतिदर्शितं २९ ७ ७

यदापांडुर्नृपोराज्यंप्रापतदाममनः प्रसन्नंजातमित्यर्थः इयमपिमायैव ३० ३१ सशापमिति स्त्रीसंभोगेकृतेसतितवमरणंभविष्यती-
त्येवंरूपं ३२ तदामामिति इयमपिमायैवेतिभावः ३३ ब्रह्मजातटेसरस्वतीतटे ३४ ३५ ३६ ३७ पतिनासहाग्निंप्रवि-

राज्यंप्रापततःपांडुर्बलवान्भीष्मसंमतः तदाममनोजातंप्रसन्नंसुतकारणात् ३० कुंतीमाद्रीसुरूपेद्वेभा-
र्येतस्यबभूवतुः शूरसेनकृताकुंतीमद्रराजसुतापरा ३१ सशापंद्विजतःप्राप्यकामिनीद्वयसंयुतः पांडुर्निर्वेदमाप
न्नस्त्यक्त्वाराज्यंवनंगतः ३२ तदामामाविशच्छोकःश्रुत्वापुत्रंवनेस्थितं गतोहंतत्रयत्रासौभार्याभ्यांसहसं-
स्थितः ३३ तमाश्वास्यवनेपांडुंपुनःप्राप्तोगजाह्वये धृतराष्ट्रंसमाभाष्यत्वगमंब्रह्मजातटे ३४ क्षेत्रजान्पंच
पुत्रान्ससमुत्पाद्यवनाश्रमे धर्मतोवायुतःशक्रादश्विभ्यांपंचपांडवान् ३५ युधिष्ठिरोभीमसेनस्तथैवार्जुनइ
त्यपि कुंतीपुत्राःसमाख्याताधर्मानिलसुरेशजाः ३६ नकुलःसहदेवश्चमद्रराजसुतासुतौ कदाचित्तुरहो-
माद्रींसमालिंग्यमहीपतिः ३७ मृतःशापात्तुमुनिभिःसंस्कृतोहुतभुङ्मुखे माद्रीतत्रसतीभूत्वाप्रविष्टापति
नासह ३८ स्थितापुत्रयुताकुंतीज्वलितेजातवेदसि मुनयःसुतसंयुक्तांशूरसेनकृतांतदा ३९ दुःखितांप
तिहीनांतामानिन्युर्गजसाह्वये समर्पितायभीष्मायविदुरायमहात्मने ४० श्रुत्वाहंसुखदुःखाभ्यांपीडितस्तु
परात्मभिः भीष्मेणपालितोःपुत्राःपांडोरितिविचिंत्यते ४१ विदुरेणतथाप्रीत्याधृतराष्ट्रेणधीमता दुर्योधनो
दयस्तस्यपुत्रायेक्रूरमानसाः ४२ एकत्रास्थितिमापन्नाविरोधंचक्रुरद्भुतं द्रोणाचार्यस्तुसंप्राप्तस्तत्रभी-
ष्मेणमानितः ४३

ष्टेत्यर्थः ३८ ३९ ४० परात्मभिःपरदेहैःपीडितइयमपिमायेत्यर्थः भीष्मेणेति भीष्मेणविदुरेणधृ-
तराष्ट्रेणतेपांडोःपुत्राःपालितााइतिविचिंत्यदुर्योधनादयस्तस्य धृतराष्ट्रस्यपुत्राविरोधंचक्रुरित्यन्वयः ४१ ४२ ४३

४४ ४५ ४६ ४७ ४८ मग्नोहमिति इयमपिमायैवेत्यर्थः ४९ वनेपश्यन्नन्वेषमाणइत्यर्थः ५० ५१ ५२ ५३ ५४ ५५



अध्यापनायपुत्राणांपुरेतस्मिन्निवासितः कर्णःकुंत्यापरित्यक्तोजातमात्रःशिशुर्यदा ४४ सूतेनपालितोनद्यां प्राप्तश्चाधिरथेनह दुर्योधनप्रियश्चाभूत्कर्णःशूरतमस्तथा ४५ परस्परंविरोधोभूद्भीमदुर्योधनादिषु धृतराष्ट्रस्तु संचिंत्यक्लेशंपुत्रेषुतेषुच ४६ निवासंकल्पयामासपांडवानांमहात्मनां विरोधशमनायैवनगरेवारणावते ४७ दुर्योधनेनतत्रैवद्रोहाज्जतुगृहाणिवै कारितानिचदिव्यानिप्रेष्यमित्रंपुरोचनं ४८ श्रुत्वाजतुगृहेदग्धान्पांडवान्पृथयायुतान् पौत्रभावान्मुनिश्रेष्ठमग्नोहंव्यसनार्णवे ४९ शोकातुरोभृशंशून्येवनेपश्यन्नहर्निशं दृष्टाम-यैकचक्रायांपांडवादुःखकर्शिताः ५० ततस्तुष्टमनाश्चाहंजातःपार्थान्विलोक्यच प्रेरितास्तेमयातूर्णंद्रुपदस्य पुरंप्रति ५१ तेनतास्तत्रदुःखार्ताविप्रवेषधराःकृशाः मृगचर्मपरीधानाःसभायांसंस्थितास्तदा ५२ कृत्वा पराक्रमंजिष्णुःसजित्वाद्रुपदात्मजां चक्रुर्विवाहंमानिन्याःपंचैवमातृवाक्यतः ५३ दृष्ट्वाविवाहंतेषांतुमुदितो हंभृशंतदा ततोनागाव्हयंप्राप्तापांचालीसहितामुने ५४ निवासंखांडवप्रस्थंधृतराष्ट्रेणकल्पितं पांडवानांहि जश्रेष्ठवसुदेवसुतेनवै ५५ तर्पितःपावकस्तत्रविष्णुनासहजिष्णुना राजसूयःकृतोयज्ञस्तदाहंमुदितोभवं ५६ दृष्ट्वाथविभवंतेषांतथामयकृतांसभां दुर्योधनोतिसंतप्तोदुरोदरमथाकरोत् ५७ दुर्द्यूतवेदीशकुनिःरनक्षज्ञश्च-धर्मजः ९हृतंराज्यंधनंसर्वंयाज्ञसेनीचकर्षिता ५८ वनेद्वादशवर्षाणिपांडवास्तेविवासिताः पांचालीसहितास्ते नदुःखंमेजनिताभृशं ५९ एवंनारदसंसारेसुखदुःखात्मकेभृशं निमग्नोहंभ्रमेणैवजानन्धर्मंसनातनं ६०

५६ ५७ ५८ ५९ जानन्धर्मंसनातनमिति ब्रह्मविद्यांतत्साधनंचसर्वंजानन्नित्यर्थः ६० ६१ ६२ ६३

६१ ६२ ज्ञानिनोपिममकथमनेकेषु पूर्वोक्तेषुस्थलेषुमायामोहसुखदुःखादिकं चजातमित्यर्थः मोहादीनामनेकेषुस्थानेषुदर्शनार्थमे
वैतावत्पर्यंतं प्रसिद्धकथायाउपन्यासः ६३ इतिश्रीदेवीभागवततिलके षष्ठस्कंधेपंचविंशोऽध्यायः २५ सप्ताधिकैश्वपंचाशत्पद्यैरथतु-

कोहंकस्यसुतास्तेऽमीकामाताकिंसुखंपुनः येनमेत्हृदयंमोहाद्भ्रमतीतिदिवानिशं ६१ किंकरोमिक्वगच्छा-
मिसंतोषोनाधिगच्छति दोलारूढंमनोमेत्रचंचलंनस्थिरंभवेत् ६२ सर्वज्ञोसिमुनिश्रेष्ठसंदेहंमेनिवर्तय
तथाकुरुयथाहंस्यांसुखितोविगतज्वरः ६३ इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेपंचविंशोऽध्यायः
२५ व्यासउवाच इतिमेवचनंश्रुत्वानारदःपरमार्थवित् मामाहचस्मितंकृत्वापृच्छंतंमोहकारणं १ नारद
उवाच पाराशर्य्यपुराणज्ञकिंपृच्छसिसुनिश्चयं संसारेस्मिन्विनामोहंकोपिनास्तिशरीरवान् २ ब्रह्मा
विष्णुस्तथारुद्रःसनकःकपिलस्तथा माययावेष्टिताःसर्वेभ्रमंतिभववर्त्मनि ३ ज्ञानिनंमांजनोवेत्तिभ्रां-
तोहंसर्वलोकवत् शृणुमेपूर्ववृत्तांतंप्रब्रवीमिसुनिश्चितम् ४

नारदःस्वमोहस्यैवमाहात्म्यंनिजगादेतिचोच्यते १

इतिमेइति इतिमेपूर्वोक्तवाक्यंश्रुत्वामांनारदआहेत्यन्वयः १ संसारेस्मिन्निति अयंभावः ज्ञानिनोपिममकथंमायामोहदुःखादिकंजायतइ
तित्वयापृष्टंतत्रनायंज्ञानमहिमायेनविक्षेपरूपसंसारोच्छेदोभवेत् किंतुमायायाःशक्तिद्वयमस्ति एकाऽवरणशक्तिरपराविक्षेपरूपातत्र-
ज्ञानेसत्यावरणरूपशक्तेर्नाशेपिविक्षेपशक्तिःप्रारब्धकर्मक्षयपर्यंतंतथैवतिष्ठतितयाचपूर्ववदेवकदाचिन्मोहादिकंजायतेतस्मात्कथंममवि-
चारवतोपिमोहादिकमितिनाश्चर्यंकिंतुदेहवतःस्वभावएवायमिति २ नकेवलंजीवानामेवमोहादिकंजायतेइतिमंतव्यं किंत्वीश्वराणामपीत्या
ह ब्रह्माविष्णुस्तथारुद्रइति तेषांमोहःप्रथमस्कंधमारभ्यबहुषुस्थलेषुपूर्वमुपपादितएव माययावेष्टिताइति वेष्टितत्वात्ज्ञानिनामपितेषांवि
क्षेपशक्तिर्वर्ततएवअतएवतेभववर्त्मनिभ्रमंतिनीचमत्स्यादियोनिषु यतोदेवादीनामपीदृशीदशाततोमनुष्याणांकिंविचार्यमितिभावः ३ किंचहेव्या

४४ ४५ ४६ ४७ ४८ मग्नोहमिति इयमपिमायैवेत्यर्थः ४९ वनेपश्यन्नन्वेषमाणइत्यर्थः ५० ५१ ५२ ५३ ५४ ५५



अध्यापनायपुत्राणांपुरेतस्मिन्निवासितः कर्णःकुंत्यापरित्यक्तोजातमात्रःशिशुर्यदा ४४ सूतेनपालितोनद्यां प्राप्तश्चाधिरथेनह दुर्योधनप्रियश्चाभूत्कर्णःशूरतमस्तथा ४५ परस्परंविरोधोभूद्बालमुदुर्योधनादिषु धृतराष्ट्रस्तु संचिंत्यक्लेशंपुत्रेषुतेषुच ४६ निवासंकल्पयामासपांडवानांमहात्मनां विरोधशमनायैव नगरेवारणावते ४७ दुर्योधनेनतत्रैवद्रोहाज्जतुगृहाणिवै कारितानिचदिव्यानिप्रेष्यमित्रंपुरोचनं ४८ श्रुत्वाजतुगृहेदग्धान्पांडवा न्पृथयायुतान् पौत्रभावान्मुनिश्रेष्ठमग्नोहंव्यसनार्णवे ४९ शोकातुरोभृशशून्येवनेपश्यन्नहर्निशं दृष्टाम- यैकचक्रायांपांडवादुःखकर्शिताः ५० ततस्तुष्टमनाश्चाहंजातःपार्थान्विलोक्यच प्रेरितास्तेमयातूर्णंद्रुपदस्य पुरंप्रति ५१ तेनतास्तत्रदुःखार्ताविप्रवेषधराःकृशाः मृगचर्मपरीधानाःसभायांसंस्थितास्तदा ५२ कृत्वा पराक्रमंजिष्णुःसजित्वाद्रुपदात्मजां चक्रुर्विवाहंमानिन्याःपंचैवमातृवाक्यतः ५३ दृष्ट्वाविवाहंतेषांतुमुदितो हंभृशंतदा ततोनागाव्हयेप्राप्तापांचालीसहितामुने ५४ निवासंखांडवप्रस्थंधृतराष्ट्रेणकल्पितं पांडवानांद्वि जश्रेष्ठवसुदेवसुतेनवै ५५ तर्पितःपावकस्तत्रविष्णुनासहजिष्णुना राजसूयःकृतोयज्ञस्तदाहंमुदितोभवं ५६ दृष्ट्वाथविभवंतेषांतथामयकृतांसभां दुर्योधनोतिसंतप्तोदुरोदरमथाकरोत् ५७ दुर्द्यूतवेदीशकुनिःरनक्षज्ञश्च- धर्मजः ९६तंराज्यंधनंसर्वंयाज्ञसेनीचक्लेशिता ५८ वनेद्वादशवर्षाणिपांडवास्तेविवासिताः पांचालीसहितास्त नदुःखंमेजनिताभृशं ५९ एवंनारदसंसारे सुखदुःखात्मकेभृशं निमग्नोहंभ्रमेणैवजानन्धर्मसनातनं ६०

५६ ५७ ५८ ५९ जानन्धर्मसनातनमिति ब्रह्मविद्यांतत्साधनंचसर्वंजानन्नित्यर्थः ६० छ छ छ

६१ ६२ ज्ञानिनोपिममकथमनेकेषु पूर्वोक्तेषुस्थलेषुमायामोहसुखदुःखादिकं चजातमित्यर्थः मोहादीनामनेकेषुस्थानेषुदर्शनार्थमे
वैतावत्पर्यंतंप्रसिद्धकथायाउपन्यासः ६३ इतिश्रीदेवीभागवततिलके षष्ठस्कंधेपंचविंशोऽध्यायः २५ सप्ताधिकैश्चपंचाशत्पद्यैरथतु-

कोहंकस्यसुतास्तेऽमीकामाताकिंसुखंपुनः येनमेहृदयंमोहाद्भ्रमतीतिदिवानिशं ६१ किंकरोमिक्वगच्छा-
मिसंतोषोनाधिगच्छति दोलारूढंमनोमेत्रचंचलंनस्थिरंभवेत् ६२ सर्वज्ञोसिमुनिश्रेष्ठसंदेहंमेनिवर्तय
तथाकुरुयथाहंस्यांसुखितोविगतज्वरः ६३ इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेपंचविंशोऽध्यायः
२५ व्यासउवाच इतिमेवचनंश्रुत्वानारदःपरमार्थवित् मामाहचस्मितंकृत्वापृच्छंतंमोहकारणं १ नारद
उवाच पाराशर्य्यपुराणज्ञकिंपृच्छसिसुनिश्चयं संसारेस्मिन्विनामोहंकोपिनास्तिशरीरवान् २ ब्रह्मा
विष्णुस्तथारुद्रःसनकःकपिलस्तथा माययावेष्टिताःसर्वेभ्रमंतिभववर्त्मनि ३ ज्ञानिनंमांजनोवेत्तिभ्रां-
तोहंसर्वलोकवत् शृणुमेपूर्ववृत्तांतंप्रबवीमिसुनिश्चितम् ४

नारदः स्वमोहस्यैवमाहात्म्यंनिजगादेतिचोच्यते १

इतिमेइति इतिमेपूर्वोक्तवाक्यंश्रुत्वामांनारदआहेत्यन्वयः १ संसारेस्मिन्निति अयंभावः ज्ञानिनोपिममकथंमायामोहदुःखादिकंजायतइ
तित्वयापृष्टंतत्रनायंज्ञानमहिमायेनविक्षेपरूपसंसारोच्छेदोभवेत् किंतुमायायाःशक्तिद्वयमस्ति एकाऽवरणशक्तिरपराविक्षेपरूपातत्र-
ज्ञानेसत्यावरणरूपशक्तेर्नाशेपिविक्षेपशक्तिःप्रारब्धकर्मक्षयपर्यंतंतथैवतिष्ठतितयाचपूर्ववदेवकदाचिन्मोहादिकंजायतेतस्मात्कथंममवि-
चारवतोपिमोहादिकमितिनाश्चर्यंकिंतुदेहवतःस्वभावएवायमिति २ नकेवलंजीवानामेवमोहादिकंजायतेइतिमंतव्यं किंत्वीश्वराणामपीत्या
ह ब्रह्माविष्णुस्तथारुद्रइति तेषांमोहःप्रथमस्कंधमारभ्यबहुषुस्थलेषुपूर्वमुपपादितएव माययावेष्टिताइति वेष्टितत्वाज्ज्ञानिनामपितेषांवि
क्षेपशक्तिर्वर्ततएवअतएवतेभववर्त्मनिभ्रमंतिनीचमत्स्यादियोनिषु यतोदेवादीनामपीदृशीदशाततोमनुष्याणांकिंविचार्यमितिभावः ३ किंचहेव्या

समांजनोज्ञानिनं वेत्तितत्राहमपिज्ञानीसन्नपिसर्वलोकवत्पामरजनवदज्ञातएवकस्मादितिचेत् शृणुममलोकातीतांदुर्दशामित्याह शृण्विति ४ ५ पर्वतश्चाहंपर्वतनामाममभागिनेयोमुनिरहंचेत्यर्थः ननुब्रह्मपुत्रस्यनारदस्यकथंपर्वतोभागिनेयइतिचेत्सप्तमस्कंधे दक्षा

दुःखंमयायथापूर्वमनुभूतंमहत्तरं स्वकृतेनचमोहेनभार्यार्थेवासवीसुत ५ एकदापर्वतश्चाहंदेवलोकान्महीतलं प्राप्तौविलोकनार्थायभारतंखंडमुत्तमं ६ भ्रमंतौसुहितावुर्व्यांपश्यंतौतीर्थमंडलं पावनानिचस्थानानिमुनीनामाश्रमाञ्छुभान् ७ शपथंदेवलोकात्तुकृत्वापूर्वंपरस्परं चलितौसमयंचेमंसंमंत्र्यनिश्चयेनवै ८ चित्तवृत्तिस्तुवक्तव्यायादृशीयस्यजायते शुभावाप्यशुभावापिनगोप्तव्याकदाचन ९ भोजनेच्छाधनेच्छापिरतीच्छावाभवेदपि यादृशीयस्यचित्तेतुकथनीयापरस्परं १० इत्यावांसमयंकृत्वास्वर्गाद्भूलोकमागतौ एकचित्तौमुनीभूतौविचरंतौयथेच्छया ११ एवंभ्रमंतौलोकेस्मिन्ग्रीष्मांतेसमुपागते संजयस्यपुरंरम्यंसंप्राप्तौनृपतेःपुनः १२ तेनसंपूजितौभक्त्याराज्ञासंमानितौभृशं स्थितौतत्रगृहेतस्यचातुर्मास्यंमहात्मनः १३ वार्षिकाश्चतुरोमासादुर्गमाःपथिसर्वदा तस्मादेकत्रविबुधैःस्थातव्यमितिनिश्चयः १४ अष्टौमासांस्तुप्रवसेत्सदाकार्यवशाद्द्विजः वर्षाकालेनगंतव्यंप्रवासेसुखमिच्छता १५ इतिसंचिंत्यमनसासंजयस्यगृहेतदा संस्थितौमानितौराज्ञाकृतातिथ्यौमहात्मना १६ दमयंतीतिविख्यातातस्यपुत्रीमहीपतेः आज्ञप्तापरिचर्यार्थंसुदतीसुंदरीभृशं १७ विवेकज्ञाविशालाक्षीराजपुत्रीकृतोद्यमा सेवनंसर्वकालेचव्यदधादुभयोरपि १८

न्नारदस्यद्वितीयजन्मनोवक्ष्यमाणत्वेनद्वितीयजन्मस्थोयंभागिनेयइत्यभिप्रायेणास्याउक्तेःसत्त्वात् ६ ७ ८ चित्तवृत्तिस्तुवक्तव्येति भूतलेनाविधंवस्तुदृष्टायस्ययादृशीजायेतचित्तवृत्तिःसातेनवक्तव्येत्यर्थः अयमेवोभाभ्यांसंकेतःकृतः ९ १० ११ १२ १३ १४ १५ १६ १७ १८

१९ २० २१ २२ २३ २४ २५ २६

स्नानार्थमुदकंकालेभोजनंमिष्टमायतं मुखवासंतथाचान्यंयदिष्टंतद्ददातिसा १९ मनोभिलषितान्कामानुभयो
रपिकन्यका व्यंजनासनशय्यादीन्वांछितान्यप्यकल्पयत् २० एवंसंसेव्यमानौतुस्थितौराज्ञोगृहेकिल वेदा
ध्ययनसंशीलावावांवेदव्रतेरतौ २१ अहंवीणांकरेकृत्वासाधयित्वास्वरोत्तमं गायन्त्रंसामसुस्वादमगांकर्णर-
सायनं २२ राजपुत्रीतुतच्छ्रुत्वासामगानंमनोहरं बभूवमयिरागाढ्याप्रीतियुक्ताविशारदा २३ दिनेदिनेनुरा-
गोस्यामपिवृद्धिंगतःपरः समापिप्रीतियुक्तायांमनोजातंस्पृहापरं २४ ममनेस्यन्चसाकन्याभोजनादिषुकर्हि-
चित् अकरोदंतरंकिंचित्सेवाभेदंरसान्विता २५ स्नानायोष्णजलंमह्यंपर्वतायचशीतलं दधिमह्यंतथातक्रंप
र्वतायाप्यकल्पयत् २६ शयनास्तरणंशुभ्रंमदर्थेपर्यकल्पयत् प्रीत्यापरमयायद्वत्पर्वतायननादृशं २७
विलोकयतिमांप्रेम्णासुंदरीनचपर्वतं ततोस्यास्तादृशंदृष्ट्वापर्वतःप्रेमकारणं २८ मनसाचिंतयामासकिमेत
दितिविस्मितः पप्रच्छमांरहःसम्यग्ब्रूहिनारदसर्वथा २९ राजपुत्रीत्वयिप्रेमकरोतिमुदिताभृशं ददाति
भक्ष्यभोज्यानिस्नेहयुक्तासमंततः ३० नतथामयिभेदोत्रसंदेहंजनयत्यसौ मन्यतेत्वांपतिंकर्तुंसर्वथासंज
यात्मजा ३१ तवापितादृशंभावंजानामिलक्षणैरहं नेत्रवक्त्रविकारैश्चज्ञायतेप्रीतिकारणं ३२ सत्यंवदन
तेमिथ्यावक्तव्यंवचनंमुने स्वर्गतःसमयंकृत्वाचलितौसंस्मराधुना ३३ नारदउवाच पृष्टोहंपर्वतेनेदंका
रणंतुहठाधुदा तदाहंव्रीडयाक्रांतःसंजातश्चाब्रवंपुनः ३४ पर्वतैषाविशालाक्षीपतिंमांकर्तुमुद्यता म
मापिमानसोभावोवर्ततेस्यांविशेषतः ३५

२७ - २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ७

तच्छ्रुत्वावचनंसत्यंपर्वतःकोपसंयुतः मामुवाचमुनिर्वाक्यंधिग्धिगितिपुनःपुनः ३६ प्रथमंशपथान्कृत्वावंचितो
हंत्वयायतः भववानरवक्त्रस्त्वंशापाच्चममित्रध्रुक् ३७ इतिशप्तस्तुतेनाहंकुपितेनमहात्मना सहसात्यभवंक्रू
रः शाखामृगमुखस्तदा ३८ मयापिनकृतातस्मिन्क्षमामातुभगिनीसुते सोपिशप्तोतिकोपाद्वैमास्वर्गेतेगतिःकिल
३९ स्वल्पेऽपराधेयस्मान्मांशप्तवानसिपर्वत तस्मात्तवापिमंदात्मन्मृत्युलोकेस्थितिःकिल ४० पर्वतस्तुगत
स्तस्मान्नगराद्विमनाभृशं अहंवानरवक्त्रस्तुसंजातस्तत्क्षणादपि ४१ दृष्ट्वामांवानरंक्रूरंराजपुत्रीविलक्षणा
विमनातीवसंजातावीणाश्रवणलालसा ४२ व्यासउवाच ततःकिमभवद्ब्रह्मन्कथंशापान्निवर्तितः मानुषा-
स्यःपुनर्जातोभवान्ब्रूहियथाविधि ४३ पर्वतःक्वगतोभूयःसंगमोयुवयोरभूत् कदाकुत्रकथंसर्वविस्तरेणवद
स्वह ४४ नारदउवाच किंब्रवीमिमहाभागमायायाश्चरितंमहत् दुःखितोहंभृशंतत्रपर्वतेरुषितेगते ४५
पुनःसेवापरात्यर्थंराजपुत्रीममाभवत् गतेथपर्वतेकामंस्थितस्तत्रैवसद्मनि ४६ अहंदुःखान्वितोदीनस्तथावा
नरवन्मुखः विशेषेणातुचिंतार्तःकिंमेस्यादितिचिंतयन् ४७ संजयोथसुतांदृष्ट्वाकिंचित्प्रकटयौवनां विवाहा
र्थेराजसुतामपृच्छत्सचिवंतदा ४८ विवाहकालःसंप्राप्तःसुतायाममसांप्रतं योग्यंवरंममब्रूहिराजपुत्रंसुसं
मतं ४९ रूपौदार्यगुणैर्युक्तंशूरंसुकुलसंभवं विवाहंविधिवत्पुत्र्याःकरोमिकिलसांप्रतं ५० प्रधानस्त्वब्र
वीद्राजन्राजपुत्रात्यनेकशः वर्त्ततेभुविपुत्र्यास्तेयोग्याःसर्वगुणान्विताः ५१ यस्मिन्नुचिस्तेराजेंद्रतमाहूय-
नृपात्मजं देहिकन्याधनंभूरिहस्त्यश्वरथसंयुतं ५२

५३ ५४ ५५ ५६ तिमिंगिलविवर्जिते सुखविघातकपदार्थरहितेनादसिंधावित्यर्थः ५७ इतिश्रीदेवीभागवततिलके षष्ठस्कं-
धेषड्विंशोऽध्यायः २६ षट्पंचाशत्पद्यवर्यैर्विवाहो नारदस्यह प्रोच्यते यत्रमोहस्य महिमातीववर्ण्यते १ पूर्वाध्याये दमयंतीस्वाभिप्रायंधा

नारदउवाच पितुश्चिकीर्षितंज्ञात्वादमयंतीतदानृपं धात्र्यामुखेनवाक्यज्ञातमुवाचरहःस्थितम् ५३ धात्र्युवाच
दमयंतीमहाराजपुत्रीतेमामथाब्रवीत् पितरंब्रूहिधात्रेयिवचनान्मेसुखान्वितं ५४ मयावृतोथमेधावीनारदोम
हतीयुतः नादमोहितयाकामंनान्यःकोपिप्रियोमम ५५ कुरुमेवांछितंतातविवाहंमुनिनासह नान्यंवरिष्येधर्म
ज्ञनारदंतुपतिंविना ५६ मग्नाहंनादसिंधौवैनक्रहीनेरसात्मके अक्षारेसुखसंपूर्णेतिमिंगिलविवर्जिते ५७
इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेषड्विंशोऽध्यायः २६ नारदउवाच तत्पुत्र्यावचनंश्रुत्वाराजाधात्रीमु-
खात्ततः भार्यांप्रोवाचकैकेयींसमीपस्थांसुलोचनां १ राजोवाच यदुक्तंवचनंकांतेधात्र्यातत्तुत्वयाश्रुतं वृतो
यंनारदःकामंमुनिर्वानरवक्त्रभाक् २ किमिदंचिंतितंपुत्र्याबुद्धिहीनविचेष्टितं कथमस्मैमयादेयाकन्याहरिसु
खायसा ३ क्वासौभिक्षुःकुरूपःक्व दमयंतीममात्मजा विपरीतमिदंकार्यंनविधेयंकदाचन ४ तामेकांतेस्त्र
केशांतेनिवारयहठात्सुतां युक्त्यामुनिरतांमुग्धांशास्त्रदृष्टानुसारया ५ इतिभर्तृवचःश्रुत्वाजननीतामथाब्र-
वीत् क्वतेरूपंमुनिःक्वासौवानरास्योऽधनःपुनः ६ कथंमोहमवाप्तासिभिक्षुकेचतुरापुनः लताकोमलदेहात्वंभ
स्मरूक्षतनुस्त्वयं ७ वार्तावानरवक्त्रेणकथंयुक्तातवानघे काप्रीतिःकुत्सितेपुंसिभविष्यतिशुचिस्मिते ८ वरस्ते
राजपुत्रोस्तुमाकुरुत्वंवृथाहठं पितातेदुःखमाप्नोतिश्रुत्वाधात्रीमुखाद्वचः ९

श्चैप्रोवाचेत्युक्तं तदुत्तरंजातंवृत्तमाह तत्पुत्र्यावचन-
मिति १ २ बुद्धिहीनंयथास्यात्तथाविचेष्टितमित्यर्थः ३ ४ हेसुकेशांतेशास्त्रदृष्टानुसारयायुक्त्यामुनिरतांमुग्धांनिवारयेत्यन्वयः ५ ६ ७ ८ ९ छ

बुबूलवृक्षः कंटकवृक्षः १० दासेरकायदास्याः पुत्रो दासेरः क्षुद्राभ्योवेतिपक्षेढक् सएवदासेरकः उष्ट्रोवा ११ १२ अमुनानारदेन १३ १४



लग्नांबुबूलवृक्षेणकोमलांमालतीलतां दृष्ट्वाकस्यमनःखेदंचतुरस्यनगच्छति १० दासेरकायतांबूलीदलानि कोमलानिकः ददातिभक्षणार्थायमूर्खोपिधरणीतले ११ वीक्ष्यत्वांकरसंलग्नांनारदस्यसमीपतः विवाहेवर्तमानेतुकस्यचेतोनदत्यति १२ कुसुखेनसमंवार्तानरुचिंजनयत्यतः आमरणात्तुकथंकालःक्षपितव्यस्त्वयामुना १३ नारदउवाच इतिमातुर्वचःश्रुत्वादमयंतीभृशातुरा मातरंप्राहतन्वंगीमयिसाकृतनिश्चया १४ किंसुखेनचरूपेणमूर्खस्यचधनेनकिं किंराज्येनाविदग्धस्यरसमार्गाविदोस्यच १५ हरिण्योपिवनेधन्यायानादेनविमोहिताः गातुःप्राणान्प्रयच्छंतिधिङ्मूर्खान्मानुषान्भुवि १६ नारदोवेत्तियांविद्यांमातःसप्तस्वरात्मिकां तृतीयःकोपिनोवेदशिवादन्यःपुमान्किल १७ मूर्खेणसहसंवासोमरणंतत्क्षणेक्षणे रूपवान्धनवांस्त्याज्योगुणहीनोनरःसदा १८ धिङ्मैत्रीमूर्खभूपालेवृथागर्वसमन्विते गुणज्ञेभिक्षुकेश्रेष्ठावचनात्सुखदायिनी १९ स्वरज्ञोग्रामवित्कामूर्च्छनाज्ञानभेदभाक् दुर्लभःपुरुषश्चाष्टरसज्ञोदुर्बलोपिवै २० यथानयतिकैलासंगंगान्वैवसरस्वती तथानयतिकैलासंस्वरज्ञानविशारदः २१ स्वरमानंतुयोवेदसदेवोमानुषोपिसन् सप्तभेदंनयोवेदसपशुःसुरराडपि २२ मूर्च्छनातानमार्गंतुश्रुत्वामोदंनयातियः सपशुःसर्वथाज्ञेयोहरिणाःपशवोनहि २३ वरंविषधरःसर्पःश्रुत्वानादंमनोहरं अश्रोत्रोपिमुदंयातिधिक्सकर्णंश्चमानवान् २४ बालोपिसुस्वरंगेयंश्रुत्वामुदितमानसः जायतेकिंतुतेदृष्ट्वानजानंतिधिगस्तुतान् २५

१५ १६ १७ १८ १९ २० २१ सप्तभेदंषड्जादिसप्तभेदसंहितंगानमित्यर्थः २२ हरिणाःपशवोनहितेषांगानलुब्धत्वस्यसत्त्वात् २३ सकर्णांश्चेति यतोमुदंनयांतीतिशेषः २४ २५

२६ २७ २८ २९ ३० ३१ ३२ वानरास्योहं तत्रैवस्थित इत्यर्थः ३३ यतोवानराननस्ततोदुःखसंतप्त इत्यर्थः ३४ ३५ ३६ ३७

पितामेकिंनजानातिनारदस्यगुणान्बहून् द्वितीयःसामगोनास्तित्रिषुलोकेषुतत्समः २६ तस्मादसौमयानूनंवृतः पूर्वसमागमात् पश्चाच्छापवशाज्जातोवानरास्योगुणाकरः २७ किन्नरानप्रियाःकस्यभवंतितुरगाननाः गान विद्यासमायुक्ताःकिंसुखेनवरेणह २८ पितरंब्रूहिमेमानर्वृतोयंमुनिसत्तमः तस्मात्त्वमाग्रहंत्यक्त्वादेहितस्मैच मांमुदा २९ नारदउवाच इतिपुत्र्यावचःश्रुत्वाराज्ञीराज्ञेन्यवेदयत् आग्रहंसुंदरीज्ञात्वासुतायानारदमुने ३० विवाहंकुरुराजेंद्रदमयंत्याःशुभेदिने मुनिनासचसर्वज्ञोवृतोसौमनसानया ३१ नारदउवाच इतिसंचोदितो राज्ञ्यासंजयःपृथिवीपतिः चकारविधिवत्सर्वविधिंवैवाहिकंततः ३२ एवंदारग्रहंकृत्वावानरास्यःपरंतप स्थि तस्तत्रैवमनसादह्यमानेनचान्वहं ३३ यदागच्छद्राजसुतासेवार्थंममसन्निधौ अभवंदुःखसंतप्तस्तदाहंवा नराननः ३४ दमयंतीतुमांवीक्ष्यप्रफुल्लवदनांबुजा शोकंवानरवक्त्रत्वान्नचकारकदाचन ३५ एवंगच्छतिका लेतुसहसापर्वतोमुनिः कुर्वंस्तीर्थान्यनेकानिद्रष्टुंमांसमुपागतः ३६ मयातिमानितःप्रेम्णापूजितश्चयथावि धि आसीनआसनेदिव्येवीक्ष्यमांदुःखितोह्यभूत् ३७ कृतदारंवानरास्यंदीनंचिंतातुरंभृशं दयावान्मामुवा चेदंपर्वतोमातुलंकृशं ३८ मयानारदकोपात्त्वंशप्तोसिमुनिसत्तम निष्कृतंतस्यशापस्यकरोम्यद्यनिशामय ३९ भवत्वंचारुवदनोममपुण्येननारद दृष्ट्वाराजसुतांचित्तेकृपाजातामामाधुना ४० नारदउवाच मयापिप्रवणंचित्तं कृत्वाश्रुत्वास्यभाषितं अनुग्रहःकृतःसद्यस्तस्यशापस्यतत्क्षणात् ४१ भागिनेयतवाप्यस्तुगमनंसुरसद्मनि शा पस्यानुग्रहंकामंकृतोयंपर्वताधुना ४२

३८ ३९ ४० अस्यभाषितंशापोद्धाररूपंश्रुत्वाचित्तंप्रवणंकृत्वाअनुग्रहःकृतइत्यन्वयः ४१ ४२

४३ ४४ ४५ ४६ एतत्तेसर्वमाख्यातमिति ज्ञानिनोपिममभायामोहसुखदुःखादिकंविक्षेपरूपमस्त्येवेत्येतदाख्यातंकथितमित्यर्थः
४७ यावत्कालपर्यंतंगुणत्रयजन्योदेहस्तिष्ठति तावत्कालपर्यंतंमायामोहसुखदुःखादिकंविक्षेपजातंसर्वस्यापिभविष्यत्येवनतत्रप्रतिका
रोस्तीत्याह संसारेस्मिन्निति ४८ ४९ सर्वथामुनेइति तथाचगुणत्रयवैषम्यंनियमेनभविष्यत्येवनतश्चमोहादिकंभविष्यत्येवेति५०



नारदउवाच जातोहंचारुवदनोवचनात्तस्यपश्यतः राजपुत्रीतुसंतुष्टामातरंप्राहसत्वरं ४३ मातस्तेसुसुखोजा
तोजामाताचमहाद्युतिः वचनात्पर्वतस्याद्यमुक्तशापोमुनेरभूत् ४४ तच्छ्रुत्वावचनंराज्ञ्या कथितंतत्तुराजनि य
यौद्रष्टुंमुनिंतत्रसंजयःप्रीतिमांस्तदा ४५ धनंसमर्पितंराज्ञासंतुष्टेनतदामहत् मत्थंचभागिनेयायपारिबर्हंमहा
त्मना ४६ एतत्तेसर्वमाख्यातंवर्तनंयत्पुरातनं मायायाबलमाहात्म्यंयत्त्वनुभूतंयथामया ४७ संसारेस्मिन्म
हाभागमायागुणकृतेऽनृते तनुभृत्सुसुखीनास्तिनभूतोनभविष्यति ४८ कामक्रोधौतथालोभोमत्सरोमम
तातथा अहंकारोमदःकेनजिताःसर्वेमहाबलाः ४९ सत्त्वंरजस्तमश्चैवगुणास्त्रयइमेकिल कारणंप्राणि
नांदेहसंभवेसर्वथामुने ५० कस्मिंश्चित्समयेव्यासवनेऽहंविष्णुनासह गच्छन्हास्यविनोदेनस्त्रीभावंगमि
तःक्षणात् ५१ राजपत्नीत्वमापन्नोमायाबलविमोहितः पुत्राःप्रसूताबहवोगेहेतस्यनृपस्यह ५२ व्यास
उवाच संशयोयंमहान्साधोश्रुत्वातेवचनंकिल कथंनारीत्वमापन्नस्त्वंमुनेज्ञानवान्भृशं ५३ कथंचपुरुषो
जातोब्रूहिसर्वमशेषतः कथंपुत्रास्त्वयाजाताःकस्यराज्ञोगृहेंजसा ५४ एतदाख्याहिचरितंमायायामहदद्भुतं
मोहितंचेययासर्वमिदंस्थावरजंगमं ५५ नतृप्तिमधिगच्छामिश्रृण्वंस्तवकथामृतं सर्वग्रंथार्थतत्त्वंचसर्वसंशयना
शनं ५६

स्वस्यमायामोहादिकंप्रदर्शयितुमेकांकथामुपपाद्यद्वितीयामुपपादयति कस्मिंश्चित्समयइति ५१ ५२ ५३ ५४ ५५ ५६

इतिश्रीदे॰ भा॰ तिलके षष्ठस्कंधेसप्तविंशोऽध्यायः २७ अष्टाधिकैश्चतुः पंचाशत्पद्यैर्नारदः पुनः स्वकथांवदतिप्राज्ञइत्येतत्सम्यगीर्यते १ पूर्वाध्यायांतेराजप्रश्नकथनोत्तरंजातंवृत्तमाह निशामयेति मुनिभिरपिमायाबलंसुदुर्ज्ञेयमित्यन्वयः १ तदेवविशदयति मायामोहि-

इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेसप्तविंशोऽध्यायः २७ नारदउवाच निशामयमुनिश्रेष्ठगदतोमु-
निसत्कथां मायाबलंसुदुर्ज्ञेयंमुनिभिर्योगिवित्तमैः १ माययामोहितंसर्वंजगत्स्थावरजंगमं ब्रह्मादिस्तंबपर्यं
तमजयादुर्विभाव्यया २ कदाचित्सत्यलोकाद्वैश्वेतद्वीपेमनोहरे गतोहंदर्शनाकांक्षीहरेरद्भुतकर्मणः ३ वादयन्म
हतींवीणांस्वरतानविभूषितां गायत्रंगायमानस्तुसामसप्तस्वरान्वितं ४ दृष्टोमयादेवदेवश्चक्रपाणिर्गदाधरः
कौस्तुभोद्भासितोरस्कोमेघश्यामश्चतुर्भुजः ५ पीतांबरपरीधानोमुकुटांगदराजितः लक्ष्म्यासहविलासिन्या
क्रीडमानोमुदायुतः ६ वीक्ष्यमांकमलादेवीगतांतर्धानमंतिकात् सर्वलक्षणसंपन्नासर्वभूषणभूषिता ७
नारीणांप्रवराकांतारूपयौवनगर्विता सुप्रियावासुदेवस्यवरचामीकरप्रभा ८ अंतर्गृहंगतांदृष्ट्वासिंधुजांव्यं
जनान्वितां मयापृष्टोदेवदेवोवनमालीजगत्प्रभुः ९ भगवन्देवदेवेशपद्मनाभमुरारिहन् कथंचमागतांदृष्ट्वा
मामागच्छंतमंतिकात् १० नाहंविटोनवाधूर्तोतापसोहंजगद्गुरो जितेंद्रियोजितक्रोधोजितमायोजनार्दन ११
नारदउवाच निशम्यवचनंकिंचिद्गर्वयुक्तंजनार्दनः उवाचमांस्मितंकृत्वावीणावन्मधुरांगिरं १२ विष्णुरुवाच
नारदैवंविधानीतिर्नस्थातव्यंकदाचन पतिंविनाऽन्यसान्निध्येकस्यचिद्योषयाक्वचित् १३ ६७ ६७

तमिति २ ३ गायत्रंसामेत्यन्वयः ४ ५ ६ अंतर्धानंगता अदृश्यतांगतांतर्गृहेगतेत्यर्थः ७ ८ व्यंजनान्वितांवरस्त्रांतव्यंजितस्त
नीमित्यर्थः ९ मांदृष्ट्वामालक्ष्मीः कथंगताकिमर्थंगतेत्यर्थः १० ११ १२ १३

द्वैश्च दुर्जयेत्यर्थः एवंसति यत्त्वयोक्तमहंजितमायोस्मीति तदेवंवाक्यंत्वयाकदापिनवक्तव्यमित्याह यत्त्वयोक्तमिति १५ यतःशिवा द्योपितामजांमायांजेतुंनसमर्थास्तस्मादित्याह नाहंशिवइति कस्त्वमिति यतएवंतस्मात्कस्त्वंपामरस्तस्याजयेक्षमस्तथान्येवाके- क्षमानकेपीत्यर्थः १६ देहंधारयन्मायांजयतीति कथंसंभवेन्मायाजयेदेहस्याप्यसंभवः स्यात्कारणाभावे कार्यस्यानवस्थितेरित्याह देवदेह मिति १७ ननुमायाजितेवज्ञानिभिरावरणाभावात्केवलंविक्षेपशक्तिरेवावशिष्टास्तीतिचेत्सैवविक्षेपशक्तिर्मायानयाबद्धत्वंनदधीनमोहसुख

मायासुदुर्जयाविद्वन्योगिभिर्जितमारुतैः सांख्यवद्भिर्निराहारैस्तापसैश्चजितेंद्रियैः १४ देवैश्चमुनिशार्दूलयत्त्वयो- क्तंवचोधुना जितमायोस्मिगीतज्ज्ञनैवंवाच्यंकदाचन १५ नाहंशिवोनवाब्रह्माजेतुंतांप्रभवंप्रजां मुनयःसनकाद्या श्चकस्त्वंकोऽन्येक्षमाजये १६ देवदेहंनृदेहंवातिर्यग्देहमथापिवा बिभृयाद्यःशरीरंचसकथंतांजयेद्जां १७ त्रियुत स्तांकथंमायांजेतुंशक्तःपुमान्भवेत् वेदविद्योगविद्वापिसर्वज्ञोविजितेंद्रियः १८ कालोपितस्यारूपंहिरूपहीनःस्वरू- पकृत् तद्वशेवर्ततेदेहीविद्वान्मूर्खोथमध्यमः १९ कालःकरोतिधर्मज्ञंकदाचिद्विकलंपुनः स्वभावात्कर्मतोवापिदुर्ज्ञेयं तस्यचेष्टितं २० नारदउवाच इत्युक्त्वाविरतोविष्णुरहंविस्मयमानसः तमब्रवंजगन्नाथंवासुदेवंसनातनं २१ रमा पतेकथंरूपामायासाकीदृशीपुनः किंयद्बलाक्वसंस्थानाकस्याधारावदस्वमे २२ द्रष्टुकामोस्मितंमायांदर्शयाशुम- हीधरःज्ञातुमिच्छामितांसम्यक्प्रसादंकुरुमापते २३ विष्णुरुवा॰ त्रिगुणासाखिलाधारासर्वज्ञासर्वसंमता अजेयाने- करूपाचसर्वंव्याप्यस्थिताजगत् २४ दुःखादिमत्त्वंचसंभवत्येवेत्याह त्रियुतस्तामिति त्रियुतोगुणत्रययुतइत्यर्थः कथंजेतुंशक्तइत्यन्वयः विक्षेपशक्तिस्तुस्थास्यत्येवेतिभावः १८ ननुजगतोमायाधीनत्वेकालाधीनत्वंकथंलोकेरुच्यतइतिचेत्कालोपिमायायाएवरूपमित्यभिप्रायेणेत्याह कालोपितस्यारूपंहीति आत्मातिरिक्तस्यमायामयत्वादित्यर्थः १९ २० २१ २२ प्रसादंकुर्विति मायावैभवंवदेत्यर्थः २३ तत्रकथंरूपेत्यस्योत्तरंत्रिगु

णासेति कस्याधारेत्यस्योत्तरमखिलाधारेति कियद्बलेत्यस्योत्तरमजेयेति सर्वतोबलवतीत्यर्थः कीदृशीत्यस्योत्तरं सर्वज्ञेतिकसंस्थानेत्य

दिदृक्षायदितेचित्तेनारदारोहणंकुरु गरुडेमत्समेतोद्यगच्छावोन्यत्रसांप्रतं २५ दर्शयिष्यामितेमायांदुर्जयामजि
तात्मभिः दृष्ट्वातांब्रह्मपुत्रत्वंमाविषादेमनःकृथाः २६ इत्युक्त्वादेवदेवोमांसस्मारविनतासुतं स्मृतमात्रस्तुग-
रुडोतदागाद्धरिसन्निधौ २७ आगतंगरुडंवीक्ष्यआरुरोहजनार्दनः समारोप्यचमांपृष्ठेगमनायकृतादरः २८
चलितेविनतापुत्रोवैकुंठाद्वायुवेगवान् प्रेरितोयत्रकृष्णेनगंतुकामेनकाननं २९ महावनानिदिव्यानिसरांसिस
रितस्तथा पुरग्रामाकरादींश्चखेटखर्वटगोव्रजान् ३० मुनीनामाश्रमान्रम्यान्वापीश्चसुमनोहराः पल्वलानि
विशालानिन्ह्रदान्पंकजभूषितान् ३१ मृगाणांचवराहाणांवृंदान्यप्यवलोक्यच गतावावांकान्यकुब्जसमीपंगरु
डासनौ ३२ तत्ररम्यंसरोदिव्यंदृष्टंपंकजमंडितम् हंसकारंडवाकीर्णंचक्रवाकोपशोभितं ३३ नानावर्णैःप्रफुल्लैश्च
पंकजैरुपरंजितं शुचिमिष्टजलंभृंगयूथनादविराजितं ३४ मामाहभगवान्वीक्ष्यतडागंपरमाद्भुतं स्पर्धकंचोद
धेःक्षीरंमिष्टंवारिविशेषतः ३५ श्रीभगवानुवाच पश्यनारदगंभीरसरःसारसनादितं सर्वत्रपंकजैश्छन्नंस्व
च्छनीरप्रपूरितं ३६ अत्रस्नात्वागमिष्यावः कान्यकुब्जंपुरोत्तमं इत्युक्त्वागरुडादाशुमामुत्तार्यव्यतारयत् ३७
विहस्यभगवांस्तत्रजग्राहममतर्जनीं स्तुवन्सरोवरंभूयस्तीरमामनयत्प्रभुः ३८ विश्रम्यतटभागेतुस्निग्धच्छायेम
नोहरे मामुवाचमुनेस्नानंकुरुत्वंविमलेजले ३९ पश्चादहंकरिष्यामितडागेस्मिन्सुपावने साधूनामिवचेतांसिज-
लानिनिर्मलानिच ४०

स्योत्तरंसर्वव्याप्यसंस्थितेतिप्रश्नवाक्यैःसुप्सुपेतिसमासः २४ २५ २६ २७ २८ २९ ३०
३१ ३२ ३३ ३४ उदधेःस्पर्धकंस्पर्धाकरं ३५ ३६ व्यतारयत्गमितवान् ३७ ३८ ३९ ४०

४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ इतिश्रीदेवीभागवततिलकेषष्ठस्कं-



सुरभीणिपरागैस्तुपंकजानांविशेषतः इत्युक्तोहंभगवतामुक्त्वावीणांमृगाजिनं ४१ स्नानायकृतधीस्तीरेगतःप्रे
मसमन्वितः पादौप्रक्षाल्यहस्तौचशिखांबध्वाकुशग्रहं ४२ कृत्वाचम्यशुचिस्तोयेस्नातवानस्मितज्जले यदात
स्मिन्जलेरम्येस्नातोहंपश्यतोहरेः ४३ विहायपौरुषंरूपंप्राप्तःस्त्रीत्वमनुत्तमं हरिर्गृहीत्वावीणांमेतथाकृष्णा
जिनंशुभं ४४ आरुह्यगगनंतूर्णंजगामस्वगृहंक्षणात् ततोहंस्त्रीत्वमापन्नश्चारुभूषणभूषितः ४५ तत्क्षणा
न्मनसाजातापूर्वदेहस्यविस्मृतिः विस्मृतोसौजगन्नाथोमहतीविस्मृतापुनः ४६ संप्राप्यमोहिनीरूपंतडागान्नि
र्गतोबहिः अपश्यंनलिनीजुष्टंसरस्तद्विमलोदकं ४७ किमेतदितिमनसाऽकरवंविस्मयंमुहुः एवंचिंतयमान
स्यनारीरूपधरस्यमे ४८ सहसादृक्पथंप्राप्यतत्रतालध्वजोनृपः गजाश्वरथवृंदैश्चसंवृतोरथसंस्थितः ४९
युवाभूषणसंवीतोदेहवानिवमन्मथः वीक्ष्यमांभूपतिस्तत्रदिव्यभूषणभूषितां ५० राकाचंद्रमुखींयोषांविस्म
यंपरमंगतः पप्रच्छकासिकल्याणिकस्यपुत्रीसुरस्यवा ५१ मानुषस्यचवाकांतेगंधर्वस्योरगस्यच एकाकिनीक
थंबालारूपयौवनभूषिता ५२ विवाहिताथकन्यावासत्यंवदसुलोचने किंपश्यसिसुकेशांतेतडागेस्मिन्सुमध्यमे
५३ चिकीर्षितंपिकालापेब्रूहिमन्मथमोहिनी भुंक्ष्वभोगान्मरालाक्षिमयासहकृशोदरि ५४ वांछितान्मनसा
नूनंकृत्वामांपतिमुत्तमं इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेऽष्टाविंशोऽध्यायः २८ नारदउवाच इत्युक्तो
हंतदातेनराज्ञातालध्वजेनच विमृश्यमनसात्यर्थंतमुवाचविशांपते १ ७ ७ ७

धेऽष्टाविंशोऽध्यायः २८ षट्षष्टिश्लोकवर्यैस्तुस्त्रीभावंगमितस्यच नारदस्यपुनःसम्यक्पुरुषप्राप्तिरुच्यते १ तालध्वजसमागमानंतरंजातं-

वृत्तमाह इत्युक्तइति १ २ सुकृतंकल्याणं ३ ४ ५ ६ ७ ८ ९
१० ११ १२ १३ १४ १५ १६ पूर्वदेहंपुंभावंमुनिजन्मचनस्मृतवानित्यर्थः १७

राजन्नाहंविजानामिपुत्रीकस्येतिनिश्चयं पितरौक्वचमेकेनस्थापिताचसरोवरे २ किंकरोमिक्वगच्छामिकथंमेसुकृतं
भवेत् निराधारास्मिराजेंद्र चिंतयामिचिकीर्षितं ३ दैवमेवपरंराजन्नास्त्यत्रपौरुषंमम धर्मज्ञोसिमहीपालयथेच्छसि
तथाकुरु ४ नवाधीनास्म्यहंभूपनमेकोप्यस्तिपालकः नपितानचमाताचनस्थानंनचबांधवाः ५ इत्युक्तोसौमयाराजाबभूवमदनातुरः मांनिरीक्ष्यविशालाक्षींसेवकानित्युवाचह ६ नरयानमानयध्वंचतुर्वाह्यंमनोहरं आरोहणार्थमस्यास्तुकौशेयांबरवेष्टितं ७ मृद्वास्तरणसंयुक्तंमुक्ताजालविभूषितं चतुरस्रंविशालंचसुवर्णरचितंशुभं ८ नस्यतद्वचनंश्रुत्वाभृत्याःसत्वरगामिनः आनिन्युःशिबिकांदिव्यांमदर्थेवस्त्रवेष्टितां ९ आरूढाहंतदातस्यांतस्य-
प्रियचिकीर्षया मुदितोसौगृहेनीत्वामांतदापृथिवीपतिः १० विवाहविधिनाराजाशुभेलग्नेशुभेदिने उपयेमेचमांतत्रहुतभुक्सन्निधौततः ११ तस्याहंवल्लभाजाताप्राणेभ्योपिगरीयसी सौभाग्यसुंदरीत्येवंनामतत्रकृतंमम १२ रममाणोमयासार्धंसुखमापमहीपतिः नानाभोगविलासैश्चकामशास्त्रोदितैस्तथा १३ राजकार्याणिसंत्यज्यक्री-
डासक्तोदिवानिशं नासौविवेदगच्छंतंकालंकामकलारतः १४ उद्यानेषुचरम्येषुवापीषुचगृहेषुच हर्म्येषुवरशैलेषुदीर्घिकासुवरासुच १५ वारुणीमदमत्तोसौविहरन्काननेशुभे विसृज्यसर्वकार्याणिमदधीनोबभूवह १६ व्यासाहंतेनसंसक्ताक्रीडारसवशीकृता स्मृतवान्पूर्वदेहंनपुंभावंमुनिजन्मच १७ ममैवायंपतिर्योषाहंपत्नीषुप्रियासती पट्टराज्ञीविलासज्ञासफलंजीवितंमम १८

पत्नीष्वस्यान्यपत्नीषुमध्येप्रियासत्यहमेवास्ययोषानान्येत्यर्थः १८

१९ ब्रह्मविज्ञानमिति अनेनचब्रह्मविज्ञानेजातेपिपुनः संस्काररूपेणदग्धबीजवत्स्थितस्यावरणशक्तिरूपस्याज्ञानस्यमायाबलात्प्रादुर्भा-

इतिचिंतयतीतस्मिन्प्रेमबद्धादिवानिशं क्रीडासक्तासुखेलुब्धातंस्थितावशवर्तिनी १९ विस्मृतंब्रह्मविज्ञानंब्रह्मज्ञा नंचशाश्वतं धर्मशास्त्रपरिज्ञानंतदासक्तमनाःस्थिता २० एवंविहरतस्तत्रवर्षाणिद्वादशैवतु गतानिक्षणवत्कामक्री डासक्तस्यमेमुने २१ जातागर्भवतीचाहंमुदंप्रापनृपस्तदा कारयामासविधिवद्गर्भसंस्कारकर्मच २२ अपृच्छद्दो- हदंराजाप्रीणयन्मांपुनःपुनः नाब्रुवंलज्जमानाहंनृपंप्रीतमनाभृशं २३ संपूर्णेदशमेमासिपुत्रोजातस्ततोमम शु- भेन्हिग्रहनक्षत्रलग्नताराबलान्विते २४ बभूवनृपतेर्गेहेपुत्रजन्ममहोत्सवः राजापरमसंतुष्टोबभूवसुतजन्मतः २५ सूतकांतेसुतंवीक्ष्यराजामुदमवापह अहंभूमिपतेश्चासंप्रियाभार्यापरंतप २६ ततोवर्षद्वयांतेवैपुनर्गर्भोमि याधृतः द्वितीयस्तुसुतोजातः सर्वलक्षणसंयुतः २७ सुधन्वेतिसुतस्याथनामचक्रेनृपस्तदा वीरवर्मेतिज्ये ष्ठस्यब्राह्मणैःप्रेरितस्त्वयं २८ एवंद्वादशपुत्राश्चप्रसूताभूपसंमताः मोहितोहंतदातेषांप्रीत्यापालनलाल ने २९ पुनरष्टसुताःकालेकालेजाताःस्वरूपिणः गार्हस्थ्यंमेततःपूर्णंसंपन्नंसुखसाधनं ३० तेषांदार क्रियाःकालेकृताराज्ञायथोचिताः स्नुषाभिश्चतथापुत्रैःपरिवारोमहानभूत् ३१ ततःपौत्रादिसंभूतास्ते- पिक्रीडारसान्विताः आसन्नानारसोपेतामोहवृद्धिकराभृशं ३२

र्योस्मिन्नेवजन्मनिभवतीतिबोधितमेतादृशमहो मायाबलमितिभावः ननुब्रह्मज्ञानेजातेपिपुनरज्ञानस्योद्भवेब्रह्मज्ञानंनिरर्थकमेवेतिचेन्न सकृद्ब्रह्मज्ञानेनदग्धास्याज्ञानस्यसंस्कार- रूपेणदग्धबीजवत्स्थितस्यतस्मिन्नेवदेहेप्रादुर्भावेपि तस्यजन्मांतरदायकत्वाभावात्ब्रह्मज्ञानसार्थकत्वसिद्धेः तीर्थेश्वपचगृहेवानष्टस्मृतिरपि त्यजन्प्राणान्ज्ञानसमकालमेवकैवल्यंयाति हतशोकइतिपरमार्थसारंपतंजल्युक्तेरिति २० २१ २२ दोहदंगर्भिणीमनोरथं २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२

३३ ३४ ३५ ३६ ३७ ३८ अहंनारदोभगवतामाययावंचितोस्मीतिमयामनसानकदापिचिंतितमेतादृशंमायाबलंप्रबलमिति

कदाचित्सुखमैश्वर्यंकदाचिद्दुःखमद्भुतं पुत्रेषुरोगजनितंदेहसंतापकारकं ३३ परस्परंकदाचित्तुविरोधोभू-
त्सुदारुणः पुत्राणांवाबधूनांचतेनसंतापसंभवः ३४ सुखदुःखात्मकेघोरेमिथ्याचारकरेभृशं संकल्पज-
नितेक्षुद्रेमग्नोहंमुनिसत्तम ३५ विस्मृतंपूर्वविज्ञानंशास्त्रज्ञानंतथागतं योषाभावेविलीनोहंगृहकार्येषुसर्व
था ३६ अहंकारस्तुसंजातोभृशंमोहविवर्धकः एतेमेबलिनःपुत्राःस्नुषाःस्वकुलसंभवाः ३७ एतेपुत्राः
सुसन्नद्धाःक्रीडंतिममवेश्मसु धन्याहंखलुनारीणांसंसारेस्मिन्नहोभृशं ३८ नारदोहंभगवतावंचितो
माययाकिल नकदाचिन्मयाप्येवंचिंतितंमनसाकिल ३९ राजपत्नीशुभाचाराबहुपुत्रापतिव्रता धन्याहं
किलसंसारेकृष्णेवंमोहितस्त्वहं ४० अथकश्चिन्नृपःकामंदूरदेशाधिपोमहान् अरातिभावमापन्नःपति-
नासहमानद ४१ कृत्वासैन्यसमायोगंरथैश्चवारणैर्युतं आजगामकान्यकुब्जेपुरेयुद्धमचिंतयन् ४२ वे-
ष्टितंनगरंतेनराज्ञासैन्ययुतेनच ममपुत्राश्चपौत्राश्चनिर्गतानगरात्तदा ४३ संग्रामस्तुमुलस्तत्रकृतस्तै-
स्तैनपुत्रकैः हतारणेसुताःसर्वेवैरिणाकालयोगतः ४४ राजाभग्नस्तुसंग्रामादागतःस्वगृहंपुनः श्रुतंमया
मृताःपुत्राःसंग्रामेभृशदारुणे ४५ सहत्वामेसुतान्पौत्राननुगतोराजाबलान्वितः क्रंदमानात्वहंतत्रगतास
मरमंडले ४६ दृष्ट्वातान्पतितान्पुत्रान्पौत्रांश्चदुःखपीडितान् विलपाम्यहमायुष्मञ्छोकसागरसंप्लवे ४७
हापुत्राःक्वगतामेद्यहाहतास्मिदुरात्मना दैवेनातिबलिष्ठेनदुर्वारेणातितापिना ४८ ७ ७ ७

भावः ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८

४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ शोकंनिरर्थ-



एतस्मिन्नंतरेनत्रभगवान्मधुसूदनः कृत्वारूपंद्विजस्यागाद्दृद्धःपरमशोभनः ४९ सुवासावेदविल्कामं
मत्समीपंसमागतः मामुवाचातिदीनांसक्रंदमानारणाजिरे ५० ब्राह्मणउवाच किंविषीदसितन्वंगिभ्र-
मोयंप्रकटीकृतः मोहेनकोकिलालापेपतिपुत्रगृहात्मके ५१ कात्वंकस्याःसुताःकेमीचिंतयात्मगतिंपरां
उत्तिष्ठरोदनंत्यक्त्वास्वस्थाभवसुलोचने ५२ स्नानंचतिलदानंचपुत्राणांकुरुकामिनि परलोकगतानां-
चमर्यादारक्षणायवै ५३ कर्तव्यंसर्वथातीर्थेस्नानंतुनगृहेक्वचित् मृतानांकिलबंधूनांधर्मशास्त्रस्यनिर्ण
यः ५४ नारदउवाच इत्युक्त्वातेनविप्रेणवृद्धेनप्रतिबोधिता उत्थिताहंनृपेणाथयुक्ताबंधुभिरावृता ५५
अग्रतोद्विजरूपेणभगवान्भूतभावनः चलिताहंततस्तूर्णंतीर्थंपरमपावनं ५६ हरिर्मांकृपयातत्रपुंतीर्थेसर-
सिप्रभुः नीत्वाहभगवान्विष्णुर्द्विजरूपीजनार्दनः ५७ स्नानंकुरुतडागेस्मिन्पावनेगजगामिनि त्यजशोकं-
क्रियाकालःपुत्राणांचनिरर्थकं ५८ कोटिशस्तेमृताःपुत्राजन्मजन्मसमुद्भवाः पितरःपतयश्चैवभ्रातरोजा
मयस्तथा ५९ केषांदुःखंत्वयाकार्यंभ्रमेस्मिन्मानसोद्भवे वितथेस्वप्नसदृशेतापदेदेहिनामिह ६० नारदउवा
च इतितस्यवचःश्रुत्वातीर्थेपुरुषसंज्ञिके प्रविष्टास्नातुकामाहंप्रेरितातत्रविष्णुना ६१ मज्जनादेवतीर्थेषु
पुमाञ्जातःक्षणादपि हरिर्वीणांकरेकृत्वास्थितस्तीरेस्वदेहवान् ६२ उन्मज्ज्यचमयातीरेदृष्टःकमललोचनः
प्रत्यभिज्ञानदाजाताममचित्तेद्विजोत्तम ६३ संचिंतितंमयातत्रनारदोहमिहागतः हरिणासहस्त्रीभावंप्रा-
सोमायाविमोहितः ६४ कंत्यजायंपुत्राणांक्रियाकालोस्तीत्यर्थः ५८ ५९ ६० ६१ ६२ ६३ ६४

६५ केनहेतुनेतिविस्मृतइत्यर्थः ६६ इतिश्रीदेवीभागवततिलकेषष्ठस्कंधेएकोनत्रिंशोऽध्यायः २९ अधिकेंश्चैवपंचाशत्पद्यैरथहरिःस्व
यं नारदायमहामायामहिमानंवदत्यपि १ नारदस्यपुरुषभावप्राप्त्युत्तरंजातंवृत्तमाह मांहस्वेति १ २ ३ नववियहेणयदिप्राणाबहिर्निर्गि

इतिचिंतापरश्चाहंयदाजातस्तदाहरिः मामाहनारदागच्छकिंकरोषिजलेस्थितः ६५ विस्मृतोहंतदास्मृत्वास्त्री
भावंदारुणंभृशं पुनःपुरुषभावश्चसंपन्नःकेनहेतुना ६६ इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेएकोन-
त्रिंशोऽध्यायः २९ नारदउवाच मांहस्त्वानारदंविप्रंविस्मितोसौमहीपतिः क्वगतामममभार्यासाकुतोयंमुनि
सत्तमः १ विललापनृपस्तत्रहाप्रियेतिमुहुर्मुहुः क्वगतामांपरित्यज्यविलपंतंवियोगिनं २ विनात्वांविपुल
श्रोणिवृथामेजीवितंगृहं राज्यंकमलपत्राक्षिकिंकरोमिशुचिस्मिते ३ नप्राणामेबहिर्यांतिविरहेणतवाधुना
गतोवैप्रीतिधर्मस्तुत्वामृतेप्राणधारणात् ४ विलपामिविशालाक्षिदेहिप्रत्युत्तरंप्रिये क्वगतासामयिप्रीतिर्या-
भूत्प्रथमसंगमे ५ विमग्नाकिंजलेसुभ्रुभक्षितामत्स्यकच्छपैः गृहीतावरुणेनाशुममदौर्भाग्ययोगतः ६ ध
न्यासुचारुसर्वांगियात्वंपुत्रैःसमागता अकृत्रिमस्तुपुत्रेषुस्नेहस्तेमृतभाषिणि ७ नयुक्तमधुनायन्मांविहाय
त्रिदिवंगता विलपंतंपतिंदीनंपुत्रस्नेहनयंत्रिता ८ उभयंमेगतंकांतेपुत्रास्त्वंप्राणवल्लभा तथापिमरणंना
स्तिदुःखितस्यभृशंप्रिये ९ किंकरोमिक्वगच्छामिरामोनास्तिमहीतले रामाविरहजंदुःखंजानातिरघुनंद
नः १० विधिनानिष्ठुरेणात्रविपरीतंकृतंभुवि दंपत्योर्मरणंभिन्नंसर्वथासमचित्तयोः ११ च्छंतितदपिवरं परंतुतेपि

बहिर्ननिर्गच्छंतीत्याह नप्राणाइति प्राणधारणात्प्राणधारणंव्याप्ययावज्जीवमित्यर्थः ४त्वामृतेप्रीतिधर्मोगतउच्छिन्नइत्यर्थः इतः
परंयावज्जीवंकुत्रापिप्रीतिर्नस्थास्यतीत्यर्थः ४ मयियातवप्रीतिःस्थितासाधुनागतेत्यन्वयः ५ ६ पुत्रैःसहसमागतामृतेत्यर्थः ७
८ ९ १० ११

पतिनासहेति तथापुरुषस्यापिस्त्रियासहज्वलनंकुतोनकृतमितिभावः १२ १३ १४ १५ १६ १७ यद्भूतंयदुत्पन्नंतद्यथोत्पन्नंतथागतंतत्रखेदअनुचित



उपकारस्तुनारीणांसुनिभिर्विहितःकिल यदुक्तंधर्मशास्त्रेषुज्वलनंपतिनासह १२ एवंविलपमानंतंराजानंभगवान्हरिः निवारयामासतदावचनैर्युक्तियोजितैः १३ श्रीभगवानुवाच किंविषीदसिराजेंद्रक्वगतातेप्रियांगना नश्रुतं किंत्वयाशास्त्रंनकृतोसौबुधाश्रयः १४ कासाकस्त्वंक्वसंयोगोवियोगःक्वीदृशस्तव प्रवाहरूपसंसारेनृणांनौतरतामिव १५ गृहेगच्छनृपश्रेष्ठत्वथातेरुदितेनकिं संयोगश्चवियोगश्चदैवाधीनःसदानृणां १६ अनयासहतेराजन्संयोगस्त्विहसंवृतः मुक्तात्वयाविशालाक्षीसुंदरीतनुमध्यमा १७ नदृष्टोपितरावस्यास्त्वयाप्राप्तासरोवरे काकतालिप्रसंगेनयद्भूतंतत्तथागतं १८ माशोकंकुरुराजेंद्रकालोहिदुरतिक्रमः कालयोग्यंसमासाद्यभुंक्ष्वभोगान्गृहेयथा १९ यथागतागतासातुतथैववरवर्णिनी यथापूर्वंतथातत्रगच्छकार्यंकुरुप्रभो २० रुदितेनतवाद्यैवनागमिष्यतिकामिनी वृथाशोचसिपृथ्वीशयोगयुक्तोभवाधुना २१ भोगःकालवशादेतितथैवप्रतियातिच नात्रशोकस्तुकर्तव्योनिष्फलेभववर्त्मनि २२ नैकत्रसुखसंयोगोदुःखयोगस्तुनैकतः घटिकायंत्रवत्कामंभ्रमणंसुखदुःखयोः २३ मनःकृत्वास्थिरंभूपकुरुराज्यंयथासुखं अथवान्यस्यदायादेवनंसेवयसांप्रतं २४ दुर्लभोमानुषोदेहःप्राणिनांक्षणभंगुरः तस्मिन्प्राप्तेतुकर्तव्यंसर्वथैवात्मसाधनं २५ जिह्वोपस्थरसोराजन्पशुयोनिषुवर्तते ज्ञानंमानुषदेहेवैनान्यासुचकुयोनिषु २६ तस्माद्गच्छगृहंत्यक्त्वाशोकंकांतासमुद्भवं माययेयंभगवत्यास्तुययासंमोहितंजगत् २७

इतिभावः १८ १९ २० २१ २२ २३ दायादे पुत्रेन्यस्यस्थापयित्वेत्यर्थः २४ २५ २६ मायेयमिति भगवत्याः सच्चिदानंदरूपिण्याः देव्याइयंदृश्यमानासर्वामायाभवतिकासामाया ययाजगत् सर्वंसदेवासुरमानुषंसंमोहितंभवतितथान्नमायामयत्वा

त्सर्वस्यमिथ्यात्वमुक्तंभवति मिथ्यात्वादेवमिथ्यापदार्थस्याधिष्ठानज्ञानमंतरानाशाभावादधिष्ठानरूपसच्चिदानंदात्मिकायाभगवत्याःसा
क्षात्कारोऽवश्यंसंपादनीयोमायामयप्रपंचनाशनार्थमितिभावः २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७

नारदउवाच इत्युक्तोहरिणाराजाप्रणम्यकमलापतिं कृत्वास्नानविधिंसम्यक्जगामनिजमंदिरं २८ दत्त्वा
राज्यंस्वपौत्रायप्राप्यनिर्वेदमद्भुतं वनंजगामभूपालस्तत्त्वज्ञानमवाप्च २९ गतेराजन्यहंवीक्ष्यभगवंतमधो
क्षजं तमब्रवंजगन्नाथंहसंतंमेथुनःपुनः ३० वंचितोहंत्वयादेवज्ञातंमायाबलंमहत् स्मरामिचरितंसर्वंस्त्री
देहेयत्कृतंमया ३१ ब्रूहिमेदेवदेवेशप्रविष्टोहंसरोवरे विगतंपूर्वविज्ञानंस्नानादेवकुतोहरे ३२ योषिद्देहंसमासा
द्यमोहितोहंजगद्गुरो पतिंप्राप्यनृपश्रेष्ठंपुलोमीवासवंयथा ३३ मनस्तदेवतच्चित्तंदेहःसचपुरातनः लिंगंतदेवदे
वेशस्मृतेर्नाशःकथंहरे ३४ विस्मयोयंमहान्मेत्रज्ञाननाशंप्रतिप्रभो कथयाद्यरमाकांतकारणंपरमंचयत् ३५
नारीदेहमयाप्राप्यभुक्ताभोगाह्यनेकशः सुरापानंकथंनित्यंविधिहीनंचभोजनं ३६ मयानदेवनज्ञातंनारदोह
मितिस्फुटं जानाम्यद्ययथासर्वंविविक्तंनतथानदा ३७ विष्णुरुवाच पश्यनारदमायावीविलासोयंमहाम
ते देहेषुसर्वजंतूनांदशाभेदात्ह्यनेकशः ३८ जाग्रत्स्वप्नःसुषुप्तिश्चतुरीयादेहिनांदशा तथादेहांतरप्राप्तेसंदे
हःकीदृशःपुनः ३९

यत्त्वयोक्तंविविक्तमधुनायथाजानामितथातदास्त्रीभावसमयेविवेकःक्वगतइतितत्रनैवंसंदेहंकुरु सर्प
भ्रमस्थलेविवेकज्ञानस्यकुत्राप्यसत्त्वादित्याह पश्यनारदेति ननुभ्रमस्थलेकुतोनविवेकस्तिष्ठतीतिचेन्मायावीविलासादित्याह माया-
विविलासोयमिति तत्रानुभवंप्रसिद्धमाह दशाभेदाइति ३८ तादशाआह जाग्रदिति एताश्चतस्रोदशायद्यपिभ्रमरूपाआत्मनिति-
ष्ठंतितथापितद्दशानुभवसमयेउप्रदेशमंतरानकस्यापिभ्रमोयमितिविवेकज्ञानंभवति यथायंदृष्टांतस्तथात्वयिदेहांतरप्राप्तेसतिभ्र

मोयमितिनत्वयाज्ञानमतोदृष्टांतानुरोधेन पुनः कीदृशः संदेहोत्रसंदेहस्थलंनैनतदित्यर्थः नहिरज्जुसर्पादिभ्रमस्थलेसदुपदेशंविनाविवेकज्ञानंभवतिमायाविनोविलासएवायंयःस्वमाययासत्यमपिसत्यमिवदर्शयतीति ३९ इदमेवानेकदृष्टांतोपपादनेनविशदयति सुप्तोनरइति यथासुप्तोनरः सुप्तिसमयेसुप्तिरितिनजानातिप्रबुद्धस्तुसुप्तोहमेतावंतंकालमितिजानातितथैनिशेषस्तथासर्वज्ञानंभ्रम-

सुप्तोनरोनजानातिनशृणोतिवदत्यपि पुनःप्रबुद्धोजानातिसर्वज्ञानमशेषतः ४० निद्रयाचाल्पतेचित्तंभवंति स्वप्नसंभवाः नानाविधामनोभेदामनोभावात्यनेकशः ४१ गजोमांहंतुमायातिनशक्तोस्मिपलायने किंकरोमिनमेस्थानंयत्रगच्छामिसत्वरः ४२ मृतंपितामहंस्वप्नेपश्यतिस्वगृहागतं संयोगस्तेनवार्ताचभोजनंसहमन्यते ४३ प्रबुद्धःखलुजानातिस्वप्नेदृष्टंसुखासुखं स्मृत्वासर्वजनेभ्यस्तुविस्तरात्प्रवदत्यपि ४४ स्वप्नेकोपिनजानातिभ्रमोयमितिनिश्चयः यथातथैवविभवोमायायादुर्गमःकिल ४५ नाहंनारदजानामिपारंपरमदुर्घटं गुणानांकिलमायायानैवशंभुर्नपद्मजः ४६ कोन्योज्ञातुंसमर्थोभून्माननोमंदधीःपुनः मायागुणपरिज्ञानंनकस्यापिभवेदिह ४७ गुणत्रयकृतंसर्वंजगत्स्थावरजंगमं विनागुणैर्नसंसारोवर्ततेकिंचिदप्यदः ४८

स्थलेस्तीत्यर्थः तस्मिन्समयेतस्यतत्वंनजानातीत्यर्थः ४० स्वप्नदृष्टांतमस्मिन्नेवार्थेआह निद्रयेति ४१ नानेवनानाविधमनोभावानाह गजोमामिति ४२ ४३ जानातिस्मरतीत्यर्थः ४४ उपसंहरतियथातथैवेति ४५ ननुमाया एवमघटितघटनापटीयस्त्वंकीदृशमितिचेत्तन्नकोपिजानातीत्याह नाहंनारदेति गुणानांपारमित्यन्वयः ४६ ४७ येनज्ञेयंसगुणत्रयांतर्गतोवातदतीतोवा यदितदतीतस्तदासपरमात्मैवास्तिनिर्विकारोनान्यस्तस्यचनिर्विकारत्वाघटितघटनापटीयस्त्वंनेनज्ञातुमशक्यं यदितुगुणत्रयांतर्गतस्तदापश्चाज्जायमानस्यार्वाचीनस्यकथंतज्ज्ञानंसंभवेन्नहिपुत्रस्यपितृकृतस्यजननव्यापारस्यज्ञानसंभवस्तस्मान्नको

पिमायायावैभवंजानातीत्याह गुणत्रयकृतंसर्वमिति ४८ तदेवोपपादयति अहंसत्वेति ४९ ५० तथाचश्रुतिर्मायावैभवस्यदुर्ज्ञे यत्वंदर्शयति कोअद्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयतआबभूव इयंविसृ ष्टिर्यतआबभूवयदिवादधेयदिवान योअस्याध्यक्षःपरमेव्योमन्सोअंगवेदयदिवानवेदेति ५१ तर्हि किंकर्तव्यमेतत्परिज्ञानाये तिचेत्तत्राह तस्मादिति नकिंचिन्मायावैभवपरिज्ञानेफलमस्ति किंतर्हि संसारोमायामयोमिथ्याभूतोमायाविनिर्मितो दुर्घटोपारोसारभूतो

अहंसत्वप्रधानोस्मिरजस्तमःसमन्वितः नकदाचित्त्रिभिर्हीनोभवामिभुवनेश्वरः ४९ तथाब्रह्मापितातत्वर जोमुख्यःप्रकीर्तितः तमःसत्वसमायुक्तोनताभ्यामुज्झितःकिल ५० शिवस्तथातमोमुख्योरजःसत्वसमा वृतः गुणत्रयविहीनस्तुनैवकोपिमयाश्रुतः ५१ तस्मान्मोहोनकर्तव्यःसंसारेऽस्मिन्मुनीश्वर मायाविनिर्मि तेसारेपारेपरमदुर्घटे ५२ दृष्टामायात्वयाद्यैवभुक्ताभोगात्ह्यनेकशः किंपृच्छसिमहाभागतस्याश्चरितम द्भुतं ५३ इतिश्रीदेवीभागवतेमहापुराणेषष्ठस्कंधेत्रिंशोऽध्यायः ३० व्यासउवाच निशामयमहाराजब्र वीमिविशदाक्षरं माहात्म्यंखलुमायायानारदात्तुमयाश्रुतं १ मयापुनर्मुनिःपृष्टोनारदःसर्ववित्तमः श्रुत्वाकथां मुनेस्तस्यनारीदेहसमुद्भवां २ ब्रूहिनारदपश्चात्किंकथितंहरिणातदा क्वगतश्चजगन्नाथोभवतासहमाधवः ३

स्तीतिज्ञात्वातस्मिन्मोहोनकर्तव्यः किंतुयेनमायाविनामायाविशिष्टब्रह्मणानिर्मितोयंसंसारस्तांमायाविशिष्टब्रह्मरूपिणींभगवतींजपेद्ध्या येत्प्रमेत्तन्निष्ठस्तत्परायणएवभवेदितिभावः तदुक्तंसूतसंहितायां ततःसर्वंसमुत्सृज्यपूर्णांपरमसंविदं स्वात्मनैवानुसंधायपुनस्तच्चविस र्जयेत् स्वानुभूत्यास्वयंसाक्षात्स्वात्मभूतांमहेश्वरीं पूजयेदादरेणैवपूजासापुरुषार्थदेति ५२ उपसंहरति दृष्टेति ५३ इतिश्रीदे०ति०षष्ठस्कंधेत्रिं शोध्यायः ३० षष्टिश्लोकैर्महामायामहिमासंनिगद्यते तन्नाशनेभगवतीध्यानादिकमिहोच्यते १ विष्णुनानारदायोपदेशेकृतेनंतरंजातंवृत्तमाह निशामयेति १ २ ३

४ ५ ६ ७ ८ चिंतातुरंविक्ष्यस्थितेनपित्राहं पृष्टइत्यर्थः मुनेइतिव्यासस्संबोधनं ९ १० बृस्यामासने ११ १२ १३



नारदउवाच इत्युक्त्वाभगवांस्तस्मिंस्तडागेतिमनोहरे आरुह्यगरुडंगंतुंवैकुंठेचमनोदधे ४ मामुवाचरमाकांतोयथेष्टंगच्छनारद एहिवाममलोकंत्वंयथारुचितथाकुरु ५ ब्रह्मलोकंगतश्चाहमापृच्छ्यमधुसूदनं भगवानपिदेवेशस्तत्क्षणाद्गरुडासनः ६ वैकुंठमगमत्तूर्णमिमादिश्ययथासुखं तथाहंपितृसदनंगतोयातेजनार्दने ७ चिंतयन्सकलंदुःखंसुखंचपरमाद्भुतं गत्वाप्रणम्यपितरंस्थितोयावत्पुरःपितुः ८ तावत्पृष्टोमुनेपित्रावीक्ष्यचिंतातुरंतुमां ब्रह्मोवाच क्वगतोसिमहाभागकस्माच्चिंतातुरःसुत ९ स्वस्थनैवाद्यपश्यामिमनस्तेमुनिसत्तम केनापिवंचितोसित्वंदृष्ट्वाकिंचिदद्भुतं १० विषण्णंगतविज्ञानंपश्यामित्वांकथंसुत नारदउवाच इतिपृष्टस्तदापित्राबृस्यांसमुपवेश्यच ११ तमब्रवंस्ववृत्तांतंमायाबलसमुद्भवं वंचितोहंपितःकामंविष्णुनाप्रभविष्णुना १२ स्त्रीभावंगमितःकामंवर्षाणिसुबहून्यपि अनुभूतंमहद्दुःखंपुत्रशोकसमुद्भवं १३ प्रबोधितोहंतेनैवमृदुवाक्यामृतेनच पुनःसरोवरेस्नात्वाजातोहंनारदःपुमान् १४ किमेतत्कारणंब्रह्मन्यन्मोहमगमंतदा विस्मृतंपूर्वविज्ञानंतन्मयस्तरसाकृतः १५ एतन्मायाबलंब्रह्मन्नजानेहंदुरत्ययं ज्ञानहानिकरंजातंमूलंमोहस्यविस्फुटं १६ अनुभूतंमयासम्यक्ज्ञातंसर्वंशुभाशुभं कथंत्वंजितवांस्तातत्नमुपायंवदस्वमे १७ नारदउवाच विज्ञप्तोसौमयाधाताप्रीतिपूर्वमतःपरं मामुवाचस्मितंकृत्वापितामेवासवीसुत १८ छ छ

१४ अहंमोहमगमंगतवानित्यर्थः विस्मृतंमयेतिशेष तन्मयोमोहमयोऽहंतरसावेगेनकृतः किमस्यकारणमित्यर्थः १५ १६ हेतातत्तामेवातिदुर्घटकारिणींमायांत्वंकथंजितवानित्यर्थः १७ १८ छ छ

१९ २० कालकर्मेति मायोपादानकारणंकालकर्मादिकंनिमित्तकारणंसाधनंसामग्रीभूतंतैर्निमित्तकारणैर्वृतायुक्तामायास्तीत्यर्थः तथाचश्रुतिः काल
स्वभावोनियतिर्यदृच्छाभूतानियोनिःपुरुषइतिचिंत्येतिश्वेताश्वतरेतथाचानेकसामग्रीविशिष्टामायातिप्रबलाथतएकैकसामग्रीनाशोपिकेनापिकर्तुं
नशक्यतेकुतःपुनःसकलसामग्रीसहितायास्तस्यानाशइति २१ वयंसर्वेविमोहिताइति अज्ञानिनआवरणशक्त्याविक्षेपशक्त्याच मो-

ब्रह्मोवाच दुर्जयैषासुरैःसर्वैर्मुनिभिश्चमहात्मभिः तापसैर्ज्ञानयुक्तैश्चयोगिभिःपवनाशनैः १९ नाहंतांस-
र्वथाज्ञातुंशक्तोमायांमहाबलां विष्णुर्ज्ञातुंनशक्तश्चतथाशंभुरुमापतिः २० दुर्ज्ञेयासामहामायासृष्टिस्थित्यन्त
कारिणी कालकर्मस्वभावाद्यैर्निमित्तकारणैर्वृता २१ शोकंमाकुरुमेधाविंस्तत्रमायामहाबले नचैवविस्मयः
कार्योवयंसर्वेविमोहिताः २२ नारदउवाच पित्रेत्युक्तस्तदाव्यासतमापृच्छ्यगतस्मयः आगतोस्म्यत्रपरम
न्वैतीर्थानिचवराणिच २३ तस्मात्त्वमपिसंत्यज्यमोहंकौरवनाशजं कालक्षयंसुखासीनःस्थानेस्मिन्कुरुस
त्तम २४ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभं निश्चयंहृदयेकृत्वाविचरस्वयथासुखं २५ व्यासउवाच
इत्युक्त्वानारदोराजन्गतोमांप्रतिबोध्यच अहंतच्चिंतयन्वाक्यंयदुक्तंमुनिनातदा २६ स्थितःसरस्वतीतीरे
कल्पेसारस्वतेवरे कालातिवाहनायैतत्कृतंभागवतंमया २७

हिताःवयंज्ञानिनस्तुविक्षेपशक्त्याविमोहितायावद्देह-
धारणपर्यंतमित्यर्थः २२ कौरवनाशजंपूर्वमध्यायद्वयेनत्वयोक्तंमोहं सुखासीनः सुखेभूमानंदेसंविद्रूपिण्यांभगवत्यामासीनः
स्थितस्तन्निष्ठोभूत्वेत्यर्थः २३ कालक्षयंकुरुनजगत्तन्मोहादिकंचावलोकय जीवन्मुक्तिलाभार्थंभगवत्यांसमाधिनिष्ठोभवेत्यर्थः
२४ यदिसमाधिमतोपिकदाचित्प्रारब्धवशेनचित्तंव्युत्थितंभवेत्तदाविक्षेपोभोक्तव्यएवनतत्रोपायोस्तीत्याह अवश्यमेवेति २५
२६ कल्पेसारस्वतेवरइति सारस्वतकल्पेजायमानायाःकथादेव्याविर्भावादिकास्ताःगृहीत्वामयैतद्देवीभागवतंकृतमित्यर्थः य-

द्वा सारस्वतकल्पे एवमयैतद्भागवतंकृतमित्यर्थः कालातिवाहनेति समाधेर्व्युत्थितस्य चित्तस्यविक्षेपबाधामाभूत्किंतुभगवतीगुणानु वर्णनेनकालोगच्छतुनदर्थमित्यर्थः तदुक्तंमात्स्ये सारस्वतस्यकल्पस्यमध्येयेस्युर्नरामराः तद्वृत्तांतोद्भवंलोकेतद्भागवत मिष्यतइति २७ २८ मायैवैतेषांसर्वभावानांकारणंसर्वस्यदृश्यमात्रस्यापि सर्वकारणमित्यत्रनसंदेहः कर्तव्यइत्याह संदेहोत्रनकर्तव्यइति पां

पुराणमुत्तमंभूप सर्वसंशयनाशनं नानाख्यानसमायुक्तंवेदप्रामाण्यसंश्रितं २८ संदेहोत्रनकर्तव्यःसर्वथा- नृपसत्तम यथेंद्रजालिकःकश्चित्पांचालीदारवींकरे २९ कृत्वानर्तयतेकामंस्वेच्छयावशवर्तिनीं तथानर्तय तेमायाजगत्स्थावरजंगमं ३० ब्रह्मादिस्तंबपर्यंतंसदेवासुरमानुषं पंचेंद्रियसमायुक्तंमनश्चितानुवर्तनं ३१ गुणास्तुकारणंराजन्सर्वेषांसर्वथात्रयः कार्यकारणसंयुक्तंभवतीतिविनिश्चयः ३२ भिन्नभिन्नस्वभावास्ते गुणामायासमुद्भवाः शांतोघोरस्तथामूढस्त्रयस्तुविविधायतः ३३ तत्समेतःपुमान्नित्यंतद्विहीनः कथंभवेत् नभवत्येवसंसारेरहितस्तंतुभिःपटः ३४ तथागुणैस्त्रिभिर्हीनोनदेहीतिविनिश्चयः देवदेहोमनुष्योवातिरश्चोवा नराधिपः ३५ गुणैर्विरहितोनस्यान्मृद्विहीनोघटोयथा ब्रह्माविष्णुस्तथारुद्रस्त्रयश्चामीगुणाश्रयाः ३६ क- दाचित्प्रीतियुक्तास्तेतथाप्रीतियुताःपुनः तथाविषादयुक्तास्तेभवंतिगुणयोगतः ३७ ब्रह्माकदाचित्सत्वस्थ स्तदाशांतः समाधिमान् प्रीतियुक्तोभवेत्सर्वभूतेषुज्ञानसंयुतः ३८ पुनःसत्वविहीनस्तुरजोगुणसमावृतः तदाभवद्घोररूपः सर्वत्राप्रीतिसंयुतः ३९

चालींपुत्तलींदारवींदारुनिर्मितां २९ ३० ३१ गुणास्त्विति मायागुणा एवेत्यर्थः ३२ विविधास्त्रयोगुणाः प्रस्तारेकृतेत्रयाणांनवभेदाभवंतिपुनर्नवानांप्रस्तारे पुनस्तावतांप्रस्तारेएवंक्रमेणानंताभेदागु णानांभवंतीत्यर्थः ३३ एवंगुणानामनंतत्वंप्रसाध्यतेषांव्याप्त्यामायाव्याप्तिमाहतत्समेतइति ३४ ३५ ३६ ३७ ३८ ३९

४० माधवोविष्णुरपितथैवेत्याह माधवोपीति ४१ ४२ ४३ ४४ मन्वादयोपितथैवेत्याह सूर्यवंशोद्भवाइति ४५ यस्मादेवंतस्मान्माया-
व्याप्तंमायामयमेवसर्वमित्याह मायाधीनमिति यस्मादिदंसर्वंमायाधीनंतस्माद्विष्णुःसर्वज्ञःसन्कथंहयरूपंधृतवानित्यादिःसंदेहोनकर्तव्यइ-

यदातमोगुणाविष्टोबाहुल्येनभवेद्विधिः तदाविषादसंपन्नोमूढोभवतिनान्यथा ४० माधवोपिसदासत्वसंश्रितःसर्वथा
भवेत् यदाशांतःप्रीतियुक्तोभवेज्ज्ञानसमन्वितः ४१ सएवरजआधिक्यादप्रीतिसंयुतोभवेत् घोरश्चसर्वभू-
तेषुगुणाधीनोरमापतिः ४२ रुद्रोपिसत्वसंयुक्तःप्रीतिमाञ्छांतिमान्भवेत् रजोनिमीलितःसोपिघोरःप्रीति
विवर्जितः ४३ तमोगुणयुतःसोपिमूढोविषादयुग्भवेत् एतेयद्विगुणाधीनाब्रह्मविष्णुहरादयः ४४ सूर्यवंशो
द्भवास्तद्वत्सोमवंशभवाअपि मन्वादयश्चयेप्रोक्ताश्चतुर्दशयुगेयुगे ४५ अन्येषांचैवकावार्तासंसारेस्मिन्नृपोत्त
म मायाधीनंजगत्सर्वंसदेवासुरमानुषं ४६ तस्माद्राजन्नकर्तव्यःसंदेहोत्रकदाचन देहीमायापराधीनश्चेष्टतेतत
द्वशानुगः ४७ साचमायापरेतत्त्वेसंविद्रूपेऽस्तिसर्वदा तदधीनाप्रेरिताचतेनजीवेषुसर्वदा ४८ ततोमायावि
शिष्टांतांसंविदंपरमेश्वरीं मायेश्वरींभगवतींसच्चिदानंदरूपिणीं ४९

त्याह तस्माद्राजन्निति सर्वोपिदेही मायाधीनइ
त्यर्थः ४६ ४७ ननुमायायाजडत्वात्कथं जगद्वशीकर्तुंसमर्थेतिचेत्तत्राह साचमायेति संविद्रूपेसविद्रूपिण्यांभगवत्यांतिष्ठतितदधीनासर्व
दासंविद्रूपाधीनास्तितेनसंविद्रूपेणसर्वदाजीवेप्रेरितावास्तितथाचसंविद्रूपिण्याभगवत्याश्चेतनत्वात्तत्प्रेरितमायाधीनत्वंजगतःसंभवती
त्यर्थः ननुप्रवर्तकत्वंचाप्यस्यमाययानस्वभावतइतिसूतसंहितोक्तेः प्रवर्तनाशक्तिरपिमायायाएवास्तित्वेत्सत्यं चेतनाश्रितत्वमेव-
मायायानस्वातंत्र्येणावस्थानंमायायाअस्तितत्संबंधादेवतस्याश्चेतनत्वमित्यत्रैवग्रंथस्यतात्पर्यात् तथाचश्रुतिःमैत्रायणीयानां तमोवाइ
दमग्रआसीदेकंतत्परेस्यात्तत्परेणेरितंविषमत्वंप्रयातीति ४८ नन्वेतादृशमायायानिवृत्तिः केनभविष्यतीतिचेदधिष्ठानभूतसंविद्रूपभ-

गवत्याराधनेनेत्याह ततोमायाविशिष्टांतामिति मायेश्वरींमायाया अंतर्यामिभूतांमायाया अधिष्ठानभूतांसंविदंभगवतीमित्यर्थः ४९ ध्यायेदिति ध्यानादिनाकिंभविष्यतितदाह तेनसासदयेति योयंबध्नातिनदाराधनेनसमुक्तोभवतीतिन्यायादितिभावः ५० ननुमायानोमोचनेऽपिकुत्रचिद्वर्तमानासामायाकालांतरेबाधिष्यत्येवेतिचेत्तत्राह स्वमायांसंहरत्येवेति मायायामिथ्यात्वात्मिथ्यापदार्थस्याधिष्ठानेकल्पितत्वादधिष्ठानज्ञानेनरज्जुसर्पादेः कल्पितस्यनिःशेषंनाशदर्शनान्मायाधिष्ठानभूतस्वसंविद्रूपस्यानुभूतिः साक्षात्कारस्तत्प्रदानतः प्रदानेननिःशेषांस्वमायांसंहरत्येवनाशयत्येवेत्यर्थः तथाचनिःशेषनाशात्कालांतरेबाधशंकानास्तीतिभावः तदुक्तंसूतसंहि-

ध्यायेत्तथाराधयेच्चप्रणमेच्चजपेदपि तेनसासदयाभूत्वामोचयत्येवदेहिनं ५० स्वमायांसंहरत्येवस्वानुभूतिप्रदानतः भुवनंखलुमायास्यादीश्वरीतस्यनायिका ५१ भुवनेशीततःप्रोक्तादेवीत्रैलोक्यसुंदरी तद्रूपेयदिसक्तंस्याच्चित्तंभूमिपतेसदा ५२ माययाकिंभवेत्तत्रसदसद्भूतयानृप तस्मान्मायानिरासार्थंनान्यद्दैवतांतरं ५३ ७ ७ ७ ७ ७ ७ ७

तायां अधिष्ठानावशेषोहिनाशःकल्पितवस्तुनइति मायेश्वरीत्वादेवभगवत्याभुवनेश्वरीतिनामेत्याह भुवनंखलुमायास्यादिति ५१ ननुतस्याअनुग्रहोप्यतिप्रयत्नसाध्योदुर्घटएवेतिचेत्तत्राह तद्रूपेइति तस्याअनुग्रहोस्तुवामावा तस्याः संविद्रूपेयदिचित्तंसक्तं तदासक्तरूपस्वभावेनैवसदसद्भूतयासदसद्विलक्षणमाययाकिंभवेन्नकिमपीत्यर्थः नहिवन्हिसान्निध्येशैत्यबाधाभवति नचवन्हेस्तस्मिन्पुरुषेऽनुग्रहोऽस्ति किंतुवन्हिस्वभावएवायंतद्वदत्रापीतिभावः ५२ ननुब्रह्मविष्ण्वादिदेवतानुग्रहेणापिमायानाशोभविष्यतीतिचेत्तत्राह नान्यद्दैवतांतरमिति नहिरज्जुसर्पोहरिहरादिदेवताराधनेनतदनुग्रहेणाश्वमेधादिकर्मणावाकदाचिदपिनश्यति किंत्वधिष्ठानभूतरज्जुज्ञानादेव तद्वदत्रापिरज्जुसर्पवद्भासमानायामायायानहरिहराद्युपासनया नाशोनवाश्वमेधादिकर्मभिर्नाशः किंतुमायाधिष्ठानभूतसंविद्रूपभग॰

वत्या राधनानुभवे नैवेतिभावः ५३ तत्रैवयुक्त्यंतरमाह तमोराशिमिति यथातमोनाशयितुंनद्वितीयंतमः शक्तंसमर्थंभवेत्किंतु भानुप्र-
भाचंद्रप्रभाविद्युत्प्रभावन्हिप्रभाएवसमर्थाभवंतितद्वदत्रापिमायांधकारनाशेमायांधकाररूपामायामयाहरिहरादयोनमायांनाशयितुं
समर्थाः किंतुस्वप्रकाशसंविद्रूपिण्येवभगवतीतिभावः ५४ यस्मादेवंतस्मात्सैवसच्चिदानंदरूपिणीभगवतीसमाराध्येत्याह तस्मादिति ५५
उपसंहरतिसम्यगिति ५६ पूर्वार्धेयंपुराणस्येति तेनचपूर्वार्धोत्तरार्धभेदेनभागद्वयवदिदंपुराणमस्तीतिबोधितंतेनच ततोभागवतंप्रोक्तंभाग
द्वयविभूषितमित्यादिनापुराणवचनमपिदेवीभागवतपरमेवनविष्णुभागवतपरंविष्णुभागवतदशमस्कंधस्यपूर्वार्धोत्तरार्द्धभेदेनभागद्वयवत्त्वेऽपि-

समर्थंतुविनादेवींसच्चिदानंदरूपिणीं तमोराशिंनाशयितुंशक्तंनैवतमोभवेत् ५४ किंतुभानुप्रभाचंद्रविद्युद्वन्हिप्रभादयः तस्मा
न्मायेश्वरीमंबांस्वप्रकाशांतुसंविदं ५५ आराधयेदतिप्रीत्यामायागुणनिवृत्तये इतिसम्यग्मयाख्यातंवृत्रासुरवधादिकं ५६ य
त्पृष्टंराजशार्दूलविमृन्यच्छ्रोतुमिच्छसि पूर्वार्धेयंपुराणस्यकथितस्तवसुव्रत ५७ यत्रदेव्यास्तुमहिमाविस्तरेणोपपादितः
एतद्रहस्यंश्रीमातुर्नदेययस्यकस्यचित् ५८ देयंभक्तायशांतायदेवीभक्तिरतायच शिष्यायज्येष्ठपुत्रायगुरुभक्तियुताय
च ५९ इदमखिलकथानांसारभूतंपुराणंनिखिलनिगमतुल्यंसत्प्रमाणानुविद्धं पठतिपरमभावाद्यःशृणोतीहभक्त्यास-
भवतिधनवान्वैज्ञानवान्मानवोत्र ६० इतिश्रीदे॰म॰पु॰षष्ठस्कंधेभगवतीमहात्म्येएकत्रिंशोऽध्यायः ३१

सर्वपुराण-
स्यभागद्वयवत्त्वाभावात् ५७ ५८ ५९ ग्रंथपाठफलंवदति इदमखिलकथानामिति ६० श्रीमच्छैवकुलोत्पन्नोरंगनाथात्मजः सुधीः श्री
लक्ष्मीगर्भसंभूतोनीलकंठोभिधानतः देवीभागवतस्यास्यव्याख्यानरहितस्यच व्याख्यांयःकृतवान्सम्यग्विशदर्थांतुनिर्मलां २ तिल
काख्यांतुतस्यास्तुपूर्वार्धेऽतमगाच्छुभः षष्ठस्कंधःसमाप्तोऽत्रतेनतुष्यतुपार्वती ३ इतिश्रीशैवकुलोत्पन्नरंगनाथात्मजश्रीलक्ष्मी
गर्भजनीलकंठकृतेदेवीभागवतव्याख्यानेतिलकाभिदेएकत्रिंशोऽध्यायः ३१ श्रीकृष्णार्पणमस्तु शुभंभवतु छ छ छ

श्रीगणेशायनमः श्रीगुरुभ्योनमः॥ अनंतकोटिब्रह्मांडजननीपदपंकजं नमामियन्नतेर्नश्येद्दुर्घसंसारपंकजं १ अर्धश्लोकाधिकैरष्टत्रिंश-
च्छ्लोकैरतःपरं सूर्यसोमोद्भवानांच कथाप्रारभ्यतेधुना २ पूर्वाध्याये सूर्यवंशोद्भवास्तद्दक्सोमवंशोद्भवा अपील्फ्कर्क तत्रतामेव कथांराजापृष्टवानि
तिसूतआह श्रुत्वैतामिति तापसाइतिमुनिसंबोधनं १ २ ३ ननुकाकर्दनपरीक्षावन्निरर्थकंतेषांराज्ञांचरितकथनेकिंफलमितिचेत्तत्राह

श्रीगणेशायनमः॥ श्रीभगवत्यैनमः सूतउवाच श्रुत्वैतांतापसादिव्यांकथांराजामुदान्वितः व्यासंपप्रच्छ
धर्मात्मापरीक्षितसुतःपुनः१ जनमेजयउवाच स्वामिन्सूर्यान्वयानांचराज्ञांवंशस्यविस्तरं तथासोमान्वयानांच
श्रोतुकामोस्मिसर्वथा २ कथयानघसर्वज्ञकथांपापप्रणाशिनीं चरितंभूपतीनांचविस्तराद्वंशयोर्द्वयोः ३ तेहिसर्वे
पराशक्तिभक्ताइतिमयाश्रुतं देवीभक्तस्यचरितंशृण्वन्कोस्तिविरक्तिभाक् ४ इतिराजर्षिणापृष्टोव्यासःसत्यवती-
सुतः तमुवाचमुनिश्रेष्ठःप्रसन्नवदनोमुनिः ५ व्यासउवाच निशामयमहाराजविस्तराद्वदतोमम सोमसूर्यान्वया
नांचतथान्येषांसमुद्भवं ६ विष्णोर्नाभिसरोजाद्वैब्रह्माभूच्चतुराननः तपस्तत्त्वासमाराध्यमहादेवींसुदुर्गमां ७ तया
दत्तवरोधाताजगत्कर्तुंसमुद्यतः नाशकन्मानुषींसृष्टिंकर्तुंलोकपितामहः ८ विचिंत्यबहुधाचित्तेसृष्ट्यर्थंचतुराननः नवि
स्तारंजगामाशुरचितापिमहात्मनः ९ ससर्जमानसान्पुत्रान्सप्तसरव्यान्प्रजापतिः मरीचिरंगिराअत्रिश्च वसिष्ठःपुलहःक्र
तुः पुलस्त्यश्चेतिविरव्याताःसप्तैतेमानसाःसुताः १० रुद्रोरोषात्समुत्पन्नोप्युत्संगान्नारदोभवत् दक्षोंगुष्ठात्तथान्येपि-
मानसाःसनकादयः ११

तेहिसर्वेपराशक्तीति कोस्तिविरक्तिभाक्नकोपीत्यर्थः देवीचरितकथनापेक्षयापिदेवीभक्तचरितकथनंदेव्याअतिप्रियंभवतितस्माद्दे
नोर्देवीभक्तानांराज्ञांवंशयोःकथांकथयेत्यर्थः तदुक्तंदेवीपुराणे मद्भक्त्यपेक्षयाभक्तेममभक्तिस्तुसिद्धिदेति ४ ५ तथान्येषामिति तत्संगेनान्येषामपिराज्ञामित्यर्थः ६
महादेवींसुदुर्गमामितिमायाबीजंजजापेत्यर्थः तदुक्तमुमासंहितायां सृष्ट्यर्थंभगवान्ब्रह्मामायाबीजंपरात्परं जजापयत्प्रसादेनसृष्टिकर्ताभवद्विभुरिति ७ ८ रचितापिसृष्टि
स्तथापितस्याविस्ताराजगामेत्यन्वयः ९ १० ११

१२ मानसः सुत इति यद्यप्युत्संगान्नारदोभवदिति पूर्वमुक्तं तथापि नारदस्य कस्मिंश्चित्कल्पे मनसोप्युद्भवात्तदभिप्रायेण मानसत्वोक्तिरिति बोध्यं

वामांगुष्ठाद्दक्षपत्नी जाता सर्वांगसुंदरी वीरिणी नाम विख्याता पुराणेषु महीपते १२ असिक्नीति च नाम्नासा यस्यां जातोथ नारदः देवर्षिप्रवरः कामं ब्रह्मणो मानसः स्मृतः १३ जनमेजय उवाच अत्र मे संशयो ब्रह्मन्यदुक्तं भवता वचः वीरिण्यां नारदो जातो दक्षादिति महातपाः १४ कथं दक्षस्य पत्न्यां तु वीरिण्यां नारदो मुनिः जातो हि ब्रह्मणः पुत्रो धर्मज्ञस्तापसोत्तमः १५ विचित्रमिदमाख्यातं भवता नारदस्य च दक्षाज्जन्मास्य भार्यायां तद्वदस्व सविस्तरं १६ पूर्वदेहः कथं मुक्तः शापात्कस्य महात्मना नारदेन बहुज्ञेन कस्माज्जन्म कृतं मुने १७ व्यास उवाच ब्रह्मणा सौम्यादिष्टो दक्षः स्रष्टव्यर्थमादितः प्रजाः सृजेति स भृशं वृद्धिहेतोः स्वयंभुवा १८ ततः पंचसहस्रांश्च जनयामास वीर्यवान् दक्षश्च जातिपः पुत्रान् वीरिण्यां बलवत्तरान् १९ दृष्ट्वा तान्नारदः पुत्रान्सर्वान्वर्द्धयिषून्प्रजाः उवाच प्रहसन्वाचं देवर्षिः कालनोदितः २० भुवः प्रमाणमज्ञात्वा स्रष्टुकामाः प्रजाः कथं लोकानां हास्यतां यूयं गमिष्यथ न संशयः २१ पृथिव्यावै प्रमाणं तु ज्ञात्वा कार्यः समुद्यमः कृतो सौ सिद्धिमायाति नान्यथेति विनिश्चयः २२ बालिशा बत यूयं वै यदज्ञात्वा भुवस्तलं समुद्यताः प्रजाः कर्तुं कथं सिद्धिर्भविष्यति २३ व्यास उवाच नारदेनैवमुक्तास्ते हर्यश्वा दैवयोगतः अन्योन्यमूचुः सहसा सम्यगाह मुनिः किल २४ ज्ञात्वा प्रमाणमुर्व्याः स्म करवं स्रक्ष्यामहे प्रजाः इति संचिंत्य ते सर्वे प्रयाताः प्रेक्षितुं भुवः २५ तलं सर्वं परिज्ञातुं वचनान्नारदस्य च प्राच्यां केचिद्गताः कामं दक्षिणस्यां तथापरे २६ प्रतीच्यामुत्तरस्यां तु कृतोत्साहाः समं ततः दक्षः पुत्रानगतान्दृष्ट्वा पीडितः सुकृशश्च भृशं २७

१३ १४ १५ १६ जन्मद्वितीरं कृतं गृहीतमित्यर्थः कस्य शापादित्यन्वयः १७ वृद्धिहेतोर्जगतद्वस्थं १८ १९ २० हास्यतामिति युष्मान्दृष्ट्वा लोका हसिष्यंतीत्यर्थः २१ २२ बालिशा इति स्थलाभावे प्रजाः क्वस्थास्यंतीति भावः २३ २४ २५ २६ २७

प्रजार्थमुद्यमंकर्त्तुमुद्यताइत्यन्वयः २८ यद्वचनंपूर्वमुक्तंतदेवमाहेत्यन्वयः तदेववाक्यमाह बालिशाइति २९ ३० ३१ ३२ ३३ ३४ ३५
३६ द्वेकन्येअंगिरसेकृशाश्वायददावित्यर्थः तथैवांगिरसेपुनरिति पुनर्द्वेअवशिष्टेकन्येअंगिरसेतन्नाम्नेमुनयेददौ तदुक्तंकूर्मपुराणे सप्तविंशतिसो

अन्यानुत्पादयामासप्रजार्थंकृतनिश्चयः तेपितत्रोद्यताःकर्त्तुंप्रजार्थमुद्यमंस्फुताः २८ नारदःप्राहतान्दृष्ट्वापूर्ववद्व-
चनंमुनिः बालिशाबतयूयंवैयदज्ञात्वाप्रुवःकिल २९ प्रमाणंतुप्रजाःकर्त्तुंप्रवृत्ताःकेनहेतुना श्रुत्वावाक्यंमुनेस्तेपि
मत्वासत्यंविमोहिताः ३० जग्मुःसर्वेयथापूर्वंभ्रातरश्चलितास्तथा तान्कृतान्प्रस्थितान्दृष्ट्वादक्षःकोपसमन्वितः ३१
शशापनारदंरोषात्पुत्रशोकसमुद्भवात् दक्षउवाच नाशितामेकृतायस्मात्तस्मान्नाशंमवाप्नुहि ३२ पापेनानेनदुर्बुद्धे
गर्भवासंव्रजेतिच पुत्रोमेभवकामंत्वंयतोमेभ्रंशिताःसुताः ३३ इतिशप्तस्ततोजातोवीरिण्यांनारदोमुनिः षष्टिं
भूयोसृजत्कन्यावीरिण्यामितिनःश्रुतं ३४ शोकंविहायपुत्राणांदक्षःपरमधर्मवित् तासांत्रयोदशप्रादात्कश्यपा
यमहात्मने ३५ दशधर्मायसोमायसप्तविंशतिभूपते द्वेचैवभृगवेप्रादाच्चतस्त्रोरिष्टनेमिने ३६ द्वेचैवांगिरसेकन्येत
थैवांगिरसेपुनः तासांपुत्राश्चपौत्राश्चदेवाश्चदानवास्तथा ३७ जाताबलसमायुक्ताःपरस्परविरोधकाः रागद्वेषान्वि
ताःसर्वेपरस्परविरोधिनः ३८ सर्वेमोहवृताःशूराह्यभवन्नतिमायिनः इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेप्रथ
मोऽध्यायः १ जनमेजयउवाच ममाख्याहिमहाभागराज्ञांवंशंस्फुविस्तरं सूर्यान्वयप्रसूतानांधर्मज्ञानांविशेषतः १ व्या
सउवाच शृणुभारतवक्ष्यामिरविवंशस्यविस्तरं यथाश्रुतंमयापूर्वंनारदादृषिसत्तमात् २ मायचतस्त्रोऽरिष्टनेमिने द्वेचैव
भृगुपुत्रायद्वेकृशाश्वायधीमते द्वेचैवांगिरसेनद्वत्तेषांवक्ष्येयविस्तरमिति ३७ ३८ इतिश्रीदेवीभागवतातिलकेसप्तमस्कंधेप्रथमोऽध्यायः १ पंचष
ष्टिश्लोकवर्यैः सूर्यसोमान्वयस्यच विस्तारोवर्ण्यतेसम्यकृदेवीभक्तियुतस्यच १ सूर्यसोमवंशविस्तारं राजापृच्छति ममाख्याहीति १ २

ममाश्रमे आजगामेतिव्यासोक्तिः २ ४ ५ सप्तमेस्मिन् मनोःकुलेइतिवैवस्वतमनोरित्यर्थः ६ ७ समासव्यासौसंक्षेपविस्तारौ कुत्रचित्संक्षेपः

एकदानारदःश्रीमान्सरस्वत्यास्तटेशुभे आजगामाश्रमेपुण्येविचरन्स्वेच्छयामुनिः ३ प्रणम्यशिरसापादौतस्याग्रेसंस्थितस्त
दा ततस्तस्यासनंदत्वाकृत्वार्हणमथादरात् ४ विधिवत्पूजयित्वातमुक्तवान्वचनंत्विदं पावितोहंमुनिश्रेष्ठपूज्यस्यागमनेनवै ५
कथांकथयसर्वज्ञराज्ञांचरितसंयुतां राजानोयेसमाख्याताःसप्तमेस्मिन्मनोःकुले ६ तेषामुत्पत्तिरतुलाचरितंपरमाद्भुतं श्रोतुका
मोस्म्यहंब्रह्मन्सूर्यवंशस्यविस्तरं ७ समाख्याहिमुनिश्रेष्ठसमासव्यासपूर्वकं इतिपृष्टोमयाराजन्नारदःपरमार्थवित् ८ उवा
चप्रहसन्प्रीतःसमाभाष्यमुदान्वयं नारदउवाच शृणुसत्यवतीसूनोराज्ञांवंशमनुत्तमं ९ पावनंकर्णसुखदंधर्मज्ञानादिभि
र्युतं ब्रह्मापूर्वंजगत्कर्तानाभिपंकजसंभवः १० विष्णोरितिपुराणेषुप्रसिद्धःपरिकीर्तितः सर्वज्ञःसर्वकर्तासौस्वयंभूःसर्वशक्ति
मान् ११ तपस्तप्त्वासविश्वात्मावर्षाणामयुतंपुरा सृष्टिकामःशिवांध्यात्वाप्राप्यशक्तिमनुत्तमां १२ पुत्रानुत्पादयामासमान
सान्शुभलक्षणान् मरीचिःप्रथितस्तेषामभवत्सृष्टिकर्मणि १३ तस्यपुत्रोतिविख्यातःकश्यपःसर्वसंमतः त्रयोदशैवत
स्यासन्भार्यादक्षसुताःकिल १४ देवाःसर्वेसमुत्पन्नादैत्यायक्षाश्चपन्नगाः पशवःपक्षिणश्चैवतस्मात्सृष्टिस्तुकाश्यपी १५
देवानांप्रथितःसूर्योविवस्वान्नामतस्यतु तस्यपुत्रःसविख्यातोवैवस्वतमनुर्नृपः १६ तस्यपुत्रस्तथेक्ष्वाकुःसूर्यवंशविवर्द्धनः
नवाभवन्सुतास्तस्यमनोरिक्ष्वाकुपूर्वजाः १७ तेषांनामानिराजेंद्रशृणुष्वैकमनाःपुनः इक्ष्वाकुरथनाभागोधृष्टःशर्यातिरेवच
१८ नरिष्यंतस्तथाप्रांशुर्नृगोदिष्टश्चसप्तमः करुषश्चपृषध्रश्चनवैतेमानवाःस्मृताः १९ इक्ष्वाकुस्तुमनोःपुत्रःप्रथमः
समजायत तस्यपुत्रशतंचासीज्ज्येष्ठोविकुक्षिरात्मवान् २० कुत्रचिद्विस्तारः ८ ९ १० ११ १२ १३ १४ १५ १६ इक्ष्वाकुःपूर्वं

जातोयेषांनवानांतेनवपुत्रास्तस्यमनोर्वैवस्वतस्याभवन् १७ तेषांनामान्याह तेषामिति १८ प्रांशोरेवपुराणांतरेकविरितिसंज्ञा नवैतइति इक्ष्वाकुरहितानवतत्सहितास्तुदशै
वेतिबोध्यं कूर्मपुराणेतुनवैवोक्ताः १९ पुत्रशतमध्येज्येष्ठपुत्रोविकुक्षिरित्यर्थः २०

नवानामिति नवानांपुत्राणांमध्येकेषांचिदित्यर्थः सर्वेषांवंशाकथनात् २१ २२ २३ २४ २५ रविपुत्राभ्यामिति अश्विनीकुमाराभ्यांविहितोनेत्र



नवानांवंशविस्तारंसंक्षेपेणनिशामय शूराणांमनुपुत्राणांमनोरंतरजन्मनां २१ नाभागस्यतुपुत्रोभूदंबरीषःप्रतापवान् ध
र्मज्ञःसत्यसंधश्चप्रजापालनतत्परः २२ धृष्टस्यधार्ष्टकंक्षत्रंब्रह्मभूतमजायत संग्रामकातरंसम्यक्ब्रह्मकर्मरतंतथा २३ श
र्यातेस्तनयश्चाभूदानर्तोनामविश्रुतः सुकन्याचतथापुत्रीरूपलावण्यसंयुता २४ च्यवनायसुतादत्ताराज्ञाप्यंधायसुंदरी मु
निःसुलोचनोजातस्तस्याःशीलगुणेनहि २५ विहितोरविपुत्राभ्यामश्विभ्यामितिनःश्रुतं जनमेजयउवाच संदेहोयंमहान्ब्र
ह्मन्कथायांकथितस्त्वया २६ यद्राज्ञामुनयेंधायदत्तापुत्रीसुलोचना कुरूपागुणहीनावानारीलक्षणवर्जिता २७ पुत्रीय
दाभवेद्राजातदांधायप्रयच्छति ज्ञात्वांधंसुसुखींकस्माद्दत्तवान्नृपसत्तमः २८ कारणंब्रूहिमेब्रह्मन्ननुग्राह्योस्मिसर्वदा सू
तउवाच इतिराज्ञोवचःश्रुत्वापरीक्षितसुतस्यवै २९ द्वैपायनःप्रसन्नात्मानमुवाचहसन्निव व्यासउवाच वैवस्वतसुतःश्री
मान्शर्यातिर्नामपार्थिवः ३० तस्यस्त्रीणांसहस्राणिचत्वार्यासन्परिग्रहाः राजपुत्र्यःसुरूपाश्चसर्वलक्षणसंयुताः ३१
पत्न्यःप्रेमयुताःसर्वाःप्रियाराज्ञःसुसंमताः एकापुत्रीतुतासांवैसुकन्यानामसुंदरी ३२ पितुःप्रियाचमातॄणांसर्वासांचा
रुहासिनी नगरान्नातिदूरेभूत्सरोमानससन्निभं ३३ बद्धसोपानमार्गंचस्वच्छपानीयपूरितं हंसकारंडवाकीर्णंचक्रवाकोपशो
भितं ३४ दात्यूहसारसाकीर्णंसर्वपक्षिगणावृतं पंचधाकमलोपेतंचंचरीकसुसेवितं ३५ पार्श्वतश्चद्रुमाकीर्णंवेष्टितं
पादपैःशुभैः सालैःस्तमालैःसरलैःपुन्नागाशोकमंडितं ३६ वटाश्वत्थकदंबैश्चकदलीखंडराजितं जंबीरैर्बीजपूरैश्चखर्जू
रैःपनसैस्तथा ३७

सुखःसुखनइत्यर्थः २६ २७ २८ २९ ३० परिग्रहाःपरिगृहीताविवाहिताइत्यर्थः ३१ ३२ ३३ ३४ दात्यूहःकालकंटकः
पुष्कराह्वस्तुसारसइत्यमरः चंचरीकोभ्रमरः ३५ ३६ ३७ ७ ७ ७

क्रमुकः पूगवृक्षः कांचनद्रुमो भाषया कचनार इति प्रसिद्धोस्ति ३८ ३९ ४० भार्गवो भृगुपुत्रः ४१ ४२ परांबिकां सच्चिदानंदरूपिणीं भगवतीं ध्यायन्नास्ते इत्यर्थः तस्यैवं भगवतीं ध्यायतः शरीरोपरि वल्मीकमभवदित्याह सवल्मीक इति ४३ मृत्पिंड इवासेत्यर्थः ४४ ४५

क्रमुकैर्नारिकेलैश्च केतकैः कांचनद्रुमैः यूथिकाजालकैः शस्तैः संवृतं मल्लिकागणैः ३८ जंब्वाम्रतिंतिणीभिश्च करंजकुटजावृतं पलाशनिंबखदिरबिल्वामलकमंडितं ३९ बभूव कोकिलाराव केकास्वनविराजितं तत्समीपे शुभदेशे पादपानां गणावृते ४० भार्गवश्च्यवनः शांतस्तापसः संस्थितो मुनिः ज्ञात्वा सो विजनं स्थानं तपस्तेपे समाहितः ४१ कृत्वा दृढासनं मौनमाधाय जितमारुतः इंद्रियाणि च संयम्य त्यक्ताहारस्तपोनिधिः ४२ जलपानादिरहितो ध्यायन्नास्ते परांबिकां सवल्मीकोभवद्राजंल्लताभिः परिवेष्टितः ४३ कालेन महता राजन्समाकीर्णः पिपीलिकैः तथा स संवृतो धीमान्मृत्पिंड इव सर्वतः ४४ कदाचित्स महीपालः कामिनीगणसंवृतः आजगाम सरो राजन्विहर्तुमिदमुत्तमं ४५ शर्यातिः सुंदरीदत्तसंयुतः सलिलेऽमले क्रीडासक्तो महीपालो बभूव कमलाकरे ४६ सुकन्या वनमासाद्य विजहार सखीवृता सुमनांसि विचिन्वंती चंचला चंचलोपमा ४७ सर्वाभरणसंयुक्ता रणच्चरणनूपुरा चंक्रममाणा वल्मीकं च्यवनस्य समासदत् ४८ क्रीडासक्तोपविष्टा सा वल्मीकस्य समीपतः ददर्श चास्य रंध्रे वै खद्योत इव ज्योतिषी ४९ किमेतदिति संचिंत्य समुद्धर्तुं मनो दधे गृहीत्वा कंटकं तीक्ष्णं त्वरमाणा कृशोदरी ५० सा दृष्टा मुनिना बाला समीपस्था कृतोद्यमा विचरंती सुकेशांता मन्मथस्येव कामिनी ५१ तां वीक्ष्य सुदतीं तत्र क्षामकंठस्तपोनिधिः तामभाषत कल्याणीं किमेतदिति भार्गवः ५२

४६ चंचलोपमा विद्युत्समाना ४७ चंक्रममाणा गमनं कुर्वती समासदत् प्राप्तवती ४८ ज्योतिषी नेत्रस्थे समाधिकाले नेत्रयोरुन्मीलनस्य सत्त्वात् ४९ ५० मुनिना तस्मिन्नेव काले समाधेर्व्युत्थितेन मुनिनेत्यर्थः ५१ ५२

५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेद्वितीयोऽध्यायः२



दूरंगच्छविशालाक्षितापसोहंवरानने मांभिंदस्वाद्यवल्मीकंकंटकेनकृशोदरि ५३ तेनेदंप्रोच्यमानापिसाचास्यनभृणोतिवै किंसुखल्विदमित्युक्त्वानिर्बिभेदास्यलोचने ५४ दैवेननोदिताभित्त्वाजगामनृपकन्यका क्रीडंतीशंकमानासाकिंकृतंतुमयेति च ५५ चुक्रोधसतथाविद्धनेत्रःपरममन्युमान् वेदनाभ्यर्दितःकामंपरितापंजगामह ५६ शकृन्मूत्रनिरोधोभूत्सैनिकानांतुतत्क्षणात् विशेषेणतुभूपस्यसामात्यस्यसमंततः ५७ गजोष्ट्रतुरगाणांचसर्वेषांप्राणिनांतदा ततोरुद्धेशकृन्मूत्रेशर्यातिर्दुःखितोभवत् ५८ सैनिकैःकथितंतस्मैशकृन्मूत्रनिरोधनं चिंतयामासभूपालःकारणंदुःखसंभवे ५९ विचिंत्याह ततोराजासैनिकान्स्वजनांस्तथा गृहमागत्यचिंतार्तःकेनेदंदुष्कृतंकृतं ६० सरसःपश्चिमेभागेवनमध्येमहातपाः च्यवनस्तापसस्तत्रतपश्चरतिदुश्चरं ६१ केनाप्यपकृतंतत्रतापसेऽग्निसमप्रभे तस्मात्पीडासमुत्पन्नासर्वेषामितिनिश्चयः ६२ तपोवृद्धस्यवृद्धस्यवरिष्ठस्यविशेषतः केनाप्यपकृतंमन्येभार्गवस्यमहात्मनः ६३ ज्ञातंवायदिवाज्ञातंतस्येदंफलमुत्तमं कैश्चिद्दुष्टैःकृतंतत्रहेलनंतापसस्यह ६४ इतिपृष्टास्तमूचुस्तेसैनिकावेदनार्दिताः मनोवाक्कायजनितंनविद्मोपकृतंवयं ६५ इतिश्रीदेवीभा॰म॰सप्तमस्कंधेद्वितीयोऽध्यायः २ व्यासउवाच इतिपप्रच्छतान्सर्वान्राजाचिंताकुलस्तथा पर्यपृच्छत्सुहृद्वर्गंसाम्नाचोग्रतयापिच १ पीड्यमानंजनंवीक्ष्यपितरंदुःखितंतथा विचिंत्यशूलभेदंसासुकन्याचेदमब्रवीत् २ वनेमयापितस्तत्रवल्मीकोवीरुधावृतः क्रीडंत्यासुदृढोदृष्टश्छिद्रद्वयसमन्वितः ३ तत्रखद्योतवद्दीप्तज्योतिषीवीक्षितेमया सूच्याविद्धेमहाराजपुनःखद्योतशंकया ४

अर्धाधिकैश्चतुःषष्टिपद्यैःपुत्रीसुकन्यका च्यवनायमुदादत्तानृपेणेतितुकथ्यते १ तान्सैनिकान्राजापृष्ट्वानंतरंसुहृद्वर्गंपप्रच्छेत्याह इतिपप्रच्छेति साम्नाशांत्याउग्रतयाक्रोधेन १ २ वीरुधावृतोवृक्षौषध्यावृतः ३ ४

५ ६ ७ ८ ९ १० ११ १२ १३ १४ ननुत्वयाशापोनदत्तस्तर्हिकिमित्येतादृशीनिष्कारणादशाजातेतिचेत्तत्राह अपराधंपरंकृत्वेति
शिवोपियदित्राताभवतितथापिदेवीभक्तस्यापराधंकृत्वाकोजनःसुखंलभेतनकोपीत्यर्थः देवीभक्तापराधस्यदुःखदातृत्वंस्वभावएवनतुकारणां

जलक्लिन्नातदासूचीमयादृष्टापितःकिल हाहेतिचश्रुतःशब्दोमंदोवल्मीकमध्यतः ५ तदाहंविस्मितारराजन्किमेतदिति
शंकया नजानेकिंमयाविद्धंतस्मिन्वल्मीकमंडले ६ राजाश्रुत्वातुशर्यातिःसुकन्यावचनंमृदु मुनेस्तत्खेलनंज्ञात्वाव-
ल्मीकंक्षिप्रमभ्यगात् ७ तत्रापश्यत्तपोवृद्धंच्यवनंदुःखितंभृशं स्फोटयामासवल्मीकंमुनिदेहावृतंभृशं ८ प्रणम्यदंड
वद्भूमौराजातंभार्गवंप्रति तुष्टावविनयोपेतस्तमुवाचकृतांजलिः ९ पुत्र्याममममहाभागक्रीडंत्यादुष्कृतंकृतं अज्ञानाद्बाल
याब्रह्मन्कृतंतत्क्षंतुमर्हसि १० अक्रोधनाहिमुनयोभवंतीतिमयाश्रुतं तस्मात्त्वमपिबालायाःक्षंतुमर्हसिसांप्रतं ११
व्यासउवाच इतिश्रुत्वावचस्तस्यच्यवनोवाक्यमब्रवीत् विनयोपनतंदृष्ट्वाराजानंदुःखितंभृशं १२ च्यवनउवाच
राजन्नाहंकदाचिद्वैकरोमिक्रोधमण्वपि नमयादत्तशापस्त्वंदुहित्रापीडनेकृते १३ नेत्रपीडासमुत्पन्नाममचाद्यनिराग
सः तेनपापेनजानामिदुःखितस्त्वंमहीपते १४ अपराधंपरंकृत्वादेवीभक्तस्यकोजनः सुखंलभेत्यदपिभूवेत्राताशिवः
स्वयं १५ किंकरोमिमहीपालनेत्रहीनोजरावृतः अंधस्यपरिचर्यांचकःकरिष्यतिपार्थिव १६ राजोवाच सेवकाबहवः
सेवांकरिष्यंतितवानिशं क्षमस्वमुनिशार्दूलस्वल्पक्रोधाहितापसाः १७ च्यवनउवाच अंधोहंनिर्जनोराजंस्तपस्तप्तुंक
थंक्षमः त्वदीयाःसेवकाःकिंतेकरिष्यंतिममप्रियं १८ क्षमापयसिचेन्मांत्वंकुरुमेवचनंनृप देहिमेपरिचार्यार्थंकन्यांकम
ललोचनां १९ तुष्टोनयामहाराजपुत्र्यातवमहामते करिष्यामितपश्चाहंसामेसेवांकरिष्यति २० तरंविघ्नतइतिभावः तदुक्तंमुंडमा

लायां शाक्तान्हिंसंतिगर्जंतिनिंदंतिबहुजल्पकाः छिनत्तितेषांदेवेशीशिरांसिहरवल्लभेति १५ १६ १७ १८ १९ २० ६ ६

२१ २२ २३ २४ २५ २६ यौवनेइति आत्मतुल्यमात्मानुरूपमपिपतिंप्राप्यकामोदुर्जयोस्तितदाविलोचनमंधंवृद्धंपतिंप्राप्यकामोदुर्जयोस्तीतिकिं



एवंकृतेसुखंमेस्यात्तवचैवभविष्यति संतुष्टेमयिराजेंद्रसैनिकानांनसंशयः २१ विचिंत्यमनसाभूपकन्यादानंसमा
चर नचात्रदूषणंकिंचित्तापसोहंयतव्रतः २२ व्यासउवाच शर्यातिर्वचनंश्रुत्वामुनेश्चिंतातुरोभवत् नदास्येप्यथवा
दास्येकिंकिंचिन्नोवाचभारत २३ कथमंधायवृद्धायकुरूपायसुतामिमां देवकन्योपमांदत्वासुखीस्यामात्मसंभवां २४
कोवात्मनःसुखार्थायपुत्र्याःसंसारजंसुखं हरतेऽल्पमतिःपापोजानन्नपिशुभाशुभं २५ प्राप्यसाच्यवनंसुभ्रूःपंचबा
णशरार्दिता अंधंवृद्धंपतिंप्राप्यकथंकालंनयिष्यति २६ यौवनेदुर्जयःकामोविशेषेणासुरूपया आत्मतुल्यंपतिंप्राप्यकिंतु
वृद्धंविलोचनं २७ गौतमंतापसंप्राप्यरूपयौवनसंयुता अहल्यावासवेनाशुवंचितावरवर्णिनी २८ शप्ताचपतिनापश्चा
ज्ज्ञात्वाधर्मविपर्ययं तस्माद्भवतुमेदुःखंनददामिसुकन्यकां २९ इतिसंचिंत्यशर्यातिर्विमनाःस्वगृहंययौ सचिवांश्च
समादायमंत्रंचक्रेतिदुःखितः ३० भोमंत्रिणोब्रुवंत्वद्यकिंकर्तव्यंमयाधुना पुत्रीदेयाथविप्रायभोक्तव्यंदुःखमेववा
३१ विचारयध्वंमिलिताहितंस्यान्ममवैकथं मंत्रिणऊचुः किंब्रूमोऽस्मिन्महाराजसंकटेतिदुरासदे ३२ दुर्भगाय-
सुकन्येषाकथंदेयातिसुंदरी व्यासउवाच तदाचिंताकुलंवीक्ष्यपितरंमंत्रिणस्तदा ३३ सुकन्याप्तिंगितंज्ञात्वाप्रह
स्येदमुवाचह पितःकस्माद्भवानद्यचिंताव्याकुलितेंद्रियः ३४ मत्कृतेदुःखसंविग्नोविषण्णवदनोसिवै अहंगत्वामु
निंतत्रसमाश्वास्यमयार्दितं ३५ करिष्यामिप्रसन्नंतमात्मदानेनवैपितः इतिराजावचःश्रुत्वाभाषितंयत्सुकन्यया ३६
तामुवाचप्रसन्नात्मासचिवानांचशृण्वतां कथंपुत्रित्वमंधस्यपरिचर्यांवनेऽबला ३७ मुवक्तव्यंसर्वथैवदुर्जयइतिभावः २७ २८



२९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ छ छ छ छ छ छ छ छ छ छ छ छ

३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५

करिष्यसिजरार्तस्यक्रोधनस्यविशेषतः कथमंधायचानेनरूपेणारतिसन्निभां ३८ ददामिजरयाग्रस्तदेहायस्वरव
वांछया पित्रापुत्रीप्रदातव्यावयोज्ञातिबलायच ३९ धनधान्यसमृद्धायनाधनायकदाचन कृतेरूपंविशालाक्षिक्वासौ
वृद्धोवनेचरः ४० कथंदेयामयापुत्रीतस्मैचातिवरायच उटजेनियतंवासोयस्यनित्यंमनोहरे ४१ कथमंबुजपत्राक्षिकृत्य
र्नीयामयातव मरणंमेवरंप्राप्तंसैनिकानांतथैवच ४२ नतेप्रदानमंधायरोचतेपिकभाषिणि भवितव्यंभवत्येवधैर्यंने
वत्यजाम्यहं ४३ स्वस्थिराभवस्वश्रोणिनदास्येंऽधायकर्हिचित् राज्यंतिष्ठतुवायातुदेहोयंचतथैवमे ४४ नत्वांदास्या
म्यहंतस्मैनेत्रहीनायबालके स्वकन्यातंतदाप्राहश्रुत्वातद्वचनंपितुः ४५ प्रसन्नवदनातीवनेहयुक्तमिदंवचः स्वकन्यो
वाच नमेचिंतापितःकार्यादेहिमामुनयेधुना ४६ स्वस्वंभवतुसर्वेषांलोकानांमत्कृतेनहि सेवयिष्यामिसंतुष्टापतिंपर
मपावनं ४७ भक्त्यापरमयाचापिवृद्धंचविजनेवने सतीधर्मपराचाहंचरिष्यामिस्वसंमतं ४८ नभोगेच्छास्तिमेतात-
स्वस्थंचित्तंममानघ व्यासउवाच तच्छ्रुत्वाभाषितंतस्यामंत्रिणोविस्मयंगताः ४९ राजाचपरमप्रीतोजगाममुनिसन्निधौ
गत्वाप्रणम्यशिरसातमुवाचतपोधनं ५० स्वामिन्गृहाणपुत्रींमेसेवार्थंविधिवद्विभो इत्युक्त्वाकरस्मैददौपुत्रींविवाहविधि
नानृपः ५१ प्रतिगृह्यमुनिःकन्यांप्रसन्नोभार्गवोभवत् पारिबर्हंनजग्राहदीयमानंनृपेणह ५२ कन्यामेवाग्रहीत्कामं
परिचर्यार्थमात्मनः प्रसन्नेस्मिन्मुनौजातंसैनिकानांस्वस्वंतदा ५३ राज्ञश्चपरमाल्हादःसंजातस्तत्क्षणादपि दत्वा
पुत्रींयदाराजागमनायगृहंप्रति ५४ मतिंचकारतन्वंगीतदोवाचनृपंस्वता स्वकन्योवाच गृहाणममवासांसिभूष-
णानिचमेपितः ५५ वल्कलंपरिधानायप्रयच्छाजिनमुत्तमं वेषंतुमुनिपत्नीनांकृत्वातपसिसेवनं ५६

५६

५७ चरिष्यामिसेवांकरिष्यामिपत्युः ५८ ५९ ६० ६१ ६२ ६३ ६४ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेतृतीयोऽध्यायः३



करिष्यामितथातातयथातेकीर्तिरच्युता भविष्यातिभुवःपृष्ठेतथास्वर्गेरसातले ५७ परलोकस्सुखायाहंचरिष्यामिदिवा
निशं दत्वांधायचवृद्धायसुंदरींयुवतींतुमां ५८ चिंतात्वयानकर्तव्याशीलनाशसमुद्भवा अरुंधतीवसिष्ठस्यधर्मपत्नीयथा
सुवि ५९ तथैवाहंभविष्यामिनात्रकार्याविचारणा अनसूयायथासाध्वीभार्याऽत्रेःप्रथिताभुवि ६० तथैवाहंभविष्यामिपु
त्रीकीर्तिकरीतव सुकन्यावचनंश्रुत्वाराजापरमधर्मवित् ६१ दत्वाजिनंरुरोदाशुवीक्ष्यतांचारुहासिनीं त्यक्त्वाभूष
णवासांसिमुनिवेषधरांसुतां ६२ विवर्णवदनोभूत्वास्थितस्तत्रैवपार्थिव राज्ञ्यःसर्वाःसुतांदृष्ट्वावल्कलाजिनधारि
णीं ६३ रुरुदुर्भृशशोकार्तावेपमानाइवाभवन् तामापृच्छ्यमहीपालोमंत्रिभिःपरिवारितः ६४ ययौस्वनगरंराजा
मुत्क्वापुत्रींसुच्यार्पितां इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेतृतीयोऽध्यायः ३ व्यासउवाच गतेराजनि-
साबालापतिसेवापरायणा बभूवचतथाग्नीनांसेवनधर्मतत्परा १ फलान्यादायस्वादूनिमूलानिविविधानिच ददौसा
मुनयेबालापतिसेवापरायणा २ पतिंतप्तोदकेनाशुस्नापयित्वामृगत्वचा परिवेष्ट्यशुभायांतुबृस्यांस्थापितवत्यपि
३ तिलान्यवकुशानग्रेपरिकल्प्यकमंडलुं तमुवाचनित्यकर्मकुरुष्वमुनिसत्तम ४ तमुत्थाप्यकरेकृत्वासमाप्तेनित्यक
र्मणि बृस्यांवासंस्तरेबालाभर्तारंसंन्यवेशयत् ५ पश्चादानीयपक्वानिफलानिचनृपात्मजा भोजयामासच्यवनंनीवा-
रान्नंसुसंस्कृतं ६ भुक्तवंतंपतिंतृप्तंदत्वाचमनमादरात् पश्चाच्चपूगपत्राणिददौचादरसंयुता ७

अर्धाधिकैःपंचपंचाशद्भिः
पद्यैरतःपरं सुकन्यादेवभिषजोःसंवादश्चात्रकथ्यते १ च्यवनायदत्तायाःसुकन्यायाःसमाचारमाह गतेराजनीति १ २ ३ बृस्यामासनेऽ
ग्रेप्रथमं ४ ५ भोजयामासेति भुजधातोःप्रत्यवसानार्थत्वाद्विकर्मकत्वं ६ पूगंक्रमुकंपत्राणिनागवल्लीदलानि ७ ७ ७

शरीरस्यस्वशरीरस्य ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०

गृहीतमुखवासं तं संवेश्य च शुभासने गृहीत्वाज्ञां शरीरस्य चकार साधनं ततः ८ फलाहारं स्वयं कृत्वा पुनर्गत्वा च सन्निधौ प्रोवाच प्रणयोपेता किमाज्ञापयसे प्रभो ९ पादसंवाहनं ते ध करोमि यदि मन्यसे एवं सेवापरा नित्यं बभूव पतितत्परा १० सायंहोमावसाने सा फलान्याहृत्य सुंदरी अर्पयामास मुनये स्वादूनि च मृदूनि च ११ ततः शेषाणि बुभुजे प्रेमयुक्ता तदाज्ञया सुस्पर्शास्तरणं कृत्वा शाययामास तं मुदा १२ सुप्ते सुखं प्रिये कांता पादसंवाहनं तदा चकार पृच्छती धर्मं कुलस्त्रीणां कृशोदरी १३ पादसंवाहनं कृत्वा निशि भक्तिपरायणा निद्रितं च मुनिं ज्ञात्वा सुष्वाप चरणांतिके १४ शुचौ प्रतिष्ठितं वीक्ष्य तालवृंतेन भामिनी कुर्वाणा शीतलं वायुं सिषेवे स्वपतिं तदा १५ हेमंते काष्ठसंभारं कृत्वाग्निज्वलनं पुरः स्थापयित्वा तथा पृच्छत्सुखं ते स्तीति चासकृत् १६ ब्राह्मे मुहूर्ते चोत्थाय जलपात्रं च मृत्तिकां समर्पयित्वा शौचार्थं समुत्थाप्य पतिं प्रिया १७ स्थानाद्दूरे च संस्थाप्य दूरं गत्वा स्थिराभवत् कृतशौचं पतिं ज्ञात्वा गत्वा जग्राह तं पुनः १८ आनीयाश्रममव्यग्रा चोपवेश्यासने शुभे मृज्जलाभ्यां च प्रक्षाल्य पादावस्य यथाविधि १९ दत्त्वाचमनमात्रं तु दंतधावनमाहरत् समर्प्य दंतकाष्ठं च यथोक्तं नृपनंदिनी २० चकारोष्णं जलं शुद्धं समानीतं सुपावनं स्नानार्थं जलमाहृत्य पप्रच्छ प्रणयान्विता २१ किमाज्ञापयसे ब्रह्मन्कृतं वै दंतधावनं उष्णोदकं सुसंपन्नं कुरु स्नानं समंत्रकं २२ वर्तते होमकालोयं संध्या पूर्वा प्रवर्तते विधिवद्धवनं कृत्वा देवतापूजनं कुरु २३ एवं कन्या पतिं लब्ध्वा तपस्विनमनिंदिता नित्यपर्यचरत्प्रीत्या तपसा नियमेन च २४ अग्नीनामतिथीनां च शुश्रूषां कुर्वती सदा आराधयामास मुदा च्यवनं सा शुभानना २५ कस्मिंश्चिदथ काले तु रविजावश्विनावुभौ च्यवनस्याश्रमाभ्यासे क्रीडमानौ समागतौ २६ २१ २२ २३ २४ २५ रविजौ सूर्यजौ २६

२७ नासत्यावश्विनौ २८ २९ ३० ३१ अनावृता वनुपानत्कौ चललोचने इति कन्यासंबोधनं ३२ अनावृतोत्तरीयमहापट्टवस्त्ररहिता ३३



जलेस्नात्वातु तां कन्यां निवृत्तां स्वाश्रमं प्रति गच्छंतीं चारुसर्वांगीं रविपुत्राव पश्यतां २७ तां दृष्ट्वा देवकन्याभां गत्वा चांति
कमादरात् ऊचतुः समभिद्रुत्य नासत्यावतिमोहितौ २८ क्षणं तिष्ठ वरारोहे प्रष्टुं त्वां गजगामिनि आवां देवसुतौ प्राप्तौ ब्रूहि स
त्यं शुचिस्मिते २९ पुत्री कस्य पतिः कस्ते कथमुद्यानमागता एकाकिनी तडागेस्मिन्स्नानार्थं चारुलोचने ३० द्वितीयाश्रीरिवाभा
सि कांत्या कमललोचने इच्छामस्तु वयं ज्ञातुं तत्त्वमाख्याहि शोभने ३१ कोमलौ चरणौ कांते स्थितौ भूमावनावृतौ हृदये कु
रुतः पीडां चलंतौ चललोचने ३२ विमानार्हासि तन्वंगि कथं पद्भ्यां व्रजस्यदः अनावृतात्र विपिने किमर्थं गमनं तव ३३ दासीश
तसमायुक्ता कथं न त्वं विनिर्गता राजपुत्र्यप्सरा वासि वद सत्यं वरानने ३४ धन्या माता यतो जाता धन्योसौ जनकस्तव वक्तुं
त्वां नैव शक्तौ च भर्तुर्भाग्यं तवानघे ३५ देवलोकाधिका भूमिरियं चैव सुलोचने प्रचलंश्चरणस्तेद्य संपावयति भूतलं ३६
सौभाग्याश्च मृगाः कामं ये त्वां पश्यंति वै वने ये चान्ये पक्षिणः सर्वे भूरियं चातिपावना ३७ स्तुत्यालं तव चात्यर्थं सत्यं ब्रूहि सु
लोचने पिता कस्ते पतिः क्वासौ द्रष्टुमिच्छास्ति सादरं ३८ व्यास उवाच तयोरिति वचः श्रुत्वा राजकन्याति सुंदरी तावुवाच
त्रपाक्रांता देवपुत्रौ नृपात्मजा ३९ शर्यातितनयां मां वां वित्तं भार्यां मुनेरिह च्यवनस्य सतीं कांतां पित्रा दत्तां यदृच्छया ४०
पतिरंधोस्ति मे देवौ वृद्धश्चातीव तापसः तस्य सेवां महारात्रं करोमि प्रीतमानसा ४१ कौ युवां किमिहायातौ पतिस्तिष्ठति चाश्र
मे तत्रागत्य प्रकुरुतमाश्रमं चाद्य पावनं ४२ तदाकर्ण्य वचो दस्रावूचतुस्तां नराधिप कथं त्वमपि कल्याणि पित्रा दत्ता तपस्विने
४३

३४ नैव शक्तावावामित्यर्थः ३५ यतस्ते चरणो भूतलं संपावयति पवित्रीकरोति ३६ सौभाग्याः अर्शआद्यजंतं सौभाग्यवंत इत्यर्थः ३७



३८ ३९ ४० ४१ ४२ ४३ ७ ७ ७ ७

सौदामनीति विद्युतो विशेषणं तद्वशास्थाविद्युदतिचंचला भवतीति तवतुल्या देवेष्वपि न दृष्टेत्यर्थः ४४ वरूथः समूहः ४५ ४६ वृथावृत

भ्राजसे ऽस्मिन्वनोद्देशे विद्युत्सौदामनी यथा न देवेष्वपि तुल्या हि तव दृष्टास्ति भामिनी ४४ त्वं दिव्यांबरयोग्यासि शोभसे ना जिनैर्वृता सर्वाभरणसंयुक्ता नीलालकवरूथिनी ४५ अहो विधेर्दुष्कलितं विचेष्टितं यदत्र रंभोरु वने विषीदसि विशालनेत्रेंऽधमिमं पतिं प्रिये मुनिं समासाद्य जरातुरं भृशं ४६ वृथावृतस्तेन भृशं न शोभसे नवं वयः प्राप्य सुनृत्यपंडिते मनोभवेनाशु शराः सुसंधिताः पतंति कस्मिन्पतिरीदृशस्तव ४७ त्वमंधभार्या नवयौवनान्विता कृतासि धात्रा ननु मंदबुद्धिना न चैनमर्हस्यसितायतेक्षणे पतिं त्वमन्यं कुरु चारुलोचने ४८ वृथैव ते जीवितमंबुजेक्षणे पतिं च संप्राप्य मुनिं गतेक्षणं वने निवासं च तथाजिनांबरम्धारणं योग्यतरं न मन्महे ४९ अतो नवद्यांग्युभयोस्त्वमेकं वरं कुरुष्वावहितासु लोचने किं यौवनं मानिनि निःसंकरोषि वृथा मुनिं सुंदरि सेवमाना ५० किं सेवसे भाग्यविवर्जितं तं समुज्झितं पोषणरक्षणाभ्यां त्यक्त्वा मुनिं सर्वसुखापवर्जितं भजानवद्यांग्युभयोस्त्वमेकं ५१ त्वं नंदने चैत्ररथे वने च कुरुष्व कांते प्रथितं विहारं अंधेन वृद्धेन कथं हि कालं विनेष्यसे मानिनि मानहीनं ५२ भूपात्मजा त्वं शुभलक्षणा च जानासि संसारविहारभावं भाग्येन हीना विजने वनेऽत्र कालं कथं वाहयसे वृथा च ५३ तस्माद्भजस्व पिकभाषिणि चारुवक्त्रे एकं द्वयोस्तव सुखाय विशालनेत्रे देवालयेषु च कृशोदरि भुंक्ष्व भोगांस्त्यक्त्वा मुनिं जरठमाशु नृपेंद्रपुत्रि ५४ किं ते सुखं चात्र वने सुकेशि वृद्धेन सार्द्धं विजने मृगाक्षि सेवा तथांधस्य नवं वयश्च किं ते मतं भूपतिपुत्रि दुःखं ५५ शशिमुखि त्वमतीव सुकोमला फलजलाहरणं तव नोचितं इति श्रीदेवीभागवते महापुराणे सप्तमस्कंधे चतुर्थोऽध्यायः ४

त्वया यमंध इत्यन्वयः तेनांधेन त्वं न शोभसे ४७ ४८ ४९ उभयोरावयोरित्यर्थः ५० ५१ ५२ ५३ ५४ यत्र वने नवं वयस्ते ऽस्ति सेवा चांधस्य वर्तते तत्र किं सुखमित्यन्वयः किं ते मतमिति हे भूपतिपुत्रि ते किं दुःखं मतमभिमतमस्तीत्यर्थः ५५ इति दे० भा० अध्यायः ४

अर्धाधिकैरष्टपंचाशद्भिःश्लोकैरथोच्यते च्यवनस्ययुवावस्थारविपुत्रप्रसादजा १ अश्विनीकुमारभाषणानंतरंजातंवृत्तमाह तयोस्तद्भाषितमिति १



व्यासउवाच तयोस्तद्भाषितंश्रुत्वावेपमानानृपात्मजा धैर्यमालंब्यतौतत्रबभाषेमितभाषिणी १ देवौवांरविपुत्रौच-सर्वज्ञौसुरसंमतौ सतींमांधर्मशीलांचनैवंवदितुमर्हथ २ पित्रादत्तासुरश्रेष्ठौमुनयेयोगधर्मिणे कथंगच्छामितंमार्गंपुं-श्चलीगणसेवितं ३ द्रष्टायंसर्वलोकस्यकर्मसाक्षीदिवाकरः कश्यपाच्चैवसंभूतौनैवंभाषितुमर्हथ ४ कुलकन्यापतिं त्यक्त्वाकथमन्यंभजेन्नरं असारेस्मिन्हिसंसारेजानंतौधर्मनिर्णयं ५ यथेच्छंगच्छतांदेवौशापंदास्यामिवानघौ सुकन्या हंचशर्यातेःपतिभक्तिपरायणा ६ व्यासउवाच इत्याकर्ण्यवचस्तस्यानासत्यौविस्मितौभृशं तावब्रूतांपुनस्तेनांशंक-मानौभयंमुनेः ७ राजपुत्रिप्रसन्नौतेधर्मेणवरवर्णिनि वरंवरयसुश्रोणिदास्यावःश्रेयसेतव ८ जानीहित्वंप्रमदेनूनमावां देवभिषग्वरौ युवानंरूपसंपन्नंप्रकुर्यावःपतिंतव ९ ततस्त्रयाणामस्माकंपतिमेकतमंवृणु समानरूपदेहानांमध्येचा-तुर्यपंडिते १० सातयोर्वचनंश्रुत्वाविस्मितास्वपतिंतदा गत्वोवाचतयोर्वाक्यंताभ्यामुक्तंयदद्भुतं ११ सुकन्योवाच स्वामिन्सूर्यसुतौदेवौसंप्राप्तौच्यवनाश्रमे दृष्टौमयादिव्यदेहौनासत्यौभृगुनंदन १२ वीक्ष्यमांचारुसर्वांगींजातौकामातु-रावुभौ कथितंवचनंस्वामिन्पतिंतेनवयौवनं १३ दिव्यदेहंकरिष्यावश्चक्षुष्मंतंमुनिंकिल एतेनसमयेनाद्यतंशृणुत्वं मयोदितं १४ समावयवरूपंचकरिष्यावःपतिंतव ततस्त्रयाणामस्माकंपतिमेकतमंवृणु १५ तच्छ्रुत्वाहमिहायाता प्रष्टुंत्वांकार्यमद्भुतं किंकर्तव्यमतःसाधोब्रूह्यस्मिन्कार्यसंकटे १६

२ ३ ४ जानंताविति रविपुत्रयोःसंबोधनं ५ ६ ७ ८ ९ चातुर्यपंडितेइतिसंबोधनं १० ११ १२ १३ एतेनसमयेनेतिपूर्वान्वयि कोसौसमयस्तत्राह तंशृणुत्वमिति मयोदितंवक्ष्यमाणंतंसमयंशृणुइत्य-र्थः १४ समावयवरूपंचास्मत्सदृशावयवरूपवंतमित्यर्थः ततस्त्रयाणामिति तदास्मद्भाग्येयदिलिंलिखितास्यात्तदास्माकमेवभविष्यसीतितयोरविपुत्रयोरभिप्रा-यः १५ १६

कपटंतयोरिति केनाभिप्रायेणेदं तेरुक्तमितितयोः कपटंनजानेहमित्यर्थः १७ १८ १९ क्रियतामिति समयेनपूर्वोक्तपणबंधेनयद्भवद्भ्यांक

देवमायापिदुर्ज्ञेयानजानेकपटंतयोः यदाज्ञापयसर्वज्ञतत्करोमितवेप्सितं १७ च्यवनउवाच गच्छकांतेद्यनासत्यौवच नान्ममस्कृव्रते आनयस्वसमीपंमेशीघ्रंदेवभिषग्वरौ १८ क्रियतामाशुनद्वाक्यंनात्रकार्याविचारणा व्यासउवाच ए वंसासमनुज्ञातात्रगत्वावचोब्रवीत् १९ क्रियतामाशुनासत्यौसमयेनस्कृतोत्तमौ तच्छ्रुत्वाचाश्विनौवाक्यंतस्यास्तौतत्रचा गतौ २० ऊचतूराजपुत्रींतांपतिस्तेवविशत्वपः रूपार्थंच्यवनस्तूर्णंततोंभःप्रविवेशह २१ अश्विनावपिपश्चात्तत्रविष्टौ सरउत्तमं ततस्तेनिःसृतास्तस्मात्सरसस्तत्क्षणात्रयः २२ तुल्यरूपादिव्यदेहायुवानःसदृशाःकिल दिव्यकुंडल भूषाढ्याःसमानावयसस्तथा २३ तेब्रुवन्सहिताःसर्वेवृणीष्ववरवर्णिनि अस्माकमीप्सितंभद्रेपतिंत्वममलानने २४ यस्मिन्वाप्यधिकाप्रीतिस्तंवृणुष्ववरानने व्यासउवाच सादृष्ट्वातुल्यरूपांस्तान्समानवयसस्तथा २५ एकस्वरांस्तुल्य वेषांस्त्रीन्वैदेवसुतोपमान् सातुसंशयमापन्नावीक्ष्यतान्सदृशाकृतीन् २६ अजानतीपतिंसम्यग्व्याकुलासमचिंतय त् किंकरोमित्रयस्तुल्याःकंवृणोमिनवेद्म्यहं २७ पतिंदेवसुतात्वेतेसंशयेपतितास्म्यहं इंद्रजालमिदंसम्यग्देवाभ्या मिहकल्पितं २८ कर्तव्यंकिंमयात्वात्रमरणंसमुपागतं नमयापतिमुत्सृज्यवरणीयःकथंचन २९ देवस्त्वाधुनिकःकु- श्चिदित्येषाममधारणा इतिसंचिंत्यमनसापरांविश्वेश्वरीशिवां ३० दध्यौभगवतींदेवींतुष्टावचकृशोदरी सुकन्यो- वाच शरणंत्वांजगन्मातःप्राप्तास्मिभृशदुःखिता ३१ रक्षमेद्यसतीधर्मंनमामिचरणौतव नमःपद्मोद्भवेदेविनमः शंकरवल्लभे ३२

र्तव्यत्वेनाभिलषितंतत्क्रियतामित्यर्थः २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ छ छ छ छ छ छ छ छ छ

३३ ३४ ३५ ३६ ३७ देवानामश्विनीकुमाराभ्यां कूटंकपटं चरितमाचरितमित्यर्थः ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५



विष्णुप्रियेनमोलक्ष्मिवेदमातःसरस्वति इदंजगत्त्वयासृष्टंसर्वंस्थावरजंगमं ३३ पासित्वमिदमव्यग्रातथाऽसिलोक
शांतये ब्रह्मविष्णुमहेशानांजननीत्वंस्कसंमता ३४ बुद्धिदासित्वमज्ञानांज्ञानिनांमोक्षदासदा आद्यात्वंप्रकृतिःपूर्णा
पुरुषप्रियदर्शना ३५ भुक्तिमुक्तिप्रदासित्वंप्राणिनांविशदात्मनां अज्ञानांदुःखदाक्रामंसत्त्वानांसुखसाधना ३६ सिद्धि
दायोगिनांमव जयदाकीर्तिदापुनः शरणंत्वांप्रपन्नास्मिविस्मयंपरमंगता ३७ पतिंदर्शयमेमातर्मग्नास्मिन्शोकसागरे
देवाभ्यांचरितंकूटंकंदूणोमिविमोहिता ३८ पतिंदर्शयसर्वज्ञेविदित्वामेसतीव्रतं व्यासउवाच एवंस्कतातदादेवीतथा
त्रिपुरसुंदरी ३९ हृदयेस्यास्तदाज्ञानंददावाशुसुखोदयं निश्चित्यमनसातुल्यवयोरूपधरान्सती ४० प्रसमीक्ष्य
तुतान्सर्वान्ववेबालास्वकंपतिं वृतेथच्यवनेदेवौसंतुष्टौतौबभूवतुः ४१ सतीधर्मंसमालोक्यसंप्रीतौददतुर्वरं भगव
त्याःप्रसादेनप्रसन्नौतौसुरोत्तमौ ४२ मुनिमामंत्र्यतरसागमनायोद्यतावुभौ लब्ध्वातुच्यवनोरूपंनेत्रेभार्यांचयौवनं
४३ हृष्टोब्रवीन्महातेजास्तौनासत्याविदंवचः उपकारःकृतोयंमेयुवाभ्यांसुरसत्तमौ ४४ किंब्रवीमिसुखंप्राप्तंसंसा
रेस्मिन्ननुत्तमे प्राप्यभार्यांसुकेशीनांदुःखंमेभवदन्वहं ४५ अंधस्यचातिवृद्धस्यभोगहीनस्यकानने युवाभ्यांनयनेद-
त्तेयौवनंरूपमद्भुतं ४६ संपादितंततःकिंचिदुपकर्तुमहंब्रुवे उपकारिणिमित्रेयोनोपकुर्यात्कथंचन ४७ तंधिगस्तुनरं
देवौभवेच्चऋणवान्भुवि तस्माद्वांवांछितंकिंचिद्दातुमिच्छामिसांप्रतं ४८ आत्मनोऋणमोक्षायदेवेशौनूननस्यच प्रा
र्थितंवांप्रदास्यामियदलभ्यंसुरासुरैः ४९ ब्रुवाथावामनोदिष्टंप्रीतोस्मिसुकृतेनवां श्रुत्वातौतुमुनेर्वाक्यमभिमंत्र्यपरस्प
रं ५० तमूचतुर्मुनिश्रेष्ठंसुकन्यासहितंस्थितं मुनेपितुःप्रसादेनसर्वंनोमनसेप्सितं ५१

४६ ४७ ४८ ४९ ५० ५१

चमसग्रहे ग्रहः सोमाधारः पात्रविशेषस्तस्मिन्निषिद्धौ ग्रहेण सोमपानमनयोर्नास्तीति निषिद्धावित्यर्थः ५२ ५३ ५४ ५५ ५६ ५७ ५८

उत्कंठा सोमपानस्य वर्तते नौ सुरैः सह भिषजाविति देवेन निषिद्धौ चमसग्रहे ५२ शक्रेणावितते यज्ञे ब्रह्मणः कनकाचले तस्मात्त्वमपि धर्मज्ञ यदि शक्तोसि तापस ५३ कार्यमेतद्धि कर्तव्यं वांछितं नौ सुसंमतं एतद्विज्ञाय वा ब्रह्मन्कुरु वां सोमपायिनौ ५४ पिपासास्ति सुदुष्प्रापा त्वत्तः सुसुपयास्यति च्यवनस्तु तयोः प्राह तच्छ्रुत्वा वचनं मृदु ५५ यदहं रूपसंपन्नो वयसा च सम-न्वितः कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिति ५६ तस्माद्युवां करिष्यामि प्रीत्याहं सोमपायिनौ मिषतो देवराजस्य सत्यमेतद्ब्रवीम्यहं ५७ राज्ञस्तु विततेयज्ञे शर्यातेरमितद्युते: इत्याकर्ण्य वचो हृष्टौ तौ दिवं प्रतिजग्मतुः ५८ च्यवनस्तां गृहीत्वा तु जगामाश्रममंडलं इतिश्रीदेवीभागवते महापुराणे सप्तमस्कंधे पंचमोऽध्यायः ५ जनमेजय उवाच च्यवनेन कथं वै तौ कृतौ सोमपायिनौ वचनं च कथं सत्यं जातं तस्य महात्मनः १ मानुषस्य बलं कीदृग्देवराजबलं प्रति निषिद्धौ भिषजौ तेन कृतौ तौ सोमपायिनौ २ धर्मनिष्ठ तदाश्चर्यं विस्तरेण वद प्रभो चरितं च्यवनस्याद्य श्रोतुकामोस्मि सर्वथा ३ व्यास उवाच निशामय महाराज चरितं परमाद्भुतं च्यवनस्य मखे तस्मिञ्शर्यातेर्भुवि भारत ४ सुकन्यां सुंदरीं प्राप्य च्यवनः स्मरसंनिभः विजहार प्रसन्नात्मा देवकन्यामिवापरः ५ कदाचिदथ शर्यातिभार्या चिंतातुरा भृशं पतिं प्राह वेपमाना वचनं रुदती प्रिया ६ राजन्पुत्री त्वया दत्ता मुनयेऽध्य कानने मृता जीवति वा सा तु द्रष्टव्या सर्वथा लया ७ गच्छ नाथ मुनेस्तावदाश्रमं द्रष्टुमादरात् किं करोति सुकन्या सा प्राप्य नाथं तथाविधं ८ पुत्रीदुःखेन राजर्षे दग्धास्मि सर्वथा हृदि ता मानय विशालाक्षीं तपःक्षामां मदंतिके ९

इतिश्रीदेवीभा० ति० अध्यायः ५ एकषष्टिश्लोकवर्येश्च्यवनेन महात्मना शर्यातिः प्रेरितो यज्ञं चकारेति निगद्यते १ अश्विनीकुमारगमनानंतरं जातं वृत्तं राजा पृच्छति च्यवनेनेति १ २ धर्मनिष्ठेति व्यासः संबोधनं ३ शर्यातेर्मखे च्यवनस्य चरितमित्यन्वयः ४ ५ ६ ७ ८ ९

१० मुनिमपिद्रष्टुमित्यन्वयः ११ १२ १३ १४ १५ मानवेमनोःसंबंधिनिकुलेइत्यन्वयः१६ १७ १८ १९ पुत्र्याविशेषतः कन्याहत्या—



पश्यामिसर्वथापुत्रींकृशांगींवल्कलावृतां अंधंपतिंसमासाद्यदुःखभाजंकृशोदरीं १० शर्यातिरुवाच गच्छामोद्यविशा
लाक्षिसुकन्यांद्रष्टुमादरात् प्रियपुत्रींवरारोहेमुनिंतंशंशितव्रतं ११ व्यासउवाच एवमुक्त्वातुशर्यातिःकामिनींशोकसं-
कुलां जगामरथमारुह्यत्वरितश्चाश्रमंमुनेः १२ गत्वाश्रमसमीपेतुतमपश्यन्महीपतिः नवयौवनसंपन्नंदेवपुत्रोपमंमुनिं
१३ तंविलोक्यामराकारंविस्मयंनृपतिर्गतः किंकृतंकुत्सितंकर्मपुत्र्यालोकविगर्हितं १४ निहतोसौमुनिर्वृद्धस्त्वनयान्यः
पतिःकृतः कामपीडितयाकामंप्रशांतोप्यतिनिर्धनः १५ दुःसहोयंपुष्पधन्वाविशेषेणचयौवने कुलेकलंकःसुमहाननन
यामानवेकृतः १६ धिक्तस्यजीवितंलोकेयस्यपुत्रीहिकुत्सिता सर्वपापेस्तुदुःखायपुत्रीभवतिदेहिनां १७ मयाखलुचि
तंकर्मकृतंस्वार्थस्यसिद्धये च्यवनायांधाययादत्तापुत्रीसर्वात्मनाकिल १८ कन्यायोग्यायदातव्यापित्रासर्वात्मनाकिल ता
दृशंहिफलंप्राप्तंयादृशंवैकृतंमया १९ हन्मिचेदद्यतनयांदुःशीलांपापकारिणीं स्त्रीहत्यादुस्तरास्यान्मेतथापुत्र्याविशेषतः
२० मनुवंशस्त्वविख्यातःसकलंकःकृतोमया लोकापवादोबलवान्दुस्त्याज्यास्नेहशृंखला २१ किंकरोमीतिचिंताब्धौ
यदामग्नःसपार्थिवः सुकन्ययातदादैवाद्दृष्टश्चिंताकुलःपिता २२ सादृष्ट्वातंजगामाशुसुकन्यापितुरंतिके गत्वा
पप्रच्छभूपालंप्रेमपूरितमानसा २३ किंविचारयसेराजन्चिंताव्याकुलिताननः उपविष्टंमुनिंवीक्ष्ययुवानमंबुजेक्षणं २४
एह्येहिपुरुषव्याघ्रप्रणमस्वपतिंमम माविषादंनृपश्रेष्ठसांप्रतंकुरुमानव २५ व्यासउवाच इतिपुत्र्यावचःश्रु-
त्वाशर्यातिःक्रोधपीडितः प्रोवाचवचनंराजापुरस्थांतनयांततः २६

स्त्रीहत्याचेत्युभयमत्रस्यादित्यर्थः २० किंचहंतुमपिनशक्नोमियतो
दुस्त्याज्यास्नेहशृंखलाभवतीत्याह दुस्त्याज्येति २१ २२ २३ २४ २५ पुरःस्थांअग्रस्थां २६ ७ ७

राजोवाच क्वमुनिश्च्यवनः पुत्रिवृद्धोऽधरस्तापसोत्तमः कोयंयुवामदोन्मत्तः संदेहोत्रमहान्मम २७ मुनिः किंनिहतः पापे
त्वयादुष्कृतकारिणि नूतनोसौपतिः कामात्कृतः कुलविनाशिनि २८ सोहंचिंतातुरस्त्वंनपश्याम्याश्रमसंस्थितं किं
कृतंदुष्कृतंकर्मकुलदाचरितंकिल २९ निमग्नोहंदुराचारेशोकाब्धौत्वत्कृतेऽधुना दृष्ट्वेनंपुरुषंदिव्यमदृष्ट्वाच्यवनंमुनिं
३० विहस्यनसुवाचाशुकस्मात्श्रुत्वावचनंपितुः गृहीत्वानीयपितरंभर्तुरंतिकमादशत् ३१ च्यवनोसौमुनिस्तातजामातातेनसंशयः
अश्विभ्यामीदृशःकांतःकृतःकमललोचनः ३२ यदृच्छयात्रसंप्राप्तौनासत्यावाश्रमेमम ताभ्यांकरुणया
नूनंच्यवनस्तादृशःकृतः ३३ नाहंतवसुतातातनथास्यांपापकारिणी यथात्वंमन्यसेराजन्विमूढोरूपसंशये ३४ प्र
णमत्वंमुनिंराजन्भार्गवंच्यवनंपितः आपृच्छकारणंसर्वंकथयिष्यतिविस्तरं ३५ इतिश्रुत्वावचःपुत्र्याःशर्यातिस्त्वरित
स्तदा प्रणनामसुनिंतत्रगत्वापप्रच्छसादरं ३६ राजोवाच कथयस्वस्ववृत्तांतंभार्गवाशुयथोचितं नयनेचकथंप्राप्ते
क्वगतातेजरापुनः ३७ संशयोयंमहान्मेस्तिरूपंदृष्ट्वातिसुंदरं यदविस्तरतोब्रह्मन्श्रुत्वाहंसुखमाप्नुयां ३८ च्यव
नउवाच नासत्यावत्रसंप्राप्तौदेवानांभिषजावुभौ उपकारःकृतस्ताभ्यांकृपयानृपसत्तम ३९ मयाताभ्यांवरोदत्तउपका
रस्यहेतवे करिष्यामिमखेराज्ञोभवंतौसोमपायिनौ ४० एवंमयावयःप्राप्तंलोचनेविमलेतथा स्वस्थोभवमहाराज-
संविशस्वासनेशुभे ४१ इत्युक्तःसतुविप्रेणसभार्यःपृथिवीपतिः सुखोपविष्टःकल्याणीःकथाश्चक्रेमहात्मना
४२ अथनंभार्गवःप्राहराजानंपरिसांत्वयन् याजयिष्यामिराजंस्त्वांसंभारानुपकल्पय ४३ मयाप्रतिश्रुतंताभ्यांकर्तव्यौ
सोमपौयुवां तत्कर्तव्यंनृपश्रेष्ठतवयज्ञेतिविस्तरे ४४

सोममखेअग्निष्टोमयज्ञे ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ एतयोरश्विनोर्ग्रहंसोमपूरितंपात्रंमागृहाण यज्ञेतयोर्निषिद्धत्वा

इंद्रंनिवारयिष्यामिक्रुद्धंतेजोबलेनवै पाययिष्यामिराजेंद्रसोमंसोममखेतव ४५ ततःपरमसंतुष्टःशर्यातिःपृथिवीपतिः
च्यवनस्यमहाराजनद्वाक्यंप्रत्यपूजयत् ४६ समान्यच्यवनराजाजगामनगरंप्रति सभार्यश्चातिसंतुष्टःकुर्वन्वार्तांमुनेःकि
ल ४७ प्रशस्तेहनियज्ञीयेसर्वकामसमृद्धिमान् कारयामासशर्यातिर्यज्ञायतनमुत्तमं ४८ समानीयमुनीन्पूज्यान्वसि
ष्ठप्रमुखानसौ भार्गवोयाजयामासच्यवनःपृथिवीपतिं ४९ विततेतुतथायज्ञेदेवाःसर्वेसवासवाः आजग्मुश्चाश्विनौतत्र
सोमार्थमुपजग्मतुः ५० इंद्रस्तुशंकितस्तत्रवीक्ष्यतावश्विनावुभौ पप्रच्छचसुरान्सर्वान्किमेतौसमुपागतौ ५१ चिकित्स
कौनसोमार्हौकेनानीताविहेतिच नाब्रुवन्नमरास्तत्रराज्ञस्तुविततेमखे ५२ अगृह्णाच्च्यवनःसोममश्विनोर्देवयोस्तदा
शक्रस्तंवारयामासमागृहाणेतयोर्ग्रहं ५३ तमाहच्यवनस्तत्रकथमेतौरवेःसुतौ नग्रहार्हौचनासत्यौब्रूहिसत्यंशची
पते ५४ नसंकरौसमुत्पन्नौधर्मपत्नीसुतौरवेः केनदोषेणदेवेंद्रनार्हौसोमंभिषग्वरौ ५५ निर्णयोऽत्रमखेशक्रकर्तव्यः
सर्वदैवतैः ग्राहयिष्याम्यहंसोमंकृतौतौसोमपौमया ५६ प्रेरितोसौमयाराजामखायमघवन्किल एतदर्थंकरिष्यामि-
सत्यमेवचनंविभो ५७ आभ्यामुपकृतंशक्रतथादत्तनवंवयः तस्मात्प्रत्युपकारस्तुकर्तव्यःसर्वथामया ५८ इंद्र
उवाच चिकित्सकौकृत्तावेतौनासत्यौनिंदितौसुरैः उभावेतौनसोमार्हौमागृहाणेतयोर्ग्रहं ५९ च्यवनउवाच अह
ल्याजारसंयच्छकोपंचाद्यनिरर्थकं वृत्रघ्नकिंहितौसत्यौनसोमार्हौसुरात्मजौ ६० एवंविवादेसमुपस्थितेचनकोपिवाचं
तमुवाचभूप ग्रहंतयोर्भार्गवस्तिग्मतेजाःसंग्राहयामासतपोबलेन ६१ इतिश्रीदे॰भ॰स॰ष॰अध्यायः ६ दित्यर्थः ५३ ५४

५५ ५६ ५७ ५८ ५९ ६० ६१ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेषष्ठोऽध्यायः ६ ७ ७ ७

द्विपंचाशच्छ्लोकवर्यैः शार्यातेस्तु महामखे अश्विनौ सोमपानेन संतुष्टाविति कीर्त्यते १ अश्विभ्यां ग्रहपात्रदानानंतरं जातं वृत्तमाह दत्तेग्रहेत्विति १ विश्वरूपमिति विश्वरूपस्त्वाष्ट्रस्तस्य कथा षष्ठस्कंधे उक्ता २ ३ ऋतेत्वामिति त्वांविनात्वत्तोभिन्नायथान्ये देवाग्रहमाददते गृह्णंति तथाश्विनावपि

व्यासउवाच दत्तेग्रहेतु राजेंद्र वासवः कुपितोभृशं प्रोवाच च्यवनंतत्र दर्शयन्बलमात्मनः १ माब्रह्मबंधोमर्यादामिमां त्वंकर्तुमर्हसि वधिष्यामि द्विषंतंत्वांविश्वरूपमिवापरं २ च्यवनउवाच मावमंस्थामहात्मानौ रूपद्रविणवर्चसा यौच ऋतुमांमघवन्वृंदारकमिवापरं ३ ऋतेत्वांविबुधाश्चान्ये कथंवाददते ग्रहं अश्विनावपिदेवेंद्र देवौविद्धि परंतपौ ४ इंद्र उवाच भिषजौनार्हतः कामं ग्रहंयज्ञे कथंचन यदि दित्ससि मंदात्मन् शिरश्छेत्स्यामि सांप्रतं ५ व्यासउवाच अनादृत्य तुतद्वाक्यं वासवस्य च भार्गवः ग्रहंतुग्राहयामास मत्सेयन्निवतंभृशं ६ सोमपात्रंयदाताभ्यां गृहीतंतु पिपासया समीक्ष्य बलभिद्देव इदंवचनमब्रवीत् ७ आभ्यामर्थाय सोमंत्वं ग्राहयिष्यसि चेत्स्वयं वज्रंतु प्रहरिष्यामि विश्वरूपमिवापरं ८ वासवेनैवमुक्तस्तु भार्गवश्चातिगर्वितः जग्राहविधिवत्सोमम् अश्विभ्यामतिमन्युमान् ९ इंद्रोपि प्राक्षिपत्कोपाद्वज्रमस्मै स्वमायुधं पश्यतां सर्वदेवानां सूर्यकोटिसमप्रभं १० प्रेरितंचाशनिंप्रेक्ष्य च्यवनस्तपसा ततः स्तंभयामास बाहुंसशक्रस्यामिततेजसः ११ कृत्ययासमहाबाहुरिंद्रं हंतुमिहोद्यतः जुहावाग्नौ श्तंहव्यं मंत्रेणमुनिसत्तमः १२ तत्रकृत्या समुत्पन्ना च्यवनस्य तपोबलात् प्रबलः पुरुषः क्रूरो बृहत्कायो महासुरः १३ मदोनाम महाघोरो भयदः प्राणिनामिह शरीरे पर्वताकारस्तीक्ष्णदंष्ट्रो भयानकः १४ चतस्रश्चायतादंष्ट्रा योजनानांशतंशतं इतरेत्वस्य दशना बभूवुर्दशयोजनाः १५

देवौविद्धि ततस्तयोः कुतोनाधिकार इत्यर्थः ४ ५ ६ ७ आभ्यामिति तृतीयांतं अर्थायस्तस्य प्रयोजनाय ८ जग्राह अंतर्भावितण्यर्थोत्र ग्रहिः ग्राहयामासेत्यर्थः ९ १० स्तंभयामासेति स्वशरीरेन प्राप्तं यावत्तावदित्यर्थः ११ श्रृतंपक्वं १२ १३ १४ १५

१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ ननिवारयितुमिति शक्तिभक्तस्यपराशक्तिभक्त



बाहूपर्वतसंकाशावायतौक्रूरदर्शनौ जिह्वातुभीषणाक्रूरालेलिह्यानानभस्तलं १६ ग्रीवातुगिरिशृंगाभाकठिनाभीषणाभृशं नखाव्याघ्रनखप्रख्याःकेशाश्चातीवभीषणाः १७ शरीरंकज्जलाभंचतस्यचास्यंभयानकं नेत्रेदावानलप्रख्येभीषणेतिभयानके १८ हनुरेकास्थितातस्यभूमावेकादिवंगता एवंविधःसमुत्पन्नोमदोनामबृहत्तनुः १९ तंविलोक्यसुराःसर्वेभयमाजग्मुरंहसा इंद्रोपिभयसंत्रस्तोयुद्धायनमनोदधे २० दैत्योपिवदनेकामंवज्रमादायसंस्थितः व्यात्तंनभोघोरदंष्ट्रैर्ग्रसन्निवजगत्त्रयं २१ सभक्षयिष्यन्संक्रुद्धःशतक्रतुमुपाद्रवत् चुक्रुशुश्चसुराःसर्वेहाहताःस्मेतिसंस्थिताः २२ इंद्रस्तंभितबाहुस्तुमुमुक्षुर्वज्रमंतिकात् नशशाकपविंतस्मिन्प्रहर्तुंपाकशासनः २३ वज्रहस्तःसुरेशानस्तंवीक्ष्यकालसन्निभं सस्मारमनसातत्रगुरुंसमयकोविदं २४ स्मरणादाजगामाशुबृहस्पतिरुदारधीः गुरुस्तत्समयंदृष्ट्वाविपत्तिसदृशंमहत् २५ विचार्यमनसाकृत्यंतमुवाचशचीपतिं दुःसाध्योयंमहामंत्रैस्त्वयंवज्रेणवासव २६ असुरोमदसंज्ञस्तुयज्ञकुंडात्समुत्थितः तपोबलमृषेःसम्यक्च्यवनस्यमहाबलः २७ अनिवार्योप्ययंशत्रुस्त्वयादेवैस्तथामया शरणंयाहिदेवेशच्यवनस्यमहात्मनः २८ सनिवारयितानूनंकृत्यामात्मकृतांकिल ननिवारयितुंशक्ताःशक्तिभक्तरुषंक्वचित् २९ व्यासउवाच इत्युक्तोगुरुणाशक्रस्तदागच्छन्मुनिंप्रति प्रणम्यशिरसानम्रस्तमुवाचभयान्वितः ३० क्षमस्वमुनिशार्दूलशमयासुरमुद्यतं प्रसन्नोभवसर्वज्ञवचनंतेकरोम्यहं ३१ सोमार्हावश्विनावेतावद्यप्रभृतिभार्गव भविष्यतःसत्यमेतद्वचोविप्रप्रसीदमे ३२

स्यरोषंकोपंब्रह्मापिनिवारयितुं



नशक्तःकःपुनरन्यःस्यात् च्यवनस्तुमहाशक्तिभक्तस्ततोदुःसाध्यइतिभावः २९ ३० ३१ ३२

३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९

मिथ्यातेनोद्यमोत्द्येषभवत्वेवतपोधन जानेत्वमपिधर्मज्ञमिथ्यानैवकरिष्यसि ३३ सोमपावश्विनावेतौत्वत्कृतौचसदैव
हि भविष्यतश्चशर्यातेःकीर्तिस्तुविपुलाभवेत् ३४ मयायद्धिकृतंकर्मसर्वथामुनिसत्तम परीक्षार्थंतुविज्ञेयंतववीर्यप्र
काशनं ३५ प्रसादंकुरुमेब्रह्मन्मदंसंहरचोत्थितं कल्याणंसर्वदेवानांतथाभूयोविधीयतां ३६ एवमुक्तस्तुशक्रेण-
च्यवनःपरमार्थवित् संजहारततःकोपंसमुत्पन्नंविरोधजं ३७ देवमाश्वास्यसंविग्नंभार्गवस्तुमदंततः व्यभजत्स्त्रीषुपा
नेषुद्यूतेषुमृगयास्वच ३८ मदंविभज्यदेवेंद्रमाश्वास्यचकृतिंभिया संस्थाप्यचस्वरान्सर्वान्मरवंतस्यन्यवर्तयत् ३९ त
तस्तुसंस्कृतंसोमंवासवायमहात्मने अश्विभ्यांसर्वधर्मात्मापाययामासभार्गवः ४० एवंतौच्यवनेनार्याविश्विनौरविपु
त्रकौ विहितौसोमपौराजन्सर्वथातपसोबलात् ४१ सरस्तद्दपिविख्यातंजातंयूपविमंडितं आश्रमस्तुमुनेःसम्यक्पृ
थिव्यांविश्रुतोभवत् ४२ शर्यातिरपिसूतुष्टोत्वभवत्तेनकर्मणा यज्ञंसमाप्यनगरेजगामसचिवैर्वृतः ४३ राज्यंच
कारधर्मज्ञोमनुपुत्रःप्रतापवान् आनर्तस्तस्यपुत्रोभूदानर्त्ताद्रेवतोऽभवत् ४४ सोऽतःसमुद्रेनगरींविनिर्मायकुशस्थ
लीं आस्थितोभुक्तविषयानानर्तादीनरिंदमः ४५ तस्यपुत्रशतंजज्ञेककुद्मिज्येष्ठमुत्तमं पुत्रीचरेवतीनाम्नासुंदरीशु
भलक्षणा ४६ वरयोग्यायदाजातातदाराजाचरेवतः चिंतयामासराजेंद्रोराजपुत्रान्कुलोद्भवान् ४७ रैवतंनामचगि
रिमाश्रितःपृथिवीपतिः चकारराज्यंबलवानानर्तेषुनराधिपः ४८ विचिंत्यमनसाराजाकस्मैदेयामयासुता गत्वापृ
च्छामिब्रह्माणंसर्वज्ञंसुरपूजितं ४९ इतिसंचिंत्यभूपालःसुतामादायरेवतीं ब्रह्मलोकंजगामाशुप्रष्टुकामःपितामहं ५०
यत्रदेवाश्चयज्ञाश्चछंदांसिपर्वतास्तथा अब्धयःसरितश्चापिदिव्यरूपधराःस्थिताः ५१

५० ५१

५२ शाक्तानांसर्वोत्तरोमहिमास्तीत्यवांतरतात्पर्यं तदुक्तंमुंडमालायां स्वर्गेमर्त्येचपातालेनास्तिशाक्तात्पराक्रमी सौराणांगाणपत्यानांवैष्णवानांतथैवच
तदंतेनैवशाक्ताःस्फःक्रमशःक्रमशःप्रिये शृणुदेविवरारोहेनास्तिशाक्तात्परोजनः शाक्तोहिशंकरःसाक्षात्परब्रह्मस्वरूपभागिति इतिश्रीदेवीभा॰तिलके–

ऋषयःसिद्धगंधर्वाःपन्नगाश्चारणास्तथा तस्थुःप्रांजलयःसर्वेस्तुवंतश्चपुरातनाः ५२ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेसप्तमोऽध्यायः ७ जनमेजयउवाच संशयोऽयंमहान्ब्रह्मन्वर्त्ततेममानसे ब्रह्मलोकंगतोराजारेवतीसंयुतःस्वयं १ मयापूर्वंश्रुतंकृत्स्नंब्राह्मणेभ्यःकथांतरे ब्राह्मणोब्रह्मविच्छांतोब्रह्मलोकमवाप्नुयात् २ राजाकथंगतस्तत्ररेवतीसंयुतःस्वयं सत्यलोकेऽतिदुष्प्राप्येभूर्लोकादितिसंशयः ३ मृतःस्वर्गमवाप्नोतिसर्वशास्त्रेषुनिर्णयः "मानुषेणतुदेहेन ब्रह्मलोकेगतिःकथं" स्वर्गात्पुनःकथंलोकेमानुषेजायतेगतिः ४ एतन्मेसंशयंविद्वन्छेत्तुमर्हसिसांप्रतं यथाराजागतस्तत्रप्रष्टुकामःप्रजापतिं ५ व्यासउवाच मेरोस्तुशिखरेराजन्सर्वेलोकाःप्रतिष्ठिताः इंद्रलोकोवन्हिलोकोयाचसंयमिनीपुरी ६ तथैवसत्यलोकश्चकैलासश्चतथापुनः वैकुंठश्चपुनस्तत्रवैष्णवंपदमुच्यते ७ यथार्जुनःशक्रलोकेगतःपार्थोधनुर्धरः पंचवर्षाणिकौंतेयःस्थितस्तत्रसुरालये ८ मानुषेणैवदेहेनवासवस्यचसन्निधौ तथैवान्येपिभूपालाः ककुत्स्थप्रमुखाःकिल ९ स्वर्लोकंगतयःपश्चाद्दैत्याश्चापिमहाबलाः जित्वेंद्रसदनंप्राप्यसंस्थितास्तत्रकामतः १० महाभिषुःपुराराजाब्रह्मलोकंगतःस्वराट् आगच्छंतींनृपोगंगामपश्यच्चातिसुंदरीं ११ वायुनांबरमस्यास्तुदेवादपहृतंनृप किंचिन्नग्नान्नृपेणाथदृष्टासासुंदरीतथा १२ स्मितंचकारकामार्त्तःसाचकिंचिज्जहासवै ब्रह्मणातौतदादृष्टौशप्तौयातौवसुंधरां १३

सप्त॰सप्तमोऽध्यायः ७ षट्पंचाशन्महापद्यैरेवतस्यकथानकं समाप्यवंशविस्तारं पुनाराज्ञांसमुच्यते १ ब्रह्मलोकंरेवतोगतइतिराजाश्रुत्वासंशयितःपृच्छति संशयोयमिति ब्रह्मलोकंगतस्तद्विषयसंशयइत्यर्थः१ २ ३ ४ ५ ६ ७ ८ ९ पश्चात्पूर्वंस्वर्लोकंगतयआसन्नित्यर्थः१० ११ १२
यातौवसुंधरामितिइयंकथापूर्वमुक्ता॰१३

१४ १५ १६ १७ १८ १९ गांधर्वेगानेप्रचलितेसतिलब्धक्षणोलब्धावकाशः क्षणंक्षणपरिमितलब्धावकाशइत्यर्थः २० २१ २२ संभवा-

वैकुंठेपिस्फुराः सर्वेपीडितादैत्यदानवैः गत्वाहरिंजगन्नाथमस्तुवन्कमलापतिं १४ संदेहोनात्रकर्त्तव्यः सर्वथानृपसत्तम गम्याः सर्वेपिलोकाः स्युर्मानवानांनराधिप १५ अवश्यंकृतपुण्यानांतापसानांनराधिप पुण्यसद्भावएवात्रगमनेकारणंनृप १६ तथैवयजमानानांयज्ञेनभावितात्मनां जनमेजयउवाच रेवतोरेवतींकन्यांगृहीत्वाचारुलोचनां १७ ब्रह्मलोकंगतः पश्चात्किंकृतं तेनभूभुजा ब्रह्मणाकिंसमादिष्टंकस्मैदत्ताकृतापुनः १८ तत्सर्वंविस्तराद्ब्रह्मन्कथयत्वममाधुना व्यासउवाच निशामयमही पालराजारेवतकः किल १९ पुत्र्यावरंपरिप्रष्टुंब्रह्मलोकंगतोयदा आवर्त्तमानेगांधर्वेस्थितोलब्धक्षणः क्षणं २० शृण्वन्नतृप्यत्कृष्टा त्मासभायांतुसकन्यकः समाप्तेतत्रगांधर्वेप्रणम्यपरमेश्वरं २१ दर्शयित्वाकृतांतस्मैस्वाभिप्रायंन्यवेदयत् राजोवाच वरंकथ यदेवेशकन्येयंममपुत्रिका २२ देयाकस्मैमयाब्रह्मन्प्रष्टुंत्वांसमुपागतः बहवोराजपुत्रामेवीक्षिताः कुलसंभवाः २३ कस्मिंश्चिन्मेम नःकामंनोपतिष्ठतिचंचलं तस्मात्त्वांदेवदेवेशप्रष्टुमत्रागतोस्म्यहं २४ तदाज्ञापयसर्वज्ञयोग्यंराजकृतंवरं कुलीनंबलवंतंचसर्व लक्षणसंयुतं २५ दातारंधर्मशीलंचराजपुत्रंसमादिश व्यासउवाच तदाकर्ण्यजगत्कर्त्तावचनंनृपतेस्तदा २६ तमुवाचहसन्वा क्यंदृष्ट्वाकालस्यपर्ययं ब्रह्मोवाच राजपुत्रास्त्वयाराजन्वरायेत्हृदयेकृताः २७ ग्रस्ताः कालेनतेसर्वेसपितृपौत्रबांधवाः सप्तविं शतिमोद्यैवद्वापरस्तुप्रवर्त्तते २८ वंशजास्तेमृताः सर्वेपुरीदैत्यैर्विलुंठिता सोमवंशोद्भवस्तत्रराजाराज्यंप्रशास्तिहि २९ उग्रसेन इतिख्यातोमथुराधिपतिः किल ययातिवंशसंभूतोराजामाथुरमंडले ३० उग्रसेनात्मजः कंसः सुरद्वेषीमहाबलः दैत्यांशः पितरं साधिकारागारेन्यवेशयत् ३१ स्वयंराज्यंचकाराशुनृपाणांमदगर्वितः मेदिनीचातिभारार्ताब्रह्माणंशरणंगता ३२ दुष्टराजन्यसैन्या नांभारेणातिसमाकुला अंशावतरणंतत्रगदितंसुरसत्तमैः ३३ उत्पन्नाः २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३

३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ अस्याःकथायास्तात्पर्यंतुक्षणभंगुरःसंसारोस्तिनतत्रासक्तिःकर्त्तव्याकिंतुपरमेश्वर्याआरा



वासुदेवःसमुत्पन्नःकृष्णःकमललोचनः देवक्यांदेवरूपिण्यांयोसौनारायणोमुनिः ३४ तपश्चचारदुःसाध्यंधर्मपुत्रःसनातनः
गंगातीरेनरसखःपुण्येबदरिकाश्रमे ३५ सोवतीर्णोयदुकुलेवासुदेवोतिविश्रुतः तेनासौनिहतःपापःकंसःकृष्णेनसत्तम ३६ उ
ग्रसेनायराज्यंवैदत्तंहत्वाखलंकृतं कंसस्यश्वशुरःपापोजरासंधोमहाबलः ३७ आगत्यमथुरांक्रोधाच्चकारसंगरंमुदा कृष्णेनासौजि
तःसंख्येजरासंधोमहाबलः ३८ प्रेषयामासयुद्धायसबलंयवनंततः श्रुत्वायातंमहाशूरंससैन्यंयवनाधिपं ३९ "कृष्णस्तुमथुरां
त्यक्त्वापुरींद्वारवतीमगात् प्रभग्नांतांपुरींकृष्णःशिल्पिभिःसहसंगतैः १ कारयामासदुर्गाढ्यांहट्टशालाविमंडितां जीर्णोद्धारंपुरः
कृत्वावासुदेवःप्रतापवान् २ उग्रसेनंचराजानंचकारवशवर्त्तिनं" यादवान्स्थापयामासद्वारवत्यांयदूत्तमः वासुदेवस्तुतत्राद्यवर्त्त
तेबांधवैःसह ४० तस्याग्रजःसविख्यातोबलदेवोहलायुधः शेषांशोमुसलीवीरोवरोस्त्कृतवसंमतः ४१ संकर्षणायदेत्द्याशुकन्यांक
मललोचनां रेवतींबलभद्रायविवाहविधिनाततः ४२ दत्वापुत्रींनृपश्रेष्ठगच्छत्वंबदरिकाश्रमं तपस्तप्तुंसुसारामंपावनंकामदंनृणां ४३
व्यासउवाच इतिराजासमादिष्टोब्रह्मणापद्मयोनिना जगामतरसाराजन्द्वारकांकन्ययान्वितः ४४ ददौतांबलदेवायकन्यांवैशुभलक्षणां
ततस्तत्स्वातपस्तीव्रंनृपतिःकालपर्यये ४५ जगामत्रिदशावासंत्यक्त्वादेहंसरित्तटे राजोवाच भगवन्महदाश्चर्यंभवतासमुदाहृतं ४६ रेव
तस्कस्थितस्तत्रब्रह्मलोकेसुतार्थनः युगानांतुगतंतत्रशतमष्टोत्तरंकिल ४७ कन्याप्युच्चान्संजातारराजावातितरांत्रुकिं एतावंतंतथाका
लमायुःपूर्णंतयोःकथं ४८ व्यासउवाच नजराक्षुत्पिपासावानमृत्कर्नभयंपुनः नतुग्लानिःप्रभवतिब्रह्मलोकेसदाऽनघ ४९ मे
रुंगतस्यशर्यातेःसंततीराक्षसैर्हता गताकुशस्थलींत्यक्त्वाभयभीताइतस्ततः ५० मनोश्चक्षुवतःपुत्रउत्पन्नोवीर्यवत्तरः इक्ष्वाकुरि
तिविख्यातःसूर्यवंशकरस्सुसः ५१ धनमेवकर्त्तव्यमिति ४३ ४४ ४५ ४६ ४७ ४८ ४९ मेरुंगतस्यस्वर्गंगतस्यशर्यातेःमरणोत्तरमित्यर्थः ५० इत्थंशर्यातिकु

थांसमाप्येक्ष्वाकोर्वंशमाह मनोरिति क्षुवतइतिक्षुतंकुर्वतोवैवस्वतमनोर्घ्राणतउत्पन्नइत्यर्थः ५१ देवींध्यात्वेति नारदोपदेशतोदीक्षांप्राप्यतन्मंत्रजपपुरःसरं देवींध्यात्वातपआतिष्ठदित्यन्वयः ५२ ततोदेवीप्रसादेनसूर्यवंशश्चलितइत्याह तस्यपुत्रशतमिति ५३ अनेनचसर्वेपिसूर्यवंशीयाराजानोदेवीपदांबुजरताइतिबोधितं मूलपुरुषस्यदेवीभक्तत्वात् पुत्रशतविभागमाह अयोध्यायामिति ५४ उत्तरापथदेशस्येतिपूर्वदेशस्याप्युपलक्षणं दक्षिणस्यामिति पश्चिमायाउपलक्षणं तदुक्तं

वंशार्थंतपआतिष्ठद्देवींध्यात्वानिरंतरं नारदस्योपदेशेनप्राप्यदीक्षामनुत्तमां ५२ तस्यपुत्रशतंराजन्निक्ष्वाकोरितिविश्रुतं विकुक्षिःप्रथमस्तेषांबलवीर्यसमन्वितः ५३ अयोध्यायांस्थितोराजाइक्ष्वाकुरितिविश्रुतः शकुनिप्रमुखाःपुत्राःपंचाशद्बलवत्तराः ५४ उत्तरापथदेशस्यरक्षितारःकृताःकिल दक्षिणस्यांतथाराजन्नादिष्टास्तेनतेकृताः ५५ चत्वारिंशत्तथाष्टौचरक्षणार्थंमहात्मना अन्यौद्वौसंस्थितौपार्श्वेसेवार्थंतस्यभूपतेः ५६ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेअष्टमोऽध्यायः ८ व्यासउवाच कदाचिदष्टकाश्राद्धेविकुक्षिंपृथिवीपतिः आज्ञापयदसंमूढोमांसमानयसत्वरं १ मेध्यंश्राद्धार्थमधुनावनेगत्वासुतादरात् इत्युक्तोसौतथेत्याशुजगामवनमस्त्रभृत् २ गत्वाजघानबाणैःसवराहान्सूकरान्मृगान् शशांश्चापिपरिश्रांतोबभूवाथबुभुक्षितः ३ विस्मृतात्वाष्टकातस्यशशंचाददसौवने शेषंनिवेदयामासपित्रेमांसमनुत्तमं ४ प्रोक्षणायसमानीतंमांसंदृष्ट्वागुरुस्तदा अनर्हमितितज्ज्ञात्वाचुकोपमुनिसत्तमः ५ भुक्तशेषंतुनश्राद्धेप्रोक्षणीयमितिस्थितिः राज्ञेनिवेदयामासवसिष्ठःपाकदूषणं ६

भागवतेनवमस्कंधे क्षुवतस्तुमनोर्जज्ञइक्ष्वाकुर्घ्राणतःसुतः तस्यपुत्रशतज्येष्ठाविकुक्षिनिमिदंडकाः तेषांपुरस्तादभवन्नार्यावर्तेनृपानृप पंचविंशतिपश्चाच्चत्रयोमध्येपरेन्यतइति ५५ ५६ इतिश्रीदे० तिलकेसप्तमस्कंधे० अध्यायः ८ अर्धाधिकत्रिषष्ट्यात्पुपद्यानासुद्रवस्तथा कुकुत्स्थस्यप्रथमतरस्ततोमांधातुरुच्यते १ इक्ष्वाकोश्चरितमाह कदाचिदिति अष्टकाश्राद्धेपित्रादिमातृमध्यंचतथामातामहांतिममित्युक्तलक्षणे पृथ्वीपतिरिक्ष्वाकुः १ २ ३ आदत् अभक्षयत् ४ गुरुर्वसिष्ठः ५ भुक्तशेषमिति श्राद्धोद्देशेनयदन्नंनिष्काशितंतन्मध्यात्किंचिदन्नंभक्षितंचेद्यदवशिष्टमन्नंतद्भुक्तशेषंजातमित्यर्थः ६ ७

७ शशभक्षणात्शशादोजातः ८ ९ १० ११ १२ १३ १४ १५ तस्यकस्मात्कारणादेतादृशंसामर्थ्यमितिचेत्तत्राह पराशक्तेः प्रसादेनेति परा



पुत्रस्यकर्मतज्ज्ञात्वाभूपतिर्गुरुणोदितं चुकोपविधिलोपात्तंदेशान्निःसारयत्ततः ७ शशादइतिविख्यातोनाम्नाजातोनृपात्मजः गतोवनेशशादस्तुपितृकोपादसंभ्रमः ८ वन्येनवर्त्तयन्कालंनीतवान्धर्मतत्परः पितर्युपरतेराज्यंप्राप्तंतेनमहात्मना ९ शशादस्त्वकरोद्राज्यमयोध्यायाःपतिःस्वयं यज्ञाननेकशःपूर्णान्चकारसरयूतटे १० शशादस्याभवत्पुत्रःककुत्स्थइतिविश्रुतः तस्यैवनामभेदाद्वैइंद्रवाहःपुरंजयः ११ जनमेजयउवाच नामभेदःकथंजातोराजपुत्रस्यचानघ कारणंब्रूहिमेसर्वंकर्मणायेनचाभवत् १२ व्यासउवाच शशादेस्वर्गतेराजाककुत्स्थइतिचाभवत् “राज्यंचकारधर्मज्ञोपितृपैतामहंबलात्” एतस्मिन्नंतरेदेवादैत्यैःसर्वेपराजिताः १३ जग्मुस्त्रिलोकाधिपतिंविष्णुंशरणमव्ययं तान्प्रोवाचमहाविष्णुस्तदादेवान्सनातनः १४ विष्णुरुवाच पार्ष्णिग्राहंमहीपालंप्रार्थयंतुशशादजं सहानिष्यतिवैदैत्यान्संग्रामेसुरसत्तमाः १५ आगमिष्यतिधर्मात्मासाहाय्यार्थेधनुर्धरः पराशक्तेःप्रसादेनसामर्थ्यंतस्यचातुलं १६ हरेःस्तुवचनाद्देवाययुःसर्वेसवासवाः अयोध्यायांमहाराजशशादतनयंप्रति १७ नानागतान्सुरान्राजापूजयामासधर्मतः पप्रच्छगमनेराजाप्रयोजनमतंद्रितः १८ राजोवाच धन्योहंपावितश्चास्मिजीवितंसफलंमम यदागत्यगृहेदेवाददुश्चदर्शनंमहत् १९ ब्रुवंतुकृत्यंदेवेशादुःसाध्यमपिमानवैः करिष्यामिमहत्कार्यंसर्वथाभवतामहं २० देवाऊचुः साहाय्यंकुरुराजेंद्रसखाभवशचीपतेः संग्रामेजयदैत्येंद्रान्दुर्जयान्त्रिदशैरपि २१ पराशक्तिप्रसादेनदुर्लभंनास्तितेक्वचित् विष्णुनाप्रेरितास्त्वेवमागतास्तवसन्निधौ २२ राजोवाच पार्ष्णिग्राहोभवाम्यद्यदेवानांसुरसत्तमाः इंद्रोमेवाहनंतत्रभवेद्यदिसुराधिपः २३

शक्त्युपासकस्यराज्ञस्तस्याएवप्रसादात्सामर्थ्यंभावइतिभावः १६ १७ १८ १९ २० २१ श्रीभगवतीप्रसादेनतवनकिंचिद्दुर्लभमित्याह पराशक्तीति २२ पार्ष्णिग्राहःसंरक्षिता २३

देवकृते देवार्थं २४ पत्रं वाहनं २५ रुद्रस्य यथा वृषभस्तथेत्यर्थः २६ येनास्येति येन कारणेनास्येंद्रस्य वृषभरूपस्य ककुदि स्थितस्तेन कारणेनेत्यर्थः २७ २८ तेषां दैत्यानां धनं देवेभ्यो दत्तवानित्यर्थः पप्रच्छेति स्वनगरं गंतुं देवानिति शेषः अनेन प्रकारेण राजर्षीरिंद्रस्य च सखा बभूवेत्याह

संग्रामं तु करिष्यामि दैत्यैर्देवकृतेऽधुना आरुह्येंद्रं गमिष्यामि सत्यमेतद्ब्रवीम्यहं २४ तदोचुर्वासवं देवाः कर्तव्यं-कार्यमद्भुतं पत्रं भव नरेंद्रस्य त्वं कालज्ज्ञ शचीपते २५ लज्जमानस्तदा शक्रः प्रेरितो हरिणा भृशं बभूव वृषभस्तूर्णं रुद्रस्येवापरो महान् २६ तमारुरोह राजासौ संग्रामगमनाय वै स्थितः ककुदि येनास्य ककुत्स्थस्तेन चाभवत् २७ इंद्रो वाहः कृतो येन तेन नाम्नेंद्रवाहकः पुरंजितं तु दैत्यानां तेनाभूच्च पुरंजयः २८ जित्वा दैत्यान्महाबाहुर्धनं तेषां प्रदत्तवान् पप्रच्छ चैवं राजर्षीरिति सख्यं बभूव ह २९ ककुत्स्थश्चाति विख्यातो नृपतिस्तस्य वंशजाः काकुत्स्था भुवि राजानो बभूवुर्बहुविश्रुताः ३० ककुत्स्थस्याभवत्पुत्रो धर्मपत्न्यां महाबलः अनेनाविश्रुतस्तस्य पृथुः पुत्रश्च वीर्यवान् ३१ विष्णोरंशः स्मृतः साक्षात्पराशक्तिपदार्चकः विश्वरंधिस्तु विज्ञेयः पृथोः पुत्रो नराधिपः ३२ चंद्रस्तस्य सुतः श्रीमान्राजवंशकरः स्मृतः तत्सुतो युवनाश्वस्तु तेजस्वी बलवत्तरः ३३ शावंतो युवनाश्वस्य जज्ञे परमधार्मिकः शावंती निर्मिता तेन पुरी शक्रपुरीसमा ३४ बृहदश्वस्तु पुत्रोऽभूच्छावंतस्य महात्मनः कुवलयाश्वः सुतस्तस्य बभूव पृथिवीपतिः ३५ धुंधुनामा हतो दैत्यस्तेनासौ पृथिवीतले॥ धुंधुमारेति विख्यातं नाम प्रापाति विश्रुतं ३६ पुत्रस्तस्य दृढाश्वस्तु पालयामास मेदिनीं दृढाश्वस्य सुतः श्रीमान्हर्यश्व इति कीर्तितः ३७

राजर्षीरिति २९ ३० अनेनाविश्रुतः काकुत्स्थनाम्नाविख्यात इत्यर्थः तस्य ककुत्स्थस्य पृथुः पुत्रः ३१ स च पृथुर्विष्णोरंशः पराशक्तेश्च परभक्त इत्याह विष्णोरिति ३२ ३३ शावंतीति तदुक्तं कूर्मपुराणे शावंती निर्मिता तेन गौडदेशे महापुरीति ३४ ३५ ३६ ३७

३८ ३९ मांधातुःपराक्रमंवर्णयति अष्टोत्तरसहस्त्रंत्विति येनमहातीर्थेषुकाश्यादिषुश्रीभगवतीतुष्ट्यर्थमष्टोत्तरसहस्त्रसंख्याकाभगवत्याःप्रासादा निर्मिताएतादृशोयंपरमभगवतीभक्तइत्यर्थः ४० भगवत्यास्तुतुष्ट्यर्थमिति तदुक्तमुमासंहितायां त्रिलोकीस्थापनात्पुण्यंयद्भवेन्मुनिपुंगव तत्कोटिगु णितंपुण्यंश्रीदेवीस्थापनाद्भवेत् मध्येदेवींस्थापयित्वापंचायतनदेवताः चतुर्दिक्षुस्थापयेद्यस्तस्यपुण्यंनगण्यते विष्णोर्नाम्नांकोटिजपाद्ग्रहणेसूर्यचंद्रयोः

निकुंभस्तत्सुतःप्रोक्तोबभूवपृथिवीपतिः बर्हणाश्वोनिकुंभस्यकृशाश्वस्तस्यवैसुतः ३८ प्रसेनजित्कृशाश्वस्य बलवान्सत्यविक्रमः तस्यपुत्रोमहाभागोयौवनाश्वेतिविश्रुतः ३९ यौवनाश्वसुतःश्रीमान्मांधातेतिमहीपतिः अष्टो- त्तरसहस्त्रंतुप्रासादायेननिर्मिताः ४० भगवत्यास्तुतुष्ट्यर्थंमहातीर्थेषुमानद मातृगर्भेनजातोसावुत्पन्नोजनकोदरे ४१ निःसारितस्ततःपुत्रःकुक्षिंभित्वापितुःपुनः राजोवाच नश्रुतंनचदृष्टंवाभवतात्तदुदाहृतं ४२ असंभाव्यंम हाभागतस्यजन्मयथोदितं विस्तरेणवदस्वाद्यमांधातुर्जन्मकारणं ४३ राजोदरेयथोत्पन्नःपुत्रःसर्वांगसुंदरः व्या सउवाच यौवनाश्वोनपत्योभूद्राजापरमधार्मिकः ४४ भार्याणांचशतंतस्यबभूवनृपतेर्नृप राजाचिंतापरःप्रायश्चिं तयामासनित्यशः ४५ अपत्यार्थेयौवनाश्वोदुःखितस्तुवनंगतः ऋषीणामाश्रमेपुण्येनिर्विण्णःसचपार्थिवः ४६ मुमोचदुःखितःश्वासान्तापसानांचपश्यतः दृष्ट्वातुदुःखितंविप्राबभूवुश्चकृपालवः ४७ तमूचुर्ब्राह्मणाराजन्क- स्माच्छोचसिपार्थिव किंतेदुःखंमहाराजब्रूहिसत्यंमनोगतं ४८ प्रतीकारंकरिष्यामोदुःखस्यतवसर्वथा यौवनाश्वउ वाच राज्यंधनंसदश्वाश्चवर्ततेमुनयोमम ४९ भार्याणांचशतंशुद्धंवर्ततेविशदप्रभं नारातिस्त्रिषुलोकेषुकोप्यस्ति बलवान्मम ५०

यत्फलंलभ्यतेतस्माच्छतकोटिगुणोत्तरं शिवनाम्भोजपादेवतस्मात्कोटिगुणोत्तरं श्रीदेवीनामजापात्तुततःकोटिगुणोत्तरं देव्याःप्रासा दकरणात्पुण्यंतुसमवाप्यते स्थापितायेनसादेवीजगन्माताऽत्रयीमयी नतस्यदुर्लभंकिंचिच्छ्रीमातुःकरुणावशादिति ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५०

५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ कंधास्यतिकंपास्यतीत्यर्थः मातुरभावात्स्तनपानं कस्य-
शिशुः करिष्यतीत्यर्थः ६२ मांधातेति तदातस्मिन्काले इंद्रो देशिनीं तर्जनीं शिशवे प्रादात् दत्तवान् स्तनस्थाने अथ च इंद्रो वदत् किमिति मांधातेति मां पास्यतीत्यर्थः

आज्ञाकरास्तु सामंता वर्तंते मंत्रिणस्तथा एकं संतानजं दुःखं नान्यत्पश्यामि तापसाः ५१ अपुत्रस्य गतिर्नास्ति स्वर्गे नैव
च नैव च तस्माच्छोचामि विप्रेंद्राः संतानार्थं भृशं ततः ५२ वेदशास्त्रार्थतत्वज्ञास्तापसाश्च कृतश्रमाः इष्टिं संतानकाम
स्य युक्तां ज्ञात्वा दिशंतु मे ५३ कुर्वंतु मम कार्यं वै कृपा चेदस्ति तापसाः व्यास उवाच तच्छ्रुत्वा वचनं राज्ञः कृपया पूर्णमा
नसाः ५४ कारयामासुरव्यग्रास्तस्येष्टिमिंद्रदेवतां कलशः स्थापितस्तत्र जलपूर्णस्तु वाडवैः ५५ मंत्रितो वेदमंत्रैश्च
पुत्रार्थं तस्य भूपते राजा तद्यज्ञसदनं प्रविष्टस्तृषितो निशि ५६ विप्रान्दृष्ट्वा शयानान्स पपौ मंत्रजलं स्वयं भार्यार्थं संस्कृ
तं विप्रैर्मंत्रितं विधिनाद्भुतं ५७ पीतं राज्ञा तृषार्तेन तदज्ञानान्नृपोत्तम व्युदकं कलशं दृष्ट्वा तदा विप्रा विशंकिताः ५८
पप्रच्छुस्ते नृपं केन पीतं जलमिति द्विजाः राज्ञा पीतं विदित्वा ते ज्ञात्वा दैवबलं महत् ५९ इष्टिं समापयामासुर्गतास्ते मुनयो
गृहान् गर्भं दधार नृपतिस्ततो मंत्रबलादथ ६० ततः काले स उत्पन्नः कुक्षिं भित्वास्य दक्षिणं पुत्रं निष्कासयामासुर्मंत्रि
णस्तस्य भूपतेः ६१ देवानां कृपया तत्र न ममार महीपतिः कं धास्यति कुमारोयं मंत्रिणश्चुक्रुशुर्भृशं ६२ तदेंद्रो दे-
शिनीं प्रादान्मां धातेत्यवदद्वचः सोभवद्बलवान्राजा मांधाता पृथिवीपतिः ६३ तदुत्पत्तिस्तु भूपाल कथिता तव विस्त
रान् इतिश्री देवीभागवते महापुराणे सप्तमस्कंधे नवमोऽध्यायः ९ व्यास उवाच बभूव चक्रवर्ती स नृपतिः
सत्यसंगरः मांधाता पृथिवीं सर्वामजयन्नृपतीश्वरः १

६३ इतिश्रीदेवीभागवततिलके सप्तमस्कंधे नवमोऽध्यायः ९ अष्टाधिके च पंचाशत्पद्यैर
यत्तु सादरं मांधातुश्च कथां प्रोच्य सत्यव्रतकथोच्यते १ मांधातुरुत्पत्त्यनंतरं तस्य वृत्तमाह बभूवेति १ २ २ २

त्रस्तादस्यवोयस्मादितित्रसदस्युः पृषोदरादित्वात्साधुत्वं २ ३ ४ ततोरण्यइतिनाम्नैकदेशेननामग्रहणादनरण्यइत्यर्थः बृहदश्वइत्यनरण्यस्यविशेषणं तदात्मजःपुरुकुत्सात्मजइत्यर्थः तदुक्तंपुराणांतरे त्रसदस्योःपौरकुत्सोयोऽनरण्यस्यदेहकृत् हर्यश्वस्तत्सुतस्तस्मादरुणोतिनबंधनइति



दस्यवोऽस्यभयत्रस्तायपुर्गिरिगुहासुच इंद्रेणास्यकृतंनामत्रसदस्युरितिस्फुटं २ तस्यांबिंदुमतीभार्याशशबिंदोः सुताभवत् पतिव्रतासुरूपाचसर्वलक्षणसंयुता ३ तस्यामुत्पादयामासमांधाताद्वौसुतौनृप पुरुकुत्संसुविख्यातंमुचुकुंदंतथापरं ४ पुरुकुत्सात्ततोरण्यःपुत्रःपरमधार्मिकः पितृभक्तिरतश्चाभूद्बृहदश्वस्तदात्मजः ५ हर्यश्वस्तस्यपुत्रोभूद्धार्मिकःपरमार्थवित् तस्यात्मजस्त्रिधन्वाभूदरुणस्तस्यचात्मजः ६ अरुणस्यसुतःश्रीमान्सत्यव्रतइतिश्रुतः साभूदिच्छाचरःकामीमंदात्मात्यतिलोलुपः ७ सपापात्माविप्रभार्यांत्हृतवान्काममोहितः विवाहेतस्यविघ्नंसचकारनृपतेःसुतः ८ मिलिताब्राह्मणास्तत्रराजानमरुणंनृप ऊचुर्भृशंसुदुःखार्त्ताहाहताःस्मेतिचासकृत् ९ पप्रच्छराजातान्विप्रान्दुःखितान्पुरवासिनः किंकृतंममपुत्रेणभवतामशुभंद्विजाः १० तन्निशम्यद्विजावाक्यंराज्ञोविनयपूर्वकं तदोचुस्त्वरुणंविप्राःकृताशीर्वचनाभृशं ११ ब्राह्मणाऊचुः राजंस्तवसुतेनाद्यविवाहेप्रत्हृताकिल विवाहिताविप्रकन्याबलेनबलिनांवर १२ व्यासउवाच श्रुत्वातेषांवचस्तथ्यंराजापरमधार्मिकः पुत्रमाहदुर्यथानामकृतंतेदुष्टकर्मणा १३ गच्छदूरंसुमंदात्मन्दुराचारगृहान्मम नस्थातव्यंत्वयापापविषयेममसर्वथा १४ कुपितंपितरंप्राहक्कगच्छामीतिवैमुहुः अरुणस्तमथोवाचश्वपाकैःसहवर्त्तय १५ श्वपचस्यकृतंकर्मद्विजदारापहारणं तस्मात्तैःसहसंसर्गंकृत्वातिष्ठयथासुखं १६ नाहंपुत्रेणपुत्रार्थीत्वयाचकुलपांसन यथेष्टंव्रजदुष्टात्मन्कीर्तिनाशःकृतस्त्वया १७

५ ६ १७

७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ ७ ७ ७

१८ १९ प्रेरितोसाविति वसिष्ठेनारुणोमहीपतिरयंपुत्रोनिष्कासनीयइतिप्रेरितइत्यर्थः २० तस्मिन्वसिष्ठेनिवारणेपुत्रनिष्कासननिवारणेपराङ्मुखेब-

सनिशम्यपितुर्वाक्यंकुपितस्यमहात्मनः निश्चक्रामपुरात्तस्मात्तरसाश्वपचान्ययौ १८ सत्यव्रतस्तदातत्रश्वपाकैःसहव-
र्तते धनुर्बाणधरःश्रीमान्कवचीकरुणालयः १९ यदानिष्कासितःपित्राकुपितेनमहात्मना गुरुणाथवसिष्ठेनप्रेरितोसौमही
पतिः २० तस्मात्सत्यव्रतस्तस्मिन्बभूवक्रोधसंयुतः वसिष्ठेधर्मशास्त्रज्ञेनिवारणपराङ्मुखे २१ केनचित्कारणेनाथपि
तातस्यमहीपतिः पुत्रार्थेऽसौतपस्तप्तुंपुरंत्यक्त्वावनंगतः २२ नववर्षतदातस्मिन्विषयेपाकशासनः समाद्वादशराजेंद्र
तेनाधर्मेणसर्वथा २३ विश्वामित्रस्तदादारांस्तस्मिंस्तुविषयेनृप संन्यस्यकौशिकीतीरेचचारविपुलंतपः २४ कातरा
तत्रसंजाताभार्यावैकौशिकस्यह कुटुंबभरणार्थायदुःखितावरवर्णिनी २५ बालकान्क्षुधयाक्रांतान्रुदतःपश्यती
भृशं याचमानांश्वनीवारान्कष्टमापपतिव्रता २६ चिंतयामासदुःखार्तातोकान्वीक्ष्यक्षुधातुरान् नृपोनास्तिपुरेत्वद्य
कंयाचेवाकरोमिकिं २७ नमेत्रातास्तिपुत्राणांपतिर्मेनास्तिसन्निधौ रुदंतिबालकाःकामंधिङ्मेजीवनमद्यवै २८
धनहीनांचमांत्यक्त्वातपस्तप्तुंगतःपतिः नजानातिसमर्थोपिदुःखितांधनवर्जितां २९ बालानांभरणंकेनकरोमिप
तिनाविना मरिष्यंतिस्रुताःसर्वेक्षुधयापीडिताभृशं ३० एकंस्रुतंतुविक्रीयद्रव्येणकियतापुनः पालयामिस्रुतानन्याने
षमेविहितोविधिः ३१ सर्वेषांमारणंनाद्यायुक्तंममविपर्यये कालस्यकलनायाहंविक्रीणामितथात्मजं ३२ हृदयंकठि
नंकृत्वासंचिंत्यमनसासती सादर्भरज्ज्वाबध्वाथगलेपुत्रंविनिर्गता ३३ मुनिपत्नीगलेबध्वामध्यमंपुत्रमौरसं शेषस्य-
भरणार्थायगृहीत्वाचलितागृहात् ३४ हिर्मुखे २१ २२ २३ २४ कातराभयभीता २५ नीवारान्अरण्यभवश्यामाकान्

२६ २७ २८ २९ ३० ३१ ३२ ३३ ३४

३५ काधुनेति अधुनाकात्वंनयसीत्यन्वयः ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८
त्यज्यमानमिति धर्मिष्ठंपुत्रंत्यज्यमानंपित्राहष्ट्वानिवारणकारणेसत्यपिवसिष्ठोननिवारयामासततोहेतोस्तस्मिन्मन्युंधारयामासेत्यर्थः ४९ ननुकिंनत



दृष्टासत्यव्रतेनार्तातापसीशोकसंयुता पप्रच्छनृपतिस्तांतुकिंचिकीर्षसिशोभने ३५ रुदतंबालकंकंठेबध्वानयसिका
धुना किमर्थंचारुसर्वांगिसत्यंब्रूहिममाग्रतः ३६ ऋषिपत्न्युवाच विश्वामित्रस्यभार्याहंपुत्रोयंमेनृपात्मज विक्रेतु
मौरसंकामंगमिष्येविषमेस्कृतं ३७ अन्नंनास्तिपतिर्मुक्त्वागतस्तप्तुंनृपकश्चित् विक्रीणामिक्षुधार्तैनंशेषस्यभरणायवै
३८ राजोवाच पतिव्रतेरक्षपुत्रंदास्यामिभरणंतव तावदेवपतिस्तेत्रवनाच्चैवागमिष्यति ३९ वृक्षेतवाश्रमाभ्यासे
भक्ष्यंकिंचिन्निरंतरं बंधयित्वागमिष्यामिसत्यमेतद्ब्रवीम्यहं ४० इत्युक्तासातदातेनराज्ञाकौशिककामिनी विबंधं
तनयंकृत्वाजगामाश्रममंडलं ४१ सोभवद्गालवोनामगलबंधान्महातपाः सातुस्वस्याश्रमेगत्वामुमोदबालकैर्वृता ४२
सत्यव्रतस्तुभक्त्याचकृपयाचपरिप्लुतः विश्वामित्रस्यचमुनेःकलत्रंतद्बभारह ४३ वनस्थितान्मृगान्हत्वावराहान्म
हिषांस्तथा विश्वामित्रवनाभ्यासेमांसंवृक्षेबबंधह ४४ ऋषिपत्नीगृहीत्वातन्मांसंपुत्रानदात्ततः निर्वृतिंपरमांप्रा
पप्राप्यभक्ष्यमनुत्तमं ४५ अयोध्यांचैवराज्यंचतथैवांतःपुरंमुनिः गतेनप्तुंनृपेतस्मिन्वसिष्ठःपर्यरक्षत ४६ सत्यव्रतो
पिधर्मात्मात्ध्यतिष्ठंनगराद्बहिः पितुराज्ञांसमास्थायपशफ़प्रव्रतवान्वने ४७ सत्यव्रतोथकस्माच्चकस्यचित्कारणान्नृ
पः वसिष्ठेचाधिकंमन्युंधारयामासनित्यदा ४८ त्यज्यमानंवनेपित्राधर्मिष्ठंचप्रियंस्कृतं निवारयामासमुनिर्वसि
ष्ठःकारणेनह ४९ पाणिग्रहणमंत्राणांनिष्ठास्यात्सप्तमेपदे जानन्नपिसधर्मात्मावैप्रदारापरिग्रहे ५०

कारणंयस्मिन्सत्यपिवसि
ष्ठेननिवारितइत्युच्यतइतिचेत्तदाह पाणिग्रहणेति सप्तमेपदेसप्तपदीकर्मयदास्यात्तदापाणिग्रहणमंत्राणांनिष्ठासमाप्तिर्भवतिततः पूर्वकन्यापहारेतुनान्यस्य

पत्नी अपहृता किंतु कन्यैवापहृतेति न सोपहारो दोषायेति भावः इदं विप्रदाराणामपरिग्रहे अपहाराभावे कारणं धर्मात्मा जानन्नपि वसिष्ठो न निवा
रयामासेति तस्मिन्चुकोपेति भावः ५० ५१ वृक्षे बबंध विश्वामित्रपत्न्या भक्षणार्थं ५२ ५३ ५४ मस्तकेशंकवः पापचिन्हानि कुष्ठवत्स

कस्मिंश्चिद्दिवसेरण्ये मृगाभावे महीपतिः वसिष्ठस्य च गां दोग्ध्रीमपश्यद्वनमध्यगां ५१ तां जघान क्षुधार्त्तस्तु क्रो
धान्मोहाच्च दस्युवत् वृक्षे बबंध तन्मांसं नीत्वा स्वयमभक्षयत् ५२ ऋषिपत्नीसुतान्सर्वान्भोजयामास तत्तदा शंकमा
ना मृगस्येति न गोरिति च स्मृतं ५३ वसिष्ठस्तु हतां दोग्ध्रीं ज्ञात्वा क्रुद्धस्तमब्रवीत् दुरात्मन्किं कृतं पापं धेनुघातात्पि
शाचवत् ५४ एवं ते शंकवः क्रूराः पतंतु त्वरितास्त्रयः गोवधाद्दाराहरणात्पितुः क्रोधात्तथा भृशं ५५ त्रिशंकुरिति
नाम्ना वै भुवि विख्यातो भविष्यसि पिशाचरूपमात्मानं दर्शयन्सर्वदेहिनां ५६ व्यास उवाच एवं शप्तो वसिष्ठेन तदा
सत्यव्रतो नृपः चचार च तपस्तीव्रं तस्मिन्नेवाश्रमे स्थितः ५७ कस्माच्चिन्मुनिपुत्रात्तु प्राप्य मंत्रमनुत्तमं ध्यायन्भग
वतीं देवीं प्रकृतिं परमां शिवां ५८ इति श्रीदेवीभागवते महापुराणे सप्तमस्कंधे दशमोऽध्यायः १० जनमेजय उ
वाच वसिष्ठेन च शप्तोसौ त्रिशंकुर्नृपतेः सुतः कथं शापाद्विनिर्मुक्तस्तन्मे ब्रूहि महामते १ व्यास उवाच सत्य
व्रतस्तथा शप्तः पिशाचत्वमवाप्तवान् तस्मिन्नेवाश्रमे तस्थौ देवीभक्तिपरायणः २ कदाचिन्नृपतिस्तत्र जस्वा संत्रन
वाक्षरं होमार्थं ब्राह्मणान्नत्वा प्रणम्योवाच भक्तितः ३ भूमिदेवाः शृणुध्वं वै वचनं प्रणतस्य मे ऋत्विजो मम सर्वत्र
भवंतः प्रभवंतु ह ४ जपस्य च दशांशेन होमः कार्यो विधानतः भवद्भिः कार्यसिद्ध्यर्थं वेदविद्भिः कृपापरैः ५ सत्यव्र
तोहं नृपतेः पुत्रो ब्रह्मविदां वराः कार्यं मम विधातव्यं सर्वथा सुखहेतवे ६ तत्तित्यर्थः ५५ ५६ ५७ ५८ इति श्रीदे०भा०ति०स०स्कं०

दशमोऽध्यायः १० त्रिपंचाशत्पद्यवर्यैस्त्रिशंकोस्तु कथानकं प्रोच्यते यत्र महिमा भगवत्यास्तु वर्ण्यते १ वसिष्ठेन शप्तो त्रिशंकोः पश्चाज्जातं वृत्तं पृच्छति वसिष्ठेन चेति
१ २ ३ ४ ५ ६

तच्छ्रुत्वाब्राह्मणास्तत्रतमूचुर्नृपतेःस्फुतं शप्तस्त्वंगुरुणाप्राप्तंपिशाचत्वंत्वयाधुना ७ नयागार्होसितस्मात्त्वंवेदेष्व
नधिकारतः पिशाचत्वमनुप्राप्तंसर्वलोकेषुगर्हितं ८ व्यासउवाच तन्निशम्यवचस्तेषांराजादुःखमवापह धि
ग्जीवितमिदंमेद्यकिंकरोमिवनेस्थितः ९ पित्राचाहंपरित्यक्तःशप्तश्चगुरुणाभृशं राज्याद्भ्रष्टःपिशाचत्वमनुप्रा-
प्तःकरोमिकिं १० तदापृथुतरांकृत्वाचितांकाष्ठैर्नृपात्मजः सस्मारचंडिकादेवींप्रवेशमनुचिंतयन् ११ स्मृत्वादेवीं
महामायांचितांप्रज्वलितांपुरः कृत्वास्नात्वाप्रवेशार्थंस्थितःप्रांजलिरग्रतः १२ ज्ञात्वाभगवतीतंतुमर्तुकामंमही
पतिं आजगामतदाकाशंप्रत्यक्षंतस्यचाग्रतः १३ दत्वाथदर्शनंदेवीतमुवाचनृपात्मजं सिंहारूढामहाराजमेघगं
भीरयागिरा १४ देव्युवाच किंत्वंव्यवसितंसाधोहुताशेमातनुंत्यज स्थिरोभवमहाभागपितातेजरसान्वितः १५
राज्यंदत्वावनेतुभ्यंगंतास्तितपसेकिल विषादंत्यजहेवीरपरश्वोहनिभूपते १६ नेतुंत्वामागमिष्यंतिसचिवाश्चपितु
स्तव मत्प्रसादात्पिताचत्वामभिषिच्यनृपासने १७ जित्वाकामंब्रह्मलोकंगमिष्यत्येषनिश्चयः व्यासउवाच इ
त्युक्त्वांतंतदादेवीतत्रैवांतरधीयत १८ राजपुत्रोविरमितोमरणात्पावकात्ततः अयोध्यायांतदागत्यनारदेनमहा
त्मना १९ वृत्तांतःकथितःसर्वोराज्ञेसत्वरमादितः श्रुत्वाराजाथपुत्रस्यतंतथामरणोद्यमं २० खेदमाधायमनसि
शुशोचबहुधानृपः सचिवानाहधर्मात्मापुत्रशोकपरिप्लुतः २१ ज्ञातंभवद्भिरत्युग्रंपुत्रस्यममचेष्टितं त्यक्तोमयाव
नेधीमान्पुत्रःसत्यव्रतोमम २२ आज्ञयासोगतःसद्योराज्यार्हःपरमार्थवित् स्थितस्तत्रैवविज्ञानेधनहीनःक्षमान्वितः २३
वसिष्ठेनतथाशप्तःपिशाचसदृशःकृतः सोद्यदुःखेनसंतप्तःप्रवेष्टुंचहुताशनं २४

२५ २६ २७ २८ २९ ३० ३१ ३२ मुखोद्भवाः ब्राह्मणाः ब्राह्मणोस्यमुखमासीदिति ३३ ३४ ३५ ३६ ३७

उद्यतः श्रीमहादेव्यानिषिद्धः संस्थितः पुनः तस्माद्गच्छंतुतंशीघ्रंज्येष्ठपुत्रंमहाबलं २५ आश्वास्यवचनैरत्रतर
सैवानयंत्सुत अभिषिच्यकृतंराज्येऔरसंपालनक्षमं २६ वनंयास्यामिशांतोहंतपसेकृतनिश्चयः इत्युक्त्वामं
त्रिणःसर्वान्प्रेषयामासपार्थिवः २७ तस्यैवानयनार्थंहिप्रीतिप्रवणमानसः तेगत्वातंसमाश्वास्यमंत्रिणःपार्थिवा
त्मजं २८ अयोध्यायांमहात्मानंमानपूर्वंसमानयन् दृष्ट्वासत्यव्रतंराजादुर्बलंमलिनांबरं २९ जटाजूटधरंक्रूरं
चिंतातुरमचिंतयत् किंकृतंनिष्ठुरंकर्ममयापुत्रोविवासितः ३० राज्यार्हश्चातिमेधावीजानन्ताधर्मनिश्चयं इति-
संचिंत्यमनसातमालिंग्यमहीपतिः ३१ आसनेस्वसमीपस्थेसमाश्वास्योपवेशयत् उपविष्टंसुतंराजाप्रेमपूर्वंमुवा
चह ३२ प्रेमगद्गदयावाचानीतिशास्त्रविशारदः राजोवाच पुत्रधर्मेमतिःकार्यामाननीयामुखोद्भवाः ३३ न्याया
गतंधनंप्राप्यंरक्षणीयाःसदाप्रजाः नासत्यंक्वापिवक्तव्यंनामार्गेगमनंक्वचित् ३४ शिष्टप्रोक्तंप्रकर्त्तव्यंपूजनीया
स्तपस्विनः हंतव्यादस्यवःक्रूराइंद्रियाणांतथाजयः ३५ कर्त्तव्यःकार्यसिद्ध्यर्थंराज्ञापुत्रसदैवहि मंत्रस्तुसर्वथा
गोप्यःकर्त्तव्यःसचिवैःसह ३६ नोपेक्ष्योल्पोपिकृतिनारिपुःसर्वात्मनासुत नविश्वसेत्परासक्तंसचिवंचतथानृतं
३७ चाराःसर्वत्रयोक्तव्याःशत्रुमित्रेषुसर्वथा धर्मेमतिःसदाकार्यादानंदद्याच्चनित्यशः ३८ शुष्कवादोनकर्त्तव्यो
दुष्टसंगंचवर्जयेत् यष्टव्याविविधायज्ञाःपूजनीयामहर्षयः ३९ नविश्वसेत्स्त्रियंक्वापिस्त्रैणंद्यूतरतंनरं अत्याद
रेणकर्त्तव्योमृगयायांकदाचन ४० द्यूतेमद्येतथागेयेनृत्येवारवधूषुच स्वयंतद्धिमुखोभूयात्प्रजास्तेभ्यश्चरक्षयेत्
४१ ब्राह्मेमुहूर्त्तेकर्त्तव्यमुत्थानंसर्वथासदा स्नानादिकंसर्वविधिंविधायविधिवद्यथा ४२

३८ ३९ ४० तेभ्योद्यूतादिभ्यःप्रजारक्षयेन्नि
वारयेत् ४१ ४२

स्कृद्दीक्षितः गुरूपदेशेन गृहीतदेवीमंत्र इत्यर्थः ४३ देवीचरणोदकमाहात्म्यमाह सकृत्कृत्वेति अत्रत्वेवं पुराणांतरे कथा श्रूयते कश्चि
दृषिः प्रवासी क्वचित्सरसि स्नात्वा देवीपूजां विधाय तत्तीर्थं बिल्वमूले निक्षेप तत्र च टकाः शुकाश्चागत्य तत्तीर्थं तृषिताः पपुः देहपातोत्तरं ते शुकाद
यः कल्पपर्यंतं स्वर्गभोगं भुक्त्वा केचित्प्रद्युम्नभूरिद्युम्नेंद्रद्युम्नकुवलयाश्वयौवनाश्ववध्र्यश्वाश्वपतिशशबिंदुहरिश्चंद्रांबरीषादयो मैत्रायणीयश्रुति

पराशक्तेः परां पूजां भक्त्या कुर्यात्सकृद्दीक्षितः पुत्रैतज्जन्मसाफल्यं पराशक्तेः पदार्चनं ४३ सकृत्कृत्वा महापूजां दे
वीपादजलं पिबन् न जातु जननीगर्भं गच्छेदिति विनिश्चयः ४४ सर्वं दृश्यं महादेवी द्रष्टा साक्षी च सैव हि इति तद्भावभावि
तास्तिष्ठेन्निर्भयचेतसा ४५ कृत्वा नित्यविधिं सम्यग्गंतव्यं सदसि द्विजान् समाहूय च प्रष्टव्यो धर्मशास्त्रविनिर्णयः
४६ संपूज्य ब्राह्मणान्पूज्यान्वेदवेदांतपारगान् गोभूहिरण्यादिकं च देयं पात्रेषु सर्वदा ४७ अविद्वान्ब्राह्मणः
कोपि नैव पूज्यः कदाचन आहारादधिकं नैव देयं मूर्खाय कर्हिचित् ४८ न वा लोभात्त्वया पुत्र कर्तव्यं धर्मलंघनं
अतः परं न कर्तव्यं क्वचिद्विप्रावमाननं ४९ ब्राह्मणा भूमिदेवाश्च माननीयाः प्रयत्नतः कारणं क्षत्रियाणां च द्विजा
एव न संशयः ५० अद्भ्योग्निर्ब्रह्मणः क्षत्रमश्मनो लोहमुत्थितं तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ५१ त
स्माद्दात्रा विशेषेण माननीयाः सुरवोद्भवाः दानेन विनयेनैव सर्वथा भूतिमिच्छता ५२ दंडनीतिः सदा कार्या धर्म-
शास्त्रानुसारतः कोशस्य संग्रहः कार्यो न्यूनं न्यायागतस्य ह ५३ इति श्रीदेवीभागवते महापुराणे सप्तमस्कं
धे एकादशोऽध्यायः ११

प्रसिद्धाः परमज्ञानिनो राजानोऽभूवन् केचित्खगाः कण्वजातूकर्ण्यकात्यायनास्फरिपंचशिखवैशंपायनापस्तंबहा
रीतादयो मुनयो ज्ञानिवरा अभूवन्निति ४४ द्रष्टा जीवः साक्षी ईश्वरो दृश्यं सर्वं जगदिदं त्रयं सैव भगवतीत्यर्थः तदुक्तं मुंडमालायां भूतानि दुर्गा भुवनानि दुर्गा नराः स्त्रियश्चापि सुरा
सुरादिकं यद्यद्धि दृश्यं खलु सैव दुर्गा दुर्गास्वरूपादपरं न किंचित् ४५ ४६ ४७ ४८ ४९ ५० तत्र प्रमाणमाह अद्भ्योग्निरिति स्वासु योनिषु स्वकारणेषु जलादिषु शाम्यति न न त्र
पराक्रमं दर्शयतीत्यर्थः ५१ ५२ ५३

इतिश्रीदेवीभागवततिलके सप्तमस्कंधेएकादशोऽध्यायः ११ चतुःषष्टिश्लोकवर्यैर्विश्वामित्रप्रतापनः त्रिशंकोःस्वर्गवासश्चविस्तारेणोपवर्ण्यते १

व्यासउवाच एवंप्रबोधितःपित्रात्रिशंकुःप्रणतोनृपः तथेतिपितरंप्राहप्रेमगद्गद्यागिरा १ विप्रानाहूयमंत्रज्ञान्वेदशास्त्रविशारदान् अभिषेकायसंभारान्कारयामाससत्वरं २ सलिलंसर्वतीर्थानांसमानाय्यविशांपतिः प्रकृतीश्चसमाहूय सामंतान्भूपतींस्तथा ३ पुण्येन्हिविधिवत्तस्मैददावासनमुत्तमं अभिषिच्यसुतंराज्येत्रिशंकुंविधिवत्पिता ४ तृतीयमाश्रमंपुण्यंजग्राहभार्ययायुतः वनेत्रिपथगाकूलेचचारदुश्चरंतपः ५ कालेप्राप्तेययौस्वर्गंपूजितस्त्रिदशैरपि इंद्रासनसमीपस्थोरराजरविवत्सदा ६ राजोवाच पूर्वंभगवताप्रोक्तंकथायोगेनसांप्रतं सत्यव्रतोवसिष्ठेनशप्तोदोग्ध्रीवधात्किल ७ कुपितेनपिशाचत्वंप्रापितोगुरुणाततः कथंमुक्तःपिशाचत्वादित्येतत्संशयःप्रभो ८ नसिंहासनयोग्योहिभवेच्छापसमन्वितः मुनिनामोचितःशापात्केनान्येनचकर्मणा ९ एतन्मेब्रूहिविप्रर्षेशापमोक्षणकारणं आनीतस्तुकथंपित्रास्वगृहेतादृशाकृतिः १० व्यासउवाच वसिष्ठेनचशप्तोसौसद्यःपैशाचतांगतः दुर्वेषश्चातिदुर्धर्षःसर्वलोकभयंकरः ११ यदेवोपासितादेवीभक्त्यासत्यव्रतेनह तयाप्रसन्नयाराजन्दिव्यदेहःकृतःक्षणात् १२ पिशाचत्वंगतंतस्यपापंचैवक्षयंगतं विपाप्माचातितेजस्वीसंभूतस्तत्कृपामृतात् १३ वसिष्ठोपिप्रसन्नात्माजातःशक्तिप्रसादतः पिताप्रियश्चबभूवास्यप्रेमयुक्तस्त्वनुग्रहात् १४ राज्यंशशासधर्मात्मामृतेपितरिपार्थिव ईजेचविविधैर्यज्ञैर्देवदेवींसनातनीं १५

त्रिशंकोःपितुरुपदेशानंतरंजातंवृत्तमाह एवंप्रबोधितइति १ २ ३ ४ ५ ६ ७ ८ केनान्येनकर्मणापापाच्छापरूपान्मोचितोमुनिनेत्यर्थः ९ १० देवीकृपयासर्वमेतत्संपन्नमित्याह वसिष्ठेनचेति ११ १२ १३ १४ ईजेचेति विविधैर्नानाविधैरग्निष्टोमाद्यश्वमेधांतैर्यज्ञैःसनातनींनित्यांदेवींश्रीसच्चिदानंदरूपिणींभगवतीमीजेइयाजेत्यर्थः १५ ७ ७

१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ उच्छिन्नधर्ममार्गेतिसंबोधनं उच्छिन्नोधर्म

तस्यपुत्रोबभूवाथहरिश्चंद्रः स्मृशोभनः लक्षणैःशास्त्रनिर्दिष्टैःसंयुतश्चातिसुंदरः १६ युवराजंस्मृतंकृत्वात्रिशं
कुःपृथिवीपतिः मानुषेणशरीरेणस्वर्गंभोक्तुंमनोदधे १७ वसिष्ठस्याश्रमंगत्वाप्रणम्यविधिवन्नृपः उवाचवचनंप्रीतः
कृतांजलिपुटस्तदा १८ राजोवाच ब्रह्मपुत्रमहाभागसर्वमंत्रविशारद विज्ञप्तिंमेस्मृमनसाश्रोतुमर्हसितापस १९
इच्छामेद्यसमुत्पन्नास्वर्गलोकस्मृखायच अनेनैवशरीरेणभोगान्भोक्तुममानुषान् २० अप्सरोभिश्चसंवासःक्रीडि
तुंनंदनेवने देवगंधर्वगानंचश्रोतव्यंमधुरंकिल २१ याजयत्वंमखेनाशुतादृशेनमहामुने यथानेनशरीरेणवसेह्यं
कंत्रिविष्टपं २२ समर्थोसिमुनिश्रेष्ठकुरुकार्यंममाधुना प्रापयाशुमखंकृत्वादेवलोकंदुरासदं २३ वसिष्ठउवाच
राजन्मानुषदेहेनस्वर्गेवासःस्मृदुर्लभः मृतस्यहिध्रुवंस्वर्गःकथितःपुण्यकर्मणा २४ तस्माद्विरमेमिसर्वज्ञदुर्ल
भाच्चमनोरथात् अप्सरोभिश्चसंवासोजीवमानस्यदुर्लभः २५ कुरुयज्ञान्महाभागमृतःस्वर्गमवाप्स्यसि व्या
सउवाच इत्याकर्ण्यवचस्तस्यराजापरमदुर्मनाः २६ उवाचवचनंभूयोवसिष्ठंपूर्वरोषितः नत्वंयाजयसेब्रह्मन्ग
र्वविशाच्चमांयदि २७ अन्यंपुरोहितंकृत्वायक्ष्येहंकिलसांप्रतं तच्छ्रुत्वावचनंतस्यवसिष्ठःकोपसंयुतः २८ शशा
पभूपतिंचेतिचांडालोभवदुर्मते अनेनत्वंशरीरेणश्वपचोभवसत्वरं २९ स्वर्गकृंतनपापिष्ठस्मृरभीवधदूषित ब्र
ह्मपत्नीहरोच्छिन्नधर्ममार्गविदूषक ३० नतेस्वर्गगतिःपापमृतस्यापिकथंचन व्यासउवाच इत्युक्तोगुरुणाराज
न्त्रिशंकुस्तत्क्षणादपि ३१ तत्रतेनशरीरेणबभूवश्वपचाकृतिः कुंडलेश्ममयेवापिजातेतस्यचतत्क्षणात् ३२ मार्गोयेने

त्यर्थः स्मृरभिवधदूषितत्वंब्रह्मपत्नीहरत्वंचपूर्वमुपपादितं ३० ३१ ३२

३३ इदंफलंपराशक्त्युपासकवसिष्ठशापेनजातमित्याह शक्त्युपासकरोषेणेति ३४ तस्माच्छक्तिभक्तापराधंनकुर्यादित्याह तस्मादिति अयंचव-
सिष्ठोगायत्र्युपासकत्वात्पराशक्तिभक्तइत्याह गायत्रीति ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ यदिप्राणांस्त्यजामितदाऽत्महत्याभवि-

देहेचंदनगंधश्चविड्गंधोप्यभवत्तदा नीलवर्णेथसंजातेदिव्येपीतांबरेतनौ ३३ गजवर्णोभवद्देहःशापात्तस्यम
हात्मनः शक्त्युपासकरोषेणफलमेतद्भून्नृप ३४ तस्माच्छ्रीशक्तिभक्तोहिनावमान्यःकदाचन गायत्रीजपनिष्ठोहि
वसिष्ठोमुनिसत्तमः ३५ दृष्ट्वानिंद्यंनिजंदेहंराजादुःखमवाप्तवान् नजगामगृहेदीनोवनमेवाभितोययौ ३६ चिंत
यामासदुःखार्तस्त्रिशंकुःशोकविह्वलः किंकरोमिक्वगच्छामिदेहोमेतीवनिंदितः ३७ कर्त्तव्यंनैवपश्यामियेनमेदुः
खसंक्षयः गृहेगच्छामिचेत्पुत्रःपीडितोद्यभविष्यति ३८ भार्यापिश्वपचंदृष्ट्वानांगीकारंकरिष्यति सचिवानादरिष्यं
तिवीक्ष्यमामीदृशंपुनः ३९ ज्ञातयोबंधुवर्गश्चसंगतानभजिष्यति सर्वैस्त्यक्तस्यमेनूनंजीवितान्मरणंवरं ४० वि
षवाभक्षयित्वाद्यपतित्वावाजलाशये कृत्वावाकंठपाशंचदेहत्यागंकरोम्यहं ४१ अग्नौवाज्वलितेदेहंजुहोमिविधि
वद्धुलात् कृत्वावानशनंप्राणांस्त्यजामिदूषितान्भृशं ४२ आत्महत्याभवेन्नूनंपुनर्जन्मनिजन्मनि श्वपचत्वंचशाप
श्चहत्यादोषाद्भवेदपि ४३ पुनर्विचार्यभूपालश्चेतसासमचिंतयत् आत्महत्यानकर्त्तव्यासर्वथैवमयाधुना ४४ भोक्त
व्यंस्वकृतंकर्मदेहेनानेनकानने भोगेनास्यविपाकस्यभवितासर्वथाक्षयः ४५ प्रारब्धकर्मणांभोगादन्यथानक्षयो
भवेत् तस्मान्मयात्रभोक्तव्यंकृतंकर्मशुभाशुभं ४६ कुर्वन्पुण्याश्रमाभ्याशेतीर्थानांसेवनंतथा स्मरणंचांबिकाया
स्तुसाधूनांसेवनंतथा ४७

ष्यतीत्याह अत्महत्येति तयाचकिंभविष्यतितत्राह जन्मनिजन्मनीति प्रतिजन्मनिश्वपचत्वंभवेद्धत्यादोषात्पुनर-
प्येवंविधंशापादिकंचभवेदित्यर्थः ४३ ४४ ४५ ४६ ४७

साधुसमागमइति सयदाभाग्ययोगात्भविष्यतितदाममकार्यस्यादित्यर्थः ४८ ४९ सचिवानिति स्वापेक्षयाज्येष्ठान्राज्ञोप्यतिप्रियान् ५० ५१



एवंकर्मक्षयंनूनंकरिष्यामिवनेवसन् भाग्ययोगात्कदाचित्तुभवेत्साधुसमागमः ४८ इतिसंचिंत्यमनसात्यत्कास्व
नगरंनृपः गंगातीरंगतःकामंशोचंस्तत्रैवसस्थितः ४९ हरिश्चंद्रस्तदाज्ञात्वापितुःशापस्यकारणं दुःखितःसचिवां
स्तत्रप्रेषयामासपार्थिवः ५० सचिवास्तत्रगत्वाशुतमूचुःप्रश्रयान्विताः प्रणम्यश्वपचाकारंनिःश्वसंतंमुहुर्मुहुः ५१
राजन्पुत्रेणतेनूनंप्रेषितान्समुपागतान् अवेहिसचिवांस्त्वन्नोहरिश्चंद्राज्ञयास्थितान् ५२ युवराजस्ततःप्राहयत्तच्छृ
णुनराधिप आनयध्वंनृपंयूयंसंमान्यपितरंमम ५३ तस्माद्राजन्समागच्छराज्यंप्रतिगतव्यथः सेवांसर्वेकरिष्यंतिस-
चिवाश्चप्रजास्तथा ५४ गुरुंप्रसादयिष्यामःसयथातुदयेतवै प्रसन्नोसौमहातेजादुःखशांतिंकरिष्यति ५५ इतिपु
त्रेणतेराजन्कथितंबहुधाकिल तस्मात्त्वमनमेवाशुरोचनानिजसद्मनि ५६ व्यासउवाच इतितेषांनृपःश्रुत्वाभाषितं
श्वपचाकृतिः स्वगृहगमनायासौनमतिंकृतवानदः ५७ तानुवाचतदावाक्यंव्रजंतुसचिवाःपुरं गत्वापुत्रंमहाभागा
ब्रुवंतुवचनान्मम ५८ नागमिष्याम्यहंपुत्रकुरुराज्यमतंद्रितः मानयन्ब्राह्मणान्देवान्यजन्यज्ञैरनेकशः ५९ नाहंश्व
पचवेषेणगर्हितेनमहात्मभिः आगमिष्याम्ययोध्यायांसर्वेगच्छंतुमान्दिरं ६० पुत्रंसिंहासनेस्थाप्यहरिश्चंद्रंमहाबलं
कुर्वंतुराज्यकर्माणियूयंतत्रममाज्ञया ६१ इत्यादिष्टास्ततस्तेतुरुरुदुश्चातुराभृशं सचिवानिर्ययु स्तूर्णंनत्वातंच्यवना
श्रमात् ६२ अयोध्यायासुपागत्यपुण्येन्हिविधिपूर्वकं अभिषेकंतदाचक्रुर्हरिश्चंद्रस्यमूर्धनि ६३ अभिषिक्तस्तुतेज
स्वीसचिवाश्चनृपाज्ञया राज्यंचकारधर्मिष्ठःपितरंचिंतयन्भृशं ६४ इतिश्रीदे·भा·म·पु·स·स्कंधेद्वादशोऽध्यायः १२



५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेद्वादशोऽध्यायः १२

द्विषष्टिश्लोकवर्यैस्तुहरिश्चंद्रेनृपेसति त्रिशंकोःकौशिकस्यापिसमागमउदीर्यते १ हरिश्चंद्रस्यराज्याभिषेकेकृत्येसत्यनंतरंवृत्तमाह हरिश्चंद्रइति १
२ ३ ४ अस्मिन्समयेनपश्चर्यार्थंबहुकालंगतोविश्वामित्रःस्वगृहमागतइत्याह एवंगच्छतीति ५ ६ विश्वामित्रोदुर्भिक्षकालजंवृत्तांतंभार्यांपृ

राजोवाच हरिश्चंद्रःकृतोराजासचिवैर्नृपशासनात् त्रिशंकुस्तुकथंमुक्तस्तस्माच्चांडालदेहतः १ मृतोवावनमध्येतुगं
गातीरेपरिप्लुतः गुरुणावाकृपांकृत्वाशापात्तस्माद्विमोचितः २ एतद्वृत्तांतमखिलंकथयस्वममाग्रतः चरितंतस्यनृपतेः
श्रोतुकामोस्मिसर्वथा ३ व्यासउवाच अभिषिक्तंसुतंकृत्वाराजासंतुष्टमानसः कालातिक्रमणंतत्रचकारचिंतयन्शिवां
४ एवंगच्छतिकालेतुतपस्तप्त्वासमाहितः द्रष्टुंदारान्सुतादींश्चतदागात्कौशिकोमुनिः ५ आगत्यस्वजनंदृष्ट्वासु
स्थितमुदमाप्तवान् भार्यांपप्रच्छमेधावीस्थितामग्रेसपर्यया ६ दुर्भिक्षेतुकथंकालस्त्वयानीतःसुलोचने अन्नंविनाकथमे
बालाःपालिताःकेनतद्वद ७ अहंतपसिसंबद्धोनागतःशृणुसुंदरि किंकृतंतुत्वयाकांतेविनाद्रव्येणशोभने ८ मया
चिंताकृतातत्रश्रुत्वादुर्भिक्षमद्भुतं नागतोहंविचार्यैवंकिंकरिष्यामिनिर्धनः ९ अहमप्यतिवामोरुपीडितःक्षुधयावने प्र
विष्टश्चौरभावेनकुत्रचिच्छ्वपचालये १० श्वपचंनिद्रितंदृष्ट्वाक्षुधयापीडितोभृशं महानसंपरिज्ञायभक्ष्यार्थंसमुपस्थि
तः ११ यदाभांडंसमुद्घाट्यपक्वंश्वतनुजामिषं गृण्हामिभक्षणार्थायतदादृष्टस्तुतेनवै १२ पृष्टःकस्त्वंकथंप्राप्तो-
गृहेमेनिशिसादरं ब्रूहिकार्यंकिमर्थंत्वमुद्घाटयसिभांडकं १३ इत्युक्तःश्वपचेनाहंक्षुधयापीडितोभृशः तमवो
चंस्वरंशांतेकामंगद्गदयागिरा १४ ब्राह्मणोहंमहाभागतापसःक्षुधयार्दितः चौरभावमनुप्राप्तोभक्ष्यंपश्यामिभांडके
१५ चौरभावेनसंप्राप्तोऽस्म्यतिथिस्तेमहामते क्षुधितोस्मिददस्वत्वंमांसमद्भिसुसंस्कृतं १६ विश्वामित्रउवाच
श्वपचस्तुवचःश्रुत्वामामुवाचसुनिश्चितं भक्ष्यंमाकुरुवर्णाग्र्यजानीहिश्वपचालयं १७

च्छति दुर्भिक्षेतिति ७ ८
९ इत्थंभार्यावृत्तांतंपृष्ट्वास्ववृत्तांतमाह अहमप्यतीति १० ११ १२ १३ १४ १५ १६ १७

द्विजत्वेब्राह्मणत्वंचेति द्विजत्वेसत्यपिब्राह्मणत्वंदुर्लभमित्यर्थः १८ १९ २० मायातुमागच्छतुमाशब्दोनिषेधार्थकः २१ २२ २३ असदुपाये



दुर्लभंखलुमानुष्यंतत्रापिच्द्विजन्मता द्विजत्वेब्राह्मणत्वंच दुर्लभंवेत्सिकिंनहि १८ दुष्टाहारोनकर्त्तव्यः सर्वथालोक मिच्छता अग्राह्यामनुनाप्रोक्ताः कर्मणासप्तचांत्यजाः १९ त्याज्योहंकर्मणाविप्रश्वपचोनात्रसंशयः निवारयामिभ- क्ष्यात्त्वांनलोभेनांजसाद्विज २० वर्णसंकरदोषोयंमायातुत्वांद्विजोत्तम विश्वामित्रउवाच सत्यंवदसिधर्मज्ञमृतिस्ते विशदांत्यज २१ तथाप्यापदिधर्मस्यसूक्ष्ममार्गंब्रवीम्यहं देहस्यरक्षणंकार्यंसर्वथायदिमानद २२ पापस्यांतेपुनः कार्यंप्रायश्चित्तंविशुद्धये दुर्गतिस्तुभवेत्पापादनापदिनचापदि २३ मरणात्क्षुधितस्याथनरकोनात्रसंशयः तस्मा- त्क्षुधापहरणंकर्त्तव्यंशुभमिच्छता २४ तेनाहंचौर्यधर्मेण देहंरक्षेप्यथांत्यज अवर्षेणचचौर्येणयत्पापंकथितंबुधैः २५ योनवर्षतिपर्जन्यंतत्तुतस्मैभविष्यति विश्वामित्रउवाच इत्युक्तेवचनकांतेपर्जन्यःसहसापतत् २६ गगनाद्धस्तिहस्ता भिर्धाराभिरभिकांक्षिनः मुदितोहंघनंवीक्ष्यवर्षंतंविद्युतासह २७ नदाहंनद्ध्हंत्यत्कानिःसृतःपरयामुदा कथयत्वंव रारोहेकालोनीतस्त्वयाकथं २८ कांतरःपरमःक्रूरःक्षयकृत्प्राणिनामिह व्यासउवाच इतितस्यवचःश्रुत्वापतिमाह प्रियंवदा २९ यथाशृणुमयानीतःकालःपरमदारुणः गतेत्वयिमुनिश्रेष्ठ दुर्भिक्षंसमुपागत ३० अन्नार्थंपुत्रकाःसर्वे बभूवुश्चातिदुःखिताः क्षुधितान्बालकान्वीक्ष्यनीवारार्थंवनेवने ३१ भ्रांताहंचिंतयाविष्टाकिंचित्प्राप्तंफलंनदा ए वंचकतिचिन्मासानीवारेणातिवाहिताः ३२ तदभावेमयाकांतचिंतितंमनसापुनः नभिक्षाकिलदुर्भिक्षेनीवारानापिका नने ३३

सत्यपियःक्षुधितःप्राणत्यागंकरोतिसनरकंप्राप्नोतीत्याह मरणादिति २४ २५ २६ २७ २८ २९ ३० नीवारार्थंअरण्ये भवाःश्यामाकानीवाराइतिनीवाराश्वमेइतिरुद्रभाष्येमाधवः ३१ फलंनीवाररूपंकिंचिदुदरपूर्त्यपरिमितं ३२ ३३ ७ ७

नवृक्षेषुफलान्यासन्नमूलानिधरातले क्षुधयापीडिताबालारुदंतिभृशमातुराः ३४ किंकरोमिक्वगच्छामिकिंब्रवीमि क्षुधार्दितान् एवंविचिंत्यमनसानिश्चयस्तुमयाकृतः ३५ पुत्रमेकंददाम्यद्यकस्मैचिद्धनिनेकिल गृहीत्वातस्यमौल्यंतु तेनद्रव्येणबालकान् ३६ पालयेहंक्षुधार्तांस्तुनान्योपायोस्तिपालने इतिसंचिंत्यमनसापुत्रोयंमहिनोमया ३७ विक्रयार्थंम हाभागक्रंदमानोभृशातुरः क्रंदमानंगृहीत्वेनंनिर्गताहंगतत्रपा ३८ तदासत्यव्रतोमार्गेमामुद्वीक्ष्यभृशातुरां पप्रच्छस चराजर्षिःकस्माद्रोदितिबालकः ३९ तदाहंतमुवाचेदंवचनंमुनिसत्तम विक्रयार्थंनीयतेसौबालकोद्यमयानृप ४० श्रु त्वामेवचनंराजादयार्द्रहृदयस्ततः मामुवाचगृहंयाहिगृहीत्वेनंकुमारकं ४१ भोजनार्थंकुमाराणामामिषंविहितंतव प्रापयिष्याम्यहंनित्यंयावन्मुनिसमागमः ४२ अहन्यहनिभूपालोवृक्षेस्मिन्मृगसूकरान् विन्यस्ययातिहत्वासौप्रस हृदययान्वितः ४३ तेनैवबालकाःकांतपालितास्तजिनाणवात् वसिष्ठेनाथशप्तोसौभूपतिर्ममकारणात् ४४ कस्मिं श्चिद्दिवसेमांसंनप्राप्तंतेनकानने हत्वाद्दोग्ध्रीवसिष्ठस्यतेनासौकुपितोमुनिः ४५ त्रिशंकुरितिभूपस्यकृतंनाममहात्म ना कुपितेनवधाद्धेतोश्चांडालश्चकृतानृपः ४६ तेनाहंदुःखिनाजानातस्यदुःखेनकौशिक श्वपचत्वमसौप्राप्तो मत्कृतेनृपनंदनः ४७ येनकेनाप्युपायेनभवतान्नृपतेःकिल तस्माद्रक्षाप्रकर्तव्यातपसाप्रबलेनह ४८ व्यासउवाच इतिभार्यावचःश्रुत्वाकौशिकोमुनिसत्तमः तामाहकामिनींदीनांसांत्वपूर्वमरिंदम ४९ विश्वामित्रउवाच मोच यिष्यामितंशापान्नृपंकमललोचने उपकारःकृतोयेनकांताराद्रक्षितासिवै ५० विद्यातपोबलेनाहंकरिष्येदुःखसंक्षयं इत्याश्वास्यप्रियांतत्रकौशिकःपरमार्थवित् ५१

मित्यर्थः ४८ ४९ कांतारात्संकटात् ५० ५१

५२ पक्कणेश्वपचग्रामेग्रामाद्बहिर्भूते ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ इतिश्रीदेवीभागवततिलकेसप्तम



चिंतयामासनृपतेःकथंस्याद्दुःखनाशनं संविमृश्यमुनिस्तत्रजगामयत्रपार्थिवः ५२ त्रिशंकुःपक्कणेदीनःसंस्थि
तःश्वपचाकृतिः आगच्छंतंमुनिंदृष्ट्वाविस्मितोसौनराधिपः ५३ दंडवन्निपपातोर्व्यांपादयोस्तरसामुनेः गृहीत्वातं
करेभूपंपतितंकौशिकस्तदा ५४ उत्थाप्योवाचवचनंसांत्वपूर्वंद्विजोत्तमः मत्कृतेत्वंमहीपालशप्तोसिमुनिनायतः
५५ वांछितंतंकरिष्यामिब्रूहिकिंकरवाण्यहं राजोवाच मयासंप्रार्थितःपूर्वंवसिष्ठोमखहेतवे ५६ मायाजयमु
निश्रेष्ठकरोमिमखमुत्तमं यथेष्टंकुरुविप्रेंद्रयथास्वर्गंव्रजाम्यहं ५७ अनेनैवशरीरेणशक्रलोकंस्फुरद्बलयं कोपं
कृत्वावसिष्ठोसौमामाहेतिस्फुदुर्मते ५८ मानुषेणहिदेहेनस्वर्गवासःकुतस्तव पुनर्मयोक्तोभगवान्स्वर्गेलुब्धेनचान
घ ५९ अन्यंपुरोहितंकृत्वायक्ष्येहयज्ञमुत्तमं तदातेनैवशप्तोहंचांडालोभवपामर ६० इत्येतत्कथितंसर्वंकारणं
शापसंभवं ममदुःखविनाशायसमर्थोसिमुनीश्वर ६१ इत्युक्त्वाविररामासौराजादुःखरुजार्दितः कौशिकोपि
निराकर्तुंशापंतस्यव्यचिंतयत् ६२ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेत्रयोदशोऽध्यायः १३ व्यास
उवाच विचिंत्यमनसाकृत्यांगाधिसूनुर्महातपाः प्रकल्प्ययज्ञसंभारान्मुनीनामंत्रयत्तदा १ मुनयस्तंमखंज्ञा
त्वाविश्वामित्रनिमंत्रिताः नागताःसर्वएवैतेवसिष्ठेननिवारिताः २ गाधिसूनुस्तदाज्ञात्वाविमनाश्चातिदुःखितः
आजगामाश्रमंतत्रयत्रासौनृपतिःस्थितः ३ तमाहकौशिकःक्रुद्धोवसिष्ठेननिवारिताः नागताब्राह्मणाःसर्वेयज्ञा
र्थंनृपसत्तम ४

स्कंधेत्रयोदशोऽध्यायः १३ पंचाधिकैश्चपंचाशत्पद्यैःस्वर्गंगतेसति त्रिशंकौतुहरिश्चंद्रकथाप्रारभ्यतेधुना १ त्रिशंकु
वाक्यंश्रुत्वाविश्वामित्रःकिंकृतवांस्तदाह विचिंत्येति १ २ ३ ४ ५

वांछितंतेभिलषितंकरोमीत्यर्थः ५ ६ ७ ८ ९ १० ११ १२ शीघ्रंभूमौयाहि १३ १४ १५ १६ चलितोपिमुनेस्तपःप्र

पश्यमेतपसःसिद्धिंयथात्वांस्वरसद्मनि प्रापयामिमहाराजवांछितंतेकरोम्यहं ५ इत्युक्त्वाजलमादायहस्तेन
मुनिसत्तमः ददौपुण्यंतदातस्मैगायत्रीजपसंभवं ६ दत्वाथसुकृतंराज्ञेतमुवाचमहीपतिः यथेष्टंगच्छराजर्षेत्रि
विष्टपमतंद्रितः ७ पुण्येनममराजेंद्रबहुकालार्जितेनच याहिशक्रपुरींप्रीतःस्वस्तितेस्तुसुरालये ८ व्यासउवाच
इत्युक्तवतिविप्रेंद्रेत्रिशंकुस्तरसाततः उत्पपातयथापक्षीवेगवांस्तपसोबलात् ९ उत्पत्यगगनेराजागतःशक्रपुरींयदा
दृष्टोदेवगणैस्तत्रशक्रस्यचांडालवेषभाक् १० कथितोसौसुरेंद्रायकोयमायातिसत्वरः गगनेदेववद्भायोदुर्दशःश्वपचा-
कृतिः ११ सहसोत्थायशक्रस्तमपश्यत्पुरुषाधमं ज्ञात्वात्रिशंकुमपिसनिर्भर्त्स्यैनरसाब्रवीत् १२ श्वपचःकस-
मायातिदेवलोकेजुगुप्सितः याहिशीघ्रंततोभूमौनात्रस्थातुंत्वयोचितं १३ इत्युक्तःस्खलितःस्वर्गाच्छक्रेणामित्र
कर्शन निपपाततदाराजाक्षीणपुण्योयथामरः १४ पुनश्चुक्रोशभूपालोविश्वामित्रेतिचासकृत् पताम्यरक्षदुःखार्त्तं
स्वर्गाच्चलितमाशुगं १५ तस्यतत्क्रंदितंराजन्पततःकौशिकोमुनिः श्रुत्वातिष्ठेतिहोवाचपतंतंवीक्ष्यभूपतिं १६ वच
नात्तस्यतत्रैवस्थितोसौगगनेनृपः मुनेस्तपःप्रभावेणचलितोपिस्खलयात् १७ विश्वामित्रोप्यपःस्पृष्ट्वाचकारेष्टिंस्व
विस्तरां विधातुंनूतनांसृष्टिंस्वर्गलोकंद्वितीयकं १८ तस्योद्यमंतथाज्ञात्वात्वरितस्तुशचीपतिः तत्राजगामसहसा
मुनिंमतिंतुगाधिजं १९ किंब्रह्मन्क्रियतेसाधोकस्मात्कोपसमाकुलः अलंसृष्ट्यामुनिश्रेष्ठब्रूहिकिंकरवाणिते २०
विश्वामित्रउवाच स्वंनिवासंमहीपालंच्युतंतद्भुवनाद्विभो नयस्वप्रीतियोगेनत्रिशंकुंचातिदुःखितं २१

भावेणतत्रैवस्थितइत्य-
र्थः १७ १८ १९ २० स्वंनिवासंस्वकीयंस्थानंनयस्वेत्यर्थः २१ छ छ छ

ओवाचेत्यत्राङ्पूर्वकः प्रयोगः त्रिशंकोः स्वर्गवासश्च स्कांदे नागरखंडेप्युक्तः तत्र ब्रह्माणं प्रति देववाक्यं सृष्टिसृष्टा स्फार श्रेष्ठविश्वामित्रेण सांप्रतं त-
स्माद्दारयतं गत्वा रचयमेव पितामह तेषां तद्वचनं श्रुत्वा तैरेव सहितो विधिः गत्वोवाच जगन्मित्रं विश्वामित्रं मुनीश्वरं निवृत्तिं कुरु विप्रर्षे सांप्रतं वचनान्मम

व्यासउवाच तस्यतंनिश्चयंज्ञात्वातुराषाडतिशंकितः तपोबलंविदित्वोग्रमोमित्योवाचवासवः २२ दिव्यदेहंनृपंकृ
त्वाविमानवरसंस्थितं आपृच्छ्यकौशिकंशक्रोऽगमन्निजपुरींतदा २३ गतेशक्रेतुवैस्वर्गंत्रिशंकुसहितेततः विश्वामि
त्रःस्फरवंप्राप्यस्वाश्रमेस्फस्थिराभवन् २४ हरिश्चंद्रोथतच्छ्रुत्वाविश्वामित्रोपकारकं पितुःस्वर्गमनंकामंमुदितोराज्यम
न्वशात् २५ अयोध्याधिपतिःक्रीडांचकारसहभार्यया रूपयौवनचातुर्ययुक्तयाप्रीतिसंयुतः २६ अतीतकालेयुव
तीनसागर्भवतीत्व्यभूत् तदाचिंतातुरोराजावभूवातीवदुःखितः २७ वसिष्ठस्याश्रमंगत्वाप्रणम्याशिरसामुनिं अनप
त्यत्वजांचिंतांगुरवेसमवेदयत् २८ देवज्ञोसिभवान्कामंमंत्रविद्याविशारदः उपायंकुरुधर्मज्ञसंततेर्ममसमानद २९ अ
पुत्रस्यगतिर्नास्तिजानासिद्विजसत्तम कस्मादुपेक्षसेजानन्दुःखंममचशक्तिमान् ३० कलविंकास्त्विमेधन्यायेशि
शूंल्लालयंतिहि मंदभाग्योहमनिशंचिंतयामिदिवानिशं ३१ व्यासउवाच इत्याकर्ण्यमुनिस्तस्यनिर्वेदमिश्रितंव
चः संचिंत्यमनसासम्यक्तमुवाचविधेःसुतः ३२ वसिष्ठउवाच सत्यंब्रूषेमहाराजसंसारेस्मिन्नविद्यते अनपत्य
त्वजंदुःखंयत्तथादुःखमद्भुतं ३३ तस्मात्त्वमपिराजेंद्रवरुणंयादसांपतिं समाराधययत्नेनसतेकार्यंकरिष्यति ३४
वरुणादधिकोनास्तिदेवःसंतानदायकः तमाराधयधर्मिष्ठकार्यसिद्धिर्भविष्यति ३५

विश्वामित्रउवाच अनेनैवशरीरेणत्रिशंकुर्द्वि-
जसत्तमः यदि गच्छति तेलोके तत्सृष्टिंनकरोम्यहं ब्रह्मोवाच एष गच्छति भूपालो मया सह त्रिविष्टपं अनेनैव शरीरेण मत्प्रसादान्मुनीश्वरेति २२ २३ २४ २५
२६ २७ २८ २९ ३० ३१ निर्वेदमिश्रितं खेदमिश्रितं ३२ अनपत्यत्वजं यद्दुःखं तथा दुःखं संसारे न विद्यत इत्यन्वयः ३३ ३४ ३५

३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ पशुबंधेनपशुपणेन ४५ ४६ ४७ ममाग्रेयद्ब्रवीषिपुत्रंदास्यामीनितद्

दैवंपुरुषकारश्चमाननीयाविमौनृभिः उद्यमेनविनाकार्यसिद्धिःसंजायतेकथं ३६ न्यायतस्तुनरैःकार्यउद्यमस्त त्त्वदर्शिभिः कृतेतस्मिन्भवेत्सिद्धिर्नान्यथानृपसत्तम ३७ इतितस्यवचःश्रुत्वागुरोरमिततेजसः प्रणम्यनिर्ययौराजातप सेकृतनिश्चयः ३८ गंगातीरेशुभेस्थानेकृतपद्मासनोनृपः ध्यायन्पाशधरंचित्तेचचारदुश्चरंतपः ३९ एवंतपस्यत स्तस्यप्रचेताहष्टिगोचरः कृपयाभून्महाराजप्रसन्नमुखपंकजः ४० हरिश्चंद्रमुवाचेदंवचनंयादसांपतिः वरंवरय धर्मज्ञतुष्टास्मितप्रसातव ४१ राजोवाच अनपत्योस्मिदेवेशपुत्रंदेहिसुखप्रदं ऋणत्रयापहारार्थमुद्यमोयंमयाकृतः ४२ नृपस्यवचनंश्रुत्वाप्रगल्भंदुःखितस्यच स्मितपूर्वंततःपाशीतमाहपुरतःस्थितं ४३ वरुणउवाच पुत्रोयदि भवेद्राजन्गुणीमनसिवांछितः सिद्धकार्यस्ततःपश्चात्किंकरिष्यसिमेप्रियं ४४ यदित्वंतेनपुत्रेणमांयजेथाविशंकितः प शुबंधनतेनैवददामिनृपतेवरं ४५ राजोवाच देवमेमास्तुवंध्यत्वंयजिष्येहंजलाधिप पशुंकृत्वासुतंपुत्रंसत्यमेतद्ब्रवी मिते ४६ वंध्यत्वेपरमंदुःखमसत्येभुविमानद शोकाग्निशमनंनृणांतस्माद्देहिसुतंशुभं ४७ वरुणउवाच भविष्य तिसुतःकामंराजन्गच्छगृहायवै सत्यंतद्वचनंकार्यंयद्ब्रवीषिममाग्रतः ४८ व्यासउवाच इत्युक्तोवरुणेनासौहरि श्चंद्रोगृहंययौ भार्यायैकथयामासवृत्तांतंवरदानजं ४९ तस्यभार्याशतंपूर्णंबभूवातिमनोहरं पट्टराज्ञीशुभाशैब्या धर्मपत्नीपतिव्रता ५० कालेगतेथसागर्भंदधारवरवर्णिनी बभूवमुदितोराजाश्रुत्वादोहदचेष्टितं ५१कारयामासविधिवत् संस्कारान्नृपतिस्तदा मासेथदशमेपूर्णेसुषुवेसाशुभेदिने ५२ चनंसत्यंकार्यमित्यर्थः ४८ ४९ शैब्याशिबेरपत्यंकन्या ५० दोह

दोगर्भिणीमनोरथः ५१ ५२ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

५३ आदौजातकर्मचकारततोदानानिददावित्यर्थः ५४ ५५ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेचतुर्दशोऽध्यायः १४ षट्षष्टिश्लो
कवर्यैस्तुराज्ञःपुत्रोत्सवेसति वरुणस्यततोवृत्तंयथावदभिधीयते १ राज्ञःपुत्रोत्सवानंतरंजातंवृत्तमाह मद्वृत्तसदनेइति पाशीवरुणः १ यजानेनेति
नरमेधंकुर्वित्यर्थः २ ननुत्वदनुग्रहादेकएवममपुत्रोभूत्तस्मिंश्चदत्तेममपुत्रोनैवास्तितथाचैवंव्यर्थमेवत्वंमयाप्रार्थितइतिभवतीत्यतआह वंध्यत्वमिति

ताराग्रहबलोपेतेपुत्रंदेवसुतोपमं पुत्रेजातेनृपःस्नात्वाब्राह्मणैःपरिवेष्टितः ५३ चकारजातकर्मादौददौदाना-
निभूरिशः राज्ञश्चातिप्रमोदोभूत्पुत्रजन्मसमुद्भवः ५४ बभूवपरमोदाराधनधान्यसमन्वितः विशेषदानसंयुक्तोगी
तवादित्रसंकुलः ५५ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेचतुर्दशोऽध्यायः १४ व्यासउवाच मद्वृ
त्तेसदनेतस्यराज्ञःपुत्रमहोत्सवे आजगामतदापाशीविप्रवेषधरःप्रभुः १ स्वस्तीत्युक्त्वानृपंप्राहवरुणोहंनिशामय पु
त्रोजातस्तवाधीशयजानेननृपाधुना २ सत्यंकुरुवचोराजन्यत्प्रोक्तंभवनापुरा वंध्यत्वंतुगतंतेद्यवरदानेनमेकिल ३
इतितस्यवचःश्रुत्वाराजाचिंतांचकारह कथंहन्मिसुतंजातंजलजेनसमाननं ४ लोकपालःसमायातोविप्रवेषेणवीर्यवा
न् नदेवहेलनंकार्यंसर्वथाशुभमिच्छता ५ पुत्रःस्नेहःसुदुश्छेद्यःसर्वथाप्राणिभिःसदा किंकरोमिकथंमेस्यात्सुखं
संततिसंभवं ६ धैर्यमालंब्यभूपालस्तंनत्वाप्रतिपूज्यच उवाचवचनंश्लक्ष्णंयुक्तंविनयपूर्वकं ७ राजोवाच देवदेव
तवाज्ञांकरोमिकरुणानिधे वेदोक्तेनविधानेनमखंचबहुदक्षिणं ८ पुत्रेजातेदशाहेनकर्मयोग्योभवेत्पिता मासेन
शुध्येज्जननीदंपतीतत्रकारणं ९

ममवंध्यत्वंगच्छत्विितिमनीषयैवत्वयाहंप्रार्थितोनपुनःपुत्रोममजीवत्विति तच्चकार्यंतवमयासंपादितंततश्चन
ममप्रार्थनाव्यर्थेतिभावः ३ हन्मिहनिष्यामीत्यर्थः वर्तमानसामीप्येभविष्यतिलट् ४ कीदृशींचिंतांचकारेतितदाह लोकपालइति पुत्रेणदत्तेदेवस्यहेलनंवंचनंभवतिमोहाद्दातुंन
शक्यतेततश्चकिंकर्तव्यमितिचिंतेत्यर्थः ५ ६ ७ ८ दशाहेनदशाहोत्तरमित्यर्थः दंपतीतत्रेति तत्रनरमेधकर्मणिदंपतीजायापत्नीकारणमधिकारिणौततश्चमासप

र्यंतमनधिकारात्कथंयज्ञः कर्तव्य इत्यर्थः ९ १० ११ कृत्वोत्थानिकमिति जातकर्मनामकरणादिकमित्यर्थः आचारं कृत्वायष्टव्यमित्यर्थः १२ १३

सर्वज्ञोसिप्रचेतस्त्वंधर्मंजानासिशाश्वतं कृपांकुरुत्वंवारीशक्षमस्वपरमेश्वर १० व्यास उवाच इत्युक्तस्तु प्रचेतास्तंप्रत्युवाचजनाधिपं स्वस्तितेस्तुगमिष्यामिकुरुकार्याणिपार्थिव ११ आगमिष्यामिमासांतेयष्टव्यंसर्वथात्वया कृत्वोत्थानिकमाचारंपुत्रस्यनृपसत्तम १२ इत्युक्त्वाश्लक्ष्णयावाचाराजानंयादसांपतिः हरिश्चंद्रोमुदंप्रापगतेपाशिनि पार्थिवः १३ कोटिशः प्रददौगास्ताघटोध्नीर्हेमपूरिताः विप्रेभ्योवेदविद्भ्यश्चतथैवतिलपर्वतान् १४ राजापुत्रमुखंदृ- ष्ट्वासुखमापमहत्तरं नामास्यरोहितश्चेतिचकारविधिपूर्वकं १५ पूर्णेमासेततःपाशीविप्रवेषेणभूपतेः आजगामगृ हेसद्योयजस्वेतिब्रुवन्मुहुः १६ वीक्ष्यतंनृपतिर्देवंनिमग्नःशोकसागरे प्रणिपत्यकृतातिथ्यंतमुवाचकृतांजलिः १७ दि ष्ट्यादेवत्वमायातोगृहंमेपावितंप्रभो मखंकरोमिवारीशविधिवद्वांछितंतव १८ अदंतोनपशुःश्लाघ्यइत्याहुर्वेदवादिनः त स्माद्दंतोद्भवेतेहंकरिष्यामिमहामखं १९ व्यास उवाच इत्युक्तस्तेनवरुणस्तथेत्युक्त्वाययावथ हरिश्चंद्रोमुदंप्राप्य विजहारगृहाश्रमे २० पुनर्दंतोद्भवंज्ञात्वाप्रचेताद्विजरूपवान् आजगामगृहेतस्यकुरुकार्यमितिब्रुवन् २१ भूपालोपि जलाधीशंवीक्ष्यप्राप्तंद्विजाकृतिं प्रणम्यासनसन्मानैःपूजयामाससादरं २२ स्तुत्वाप्रोवाचवचनंविनयाननकंधरः क रोमिविधिवत्कामंमखंप्रबलदक्षिणं २३ बालोप्यकृतचौलोयंगर्भकेशोनसंमतः यज्ञार्थंपशुकरणेमयाश्रुतंसुरवाच्युत २४ तावत्क्षमस्ववारीशविधिंजानासिशाश्वतं कर्तव्यःसर्वथायज्ञोमुंडनांतेशिशोःकिल २५ तस्येतिवचनंश्रुत्वाप्रचेताः प्राहतंपुनः प्रतारयसिमांराजन्पुनःपुनरिदंब्रुवन् २६ अपिनेसर्वसामग्रीवर्ततेनृपतेऽधुना पुत्रस्नेहनिबद्धस्त्वंवंचयस्येवसां प्रतं २७

१४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ ७ ७

क्षौरकर्मविधिंकृत्वानकर्त्तासिमखंयदि तदाहंदारुणंशापंदास्येकोपसमन्वितः २८ अद्यगच्छामिराजेंद्रवचनात्तव मानद नमृषावचनंकार्यंत्वयेक्ष्वाकुकुलोद्भव २९ इत्याभाष्ययायावाशक्रप्रचेतानृपतेर्गृहात् राजापरमसंतुष्टोननंद भवनेतदा ३० चूडाकरणकालेतुप्रवृत्तेपरमोत्सवे संप्राप्तस्तरसापाशीभवनंनृपतेःपुनः ३१ यदांकेस्रुतमादायराज्ञीनृपतिसन्निधौ उपविष्टाक्रियाकालेतदेववरुणोभ्यगात् ३२ कुरुकर्मेतिविस्पष्टंवचनंकथयन्नृपं विप्ररूपधरःश्रीमान्प्रत्यक्षइवपावकः ३३ नृपतिस्तंसमालोक्यबभूवातीवविह्वलः नमस्कारंतंभीत्याकृतांजलिपुटःपुरः ३४ विधिवत्पूजयित्वातंराजोवाचविनीतवान् स्वामिन्कार्यंकरोम्यद्यमखस्यविधिपूर्वकं ३५ वक्तव्यमस्तितत्रापिश्रृणुष्वैकमनाविभो युक्तंचेन्मन्यसेस्वामिंस्तद्ब्रवीमिनवान्नृतः ३६ ब्राह्मणःक्षत्रियोवैश्यस्त्रयोवर्णाद्विजातयः संस्कृताश्चान्यथाशूद्राएवंवेदविदोविदुः ३७ तस्मादयंस्रुतोमेद्यशूद्रवद्वर्त्ततेशिशुः उपनीतःक्रियार्हःस्यादितिवेदेस्रुनिर्णयः ३८ राज्ञामेकादशेवर्षेसदोपनयनंस्मृतं अष्टमेब्राह्मणानांचवैश्यानांद्वादशेकिल ३९ दयसेयदिदेवेशदीनंमांसेवकंतव तदोपनीयकर्त्तास्मिपशुनायज्ञमुत्तमं ४० लोकपालोसिधर्मज्ञसर्वशास्त्रविशारद मन्यसेयद्वचःसत्यंतद्वच्छभवनंविभो ४१ व्यासउवाच इतितस्यवचःश्रुत्वादयावान्यादसांपतिः ओमित्युक्त्वाययावाशुप्रसन्नवदनोनृप ४२ गतेथवरुणेराजाबभूवातिमुदान्वितः स्रुतंप्राप्यस्रुतस्यैवंराज्ञीमुदमवापह ४३ चकारराजकार्याणिहरिश्चंद्रस्तदानृप कालेनव्रजतापुत्रोबभूवदशवार्षिकः ४४ तस्योपवीतसामग्रींविभूतिसदृशींनृपः चकारब्राह्मणैःशिष्टैरन्वितःसचिवैस्तथा ४५

४६ ४७ ४८ देवदत्तेति देवेतिवरुणसंबोधनं ४९ ५० ५१ ५२ ५३ ५४ ५५ आयुष्मन्निति जन्मेजयसंबोधनं ५६

एकादशेस्कृतस्याब्देव्रतबंधविधौनृपः विदधेविधिवत्कार्यंचित्तेचिंतातुरःपुनः ४६ वर्तमानेतथाकार्येउपनीते कुमारके आजगामाथवरुणोविप्रवेषधरस्तदा ४७ तंवीक्ष्यनृपतिस्तूर्णंप्रणम्यपुरतःस्थितः कृतांजलिपुटःप्रीतः प्रत्युवाचसुरोत्तमं ४८ देवदत्तोपवीतोयंपशुर्योग्योस्तुमेस्कृतः प्रसादात्तवमेशोकोगतोवंध्यापवादजः ४९ कर्तुमिच्छाम्यहंयज्ञंप्रभूतवरदक्षिणं समयेशृणुधर्मज्ञसत्यमद्यब्रवीम्यहं ५० समावर्तनकर्मांतेकरिष्यामितवेप्सितं ममोपरिदयांकृत्वातावत्त्वंक्षंतुमर्हसि ५१ वरुणउवाच प्रतारयसिमांराजन्पुत्रप्रेमाकुलोभृशं मुहुर्मुहुर्मतिंकृत्वायुक्तियुक्तांमहामते ५२ गच्छाम्यद्यमहाराजवचसातवनादितः आगमिष्यामिसमयेसमावर्तनकर्मणि ५३ इत्युक्त्वाप्रययौपाशीतमापृच्छ्यविशांपते राजाप्रमुदितःकार्यंचकारचयथोत्तरं ५४ आगतंवरुणंदृष्ट्वाकुमारोतिविचक्षणः यज्ञस्यसमयंज्ञात्वातदाचिंतातुरोभवत् ५५ शोकस्यकारणंराज्ञःपर्यपृच्छदितस्ततः ज्ञात्वात्मवधमायुष्मन्गमनायमतिंदधौ ५६ निश्चयंपरमंकृत्वासंमंत्र्यसचिवात्मजैः प्रययौनगरात्तस्मान्निर्गत्यवनमप्यसौ ५७ गतेपुत्रेनृपःकामंदुःखितोभूद्भृशंतदा प्रेरयामासदूतान्स्वांस्तस्यान्वेषणकाम्यया ५८ एवंगतेथकालेसौवरुणस्तद्गृहंगतः राजानंशोकसंतप्तंकुरुयज्ञमितिब्रुवन् ५९ राजाप्रणम्यतंप्राहदेवदेवकरोमिकिं नजानेक्वापिपुत्रोमेगतस्त्वद्यभयाकुलः ६० सर्वत्रगिरिदुर्गेषुमुनीनामाश्रमेषुच अन्वेषितोमेदूतैस्तुनप्राप्तोयादसांपते ६१ आज्ञापयमहाराजकिंकरोमिगतेस्कृते नमेदोषोत्रसर्वज्ञभाग्यदोषस्तुसर्वथा ६२ व्यासउवाच इतिभूपवचःश्रुत्वाप्रचेताःकुपितोभृशं शशापचनृपंक्रोधाद्दुःखितस्तुपुनःपुनः ६३

नगरान्निर्गत्यवनमेवप्रययावित्यन्वयः ५७ ५८ ५९ ६० ६१ ६२ ६३

६४ ६५ ६६ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेपंचदशोऽध्यायः १५ एकोनषष्टिश्लोकैस्तुशुनःशेपवधाश्रया कथामारभ्यतेयत्रविश्वामित्रेणवैरिता १ हरिश्चंद्रेणसंजातापरमारब्धवेगतः १ वरुणशापदानानंतरंजातंवृत्तमाह गतेथेति १ २ तत्राजगामहेतियत्रपुत्रःस्थितस्तत्रेत्यर्थः ३

नृपतेऽहंत्वयायस्माद्वंचसाचप्रवंचितः तस्माज्जलोदरोव्याधिस्त्वांतुदत्वतिदारुणः ६४ व्यासउवाच इतिशप्तोमहीपालःकुपितेनप्रचेतसा पीडिताभूत्तदाराजा व्याधिनादुःखदेनतु ६५ एवंशप्त्वानृपंपाशीजगाममनिजमास्पदं राजाप्राप्यमहाव्याधिंबभूवातीवदुःखितः ६६ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेपंचदशोऽध्यायः १५ व्यासउवाच गतेथवरुणेराजारोगेणातीवपीडितः दुःखाद्दुःखंपरंप्राप्यव्यथितोभूद्भृशंतदा १ कुमारोसौवनेश्रुत्वा पितरंरोगपीडितं गमनायमतिंराजंश्चकारस्नेहमंत्रितः २ संवत्सरेव्यतीतेतुपितरंद्रष्टुमादरात् गंतुकामंतुतंज्ञात्वाशक्रस्तत्राजगामह ३ वासवस्तुतदारूपंकृत्वाविप्रस्यसत्वरः वारयामासयुक्त्यावैकुमारंगंतुमुद्यतं ४ इंद्रउवाच राजपुत्रनजानासिराजनीतिंसुदुर्लभां अतःकरोषिमूढस्त्वंगमनायमतिंवृथा ५ पितातवमहाभागब्राह्मणैर्वेदपारगैः कारयिष्यतिहोमंतेज्वलितेथविभावसौ ६ आत्माहिवल्लभस्तातसर्वेषांप्राणिनांखलु तदर्थेवल्लभाःसंति पुत्रदारधनादयः ७ आत्मनोदेहरक्षार्थंहत्वात्वांवल्लभंसुतं हवनंकारयित्वासौरोगमुक्तोभविष्यति ८ तस्मात्त्वयानगंतव्यंराजपुत्रपितुर्गृहे मृतेपितरिगंतव्यंराज्यार्थेसर्वथापुनः ९ एवंनिषेधितस्तत्रवासवेननृपात्मजः वनमध्येस्थितःकामंपुनःसंवत्सरंनृप १०

वारयामासेति केवलंदयावशादित्यर्थः ४ ५ तेतवपशूभूतस्यहोमंकारयिष्यतीत्यन्वयः ६ आत्माहिवल्लभइति नवाअरेपत्युःकामायपतिःप्रियोभवत्यात्मनस्तुकामायपतिःप्रियोभवतीत्यादिनानवाअरेसर्वस्यकामायसर्वंप्रियंभवतीतिबृहदारण्यकश्रुतेरनुभवाच्च तदर्थेआत्मार्थइत्यर्थः ७ ८ ९ १०

११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ कार्याधिकारिणंमृतक्रियाधिकारिणं २२ २३ २४ शामित्राय

अत्यंतंदुःखितंश्रुत्वाहरिश्चंद्रंतदात्मजः गमनायमतिंचक्रेमरणेकृतनिश्चयः ११ तुराषाड्द्विजरूपेणतत्रागत्यत्वरोहितं निवारयामाससकृतंयुक्तिवाक्यैःपुनःपुनः १२ हरिश्चंद्रोतिदुःखार्तोवसिष्ठंस्वपुरोहितं पप्रच्छरोगनाशायतत्रोपायंसुनिश्चितं १३ तमाहब्रह्मणःपुत्रोयज्ञंकुरुनृपोत्तम क्रयक्रीतेनपुत्रेणशापमोक्षोभविष्यति १४ पुत्रादशविधाःप्रोक्ताब्राह्मणैर्वेदपारगैः द्रव्येणानीयतस्मात्त्वंपुत्रंकुरुनृपोत्तम १५ वरुणोपिप्रसन्नःसन्स्फुरवकारीभविष्यति लोभात्कोपिद्विजःपुत्रंप्रदास्यतित्वरात्मजः १६ एवंप्रमादितोराजावसिष्ठेनमहात्मना प्रधानंप्रेरयामासतदन्वेषणकाम्यया १७ अजीगर्तोद्विजःकश्चिद्विषयेतस्यभूपतेः तस्यासंश्चत्रयःपुत्रानिर्धनस्यविशेषतः १८ प्रधानेनाप्यसौपृष्टःपुत्रार्थंदुर्बलोद्विजः गवांशतंददामीतिदेहिपुत्रंमखायवै १९ शुनःपुच्छःशुनःशेपःशुनोलांगूलइत्यमी तेषामेकतमंदेहिददामितुगवांशतं २० अजीगर्तस्तुतच्छ्रुत्वाक्षुधयापीडितोभृशं पुत्रंचैकतमंतेभ्योविक्रेतुंवैमनोदधे २१ कार्याधिकारिणंज्येष्ठंमत्वानासावदादमुं कनिष्ठंनाप्यदान्माताममैषइतिवादिनी २२ मध्यमंचशुनःशेपंददौगवांशतेनच आनिनायपशुंचक्रेनरमेधेनराधिपः २३ रुदंतंदुःखितंदीनंवेपमानंभृशातुरं यूपेबद्धंनिरीक्ष्यामुंचुक्रुशुश्चमुनयस्तदा २४ शामित्रायपशुंचक्रेनरमेधेनराधिपः शमितानाददेशस्त्रंतमालंभयितुंशिशुं २५ नाहंद्विजस्कृतंदीनंरुदंतंकरुणंभृशं हनिष्यामिस्वलोभार्थमित्युक्त्वाचाप्यसौतदा २६ इत्युक्त्वाविररामासौकर्मणोदुष्करादथ राजासभासदःप्राहकिंकर्तव्यमितिद्विजाः २७ जातःकिलकिलाशब्दोजनानांक्रोशतांतदा क्रंदमानेशुनःशेपेसभायांभृशमद्भुतं २८ शमितुःकर्मवध

रूपंशामित्रंतस्मैवधायकर्मणेपशुंचक्रेदत्तवानित्यर्थः २५ २६ २७ २८

अजीगर्तोलोभवशात्सुतवधंकर्तुंप्रवृत्तइत्याह अजीगर्तइति २९ ३० सदासूयंति पुत्रेपिद्वेषबुद्धिरित्यर्थः प्रसूयतेउत्पद्यते ३१ ३२ शामि



अजीगर्तस्तदोत्थायतमुवाचनृपोत्तमं राजन्कार्यंकरिष्यामितवाहंसुस्थिरोभव २९ वेतनंद्विगुणंदेहिहनिष्यामिप
शुंकिल कर्त्तव्यंमखकार्यंवैमयातद्धनार्थिना ३० दुःखितस्यधनार्थस्यसदासूयाप्रसूयते व्यासउवाच तच्छ्रुत्वा
वचनंतस्यहरिश्चंद्रोमुदान्वितः ३१ तमुवाचददाम्यद्यगवांशतमनुत्तमं तदाकर्ण्यपितातस्यपुत्रंहंतुंसमुद्यतः ३२
लोभेनाकुलचित्तोसौशामित्रेकृतनिश्चयः समुद्यतंचतंदृष्ट्वाजनाःसर्वेसभासदः ३३ चुक्रुशुर्भृशदुःखार्ताहाहेति
जगदुर्वचः पिशाचोयंमहापापीक्रूरकर्माद्विजाकृतिः ३४ यस्त्वयंस्वसुतंहंतुमुद्यतःकुलपांसनः धिक्चांडालकिमे
तत्तेपापकर्मचिकीर्षितं ३५ हत्वासुतंधनंप्राप्यकिंसुखंतेभविष्यति आत्मावैजायतेपुत्रअंगादिवेदभाषितं ३६ न
त्वंकथंपापबुद्धेत्वमात्मानंहंतुमिच्छसि एवंकोलाहलेतत्रजातेकौशिकनंदनः ३७ समीपंनृपतेर्गत्वातमुवाचदयापरः
विश्वामित्रउवाच राजन्मुंचशुनःशेपंरुदंतंभृशदुःखितं ३८ क्रतुस्तेभवितापूर्णोरोगनाशश्चसर्वथा दयासमंनास्ति
पुण्यंपापंहिंसासमंनहि ३९ रागिणांरोचनार्थायप्रनोदनेयंविचारय आत्मदेहस्यरक्षार्थंपरदेहनिकृंतनं ४० नक
र्तव्यंमहाराजसर्वेतुःशुभमिच्छता दययासर्वभूतेषुसंतुष्टोयेनकेनच ४१ सर्वेंद्रियोपशांत्याचतुष्यत्याशुजग
त्पतिः आत्मवत्सर्वभूतेषुचिंतनीयंनृपोत्तम ४२ जीवितव्यंप्रियंनूनंसर्वेषांसर्वदाकिल त्वमिच्छसिसुखंकर्तुं
देहेहत्वात्वमुंद्विजं ४३ कथंनेच्छेदसौदेहंरक्षितुस्वसुखात्पदं पूर्वजन्मकृतंवैरंनानेनसहतेनृप ४४ येनामुं
हंतुकामस्त्वंद्विजपुत्रंनिरागसं योयंहंतिविनावैरंस्वकामःसततंपुनः ४५ त्रेवधकर्मणिअनेनचलोभाविष्टस्यईदृशीगतिर्जायतेइतिबो

धितं तस्माल्लोभस्त्याज्यइत्यवांतरतात्पर्यं ३३ ३४ ३५ ३६ ३७ ३८ ३९ नोदनेयंप्रेरणेयंविधिवाक्येनेत्यर्थः नतुविधिवाक्यानामवश्यहिंसाकरणेतात्पर्यं तदेतद्विचारयनिश्चिन्वि
त्यर्थः किंतुहिंसानिवृत्तावेवतात्पर्यं तदुक्तंभागवते लोकेव्यवायामिषमद्यसेवानित्यास्तिजंतोर्नहितत्रचोदना व्यवस्थितिस्तेषुविवाहयज्ञसुराग्रहैरासुनिवृ
त्तिरिष्टेति ४० ४१ ४२ ४३ ४४ ४५

हंतारं हंतीति यंहंतिसजननंप्राप्यतंहंतारंपूर्वजन्मस्थंजननांतरेद्वितीयजन्मनिहंतीत्यन्वयः ४६ ४७ ४८ ४९ ५० मेमममवचनस्यकरणात्स्वीकरणा

हंतारंहंतितंप्राप्यजननंजननांतरे जनकोस्यस्कदुशात्मायेनासौतेसमर्पितः ४६ स्वात्मजोधनलोभेनपापाचारःसदुर्मतिः सृष्टव्याबहवःपुत्रायद्येकोपिगयांव्रजेत् ४७ यजेतचाश्वमेधेननीलंवावृषमुत्सृजेत् देशमध्येचयःकश्चित्पापकर्मसमाचरेत् ४८ षष्ठांशस्तस्यपापस्यराजाभुंक्तेनसंशयः निषेधनीयोराज्ञासौपापंकर्तुंसमुद्यतः ४९ ननिषिद्धस्त्वयाकस्मात्पुत्रविक्रेतुमुद्यतः सूर्यवंशेसमुत्पन्नस्त्रिशंकुतनयःशुभः ५० आर्यस्त्वनार्यवत्कर्मकर्तुमिच्छसिपार्थिव मोचनान्मुनिपुत्रस्यकरणाद्वचनस्यमे ५१ नवदेहस्कस्वराजन्भविष्यत्यविचारणात् पितातेशापयोगेनचांडालत्वमुपागतः ५२ मयासौतेनदेहेनस्वर्लोकंप्रापितःकिल तेनैवप्रीतियोगेनकुरुमेवचनंनृप ५३ मुंचैनंबालकंदीनंरुदंतंभृशमातुरं याचितोसिमयानूनंयज्ञेस्मिन्राजसूयक ५४ प्रार्थनाभंगजंदोषंकथंत्वंनावबुध्यसे मार्थितंसर्वदादेयंमखेस्मिन्नृपसत्तम ५५ अन्यथापापमेवस्यात्तवराजन्नसंशयः व्यासउवाच इतितस्यवचःश्रुत्वाकौशिकस्यनृपोत्तमः ५६ प्रत्युवाचमहाराजःकौशिकंमुनिसत्तमं जलोदरेणगाधेयदुःखितोहंभृशंमुने ५७ तस्मान्नमोचयाम्येनमन्यत्प्रार्थयकौशिक नत्वयानिग्रहःकार्यःकार्येस्मिन्ममसर्वथा ५८ तच्छ्रुत्वावचनंराज्ञोविश्वामित्रोतिकोपतः बभूवदुःखसंतप्तोवीक्ष्यदीनंद्विजात्मजं ५९ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेषोडशोऽध्यायः १६ व्यासउवाच रुदंतंबालकंवीक्ष्यविश्वामित्रोदयातुरः शुनःशेपमुवाचेदंगत्वापार्श्वेतिदुःखितं १

दित्यर्थः ५१ ५२ ५३ ५४ ५५ ५६ ५७

निग्रह आग्रहः ५८ ५९ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधे।षोडशोऽध्यायः १६ एकोनषष्टिश्लोकैस्तुविश्वामित्रेणमोचिते शुनःशेपेहरिश्चंद्रोरोगान्मुक्तइतीर्यते १ राजवाक्यंश्रुत्वाविश्वामित्रोयदकरोत्तदाह रुदंतमिति १ ७ ७ ७

२ ३ ४ ५ ६ ७ ८ भीतेननरकादिति अपुत्रस्यगतिर्नास्तीतिशासनात्पुत्रेमृतेनरकंप्राप्स्यामीतिनरकान्भीतेनेत्यर्थः ९ तदेवाह

मंत्रमप्रचेतसःपुत्रमयोक्तंमनसास्मर जपतस्तवकल्याणंभविष्यतिममाज्ञया २ विश्वामित्रवचःश्रुत्वाशुनःशेपः शुचाकुलः मंत्रंजजापमनसाकौशिकोक्तंस्फुटाक्षरं ३ जपतस्तत्रतस्याशुप्रचेतास्तुकृपाकरः प्रादुर्बभूवसहसा प्रसन्नोनृपबालके ४ दृष्ट्वातमागतंसर्वेविस्मयंपरमंगताः तुष्टुवुर्वरुणंदेवमुदितादर्शनेनते ५ राजातिविस्मितः पादौप्रणनामरुजातुरः बद्धांजलिपुटोदेवंतुष्टावपुरतःस्थितं ६ हरिश्चंद्रउवाच देवदेवकृपासिंधोपापात्माहंसु मंदधीः कृतापराधःकृपणःपाविनःपरमेष्ठिना ७ मयातेपुत्रकामेनदुःखसंस्थेनहेलनं कृतंक्षमाप्यंप्रभुणाकोपरा धःकुदुर्मतेः ८ अर्थीदोषंनजानातितस्मात्पुत्रार्थिनामया वंचितस्त्वंदेवदेवभीतेननरकाद्विभो ९ अपुत्रस्यगति र्नास्तिस्वर्गोनैवचनैवच भीतोहंतेनवाक्येनतस्मात्तेहेलनंकृतं १० नाज्ञस्यदूषणंचिंत्यंनूनंज्ञानवताविभो दुःखितोहं रुजाक्रांतोवंचितःस्वकृतेनह ११ नजानेहंमहाराजपुत्रोमेक्वगतःप्रभो वंचयित्वावनेभीतोमरणान्मांकृपानिधे १२ मयायोद्रविणंदत्वागृहीतोद्विजबालकः यज्ञोयंक्रीतपुत्रेणप्रारब्धस्तवतुष्टये १३ दर्शनंतवसंप्राप्यगतंदुःखंममा द्भुतं जलोदरकृतंसर्वंप्रसन्नेत्वयिसांप्रतं १४ व्यासउवाच इतितस्यवचःश्रुत्वाराज्ञोरोगातुरस्यच दयावान्देव देवेशःप्रत्युवाचनृपोत्तमं १५ वरुणउवाच मुंचराजन्शुनःशेपंस्तुवंतंमांभृशातुरं यज्ञोयंपरिपूर्णस्तेरोगमुक्तोभ वात्मना १६ इत्युक्त्वावरुणस्तूर्णंराजानंविरुजंतथा चकारपश्यतांतत्रसदस्यानांसुसंस्थितं १७ विमुक्तोसौद्वि जःपाशाद्वरुणेनमहात्मना जयशब्दस्ततस्तत्रसंजातोमखमंडपे १८ राज्ञाप्रमुदितःसद्योरोगान्मुक्तःसुदारुणात् यूपान्मुक्तःशुनःशेपोबभूवातीवसंस्थितः १९ अपुत्रस्येति १० ११ १२ १३ १४ १५ १६ १७ १८ १९

२० २१ २२ २३ २४ २५ २६ विद्याप्रदश्चेतिच कारेणजन्मदातापीत्येवंमिलिताःपंचेत्यर्थः २७ २८ २९ ३० ३१

राज्ञातिमिमंमखंपूर्णंचकारविनयान्वितः शुनःशेपस्तदासभ्यानित्युवाच कृतांजलिः २० भोभोसभ्याःस्कधर्मज्ञा ब्रुवंतुधर्मनिर्णयं वेदशास्त्रानुसारेणयथार्थवादिनःकिल २१ पुत्रोहंकस्यसर्वज्ञाःपितामेकोग्रतःपरं भवतांवचनात्तस्यशरणंप्रव्रजाम्यहं २२ इत्युक्तेवचनेतत्रसभ्याःप्रोचुःपरस्परं सभ्याऊचुः अजीगर्तस्यपुत्रोयंकस्यान्यस्यभवेदसौ २३ अंगादंगात्समुद्भूतःपालितस्तेनभक्तितः अन्यस्यकस्यपुत्रोसौप्रभवेदितिनिश्चयः २४ तच्छ्रुत्वावामदेवस्तुतानुवाचसभासदः विक्रीतस्तेनतातेनद्रव्यलोभात्कृतःकिल २५ पुत्रोयंधनदातुश्चराज्ञस्तत्रनसंशयः अथवावरुणस्यैषपाशान्मुक्तोरस्त्यनेनवै २६ अन्नदाताभयत्रातातथाविद्याप्रदश्चयः तथावित्तप्रदश्चैवपंचैतेपितरःस्मृताः २७ तदाकेचित्पितुःप्राहुःकेचिद्राज्ञस्तथापरे वरुणस्येतिसंवादेनिर्णयंनययुश्चते २८ इत्थंसंदेहमापन्नेवसिष्ठोवाक्यमब्रवीत् सभ्यान्विवदतस्तत्रसर्वज्ञःसर्वपूजितः २९ शृणुध्वंभोमहाभागानिर्णयंश्रुतिसंमतं निःस्नेहेनयदापित्राविक्रीतोयंकृतःशिशुः ३० संबंधस्तुगतस्तस्यतद्वैवधनसंग्रहात् हरिश्चंद्रस्यसंजातःपुत्रोसौक्रीतएवच ३१ यूपेबद्धोयदाराज्ञातदातस्यनवैस्कृतः वरुणस्कस्तुनोऽनेनतेनतुष्टेनमोचितः ३२ तस्मान्नायंमहाभागात्ख्यसोपुत्रःप्रचेतसः योयंस्तौतिमहामंत्रैःसोपितुष्टोददातिच ३३ धनंप्राणानन्यशंकराज्यंतथामोक्षंकिलेप्सितं कौशिकस्यसुतश्चायमरिष्टेयेनरक्षितः ३४ मंत्रंदत्त्वामहावीर्यंवरुणस्यातिसंकटे व्यासउवाच श्रुत्वावाक्यंवसिष्ठस्यबाढमूचुःसभासदः ३५ विश्वामित्रस्तुजग्राहतंकरेदक्षिणेतदा एहिपुत्रगृहंमेत्वमित्युक्त्वाप्रेमपूरितः ३६ शुनःशेपोजगामाशुतेनैवसहसत्वरः वरुणस्तुप्रसन्नात्माजगामचस्वमालयं ३७

३२ ३३ ३४ ३५ ३६ ३७

ऋत्विजश्च तथा सभ्याः स्वगृहान्निर्ययुस्तदा राजापि रोगनिर्मुक्तो बभूवातिमुदान्वितः २८ प्रजाः स्म पालयामास-
स प्रसन्नेन चेतसा रोहिताख्यस्ततः श्रुत्वा वृत्तान्तं वरुणस्य ह २९ आजगाम गृहं प्रीतो दुर्गमाद्दूनपर्वतात् दूताश्च
ज्ञानमभ्येत्य प्रोचुः पुत्रं समागतं ४० मुदितोसौ जगामाशु संमुखः कोसलाधिपः दृष्ट्वा पितरमायान्तं प्रेमोद्रिक्तः स
संभ्रमः ४१ दंडवत्पतितो भूमावश्रुपूर्णमुखः शुचा राजापि तं समुत्थाप्य परिरभ्य मुदान्वितः ४२ समाघ्राय सुतं मूर्ध्नि प
प्रच्छ कुशलं पुनः उत्संगे तं समारोप्य मुदितो मेदिनीपतिः ४३ उष्णैर्नेत्रजलैः शीर्षण्यभिषेकमथाकरोत् राज्यं शशास तेना
सौ पुत्रेणातिप्रियेण च ४४ वृत्तान्तं नरमेधस्य कथयामास विस्तरात् राजसूयं क्रतुवरं चकार नृपसत्तमः ४५ वसि
ष्ठं पूजयित्वाथ होतारमकरोद्द्विजः समाप्तेत्वथ यज्ञेशे वसिष्ठो नीव पूजितः ४६ शक्रस्य सदनं रम्यं जगाम मुनिरादरात्
विश्वामित्रोपि तत्रैव वसिष्ठेन च संगतः ४७ मिलित्वा तौ स्थितौ देवसदने मुनिसत्तमौ विश्वामित्रोपि पप्रच्छ वसिष्ठं प्रतिपू
जितं ४८ वीक्ष्य विस्मयचित्तस्त्वं सभायां तु शचीपतेः विश्वामित्र उवाच केयं पूजा त्वया प्राप्ता महती मुनिसत्तम ४९
कृता केन महाभाग सत्यं ब्रूहि ममांतिके वसिष्ठ उवाच यजमानोस्ति मे राजा हरिश्चंद्रः प्रतापवान् ५० राजसूयः कृत
स्तेन राज्ञा प्रवरदक्षिणः नेदृशोपि नृपश्चान्यः सत्यवादी धृतव्रतः ५१ दाता च धर्मशीलश्च प्रजारंजनतत्परः तस्य य
ज्ञे मया पूजा प्राप्ता कौशिकनंदन ५२ "किं पृच्छसि पुनः सत्यं ब्रवीम्यकृत्रिमं द्विज" हरिश्चंद्रसमो राजा न भूतो न भविष्यति
सत्यवादी तथा दाता शूरः परमधार्मिकः ५३ व्यास उवाच इति तस्य वचः श्रुत्वा विश्वामित्रोतिकोपनः बभूव क्रोधसंरक्तलो
चनोप्यब्रवीच्च तं ५४

विश्वामित्रोतिकोपन इति त्रिशंकोः स्वपितुरुद्धारकस्य मम शुनःशेपमोचनविषयकं वाक्यं नांगीचकारैतादृशस्यातिदुष्टहरिश्चंद्रस्य प्र-

शंसांमदग्रेकरोतीत्यसूयाकोपकारणं ५४ ५५ ग्लहंपणं ५६ अहंचेदिति त्वयातिसंस्तुतंराजानंहरिश्चंद्रंतंप्रसिद्धमहमसत्यवादिनंनकरिष्या
मिचेन्ममपुण्यंविनश्यतुअन्यथातुनंयद्यहमसत्यवादिनंकरिष्यामितदातवपुण्यमित्यर्थः ५७ ५८ ५९ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेसप्तद

विश्वामित्रउवाच एवंस्तोषिनृपंमिथ्यावादिनंकपटप्रियं वंचितोवरुणोयेनप्रतिश्रुत्यवरंपुनः ५५ ममजन्मार्जितंपुण्यंत
पसःपठितस्यच त्वदीयंवातितपसोग्लहंकुरुमहामते ५६ अहंचेत्तंनृपंसद्योनकरोम्यतिसंस्कृतं असत्यवादिनंकाममदाता
रंमहारवलं ५७ आजन्मसंचितंसर्वंपुण्यंममविनश्यतु अन्यथात्वत्कृतंसर्वंपुण्यंत्वितिपणावहे ५८ ग्लहंकृत्वाततस्तौतु
विवदंतौमुनीतदा स्वाश्रमंस्वर्गलोकाच्चगतौपरमकोपनौ ५९ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेसप्तदशोऽध्यायः
१७ व्यासउवाच कदाचित्तुहरिश्चंद्रोमृगयार्थंवनंययौ अपश्यद्रुदतींबालांसुंदरींचारुलोचनां १ तामपृच्छन्महारा
जःकामिनींकरुणापरः पद्मपत्रविशालाक्षिकिंरोदिषिवरानने २ केनासिपीडितात्यर्थंकिंतेदुःखंवदाश्रमे कान्वत्वं
विजनेघोरेकस्तेभर्त्तापिताथवा ३ नबाधतेचराज्येमेराक्षसोपिपरांगनां तंहन्मितरसाकांतेयस्त्वांसुंदरिबाधते ४
ब्रूहिदुःखंवरारोहेस्वस्थाभवकृशोदरि विषयेममपापात्मानतिष्ठतिसुमध्यमे ५ इतितस्यवचःश्रुत्वानारीतमब्रवी
न्नृपं प्रमृज्याश्रूणिवदनाद्धरिश्चंद्रंनृपोत्तमं ६ नार्युवाच राजन्मांबाधतेऽत्यर्थंविश्वामित्रोमहामुनिः तपःकरोति
यद्घोरंमदर्थंकौशिकोवने ७ तेनाहंदुःखिताराजन्विषयेतवसुव्रत विद्धिमांकमनांकांतांपीडितांमुनिनाभृशं ८

शोऽध्या-
यः १७ अत्राधिकैश्चपंचाशत्पद्यैरथनृपेणह विश्वामित्रमुनेर्वैरमभूदितितुकीर्त्यते १ वसिष्ठविश्वामित्रयोःपणानंतरंजातंवृत्तमाह कदाचिदिति अप
श्यद्रुदतीमिति इयंविश्वामित्रनिर्मितामाया १ २ ३ ४ ५ ६ मदर्थंसिद्धिरूपिणीयाहमस्मिनस्यैमत्प्रयोजनार्थमित्यर्थः अनेनचकात्वंक
स्तेभर्त्तापितायवेत्यस्योत्तरमर्थाद्दत्तंभवतिसिद्धेःशास्त्रेप्रसिद्धत्वात् ७ ८ ९ ९ ९

तापपरायणंतपश्चर्यापरायणं ९ १० ११ १२ १३ इत्थंनिषिध्यति अनेनत्वसिन्नर्थेतपःकर्तानिरंतरमेवविघ्नैरभिभूयतइत्युक्तंभवति त
स्मान्निष्कामनयाश्रीभगवत्याआराधनंकर्तव्यमित्यवांतरतात्पर्यं १४ वसिष्ठस्यचसंवादमिति वसिष्ठेनायंराजापरमधार्मिकइत्युक्तं यद्ययंपरमधार्मिकस्त

राजोवाच स्वस्थाभवविशालाक्षिनतेदुःखंभविष्यति तमहंवारयिष्यामिमुनिंनापपरायणं ९ इत्याश्वास्यस्त्रियं-
राजानरसामुनिसन्निधौ नत्वाप्रणम्यशिरसानतमुवाचमहीपतिः १० स्वामिन्किंक्रियतेत्यर्थंतपसादेहपीडनं किमर्थंतेस
मारंभोब्रूहिसत्यंमहामते ११ वांछितंतववगाधेयकरोमिसफलंकिल उत्तिष्ठोत्तिष्ठतरसानतपसालमत्परं १२ विषयेमम
सर्वज्ञनकर्तव्यंस्कुदारुणं लोकपीडाकरंघोरंतपःकेनापिकर्हिचित् १३ इत्थंनिषिद्धतंराजाविश्वामित्रागृहंययौ मनसा-
क्रोधमाधायगतोसौकौशिकोमुनिः १४ सगत्वाचिंतयामासनृपकृत्यमसांप्रतं वसिष्ठस्यचसंवादंतपसःप्रतिषेध
नं १५ कोपाविष्टेनमनसाप्रतीकारमथाकरोत् विचिंत्यबहुधाचित्तेदानवंघोरविग्रहं १६ प्रेषयामासतद्देशेविधायसू
कराकृतिं सोतिकायोमहाकोलःकुर्वन्नादंस्कुदारुणं १७ राज्ञश्चोपवनेप्राप्तस्त्रासयन्रक्षकांस्तदा मालतीनांचखंडा
निकदंबानांतथैवच १८ यूथिकानांचवृंदानिकंपयंश्चमुहुर्मुहुः दंतेनविलिखन्भूमिंसमुन्मूलयतेद्रुमान् १९ चंप
कान्केतकीखंडान्मल्लिकानांचपादपान् करवीरानुशीरांश्चनिंबखानशुभान्मृदून् २० मुचुकुंदानशोकांश्चबकुलां
स्तिलकांस्तथा उन्मूल्यकदनंतत्रचकारसूकरोवने २१ वाटिकारक्षकाःसर्वेदुद्रुवुःशस्त्रपाणयः हाहेतिचुक्रुशु
स्तत्रमालाकाराभृशातुराः २२ बाणैःसंताड्यमानोपियदात्रस्तोनवैमृगः रक्षकान्पीडयामासकोलःकालसमद्युतिः
२३ तेनदातिभयाक्रांताराजानंशरणंययुः तमूचुस्त्राहित्राहीतिवेपमानाभयाकुलाः २४

हिंमिमतपसःकथमनेनप्रतिषेधनंकृतं
कथंचवसिष्ठेनपणःकृतइतिप्रष्टव्योवसिष्ठोऽस्मिन्समयेइतिभावः १५ १६ १७ १८ १९ २० वनेसूकरोवृक्षाणांकदनंचकारेत्यर्थः २१ २२ २३ २४

२५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९

तानागतान्समालोक्यभयार्तान्भूपतिस्तदा पप्रच्छकिंभयंकस्मान्मांब्रुवंतुसमागताः २५ नाहंबिभेमिदेवेभ्योराक्षसे
भ्यश्चरक्षकाः कस्माद्भयंसमुत्पन्नंतद्ब्रुवंतुममाग्रतः २६ हन्मिचैकेनबाणेनतंशत्रुंदुर्भगंकिल योमेरातिःसमुत्पन्नोलो
केपापमतिःखलः २७ देवोवादानवोवापितन्निहन्मिशरैःशितैः क्वतिष्ठतिकियद्रूपःकियद्बलसमन्वितः २८ मालाकाराऊ
चुः नदेवोनचदैत्योस्तिनयक्षोनचकिन्नरः कश्चित्कोलोमहाकायोराजंस्तिष्ठतिकानने २९ पुष्पवृक्षानतिमृदून्दंतेनो
न्मूलयत्यसौ विदीर्णंतद्वनंसर्वंसूकरेणातिरंहसा ३० विशिखैरस्ताडितोस्माभिःपृषद्भिर्लकुटैस्तथा नबिभेतिमहाराजहं
तुमस्मानुपाद्रवत् ३१ व्यासउवाच इत्याकर्ण्यवचस्तेषांराजाकोपसमाकुलः अश्वमारुह्यतरसाजगामोपवनंप्रति ३२
सैन्येनमहतायुक्तोगजाश्वरथसंयुतः पदातिवृंदसहितःप्रययौवनमुत्तमं ३३ तत्रापश्यन्महाकोलंघुर्घुरंतंभयानकं व
नभग्नंचसवीक्ष्यराजाक्रोधयुतोभवत् ३४ चापेबाणंसमारोप्यविकृष्यचशरासनं तंहंतुंसूकरंपापंतरसासमुपाक्रमत्
३५ समालोक्यचराजानंचापहस्तंरुषाकुलं संमुखोभ्यद्रवत्तूर्णंकुर्वन्शब्दंसुदारुणं ३६ तमायांतंसमालोक्यवराहं
विकृताननं मुमोचविशिखंतस्मिन्हंतुकामोमहीपतिः ३७ वंचयित्वाथतद्बाणंसूकरस्तरसाबलात् निर्जगाममहा
वेगात्तमुल्लंघ्यनृपंतदा ३८ गच्छंतंतंसमालोक्यराजाकोपसमन्वितः मुमोचविशिखांस्तीक्ष्णांश्चापमाकृष्ययत्नतः
३९ क्षणंदृष्टिपथंराज्ञःक्षणंचादर्शनंगतः कुर्वन्बहुविधारावंसूकरःसमुपाद्रवत् ४० हरिश्चंद्रोतिकुपितोमृग
स्यानुजगामह अश्वेनवायुवेगेनविकृष्यचशरासनं ४१ इतस्ततस्ततःसैन्यमगमच्चवनांतरं एकाकीनृपतिःकोलं
व्रजंतंसमुपाद्रवत् ४२ मध्यान्हसमयेराजासंप्राप्तोविजनेवने तृषितःक्षुधितोत्यर्थंबभूवश्रांतवाहनः ४३

४० ४१ ४२ ४३

सूकरो दर्शनं प्राप्तो राजा चिंतातुरोऽभवत् मार्गभ्रष्टोऽतिविपिने दारुणे दीनवत्स्थितः ४४ किं करोमि क गच्छामि न सहायोऽस्ति मे वने अज्ञानस्वपथः कुत्र व्रजामीति व्यचिंतयत् ४५ एवं चिंतयतस्तत्र विपिने जनवर्जिते राजा चिंतातुरोऽपश्यन्नदीं स्फुविमलोदकां ४६ वीक्ष्य तां मुदितो राजा पाययित्वा तुरंगमं अश्वादुत्तीर्य विमलं पपौ पानीयमुत्तमं ४७ जलं पीत्वा नृपस्तत्र स्फुरवमाप महीपतिः इयेष नगरं गंतुं दिग्भ्रमेणातिमोहितः ४८ विश्वामित्रस्तु संप्राप्तो वृद्धब्राह्मणरूपधृक् ननाम वीक्ष्य राजा तं प्रीतिपूर्वं द्विजोत्तमं ४९ तमुवाच गाधिराजः प्रणमंतं नृपोत्तमं स्वस्ति तेऽस्तु महाराज किमर्थमिह चागतः ५० एकाकी विजने राजन् किं चिकीर्षसि मद्वने ब्रूहि सर्वं स्थिरो भूत्वा कारणं नृपसत्तम ५१ राजोवाच सूकरोऽतिमहाकायो बलवान्पुष्पकाननं समुपेत्य ममर्द्दाशु कोमलान्पुष्पपादपान् ५२ तं निवारयितुं दुष्टं करे कृत्वा च कार्मुकं ससैन्योऽहं स्वनगरान्निर्गतो मुनिसत्तम ५३ गतोऽसौ दृक्पथात्पापो मायावी क्वापि वेगवान् पृष्ठतोऽहमपि प्राप्तः सैन्यं क्वापि गतं मम ५४ क्षुधितस्तृषितश्चाहं सैन्यभ्रष्टस्त्विहागतः न जाने पुरमार्गं च न तथा सैन्यगतिं मुने ५५ पंथानं दर्शय विभो व्रजामि नगरं प्रति मया त्वं भाग्ययोगेन प्राप्तस्त्वं विजने वने ५६ अयोध्याधिपतिश्चाहं हरिश्चंद्रोऽतिविश्रुतः राजसूयस्य कर्त्ता च वांछितार्थप्रदः सदा ५७ धनेच्छा यदि ते ब्रह्मन्यज्ञार्थं द्विजसत्तम आगंतव्यमयोध्यायां दास्यामि विपुलं धनं ५८ इति श्रीदेवीभागवते महापुराणे सप्तमस्कंधेऽष्टादशोऽध्यायः १८ व्यास उवाच इति तस्य वचः श्रुत्वा भूपतेः कौशिको मुनिः प्रहस्य प्रत्युवाचेदं हरिश्चंद्रं तदा नृप १ इति श्रीदे॰भा॰न॰स॰ अध्यायः १८ त्रिषष्टिश्लोकवर्यैस्तु कौशिकेन महात्मना 

ह्रतं राज्यं हरिश्चंद्रनृपतेरिदमुच्यते १ राजवाक्यं श्रुत्वा कौशिको यदकरोत्तदाह इति तस्येति प्रहस्येति धार्मिकस्त्वमस्मिंस्तीर्थे न स्नात्वा कथं गंतुमिच्छसीत्यभिप्रायेण हास्यं चकार॰१

तदेवाह राजन्निति २ ३ ४ ५ ६ ७ ८ ९ १० मुनीनांसन्निधौराजसूययज्ञेमयेतद्व्रतंकृतमित्यन्वयः ११ १२

राजंस्तीर्थमिदंपुण्यंपावनंपापनाशनं स्नानंकुरुमहाभागपितॄणांतर्पणंतथा २ कालःशुभतमोस्तीहतीर्थेस्नात्वा
विशांपते दानंददस्वशक्त्यात्रपुण्यतीर्थेतिपावने ३ प्राप्यतीर्थंमहापुण्यमस्नात्वायस्तुगच्छति सभवेदात्महाभू
यइतिस्वायंभुवोब्रवीत् ४ तस्मात्तीर्थवरेराजन्कुरुपुण्यंस्वशक्तितः दर्शयिष्यामिमार्गंतेगंतासिनगरंततः ५ आ
गमिष्याम्यहंमार्गदर्शनार्थंत्वयानघ त्वयासहाद्यकाकुत्स्थतवदानेनतोषितः ६ तच्छ्रुत्वावचनंराजामुनेःकपटमंडि
तं वासांस्युत्तार्यविधिवत्स्नातुमभ्याययौनदीं ७ बंधयित्वाहयंवृक्षेमुनिवाक्येनमोहितः अवश्यंभाविियोगेनत
द्दृशस्तुतदाभवत् ८ राजास्नानविधिंकृत्वासंतर्प्यपितृदेवताः विश्वामित्रमुवाचेदंस्वामिन्दानंददामिते ९
यदिच्छसिमहाभागतत्तेदास्यामिसांप्रतं गावोभूमिंहिरण्यंचगजाश्वरथवाहनं १० नादेयंमेकिमप्यास्तिकृतमेत
द्व्रतपुरा राजसूयेमखश्रेष्ठेमुनीनांसन्निधावपि ११ तस्मात्त्वमिहसंप्राप्तस्तीर्थेस्मिन्प्रवरेमुने यत्तेस्तिवांछितंब्रूहि
ददामितववांछितं १२ विश्वामित्रउवाच मयापूर्वंश्रुताराजन्कीर्तिस्तेविपुलाभुवि वसिष्ठेनचसंप्रोक्तादातानास्ति
महीतले १३ हरिश्चंद्रोनृपश्रेष्ठःसूर्यवंशेमहीपतिः तादृशोनृपतिर्दातानभूतोनभविष्यति १४ पृथिव्यांपर
मोदारस्त्रिशंकुतनयोयथा अतस्त्वांप्रार्थयाम्यद्यविवाहोमेस्तिपार्थिव १५ पुत्रस्यचमहाभागतदर्थंदेहिमेधनं
राजोवाच विवाहंकुरुविप्रेंद्रददामिप्रार्थितंतव १६ यदिच्छसिधनंकामंदातातस्यास्मिनिश्चितं व्यासउवाच
इत्युक्तःकौशिकस्तेनवचनात्तत्परोमुनिः १७ उद्भाव्यमायांगांधर्वींपार्थिवायाप्यदर्शयत् कुमारःस्फकुमारश्चकन्या
चदशवार्षिकी १८

१३ १४ १५ मेपुत्रस्यविवाहोस्तीत्यन्वयः १६ १७ १८

१९ २० २१ २२ वेदिमध्यइति अग्निहोत्रशालायांराजातस्मिन्समयेस्थितः तथाचतस्मिन्वेदिमध्येअग्निहोत्रवेदिमध्येदानंदेहीत्यन्वयः
अयंभावः विवाहकार्यार्थेयद्धनंत्वयाप्रतिश्रुतंतदधुनावरवध्वोःपोषणार्थंनयद्विपुलंधनंतद्दानंदेहिअन्यथात्वत्कृतेविवाहेवरवध्वोर्भिक्षाटनप्रसंगेतवाप-



एतयोःकार्यमप्यद्यकर्तव्यंनृपसत्तम राजसूयाधिकंपुण्यंगृहस्थस्यविवाहतः १९ भविष्यतितवाद्यैवविप्रपुत्रविवा
हतः तच्छ्रुत्वावचनंराजामाययातस्यमोहितः २० तथेतिचप्रतिज्ञायनोवाचाल्पंवचस्तथा तेनदर्शितमार्गोसौनगरंप्रतिज
ग्मिवान् २१ विश्वामित्रोपिराजानंवंचयित्वाश्रमंययौ कृतोद्वाहविधिस्तावद्विश्वामित्रोब्रवीन्नृपं २२ वेदिमध्येनृपाद्य
त्वंदेहिदानंयथेप्सितं राजोवाच किंतेभीष्टंद्विजब्रूहिददामिवांछितंकिल २३ अदेयमपिसंसारेयशःकामोस्मिसांप्र
तं व्यर्थंहिजीवितंतस्यविभवंप्राप्ययेनवै २४ नोपार्जितंयशःशुभ्रंपरलोकसुखप्रदं विश्वामित्रउवाच राज्यंदेहि
महाराजवरायसपरिच्छदं २५ गजाश्वरथरत्नाढ्यंवेदीमध्येतिपावने व्यासउवाच मोहितोमाययातस्यश्रुत्वावा
क्यंमुनेर्नृपः २६ दत्तमित्युक्तवान्राज्यमविचार्ययदृच्छया गृहीतमितितंप्राहविश्वामित्रोतिनिष्ठुरः २७ दक्षिणां
देहिराजेंद्रदानयोग्यांमहामने दक्षिणारहितंदानंनिष्फलंमनुरब्रवीत् २८ तस्माद्दानफलायत्वंयथोक्तांदेहिदक्षिणां
इत्युक्तस्तुतदाराजातमुवाचातिविस्मितः २९ ब्रूहिकियद्धनंतुभ्यंदेयंस्वामिन्मयाधुना दक्षिणानिष्क्रयंसाध वद्याव
त्प्रमाणकं ३० दानपूर्त्यैप्रदास्यामिस्वस्थोभवतपोधन विश्वामित्रस्तुतच्छ्रुत्वातमाहमेदिनीपतिं ३१ हेमभारद्वयंसार्द्धं
दक्षिणांदेहिसांप्रतं दास्यामीतिप्रतिश्रुत्यतस्मैराजातिविस्मितः ३२ कीर्तिःस्यादिति राजानुपोषणार्थंधनंब्राह्मणोयंयत्किंचित्प्रार्थयि
ष्यतितदेतस्मैदेयमित्यभिप्रायेणाह किंतेभीष्टमिति ब्राह्मणस्तुसर्वस्वहरणेच्छयावदतिराजन्देहीति २३ २४ २५ २६ २७ २८ २९ ३० ३१ हेमभारद्वयं
सार्धमिति आचितस्यदशमोभागोभारस्तथाचार्धभारेणसहितभारद्वयपरिमाणंसुवर्णदक्षिणांदेहीत्यर्थः राजा दास्यामीत्युक्त्वास्वनिकटेधनाभावात्किंमयेदंकृ

तमित्यतिविस्मितइत्यर्थः ३२ तदैवसैनिकाइति येराज्ञासाकंवनेगतास्तेमार्गपत्रंशादितस्ततोगताइत्युक्तंतेसैनिकाराजानंवीक्षमाणाआगताइत्यर्थः ३३
अंतःपुरेरुम्यगारेगतःचिंताग्रस्तःसन् ३४ स्वकृतमनयंस्मरतिकिंमयेति पाटच्चरैस्तस्करैः ३५ ३६ ३७ गृहंस्त्रीपुरं ३८ ३९

तदैवसैनिकास्तस्यवीक्षमाणाःसमागताः दृष्ट्वामहीपतिंव्यग्रंतुष्टुवुस्तेमुदान्विताः ३३ व्यासउवाच श्रुत्वातेषांवचोरा
जानोक्ताकिंचिच्छुभाशुभं चिंतयन्स्वकृतंकर्मययावंतःपुरेततः ३४ किंमयास्वीकृतंदानंसर्वस्वंयत्समर्पितं वंचितोहंद्वि
जेनात्रवनेपाटच्चरैरिव ३५ राज्यंसोपस्करंतस्मैमयासर्वंप्रतिश्रुतं भारद्वयंसुवर्णस्यसार्धंचदक्षिणापुनः ३६ किंकरोमि
मतिर्भ्रष्टानज्ञातंकपटंमुनेः प्रतारितोहंसहसाब्राह्मणेनतपस्विना ३७ नजानेदैवकार्यंवैह्यादैवकिंभविष्यति इतिचिंता
परोराजागृहंप्राप्तोतिविह्वलः ३८ पतिंचिंतापरंदृष्ट्वाराज्ञीपप्रच्छकारणं किंप्रभोविमनाभासिकाचिंताब्रूहिसांप्रतं ३९
वनात्पुत्रःसमायातोराजसूयःकृतःपुरा कस्माच्छोचसिराजेंद्रशोकस्यकारणंवद ४० नारातिर्विद्यतेकोपिबलवान्दु
र्बलोपिवा वरुणोपिसुसंतुष्टःकृतकृत्योसिभूतले ४१ चिंतयाक्षीयतेदेहोनास्तिचिंतासमामृतिः त्यज्यतांनृपशार्दूल
स्वस्थोभवविचक्षण ४२ तन्निशम्यप्रियावाक्यंप्रीतिपूर्वंनराधिपः प्रोवाचकिंचिच्चिंतायाःकारणंचशुभाशुभं ४३
भोजनंनचकारासौचिंताविष्टस्तथानृपः सुप्त्वापिशयनेशुभ्रेलेभेनिद्रांनभूमिपः ४४ प्रातरुत्थायचिंतार्तोप्यावश्यं
ध्यादिकाःक्रियाः करोतिनृपतिस्तावद्विश्वामित्रःसमागतः ४५ क्षत्त्रानिवेदितोराज्ञेमुनिःसर्वस्वहारकः आगत्यो
वाचराजानंप्रणमंतंपुनःपुनः ४६ विश्वामित्रउवाच राजंस्त्यजस्वराज्यंमेदेहिवाचाप्रतिश्रुतं सुवर्णस्पृशराजेंद्रस
त्यवाग्भवसांप्रतं ४७ हरिश्चंद्रउ० स्वामिन्राज्यंतवेदंमेमयादत्तंकिलाधुना त्यक्त्वान्यत्रगमिष्यामिमाचिंतांकुरुकौशि
क ४८

४० ४१ ४२ शुभाशुभंयथाकथंचिदित्यर्थः ४३ ४४ विश्वामित्रोब्राह्मणवेषेनसमागतइत्यर्थः ४५ सुवर्णस्पृशदक्षिणात्वेनप्रतिज्ञातंदे
हीत्यर्थः ४६ ४७ ४८

४९ दानंददामिराज्यदानमधुनाददामिदक्षिणांतुधनप्राप्युत्तरंकालांतरेदास्यामीत्यर्थः ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७



सर्वस्वंममतेब्रह्मन्गृहीतंविधिवद्विभो सुवर्णंदक्षिणांदातुमशक्तोस्म्यधुनाद्विज ४९ दानंददामितेनाथयावन्मेस्या
द्धनागमः पुनश्चेत्कालयोगेनतदादास्यामिदक्षिणां ५० इत्युक्त्वानृपतिःप्राहपुत्रंभार्यांचमाधवीं राज्यमस्मैप्रदत्तंवैमया
वेद्यांसुविस्तरं ५१ हस्त्यश्वरथसंयुक्तंरत्नहेमसमन्वितं त्यक्त्वात्रीणिशरीराणिसर्वंचास्मैसमर्पितं ५२ त्यक्त्वायोध्यां
गमिष्यामिकुत्रचिद्विजनगव्हरे गृह्णात्विदंमुनिःसम्यक्सज्यंसर्वंसमृद्धिमत् ५३ इत्याभाष्यसुतंभार्यांहरिश्चंद्रःस्व
मंदिरात् विनिर्गतःसुधर्मात्मामानयंस्तंद्विजोत्तमं ५४ व्रजंतंभूपतिंवीक्ष्यभार्यापुत्रावुभावपि चिंतातुरौसुदीनास्यौ
जग्मतुःपृष्ठतस्तदा ५५ हाहाकारोमहानासीन्नगरेवीक्ष्यतांस्तथा चक्रुशुःप्राणिनःसर्वेसाकेतपुरवासिनः ५६
हाराजन्किंकृतकर्मकुतःक्लेशःसमागतः वंचितोसिमहाराजविधिनांपंडितेनह ५७ सर्वेवर्णास्तदादुःखमापुस्तंम
हीपतिं विलोक्यभार्ययासार्धंपुत्रेणचमहात्मनां ५८ निनिंदुर्ब्राह्मणंनंतुदुराचारंपुरौकसः धूर्तोयमितिभाषंतोदुः
खार्ताब्राह्मणादयः ५९ निर्गत्यनगरात्तस्माद्विश्वामित्रःक्षितीश्वरं गच्छंतंतमुवाचेदंसमेत्यनिष्ठुरंवचः ६० दक्षिणा
याःसुवर्णंमेदत्वागच्छनराधिप नाहंदास्यामिवाब्रूहिमयात्यक्तंसुवर्णकं ६१ राज्यंगृहाणवासर्वंलोभश्चेन्द्दृदि
वर्तते दत्तंचेन्मन्यसेराजन्देहियत्तत्प्रतिश्रुतं ६२ एवंब्रुवंतंगाधेयंहरिश्चंद्रोमहीपतिः प्रणिपत्यसुदीनात्माकृतांज
लिपुटोब्रवीत् ६३ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेएकोनविंशोऽध्यायः १९ हरिश्चंद्रउवाच आदत्वाते
हिरण्यंवैनकरिष्यामिभोजनं प्रतिज्ञामेमुनिश्रेष्ठविषादंत्यजसुव्रत १

५८ ५९ ६० ६१ ६२ ६३ इतिश्रीदे॰ सप्त॰ अध्यायः १९



अर्धाधिकैःपंचचत्वारिंशच्छ्लोकैरतःपरं दक्षिणादानयत्नश्चराज्ञाकृत इतीर्यते १ राजाविश्वामित्रब्राह्मणंप्रतिकिमुक्तवानतदाह अदत्वेति नकरिष्यामिभोजनमिति

अन्नंत्यक्त्वा फलाहारादिना कालंनेष्यामीत्यर्थः १ २ ३ किंचित्कालमिति मासपरिमितंकालमित्यर्थः अग्रेमाससमाप्तावेव ब्राह्मणस्यागमनात् ४
५ ६ ७ वदाधुनेति एवंराज्ञोक्ते मिथ्यावादीराजाजातइति वसिष्ठंजेष्यामीति ब्राह्मणाभिप्रायः ८ ९ १० ग्राहकमिति अस्यामयोध्यायां यदिकश्चि
द्ग्राहकःस्यात्तर्हि तंपश्यनोचेदहंवाराणस्यांगत्वा सर्वान्मौल्येनदत्वा दासभावंगमिष्यामितदात्वंकांचनंगृहाणाथच संतुष्टोभवेतिपिंडितोर्थः ११ भूधरेति-

सूर्यवंशसमुद्भूतःक्षत्रियोहंमहीपतिः राजसूयस्य यज्ञस्य कर्तावांछितदोनृषु २ कथंकरोमिनाकारंस्वामिन्दत्ताय
इच्छया अवश्यमेवदातव्यमृणंमेद्विजसत्तम ३ स्वस्थोभवप्रदास्यामिस्कवर्णंमनसेप्सितं कंचित्कालंप्रतीक्षस्वयाव
त्प्राप्स्यास्म्यहंधनं ४ विश्वामित्रउवाच कुतस्तेभविताराजन्धनप्राप्तिरतःपरं गतंराज्यंतथाकोशोबलंचैवार्थसा-
धनं ५ वृथाशातेमहीपालधनार्थेकिंकरोम्यहं निर्धनंत्वांचलोभेनपीडयामिकथंनृप ६ तस्मात्कथयभूपालनदास्या
मीतिसांप्रतं त्यक्त्वाशांमहतींकामंगच्छाम्यहमतःपरं ७ व्यासउवाच गच्छन्वाक्यमिदंश्रुत्वाब्राह्मणस्यनृभूपतिः
प्रत्युवाचमुनिंब्रह्मन्धैर्यंकुरुददाम्यहं ८ गच्छन्वाक्यमिदंश्रुत्वाब्राह्मणस्यनृभूपतिः प्रत्युवाचमुनिंब्रह्मन्धैर्यंकु
रुददाम्यहं ९ ममदेहोस्तिभार्यायाःपुत्रस्यचत्वनामशः क्रीत्वादेहंतुतंनूनमृणंदास्यामितेद्विज १० ग्राहकंपश्यवि
प्रेंद्रवाराणस्यांपुरिप्रभो दासभावंगमिष्यामिसदारोहंसपुत्रकः ११ गृहाणकांचनंपूर्णंसार्धभारद्वयंमुने मौल्येनद
त्वासर्वान्नःसंतुष्टोभवभूधर १२ इतिब्रुवन्जगामाथसहपत्न्यासुतान्वितः उमयाकांतयासार्धंयत्रास्तेशंकरःस्वयं
१३ तांदृष्ट्वाचपुरींरम्यांमनसोल्हादकारिणीं उवाचसकृतार्थोस्मिपुरींपश्यन्सुवर्चसं १४ ततोभागीरथींप्राप्य-
स्नात्वादेवादितर्पणं देवार्चनंचनिर्वृत्यकृतवान्दिग्विलोकनं १५

ब्राह्मणसंबोधनं १२ उमयापराशक्त्यासहितो यत्रकाश्यांशंकर
स्तिष्ठतितस्यांकाश्यांजगामेत्यर्थः १३ १४ दिग्विलोकनंकेनमार्गेणगंतव्यमितिसमंतादवलोकितवानित्यर्थः १५

नैषामनुष्यभुक्तेति यदीयंपुरीमनुष्येणभुक्तापालितास्यात्त दामामकिंचित्करंमौल्यंदत्वाकोपिनग्रहीष्यतिपरंतुनथानाकिंतुशूलपाणेः सर्वेश्वरस्यशि
वस्यपरिग्रहोस्तितेनपालितास्तिनतःसर्वेश्वरःशिवोमामकिंचित्करमपिमौल्यंदत्वाग्रहीष्यतीत्यभिप्रायेणकाश्यांजगामेतिभावः १६ १७ १८ १९ २०
पूर्णःसमासइति यस्त्वयादक्षिणादानेप्रतिज्ञातोमासोमासांतेदक्षिणांदास्यामीतिसमासःपूर्णइत्यर्थः तस्यनिमित्तंमासांतेदक्षिणांदास्यामीतिप्रतिज्ञारूपं
२१ २२ २३ २४ कुतःपुष्टानिमित्राणीति येभ्योधनंगृहीत्वास्मैब्राह्मणायदक्षिणांदास्यामितादृशानिपुष्टानिसंपन्नानिममभित्राणिअत्रकाश्यांकुतः

प्रविश्यवसुधापालोदिव्यांवाराणसींपुरीं नैषामनुष्यभुक्तेतिशूलपाणेःपरिग्रहः १६ जगामपद्भ्यांदुःखार्तःसहपत्न्यास
माकुलः पुरींप्रविश्यसनृपोविश्वासमकरोत्तदा १७ ददृशेऽथमुनिश्रेष्ठंब्राह्मणंदक्षिणार्थिनं तंदृष्ट्वासमनुप्राप्तंविनयावनतो
भवत् १८ माहचैवांजलिंकृत्वाहरिश्चंद्रोमहामुनिं इमेप्राणाःसुतश्चायंप्रियापत्नीमुनेनम १९ येननेकृत्यमस्त्याशुगृ
हाणार्घ्यंद्विजोत्तम यच्चान्यत्कार्यमस्माभिस्तन्ममाख्यातुमर्हसि २० विश्वामित्रउ॰ पूर्णःसमासोभद्रंतेदीयतांममदक्षिणा
पूर्वंतस्यनिमित्तंहिस्मर्यतेस्ववचोयदि २१ राजोवाच ब्रह्मन्नाद्यापिसंपूर्णोमासोज्ञानतपोबल तिष्ठत्येकदिनार्धंयत्तत्प्र
तीक्षस्वनापरं २२ विश्वामित्रउ॰ एवमस्तुमहाराजआगमिष्याम्यहंपुनः शापंतवप्रदास्यामिनंचेदद्यप्रयच्छसि २३
इत्युक्त्वाथययौविप्रोराजाचाचिंतयत्तदा कथमस्मैप्रयच्छामिदक्षिणायाप्रतिश्रुता २४ कुतःपुष्टानिमित्राणिकुत्रार्थः
सांप्रतंमम प्रतिग्रहःप्रदुष्टोमेतत्रयाच्ञाकथंभवेत् २५ राज्ञांवृत्तित्रयंप्रोक्तंधर्मशास्त्रेषुनिश्चितं यदिप्राणान्विमुंचामि
ह्यप्रदायचदक्षिणां २६ ब्रह्मस्वहाकृमिःपापोभविष्याम्यधमाधमः अथवाप्रेततांयास्येवरएवात्मविक्रयः २७ संतिनैवसंतीत्यर्थः

२५ प्रतिग्रहःकुतोदुष्ट इत्यत्राह राज्ञांवृत्तित्रयमिति दानाध्ययनयजनरूपंनतुतत्रप्रतिग्रहोस्तितस्मादित्यर्थः ननुद्रव्याभावेतथैवस्थीयतांयन्मुनिःकरिष्यतितत्करोतु
तिचेत्तथैवावस्थानेयदिप्राणान्विमुंचामिममभरणंस्यात्तदाब्रह्मस्वहरणात्पापात्कृमिर्भविष्याम्यथवाप्रेततांपिशाचत्वंयास्यामितदपेक्षयात्मविक्रयःकर्तव्य इदमेववरमित्याह
यदिप्राणानिति २६ २७

२८ २९ नातःपरतरमिति अश्वमेधसहस्राच्च सत्यमेकं विशिष्यते इति स्मृतेः ३० ३१ सत्यं पालनायानृतं पातनाय नरकपातनायेत्यर्थः ३२ शताश्वमेधानिति पार्थिवो ययातिर्नृपः सकृदसत्यवचनादसत्यभाषणात्स्वर्गाच्च्युतः पतित इत्यन्वयः इयं कथा पुराणेषु प्रसिद्धा ३३ वंशवृद्धिकरश्चायमिति यत्त्वं मां बोधयसि दक्षिणादेयेति तत्र मदीयत्वेन प्राणिद्वयमेवावशिष्टं पुत्रो भार्या चेति तत्र पुत्रो वंशवृद्धिकरत्वान्न देय इति शास्त्राज्ज्ञास्ति तथैव भार्या

सूत उवाच राजानं व्याकुलं दीनं चिंतयानमधोमुखं प्रत्युवाच तदा पत्नी बाष्पगद्गदया गिरा २८ त्यज चिंतां महाराज स्वधर्ममनुपालय प्रेतवद्वर्जनीयो हि नरः सत्यबहिष्कृतः २९ नातः परतरं धर्मं वदंति पुरुषस्य च यादृशं पुरुषव्याघ्र स्वसत्यस्यानुपालनं ३० अग्निहोत्रमधीतं च दानाद्याः सकलाः क्रियाः भवंति तस्य वै फल्यं वाक्यं यस्यानृतं भवेत् ३१ सत्यमत्यंतमुदितं धर्मशास्त्रेषु धीमतां तारणायानृतं तद्वत्पतनाया कृतात्मनां ३२ शताश्वमेधनाहृत्य राजसूयं च पार्थिवः कृत्वा राजा स कृत्स्वर्गादसत्यवचनाच्च्युतः ३३ राजोवाच वंशवृद्धिकरश्चायं पुत्रस्तिष्ठति बालकः उच्यतां वक्तुकामासि यद्वाक्यं गजगामिनि ३४ पत्न्युवाच राजन्माभूदसत्यं ते पुंसां पुत्रफलाः स्त्रियः तन्मां प्रदाय वित्तेन देहि विप्राय दक्षिणां ३५ सूत उवाच एतद्वाक्यमुपश्रुत्य ययौ मोहं महीपतिः प्रतिलभ्य च संज्ञां वै विललाप ति दुःखितः ३६ महद्दुःखमिदं भद्रे यत्त्वमेवं ब्रवीषि मे किं न वस्मितसंलापा मम पापस्य विस्मृताः ३७ हाहा त्वया कथं योग्यं वक्तुमेतच्छुचिस्मिते दुर्वाच्यमेतद्वचनं कथं वदसि भामिनि ३८ इत्युक्त्वा नृपतिः श्रेष्ठो न धीरो दारविक्रये निपपात महीपृष्ठे मूर्च्छयाति परिप्लुतः ३९

पि न विक्रेतव्येति ततश्च किं कर्तव्यं मया कथं वा दक्षिणा देयेत्युच्यतां त्वया तद्वाक्यं यतस्त्वं वक्तुकामासि बोधकवाक्यं वक्तुकामासि तत इत्यर्थः इत्थं संकटे किं कर्तव्यं मयेति त्वमेव वदेत्यभिप्रायः ३४ पुत्रफला इति पुत्रे जाते स्त्रीणां फलं नास्तीत्यर्थः ३५ ३६ तव स्मितसंलापाः प्रेम्णा हास्यभाषणानि किं मम विस्मृतानि भवंति यत्त्वदुक्तमेतदहं करिष्यामीति मन्यसे इत्यर्थः ३७ ७ ७

४० शरणोचितोमहास्तरणयुक्तगृहोचितः ४१ ४२ हेदैवेतिविधेःसंबोधनं ४३ ४४ ४५ अग्रेमांतभागेमेजिह्वाशुष्यतीत्यन्वयः



शयानंभुवितंदृष्ट्वामूर्च्छयापिमहीपतिं उवाचेदंसुकरुणंराजपुत्रीसुदुःखिता ४० हामहाराजकस्येदमपध्याना दुपागतं यस्त्वंनिपतितोभूमौरंकवच्छरणोचितः ४१ येनैवकोटिशोवित्तंविप्राणामपवर्जितं सएवपृथिवीनाथोभुवि स्वपितिमेपतिः ४२ हाकष्टंकिंतवानेनकृतंदैवमहीक्षिता यदिंद्रोपेंद्रतुल्योयंनीतःपापामिमांदशां ४३ इत्युक्त्वासा पिसुश्रोणिमूर्च्छितानिपपातह भर्तुर्दुःखमहाभारेणासह्येनातिपीडिता ४४ शिशुर्दृष्ट्वाक्षुधाविष्टःप्राहवाक्यं सुदुःखितः ताततातप्रदेह्यन्नंमातर्मेदेहिभोजनं ४५ क्षुन्मेबलवतीजाताजिह्वाग्रेमेतिशुष्यति इतिश्रीदेवीभा गवतेमहापुराणेसप्तमस्कंधेहरिश्चंद्रोपाख्यानेविंशोऽध्यायः २० एतस्मिन्नंतरेप्राप्तोविश्वामित्रोमहातपाः अंत केनसमःक्रुद्धोधनस्वंयाचितुंतदा १ तमालोक्यहरिश्चंद्रःपपातभुविमूर्च्छितः सवारिणातमभ्युक्ष्यराजानमिद मब्रवीत् २ उत्तिष्ठोत्तिष्ठराजेंद्रत्वांददस्वेष्टदक्षिणां ऋणंधारयतांदुःखमहन्यहनिवर्धते ३ आप्यायमानःसतदा हिमशीतेनवारिणा अवाप्यचेतनांराजाविश्वामित्रमवेक्ष्यच ४ पुनर्मोहंसमापेदेत्वथक्रोधंययौमुनिः समाश्वास्य चराजानंवाक्यमाहद्विजोत्तमः ५ विश्वामित्रउवाच दीयतांदक्षिणासामेयदिधैर्यमवेक्ष्यसे सत्येनार्कःप्रतपति सत्येतिष्ठतिमेदिनी ६ सत्येचोक्तःपरोधर्मःस्वर्गःसत्येप्रतिष्ठितः अश्वमेधसहस्रंतुसत्यंचतुलयाधृतं ७ अश्वमे धसहस्राद्धिसत्यमेकंविशिष्यते अथवाकिंममैतेनप्रोक्तेनास्तिप्रयोजनं ८ मदीयांदक्षिणांराजन्नदास्यतिभवा न्यदि अस्ताचलगतेत्वर्केशप्स्यामित्वामतोध्रुवं ९

इतिश्रीदेवीभागवततिलकेगौडपादानुसारिव्याख्यानेसप्तमस्कंधेविंशोऽध्यायः



२० सप्तविंशतिपद्यैस्तुहरिश्चंद्रेणभूभृता महाञ्छोकःकृतइतिकथानकमिहोच्यते १ इत्थंशिशुभार्याभाषणानंतरंजातंवृत्तमाह एतस्मिन्नंतरेइति २ ३ ४ ५ ६ ७ ८ ९

अवनेर्दक्षिणादानेन सत्यरक्षणे दुःखीभूत इत्यन्वयः १० ११ १२ १३ १४ १५ १६ १७ १८ यदित्वयाराज्ञामित्थंधर्मइत्यु
च्यतेतर्हि ब्राह्मणानामपिपरपीडाकरणाभाव एवधर्म इत्यर्थादुक्तमेव भवतितथाच कालवशाद्ब्राह्मणैस्त्वदुपद्रव कर्तृभिर्यथास्वधर्मस्त्यक्तस्तथात्वयाकिमितिन

इत्युक्त्वासययौविप्रोराजाचासीद्भयातुरः दुःखीभूतोवनेनिःस्वोनृशंसधनिनार्दितः १० सूतउवाच एतस्मिन्नंतरेतत्र
ब्राह्मणोवेदपारगः ब्राह्मणैर्बहुभिःसार्धंनिर्ययौस्वगृहाद्बहिः ११ ततोराज्ञीतुतंदृष्ट्वाआयांतंतापसंस्थितं उवाचवाक्यंरा
जानंधर्मार्थसहितंतदा १२ त्रयाणामपिवर्णानांपिताब्राह्मणउच्यते पितृद्रव्यंहिपुत्रेणग्रहीतव्यंनसंशयः १३ तस्माद्यंप्रा
र्थनीयोधनार्थमितिमेमतिः राजोवाच नाहंप्रतिग्रहंकांक्षेक्षत्रियोहंक्रमध्यमे १४ याचनंखलुविप्राणांक्षत्रियाणांनवि
द्यते गुरुर्हिविप्रोवर्णानांपूजनीयोस्तिसर्वदा १५ तस्माद्गुरुर्नयाच्यःस्यात्क्षत्रियाणांविशेषतः यजनाध्ययनंदानंक्ष
त्रियस्यविधीयते १६ शरणागतानामभयंप्रजानांप्रतिपालनं नचाप्येवंतुवक्तव्यंदेहीतिकृपणंवचः १७ ददामीत्येवमेदे
वित्हृदयेनिहितंवचः अर्जितंकुत्रचिद्द्रव्यंब्राह्मणायददाम्यहं १८ पत्न्युवाच कालःसमविषमकरःपरिभवसन्मान
मानदःकालः कालःकरोतिपुरुषंदातारंयाचितारंच १९ विप्रेणविदुषाराजाक्रुद्धेनातिबलीयसा राज्यान्निरस्तःसौ
रव्याच्चपश्यकालस्यचेष्टितं २० राजोवाच असिनातीक्ष्णधारेणवरंजिव्हाद्विधाकृता नतुमानंपरित्यज्यदेहिदेहीति
भाषितं २१ क्षत्रियोहंमहाभागेनयाचेकिंचिदप्यहं ददामिवाहंनित्यंहिभुजवीर्यार्जितंधनं २२ पत्न्युवाच यदितेहिम
हाराजयाचितुंनक्षमंमनः अहंतुन्यापतोदत्तादेवैरपिसवासवैः २३ अहंशास्याचयत्याचरक्ष्यान्नैवमहाद्युते मन्मौल्यं
संगृहीत्वाथगुर्वर्थःसंप्रदीयतां २४ त्यज्यत इत्यभिप्रायेणाह कालःसमविषमकरइति न्यूनाधिककरइत्यर्थः १९ तदेवोपपादयति विप्रेणेति
२० नतुमानमिति मानंक्षत्रियोस्मीत्यभिमानं यद्वामानंशास्त्ररूपंप्रमाणं भाषितंकरिष्यामीतिशेषः २१ ददामिवाहंददाम्येवाहंनतुगृह्णामीत्यर्थः २२ २३ २४

२५ नीचत्वमुपयास्यसीत्यतःपूर्वंनोचेदितिशेषः २६ ब्राह्मणार्थमेतादृशायोग्यकरणेनिंदापिनभविष्यतीत्याह नद्यूतहेतोरिति २७ इतिश्रीदेवीभागव
ततिलकेसप्तमस्कंधेएकविंशोऽध्यायः २१ चतुर्भिरधिकैःपंचाशद्भिःपद्यैस्तुभूभृता विक्रीतानिजपत्नीतिकथानकमिहोच्यते १ इत्थंस्वविक्रयेभार्ययाप्रेर्य-

एतद्वाक्यमुपश्रुत्यहरिश्चंद्रोमहीपतिः कष्टंकष्टमितिप्रोच्यविललापातिदुःखितः २५ भार्याचभूयःप्राहेदंक्रियतांव
चनंमम विप्रशापाग्निदग्धत्वान्नीचत्वमुपयास्यसि २६ नद्यूतहेतोर्नचमद्यहेतोर्नराज्यहेतोर्नचभोगहेतोः ददस्वगुर्वर्थ
मतोमयात्वंसत्यव्रतत्वंसफलंकुरुष्व २७ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेहरिश्चंद्रोपाख्यानेएकविंशोऽ
ध्यायः २१ सूतउवाच सतथानोद्यमानस्तुराजापत्न्याःपुनःपुनः प्राहभद्रेकरोम्येषविक्रयंतेसुनिर्घृणः १ नृ
शंसैरपियत्कर्तुंनशक्यंतत्करोम्यहं यदितेभ्राजतेवाणीवक्तुमीदृक्सुनिष्ठुरं २ एवमुक्त्वाततोराजागत्वानगर-
मातुरः अवतार्यतदारंगेतांभार्यांनृपसत्तमः ३ बाष्पगद्गदकंठस्तुततोवचनमब्रवीत् भोभोनागरिकाःसर्वेशृणु
ध्वंवचनंमम ४ कस्यचिद्यदिकार्यंस्याद्दास्याप्राणेष्टयामम सब्रवीतुत्वरायुक्तोयावत्त्वंधारयाम्यहं ५ तेब्रुवन्पंडि
ताःकस्त्वंपत्नींविक्रेतुमागतः राजोवाच किंमांपृच्छथकस्त्वंभोनृशंसोऽहममानुषः ६ राक्षसोवास्मिकठिनस्त
तःपापंकरोम्यहं सूतउवाच तंशब्दंसहसाश्रुत्वाकौशिकोविप्ररूपधृक् ७ वृद्धरूपंसमास्थायहरिश्चंद्रमभाषत
समर्पयस्वमेदासीमहंक्रेताधनप्रदः ८ अस्तिमेवित्तमतुलंसुकुमारीचमेप्रिया गृहकर्मनशक्नोतिकर्तुमस्मात्प्रयच्छ
मे ९ अहंगृह्णामिदासींतुकतिदास्यामितेधनं एवमुक्तेतुविप्रेणहरिश्चंद्रस्यभूपतेः १० माणोनृपःकिमकरोत्तदाह सतयेति

१ २ रंगेराजमार्गे ३ ४ यावदहंस्त्वंधनंधारयामिवदामितद्दातुंयस्यशक्तिःसब्रवीत्वित्यर्थः ५ भोकस्त्वमितिकिमापृच्छथाहंनृशंसःक्रूरोस्मी
त्यन्वयः ६ ७ ८ अस्मात्कारणादित्यर्थः ९ १० छ छ छ

राजादुःखातुरोनवदतीत्यालोच्यस्वयमेवब्राह्मणआह कर्मणश्चेति तवयोषितःकर्मणोवयोरूपशीलानांचानुरूपमित्यन्वयः ११ १२ स्त्रियोमौल्यंस्फ
वर्णस्यकोटिःपुंसस्तुस्फवर्णस्यार्बुदंदशकोटयोमौल्यमित्यर्थः १३ स्त्रियोद्वात्रिंशल्लक्षणानितुविराटपर्वणिद्रौपदीवर्णनेस्पष्टानि पुरुषस्यद्वात्रिंशल्लक्ष

विदीर्णंतुमनोदुःखान्नचैनंकिंचिदब्रवीत् विप्रउवाच कर्मणश्चवयोरूपशीलानांतवयोषितः ११ अनुरूपमिदंवित्तंगृ
हाणार्पयमेबलाम् धर्मशास्त्रेषुयद्दृष्टंस्त्रियोमौल्यंनरस्यच १२ द्वात्रिंशल्लक्षणोपेतादक्षाशीलगुणान्विता कोटिमौल्यंस्फ
वर्णस्यस्त्रियःपुंसस्तथार्बुदं १३ इत्याकर्ण्यवचस्तस्यहरिश्चंद्रोमहीपतिः दुःखेनमहताविष्टोनचैनंकिंचिदब्रवीत् १४
ततःसविप्रोनृपतेःपुरतोवल्कलोपरि धनंनिधायकेशेषुधृत्वाराज्ञीमकर्षयत् १५ राज्युवाच मुंचमुंचार्यमांसाधो याव
त्पश्याम्यहंसुतं दुर्लभंदर्शनंविप्रपुनरस्यभविष्यति १६ पश्येहपुत्रमामेवंमातरंदास्यतांगतां मांमास्प्राक्षीराजपु
त्रनस्पृश्याहंत्वयाधुना १७ ततःसबालःसहसाहस्त्वाकृष्टांतुमातरं समभ्यधावदंबेतिवदन्साश्रुविलोचनः १८ ह
स्तेवस्त्रंसमाकर्षन्काकपक्षधरःस्खलन् तमागतंद्विजःक्रोधाद्बालमभ्याहनत्तदा १९ वदंस्तथापिसोंबेतिनैवमुंच
तिमातरं राज्युवाच प्रसादंकुरुमेनाथक्रीणीष्वेमंहिबालकं २० क्रीतापिनाहंभविताविनैनंकार्यसाधिका इत्थंममा
ल्पभाग्यायाःप्रसादंकुरुमेप्रभो २१ ब्राह्मणउवाच गृह्यतांवित्तमेतत्तेदीयतांममबालकः स्त्रीपुंसोर्धर्मशास्त्रज्ञैः
कृतमेवहिवेतनं २२ शतंसहस्रंलक्षंचकोटिमौल्यंतथापरैः द्वात्रिंशल्लक्षणोपेतादक्षाशीलगुणान्विता २३ कोटिमौल्यं
स्त्रियःप्रोक्तंपुरुषस्यतथार्बुदं सूतउवाच तथैवतस्यतद्वित्तंपुरःक्षिप्तंपटेपुनः २४ णानितुकाशीखंडे११ध्यायेस्पष्टानि १४ १५

१६ राज्ञीपुत्रंवदति पश्येहेति मांमास्प्राक्षीःस्पर्शंमाकार्षीरित्यर्थः अहमधुनादास्यतांगतात्वयाराजपुत्रेणनस्पृश्याभवामीत्यर्थः १७ १८ काकपक्षधरःक
र्णद्वयोपरिचूडाकाकपक्षः २१ २२ शतंसहस्रमितिगुणतारतम्येनमौल्यतारतम्यं २३ २४ छ छ छ

२५ २६ २७ २८ वियुक्तेति वृक्षस्यच्छायाजडापिवृक्षंनजहातिनथासतिनद्वितीयंनित्यसंयुक्तामममकथमद्यमयावियुक्ताजातेत्यर्थः २९ परस्परं



प्रगृह्यबालकंमात्रासहैकस्थमबंधयत् प्रतस्थेसगृहंक्षिप्रंतयासहमुदान्वितः २५ प्रदक्षिणांतुसाकृत्वाराजा
नुभ्यांप्रणतास्थिता बाष्पपर्याकुलादीनाविदंवचनमब्रवीत् २६ यदिदत्तंयदिहुतंब्राह्मणास्तर्पितायदि तेनपु
ण्येनमेभर्ताहरिश्चंद्रोस्तुवैपुनः २७ पादयोःपतितांदृष्ट्वाप्राणेभ्योपिगरीयसीं हाहेतिचवदन्राजाविललापाकुलें
द्रियः २८ वियुक्तेयंकथंजातासत्यशीलगुणान्विता वृक्षच्छायापिवृक्षंतंनजहातिकदाचन २९ एवंभार्यांवदि
त्वाथसत्संबंद्धंपरस्परं पुत्रंचतमुवाचेदंमांत्वंहित्वाकयास्यसि ३० कांदिशंप्रतियास्यामिकोमेदुःखंनिवारयेत्
राज्यत्यागेनमेदुःखंवनवासेनमेद्विज ३१ यत्पुत्रेणवियोगोमेएवमाहसभूपतिः सद्भर्तृभोग्याहिसदालोकेभा
र्याभवंतिहि ३२ मयात्यक्तासिकल्याणिदुःखेनविनियोजिता इक्ष्वाकुवंशसंभूतंसर्वराज्यसुखोचितं ३३
मामीदृशंपतिंप्राप्यदासीभावंगताह्यसि ईदृशेमज्जमानंमांसुमहच्छोकसागरे ३४ कोमामुद्धरतेदेवीपौरा
णाख्यानविस्तरैः सूतउवाच पश्यतस्तस्यराजर्षेःकशाघातैःसुदारुणैः ३५ घातयित्वातुविप्रेशोनेतुंस
मुपचक्रमे नीयमानौतुतौदृष्ट्वाभार्यापुत्रौसपार्थिवः ३६ विललापातिदुःखार्तोनिश्वस्योष्णंपुनःपुनः यांनवा
युर्नवादित्योनचंद्रोनपृथग्जनाः ३७ दृष्टवंतःपुरापत्नींसेयंदासीत्वमागता सूर्यवंशप्रसूतोयंसुकुमारकरांगु
लिः ३८ संप्राप्तोविक्रयंबालोधिङ्मामस्तुसुदुर्मतिं हाप्रियेहाशिशोवत्समममानार्यस्यदुर्नयः ३९ दैवाधीन
दशांप्राप्तोनमृतोस्मितथापिधिक् सूतउ॰ एवंविलपतोराज्ञोग्रेविप्रोंतरधीयत ४० मात्रासंबंधंपुत्रमप्याह एवंभार्यांवदित्वेति

३० पुत्रमुक्त्वाब्राह्मणंवदतिकांदिशामिति ३१ पुनर्भार्यांवदति सद्भर्तृभोग्याइति ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४०

४१ अत्रांतरेविश्वामित्रेणागत्य दृष्टंपुत्रभार्याविक्रयेणराज्य दानदक्षिणात्वनेनराज्ञासंपादितातत:परंकेनोपायेनेमंराजानंधर्मात्प्रच्युतंकरिष्यामीति
विमृश्ययदष्टमाध्यायांतेप्रथमंराज्ञोक्तं धनेच्छायदितेब्रह्मन्यज्ञार्थंद्विजसत्तम आगंतव्यमयोध्यायांदास्यामिविपुलंधनमितितद्वाक्यंस्मृत्वातांयज्ञस्यदक्षि
णांराज्ञाप्रतिज्ञातांविश्वामित्रोयाचते यात्वयोक्तेति तत्रयद्यपिराज्ञाराजसूयेतिनामनगृहीतंकिंतुसामान्ययज्ञस्यतथापिराजसूययज्ञस्यैवदक्षिणांग्रही
ष्यामिसएवममाभिमतोनोचेत्सत्यंत्यजेतिब्राह्मणाभिमान: ४२ पुत्रभार्याविक्रयेणसार्द्धहेमभारद्वयाधिकंधनंयल्लब्धंतत्पुरस्कृत्यराजोवाच गृ

वृक्षगेहादिभिस्तुंगैस्तावादायत्वरान्वित: अत्रांतरेमुनिश्रेष्ठस्त्वाजगाममहातपा: ४१ सशिष्य:कौशिकेंद्रोसौ
निष्ठुर:क्रूरदर्शन: विश्वामित्रउवाच यात्वयोक्तापुराराजन्राजसूयस्यदक्षिणा ४२ तांददस्वमहाबाहोयदिसत्यं
पुरस्कृतं हरिश्चंद्रउवाच नमस्करोमिराजर्षेगृहाणेमांस्वदक्षिणां ४३ राजसूयस्ययागस्ययामयोक्तापुरानघ
विश्वामित्रउवाच कुतोलब्धमिदंद्रव्यंदक्षिणार्थंप्रदीयते ४४ एतदाचक्ष्वराजेंद्रयथाद्रव्यंत्वयार्जितं राजोवाच
किमनेनमहाभागकथितेनतवानघ ४५ शोकस्तुवर्धतेविप्रश्रुतेनानेनसुव्रत ऋषिरुवाच अशस्तंनैवगृ
ण्हामिशस्तमेवप्रयच्छमे ४६ द्रव्यस्यागमनंराजन्कथयस्वयथातथं राजोवाच मयादेवीसुताभार्याविक्रीताकोटिसम्मितै: ४७ निष्कै:पुत्रोरोहितारव्योविक्रीतोर्बुदसंख्यया विप्रेकादशकोट्यस्त्वंसुवर्णस्यगृहाणमे ४८ सूतउ० तद्वित्तंसल्पमालक्ष्यदारविक्रयसंभवं शोकाभिभूतंराजानंकुपित:कौशिकोब्रवीत् ४९ ऋषिरुवाच रा
जसूयस्ययज्ञस्यनैषाभवतिदक्षिणा अन्यदुत्पादयक्षिप्रंसंपूर्णायेनसाभवेत् ५० क्षत्रबंधोममेमांत्वंसदृशीयंदिद
क्षिणां मन्यसेतर्हितत्क्षिप्रंपश्यत्वंमेपरंबलं ५१

हाणेमांदक्षिणामिति अस्मिंद्रव्येराज्यदानदक्षिणांसार्द्धभारद्वयपरिमितांगृहाणावशिष्टं
द्रव्यंयज्ञस्यदक्षिणांगृहाणेत्यर्थ: ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ममयथाज्ञानंतपोबलंवर्ततेतथात्वंप्रथमंपश्यपश्चादुत्तमपात्रयो

ग्यांयज्ञदक्षिणांदेहिनेदृशीमत्यांदरिद्रकर्तृकयज्ञयोग्यांदक्षिणांग्रहीष्यामीत्यभिप्रायेणब्राह्मणआह क्षत्रबंधोइति ५१ ५२ ५३ नोत्तरमित्युत्तरं मर्यादानकर्तव्येत्यर्थः ५४ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेद्वाविंशोऽध्यायः २२ अष्टात्रिंशन्महाश्लोकेहरिश्चंद्रोहिभूपतिः चांडालेनक्रयक्री तइतिसम्यग्यथोच्यते १ तदादायेति राज्यदानदक्षिणाभूतंसार्द्धहेमभारद्वयपरिमितंधनंगृहीत्वाययावित्यन्वयः १ २ मयाप्रेतेनशवभूतेनातिपापि



तपसोस्यस्कृतमस्यब्राह्मणस्यामलस्यच मत्प्रभावस्यचोग्रस्यशुद्धस्याध्ययनस्यच ५२ राजोवाच अन्यद्दास्यामि भगवन्कालःकश्चित्प्रतीक्ष्यतां अधुनैवास्तिविक्रीतापत्नीपुत्रश्चबालकः ५३ विश्वामित्रउवाच चतुर्भागःस्थितोयोयंदि वसस्यनराधिप एषएवप्रतीक्ष्योमेवक्तव्यंनोत्तरंत्वया ५४ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेद्वाविंशोऽध्यायः २२ व्यासउवाच तमेवमुक्त्वाराजानंनिर्घृणंनिष्ठुरंवचः तदादायधनंपूर्णंकुपितःकौशिकोययौ १ विश्वामित्रेगते राजाततःशोकमुपागतः श्वासोच्छ्वासंमुहुःकृत्वाप्रोवाचोच्चैरधोमुखः २ वित्तक्रीतेनयस्यार्तिर्मयाप्रेतेनगच्छति सब्रवीतुत्वराद्युक्तोयामेतिष्ठतिभास्करे ३ अथाजगामत्वरितोधर्मश्चांडालरूपधृक् दुर्गंधोविकृतोरूक्षःश्मश्रुलोदं तुरोघृणी ४ कृष्णोलंबोदरःस्निग्धःकरालःपुरुषाधमः हस्तजर्जरयष्टिश्चशवमाल्यैरलंकृतः ५ चांडालउ॰ अहंगृण्हामिदासत्वेभृत्यार्थःस्नुमहान्मम क्षिप्रमाचक्ष्वमोल्यंकिमेतत्तेसंप्रदीयते ६ व्यासउवाच तंतादृशमुग्रा लक्ष्यक्रूरदृष्टिस्तुनिर्घृणं वदंतमतिदुःशीलंकस्त्वमित्याहपार्थिवः ७ चांडालउवाच चांडालोहमिहख्यातःप्रवीरेति नृपोत्तम शासनेसर्वदातिष्ठमृतचैलापहारकः ८

नावित्तक्रीतेनयस्यार्तिःपीडागच्छतिमयाक्रीतेनयस्योपकारोभवतिसपुरुषस्त्वरायु क्तोममम्मोल्यंब्रवीतु चतुर्थेयामेद्यापिभास्करस्तिष्ठतिनततोभास्करास्तानंतरंममद्रव्यस्योपयोगाभावइतिभावः ३ धर्मइति हरिश्चंद्रपरीक्षार्थंचांडालरूपेण धर्मोप्यागतइत्यर्थः ४ ५ भृत्यार्थोभृत्यप्रयोजनंममसिद्धंभवतीत्यर्थः ६ ७ प्रवीरेतिनाम्नाविख्यातः ८ ७ ७

९ उत्तमस्येति तवाधमस्यगृहेममोत्तमस्यधर्मोनचलिष्यतीत्यर्थः १० एवमेवेति यद्येवंतवमनसिवर्ततेतर्हियोवाकोवामांगृण्हात्विति सामान्य-
तःकिमित्यसत्यमुक्तंब्राह्मणएवमांगृण्हात्विति किमितिनत्वयोक्तंतस्मादेवमेवासत्यभाषणरूपएवाधर्मस्त्वयाकथितःकिमित्यर्थः ममाग्रतोविचार्यवि-

एवमुक्तस्तदाराजावचनंचेदमब्रवीत् ब्राह्मणःक्षत्रियोवापिगृण्हात्वितिमतिर्मम ९ उत्तमस्योत्तमोधर्मोमध्यम
स्यचमध्यमः अधमस्याधमश्चैवइतिप्राहुर्मनीषिणः १० चांडालउवाच एवमेवत्वयाधर्मःकथितोनृपसत्तम अविचा
र्यत्वयाराजन्नधुनोक्तंममाग्रतः ११ विचारयित्वायोब्रूतेसोभीष्टंलभतेनरः सामान्यमेवतस्योक्तमविचार्यत्वयानघ १२
यदिसत्यंप्रमाणंतेगृहीतोसिनसंशयः हरिश्चंद्रउवाच असत्यान्नरकेगच्छेत्सद्यःक्रूरेनराधमः १३ ततश्चांडालता
साध्वीनवरामेत्यसत्यता व्यासउवाच तस्यैवंवदतःप्राप्तोविश्वामित्रस्तपोनिधिः १४ क्रोधामर्षविवृत्ताक्षःप्राहचे
दंनराधिपं चांडालोयमनुस्थंतेदातुंवित्तमुपस्थितः १५ कस्मान्नदीयतेमह्यमशेषायज्ञदक्षिणा राजोवाच भ
गवन्सूर्यवंशोत्थमात्मानंवेद्मिकौशिक १६ कथंचांडालदासत्वंगमिष्येवित्तकामतः विश्वामित्रउवाच यदिचांडाल
वित्तंत्वमात्मविक्रयजंमम १७ नप्रदास्यसिचेत्तर्हिशप्स्यामित्वामसंशयं चांडालादथवाविप्राद्देहिमेदक्षिणाधनं
१८ विनाचांडालमधुनानान्यःकश्चिद्धनप्रदः धननाहंविनाराजन्नयास्यामिनसंशयः १९ इदानीमेवमेवित्तंन
प्रदास्यसिचेन्नृप दिनेघर्घटिकाशेषेतत्त्वांशापाग्निनादहे २० व्यासउवाच हरिश्चंद्रस्ततोराजामृतवच्छ्रितजीवि
तः प्रसीदेतिवदन्पादौऋषेर्जग्राहविह्वलः २१

चारमकृत्वैवकिमधुनोक्तंत्वयेत्यर्थः ११ १२ यदिसत्यमिति यदिसत्यं
प्रमाणंभवतितर्हिमयापूर्ववाक्येनैवत्वंगृहीतोसिनोचेत्सत्यंजहीत्यर्थः १३ १४ १५ १६ १७ १८ १९ २०
मृतवच्छ्रितजीवितःअर्धमृतवदाश्रितजीवनः २१ ७ ७ ७

२२ २३ २४ २५ २६ इत्थंविश्वामित्रेणराजाविक्रीतस्ततोविश्वामित्रएवस्वदासंहरिश्चंद्रंद्रव्यंगृहीत्वाचांडालायार्पयतितदानत्रराज्ञो
नकश्चिदुपायआसीदित्याह चांडालागच्छेति २७ २८ २९ ३० ३१ निर्विकारसुखइति ब्राह्मणोममस्वामीभवतिसयथाप्रेरयति

हरिश्चंद्रउवाच दासोस्म्यार्तोस्मिदीनोस्मित्वद्भक्तश्चविशेषतः प्रसादंकुरुविप्रर्षेकष्टश्चांडालसंकरः २२ भवे
यंवित्तशेषेणतवकर्मकरोवशः तवैवमुनिशार्दूलप्रेष्यश्चित्तानुवर्तकः २३ विश्वामित्रउवाच एवमस्तुमहाराजम
मैवभवकिंकरः किंतुमद्वचनंकार्यंसर्वंदेवनराधिप २४ व्यासउवाच एवमुक्तेथवचनेराजाहर्षसमन्वितः अम-
न्यतपुनर्जातमात्मानंप्राहकौशिकं २५ तवादेशंकरिष्यामिसदैवाहंनसंशयः आदेशयद्विजश्रेष्ठकिंकरोमितवा
नघ २६ विश्वामित्रउवाच चांडालगच्छमद्दासंमौल्यंकिंमेप्रयच्छसि गृहाणदासंमौल्येनमयादत्तंतवाधुना २७
नास्तिदासेनमेकार्यंवित्ताशावर्त्ततेमम व्यासउवाच एवमुक्तेनदातेनश्वपचोत्हृष्टमानसः २८ आगत्यसन्नि
धौतूर्णंविश्वामित्रमभाषत चांडालउवाच दशयोजनविस्तीर्णेप्रयागस्यचमंडले २९भूमिंरत्नमयींकृत्वादास्यते
हंद्विजोत्तम अस्यविक्रयपणेनेयमार्तिश्चमहतात्वया ३० व्यासउवाच ततोरत्नसहस्राणिसुवर्णमणिमौक्तिकैः
चांडालेनप्रदत्तानिजग्राहद्विजसत्तमः ३१ हरिश्चंद्रस्तथाराजानिर्विकारसुखोभवत् अमन्यततथाधैर्याद्विश्वा
मित्रोहिमेपतिः ३२ तत्तदेवमयाकार्यंयदयंकारयिष्यति अथांतरिक्षेसहसावागुवाचाशरीरिणी ३३ अनृणो-
सिमहाभागदत्तासादक्षिणात्वया ततोदिवःपुष्पवृष्टिःपपातनृपमूर्धनि ३४ साधुसाध्वितितंदेवाःप्रोचुःसेंद्राम
होजसः हर्षेणमहताविष्टोराजाकौशिकमब्रवीत् ३५

तथाकरोमिनपुनर्धर्मपालनेममस्वातंत्र्यमस्तीत्यभिप्रायेणेत्यर्थः ३२
हेमहाभागहरिश्चंद्रत्वमनृणोजातोसीत्यन्वयः ३३ ३४ ३५

३६ ३७ तदादायेति चांडालेनदत्तंधनंगृहीत्वाहरिश्चंद्रंतस्यहस्तेदत्त्वाययाविल्यर्थः ३८ इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेत्रयोविं

राजोवाच त्वंहिमातापितान्चैवत्वंहिबंधुर्महामते यदर्थंमोचितोहंतेक्षणाच्चैवानृणीकृतः ३६ किंकरोमिमहाबा
होश्रेयोमेवचनंतव एवमुक्तेतुवचनेनृपेमुनिरभाषत ३७ विश्वामित्रउवाच चांडालवचनंकार्यमद्यप्रभृतितेनृ
प स्वस्तितेस्त्वितितंप्रोच्यतदादायधनंययौ ३८ इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेहरिश्चंद्रोपाख्यानेत्रयो
विंशोऽध्यायः २३ शौनकउवाच ततःकिमकरोद्राजाचांडालस्यगृहेगतः तद्ब्रूहिसूतवर्यत्वंपृच्छतःसत्वरंहिमे १
सूतउवाच विश्वामित्रेगतेविप्रेश्वपचोहृष्टमानसः विश्वामित्रायतद्द्रव्यंदत्त्वाबद्ध्वानरेश्वरं २ असत्योयास्यसी
त्युक्त्वादंडेनाताडयत्तदा दंडप्रहारसंभ्रांतमतीवव्याकुलेंद्रियं ३ इष्टबंधुवियोगार्तमानीयनिजपक्कणे निगडे
स्थापयित्वातंस्वयंसुष्वापविज्वरः ४ निगडस्थस्ततोराजावसंश्चांडालपक्कणे अन्नपानपरित्यज्यसदावैतदशो
चयत् ५ तन्वीदीनमुखीदृष्ट्वाबालंदीनमुखंपुरः मांस्मरत्यसुखाविष्टामोक्षयिष्यतिनोनृपः ६ उपात्तवित्तोवि
प्रायदत्त्वाविप्रंप्रतिश्रुतं रोदमानंसुतंवीक्ष्यमांचसंबोधयिष्यति ७ तातपार्श्वंव्रजामीतिरुदंतंबालकंपुनः तात
तातेतिभाषंतंतथासंबोधयिष्यति ८ नसामांमृगशावाक्षीवेत्तिचांडालतांगतं राज्यनाशःसुहृत्त्यागोभार्या
तनयविक्रयः ९ ततश्चांडालताचेयमहोदुःखपरंपरा एवंसनिवसंनित्यंस्मरंश्चदयितांसुतं १० निनायदि
वसान्राजाचतुरोविधिपीडितः अथान्हिपंचमेतेननिगडान्मोचितोनृपः ११ चांडालेनानुशिष्टश्चमृतचेलाप-
हारणे क्रुद्धेनपरुषैर्वाक्यैर्निर्भर्त्स्यचपुनःपुनः १२

शोऽध्यायः२३ त्रयस्त्रिंशन्महापद्येश्चांडालगृहवर्तनं तदनुज्ञानकारित्वंहरिश्चंद्र
स्यवर्ण्यते १ चांडालाधीनतांप्राप्तस्यहरिश्चंद्रस्यवृत्तमाह ततःकिमकरोदिति १ २ ३ पक्कणेस्थाने ४ ५ शोकमेवाह तन्वीति बालंदृष्ट्वेत्यन्वयः ६ ७ ८
९ १० ११ १२

५९ भूमिदानहरणात्पापादित्यर्थः अंबुवाचीभूकरणेति अंबुवाचीपूर्वोक्तलक्षणारजस्वलाभूः पृथिवीतस्याः करणात्खननादित्यर्थः ६०

कोटिजन्मसुसंभवेद्बलवान्भूमिपेश्वरः भूमिदानकृतंपुण्यंलभ्यतेपठनाज्जनैः ५९ भूमिदानहरात्पापान्मुच्यतेनात्रसंशयः अंबुवाचीभूकरणपापात्समुच्यतेध्रुवं ६० अन्यकूपेकूपखननपापात्समुच्यतेध्रुवं परभूमिहरात्पापान्मुच्यतेनात्रसंशयः ६१ भूमौवीर्यत्यागपापाद्भूमौदीपादिस्थापनात् पापेनमुच्यतेसोपिस्तोत्रस्यपठनान्मुने ६२ अश्वमेधशतंपुण्यंलभतेनात्रसंशयः भूमिदेव्यामहास्तोत्रंसर्वकल्याणकारकं ६३ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेनवमोध्यायः ९ नारदउवाच भूमिदानंकृतंपुण्यंपापंतद्धरणेनच परभूहरणात्पापंकूपेकूपखननेतथा १ अंबुवाच्यांभूखननेवीर्यस्यत्यागएवच दीपादिस्थापनात्पापंश्रोतुमिच्छामियत्नतः २ अन्यद्वापृथिवीजन्यंपापंयत्पृच्छतेपरं यदस्तितत्प्रतीकारंवदवेदविदांवर ३ श्रीनारायणउवाच वितस्तिमात्रंभूमिंचयोददातिचभारते संध्यापूतायविप्रायसयातिशिवमंदिरं ४ भूमिंचसर्वसस्याढ्यांब्राह्मणायददातिच भूमिरेणुप्रमाणाब्दंमंतेविष्णुपदेस्थितिः ५ ग्रामंभूमिंचधान्यंचब्राह्मणायददातियः सर्वपापाद्विनिर्मुक्तौचोभौदेवीपुरस्थितौ ६ भूमिदानंचतत्कालेयःसाधुश्चानुमोदते सचप्रयातिवैकुंठेमित्रगोत्रसमन्वितः ७ स्वदत्तांपरदत्तांवाब्रह्मवृत्तिंहरेत्तुयः सतिष्ठतिकालसूत्रेयावच्चंद्रदिवाकरौ ८

अन्यकूपेइति अन्येनयत्कृतेनिर्जलेकूपेतस्याज्ञांविनातस्यकूपस्यखननजन्यात्पापादित्यर्थः ६१ ६२ ६३ इतिश्रीदेवीभागवततिलकेनवमस्कंधेनवमोध्यायः ९ त्रिंशत्तमेध्यायेधरादेव्याअपराधेकृतेसति नरकादिफलप्राप्तिर्जायतेनेचेतिकथ्यते १ भूमिदानेति १ २ पापफलंतत्प्रतीकारंचवदेत्यर्थः ३ ४ ५ उभौदातृप्रतिगृहीतारौदेवीपुरस्थितौदेवीलोकवासिनौभवतइत्यर्थः ६ ७ वृत्तिंवेतनं ८ ६२ ६२

९ गवांमार्गेविनिष्कृष्येति धर्मशास्त्रेग्रामाद्बहिर्गोप्रचारदेशंविहायसस्यक्षेत्रंकर्तव्यमितिनियमस्तत्रयः पुरुषस्तंगवांमार्गेगोप्रचारदेशंविनिष्कृष्य-
गृहीत्वातस्मिन्देशेसस्यंकृत्वातत्सस्यंधान्यंक्षेत्रंब्राह्मणायददातीत्यर्थः १० गोष्ठंतडागमिति यत्रदेशेगावोवर्षातपादिनिवृत्यर्थंवर्षातपादि-
बाधारहितेदेशेतिष्ठंतिसदेशोगोष्ठं तंदेशंतथातडागंचनिष्कृष्याकृष्योपमृद्यतस्मिन्मार्गेस्थानेसस्यंकृत्वाददातीत्यर्थः ११ पंचपिंडानुद्धृत्ति

तत्पुत्रपौत्रप्रभृतिर्भूमिहीनःश्रियाहतः पुत्रहीनोदरिद्रश्चघोरंयातिचरौरवं ९ गवांमार्गेविनिष्कृष्ययश्चसस्यं
ददातिच दिव्यंवर्षशतंचैवकुंभीपाकेचतिष्ठति १० गोष्ठंतडागंनिष्कृष्यमार्गेसस्यंददातियः सचतिष्ठत्यसि
पत्रेयावदिंद्राश्चतुर्दश ११ पंचपिंडाननुद्धृत्यपरकूपेचस्नातियः प्राप्नोतिनरकंचैवस्नानंनिष्फलमेवच
१२ कामीभूमौचरहसिवीर्यत्यागंकरोतियः भूमिरेणुप्रमाणंचवर्षंतिष्ठतिरौरवे १३ अंबुवाच्यांभूकरणं
यःकरोतिचमानवः सयातिकृमिदंशंचस्थितिस्तत्रचतुर्युगं १४ परकीयेलुप्तकूपेकूपंमूढःकरोतियः पुष्क
रिण्यांचलुप्तायांपुष्करिणींददातियः १५ सर्वफलंपरस्यैवतप्तकुंडंव्रजेच्चसः तत्रतिष्ठतिसंतप्तोयावदिंद्राश्च
तुर्दश १६ परकीयेतडागेचपंकमुद्धृत्यचोन्मृजेत् रेणुप्रमाणवर्षंचब्रह्मलोकेवसेन्नरः १७ पिंडंपित्रे
भूमिभर्तुर्नप्रदायचमानवः श्राद्धंकरोतियोमूढोनरकंयातिनिश्चितं १८

कायाःपरकूपेइदमुपलक्षणंतडागादेः १२
वर्षमितिजात्यैकवचनंवर्षाणीत्यर्थः १३ अंबुवाचीपूर्वोक्तलक्षणारजस्वलापृथिवीतस्यांभूकरणाद्भूखननादित्यर्थः १४ कूपंमूढइति तत्कूपस्वामिन
आज्ञांविनेत्यर्थः तदाज्ञयाकरणेतुजीर्णोद्धारफलस्यसत्वान्नदोषः तथैवलुप्तायांपुष्करिण्यांतत्स्वामिनआज्ञांविनापुष्करिणींकृत्वेत्यर्थः तदा-
ज्ञयाकरणेतुपुण्यमेव १५ १६ पंकमुद्धृत्योन्मृजेत्स्नायात् १७ पिंडंपित्रेइति पिंडमित्युपलक्षणंकिंचिद्द्रव्यंयथासंभवंभूमिभर्तरिजीवतितत्पित्रादेस्त-
स्मिन्मृतेसतितत्सहितस्यश्राद्धोद्देशेनब्राह्मणायनप्रदायश्राद्धंकरोतीत्यर्थः इदंयन्मौल्येनगृहंनगृहीतंतद्विषयमौल्येनगृहीतेतुनतत्रतदुद्देशेनतद्देयमिति १८

१९ मणिंमाणिक्यादिकं २० शिवांदेवीमूर्तिं अर्चांशालग्रामं २१ शंखादीनां पुनरुपादानमतिनिषिद्धत्वावबोधनार्थः २२ २३ २४ २५ सर्व
वर्णकैः सर्ववर्णैः पूज्यंनकेनाप्यवमानःकर्तव्यइतिप्रसंगादुक्तं यद्वा यतःपूज्यंनतोभूमौयःस्थापयेदितिपूर्वेणान्वयः २६ २७ २८ भूम्यादि



भूमौदीपंयोर्पयतिसचांधःसप्तजन्मसु भूमौशंखंचसंस्थाप्यकुष्ठंजन्मांतरेलभेत् १९ मुक्तंमाणिक्यहीरौंचस्व
वर्णंचमणिंतथा पंचसंस्थापयेद्भूमौसचांधःसप्तजन्मसु २० शिवलिंगंशिवामर्चांयश्चार्पयतिभूतले शतम-
न्वंतरंयावत्कृमिभक्षस्सतिष्ठति २१ शंखंयंत्रंशिलातोयंपुष्पंचतुलसीदलं यश्चार्पयतिभूमौचसतिष्ठेन्नर
कंध्रुवं २२ जपमालांपुष्पमालांकर्पूरंरोचनं तथा योमूढश्चार्पयेद्भूमौसयातिनरकंध्रुवं २३ भूमौचंदनका-
ष्ठंचरुद्राक्षंकुशमूलकं संस्थाप्यभूमौनरकेवसेन्मन्वंतरावधि २४ पुस्तकंयज्ञसूत्रंचभूमौसंस्थापयेन्नरः न
भवेद्विप्रयोनौचतस्यजन्मांतरेजनिः २५ ब्रह्महत्यासमंपापमिहवैलभतेध्रुवं ग्रंथियुक्तंयज्ञसूत्रंपूज्यंचसर्व
वर्णकैः २६ यज्ञंकृत्वातुयोभूमिंक्षीरेणनहिसिंचति सयातितप्तभूमिंचसंतप्तःसप्तजन्मसु २७ भूकंपेग्र
हणेयोहिकरोतिखननंभुवः जन्मांतरेमहापापोह्यंगहीनोभवेद्ध्रुवं २८ भवनंयत्रसर्वेषांभूमिस्तेनप्रकीर्तिता
काश्यपीकश्यपस्येयमचलास्थिररूपतः २९ विश्वंभराधारणाच्चानंतानंतस्वरूपतः पृथिवीपृथुकन्यात्वाद्वि
स्तृतत्वान्महामुने ३० इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेदशमोध्यायः १० नारदउवाच श्रु
तंपृथिव्युपाख्यानमतीवसुमनोहरं गंगोपाख्यानमधुनावदवेदविदांवर १ पदानांनिरुक्तिमाह भवनमिति पृथोराज्ञःक-
न्यात्वाद्विस्तृतत्वाद्वापृथिवीत्यर्थःपृषोदरादित्वात्साधुत्वं २९ ३० इतिश्रीदेवीभागवततिलकेनवमस्कंधेदशमोध्यायः १० पंचसप्ततिपद्यैस्तुगंगोत्पत्तिः
समुच्यते यस्यास्तुश्रवणेनैवचित्तशुद्धोभवेन्नरः १ पृथिव्युपाख्यानानंतरंगंगोपाख्यानंपृच्छति नारदउवाच श्रुतंपृथिव्युपाख्यानमिति १

वानात्रसंशयः त्वदंशाश्चैवशाक्ताश्चसत्यंवैगिरिनंदिनीति ५२ ५३ तद्गुणकीर्तनंमूलप्रकृतिगुणकीर्तनमित्यर्थः ५४ देवीलोकेमणिद्वीपे तृती
यस्कंधोक्ते ५५ ५६ ५७ कायव्यूहमनेकंदेहं ५८ ५९ ६० पूर्वत्रनामस्मृतिर्यथाकथंचित् द्वितीयवचने तुभक्तिपूर्विकाततोवि

तत्रैवत्वमधिष्ठानंकरिष्यत्यघमोचनं सार्द्धसरिद्भिःश्रेष्ठाभिःसरस्वत्यादिभिःशुभे ५३ तत्तुतीर्थंभवेत्सद्यो
यत्रतद्गुणकीर्तनं त्वद्रेणुस्पर्शमात्रेणपूतोभवतिपातकी ५४ रेणुप्रमाणवर्षंचदेवीलोकेवसेद्ध्रुवं ज्ञानेनत्व
यियेभक्त्यामन्नामस्मृतिपूर्वकं ५५ समुत्सृजंतिप्राणांश्चतेगच्छंतिहरेःपदं पार्षदप्रवरास्तेचभविष्यंतिहरेश्चि
रं ५६ लयंप्राकृतिकंतेचद्रक्ष्यंतिचाप्यसंख्यकं मृतस्यबहुपुण्येनतच्छवंत्वयिविन्यसेत् ५७ प्रयातिसत्त्ववै
कुंठंयावदन्हःस्थितिस्त्वयि कायव्यूहंततःकृत्वाभोजयित्वास्वकर्मकं ५८ तस्मैददामिसारूप्यंकरोमितंच
पार्षदं अज्ञानीत्वज्जलस्पर्शाद्यदिप्राणान्समुत्सृजेत् ५९ तस्मैददामिसालोक्यंकरोमितंचपार्षदं अन्यत्र
वात्यजेत्प्राणांस्त्वन्नामस्मृतिपूर्वकं ६० तस्मैददामिसालोक्यंयावद्वैब्रह्मणोवयः अन्यत्रवात्यजेत्प्राणां
स्त्वन्नामस्मृतिपूर्वकं ६१ तस्मैददामिसारूप्यमसंख्यंप्राकृतंलयं रत्नेंद्रसारनिर्माणयानेनसहपार्षदैः ६२
सद्यःप्रयातिगोलोकंममतुल्योभवेद्ध्रुवं तीर्थेष्यतीर्थेमरणेविशेषोनास्तिकश्चन ६३ मन्मंत्रोपासकानांच
नित्यंनैवेद्यभोजिनां पूतंकर्तुंसशक्तोहिलीलयाभुवनत्रयं ६४

शेषः ६१ ६२ मन्मंत्रोपासकानांतुतवनोपयोगः किंतुतेस्वयमे
वपूताअतएवपापिसंबंधजन्यंत्वयिविद्यमानंपापंतेप्रहरंतीतिपूर्वमुक्तंनविस्मर्तव्यमित्यभिप्रायेणाह तीर्थेष्यतीर्थेइति ६३ मन्मंत्रोपासकानामिति
गोपालसुंदरीमंत्रोपासकानामित्यर्थः इदमुपलक्षणंशैवशाक्तब्रह्मनिष्ठगाणपत्यसौरभक्तानामपि तदुक्तंमुंडमालायां राजानमाश्रितानांतुचौराद्या
वशगायथा तथैवदेवीभक्तानांकामक्रोधादिशत्रवः राजचिन्हांकितंदृष्ट्वासामंताःपर्युपासते देवीभक्त्यंकितंदृष्ट्वाब्रह्माद्याःसमुपासते यमेनापि

स्यदूतास्तुशश्वत्अतिभयेनच शाक्तेषुदेवीभक्तेषुनवोदृष्टिःपतत्विति शाक्तास्तुसर्वतीर्थानिपुनंतिनिजवैभवादिति ६४ ६५ ६६ ६७ ६८
कौथुमोक्तेनकौथुमिशाखोक्तेन ६९ ७० ७१ वन्हिमग्निहोत्रस्थितं ७२ ७३ शौन्चायशुद्ध्यैलक्ष्मीप्राप्त्यर्थंविष्णुंपूजयेदित्यर्थः मु-



रथेंद्रसारथ्यानेनगोलोकंसंप्रयातिच मद्भक्ताबांधवायेषांतेपिपश्वादयोपिहि ६५ प्रयांतिरथयानेनगोलोकं
चातिदुर्लभं यत्रयत्रस्मृतास्तेचज्ञानेनज्ञानिनःसति ६६ जीवन्मुक्ताश्चतेपूतामद्भक्तेःसंविधानतः इत्युक्त्वा
श्रीहरिस्तांचप्रत्युवाचभगीरथं ६७ स्तुहिगंगामिमांभक्त्यापूजांचकुरुसांप्रतं भगीरथस्तांतुष्टावपूजया-
मासभक्तितः ६८ कौथुमोक्तेनध्यानेनस्तोत्रेणापिपुनःपुनः प्रणनामचश्रीकृष्णंपरमात्मानमीश्वरं ६९ भ
गीरथश्चगंगाचसोंतर्धानंचकारह नारदउवाच केनध्यानेनस्तोत्रेणकेनपूजाक्रमेणच ७० पूजांचकारनृप
तिर्वदवेदविदांवर श्रीनारायणउवाच स्नात्वानित्यक्रियांकृत्वाधृत्वाधौतेचवाससी ७१ संपूज्यदेवषट्
कंचसंयतोभक्तिपूर्वकं गणेशंचदिनेशंचवन्हिंविष्णुंशिवंशिवां ७२ संपूज्यदेवषट्कंचसोधिकारीचपूजने
गणेशंविघ्ननाशायआरोग्यायदिवाकरं ७३ वन्हिंशौचायविष्णुंचलक्ष्म्यर्थंपूजयेन्नरः शिवंज्ञानायज्ञानेशंशि
वांचमुक्तिसिद्धये ७४ संपूज्यैतांल्लभेत्प्राज्ञोविपरीतमतोन्यथा दध्यावनेनध्यानेनतद्ध्यानंशृणुनारद ७५
इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेएकादशोध्यायः ११ श्रीनारायणउवाच ध्यानंचकण्वशाखो
क्तंसर्वपापप्रणाशनं श्वेतपंकजवर्णाभांगंगांपापप्रणाशिनीं १

क्तिसिद्धयेमोक्षार्थंशिवांमूलप्रकृतिंदेवींपूज
येदित्यर्थः ७४ ७५ इतिश्रीदेवीभागवततिलकेनवमस्कंधेएकादशोध्यायः ११ एकोनाशीतिपद्यैस्तुराधाकृष्णांगसंभवा गोलो
केप्रथमंगंगासमुद्भूतेतिचोच्यते १ नारायणोगंगायाध्यानंवदति नारायणउवाच ध्यानमिति १ ५ ५ ५ ५

भारतीशापात्पूर्वमुपपादितान् २ ३ ४ शैब्यायांशिबेरपत्यकन्यायां असमंजास्तन्नामकः पुत्रोजातः ५ अन्यावैदर्भीनाम्नीराजकामिनी ६
रुरोदेति किमिदंत्वयाफलंदत्तमित्यभिप्रायेण ७ ८ ९ कपिलस्येति सगरेअश्वमेधार्थंप्रसक्तेतंयज्ञीयमश्वमपहृत्येंद्रोध्याननिष्ठस्यकपिलस्यपृ

भारतेभारतीशापात्साजगामसुरेश्वरी विष्णुस्वरूपापरमास्वयंविष्णुपदीतिच २ कथंकुत्रयुगेकेनप्रार्थिताप्रे
रितापुरा तत्क्रमंश्रोतुमिच्छामिपापघ्नंपुण्यदंशुभं ३ श्रीनारायणउवाच राजराजेश्वरःश्रीमान्सगरःसूर्यवं
शजः तस्यभार्याचवैदर्भीशैब्याचद्वेमनोहरे ४ तत्पत्न्यामेकपुत्रश्चबभूवसुमनोहरः असमंजाइतिख्यातः
शैब्यायांकुलवर्द्धनः ५ अन्याचाराधयामासशंकरंपुत्रकामुकी बभूवगर्भस्तस्याश्चहरस्यचवरेणच ६ गते
शताब्देपूर्णेचमांसपिंडंसुषावसा तंदृष्ट्वासाशिवंध्यात्वारुरोदोच्चैःपुनःपुनः ७ शंभुर्ब्राह्मणरूपेणतत्समी
पंजगामह चकारसंविभज्यैतत्पिंडंषष्टिसहस्रधा ८ सर्वेबभूवुःपुत्राश्चमहाबलपराक्रमाः ग्रीष्ममध्या
न्हमार्तंडप्रभामुष्टकलेवराः ९ कपिलस्यमुनेःशापाद्बभूवुर्भस्मसाच्चते राजारुरोदतच्छ्रुत्वाजगामगहने
वने १० तपश्चकारासमंजागंगानयनकारणात् लक्षवर्षंतपस्तप्त्वाममारकालयोगतः ११ अंशुमांस्त
स्यतनयोगंगानयनकारणात् तपःकृत्वालक्षवर्षंममारकालयोगतः १२ भगीरथस्तस्यपुत्रोमहाभा
गवतःसुधीः वैष्णवोविष्णुभक्तश्चगुणवानजरामरः १३ तपःकृत्वालक्षवर्षंगंगानयनकारणात् ददर्श
कृष्णंग्रीष्मस्थसूर्यकोटिसमप्रभं १४

ष्ठदेशेबबंधपश्चाद्राजपुत्राःसगराअश्वान्वेषणेचलितास्तत्रदेशेकपिलसंनिधावश्वं
दृष्ट्वंतरूतोयमेवाश्वहर्त्ताचौरोस्तीत्यूचुःततोमुनिनाशापेनभस्मीकृताइतिकथापुराणांतरेप्रसिद्धा १० असमंजाद्वितीयोराजपुत्रःपितृव्यानां
शापदग्धानामुद्धारार्थंगंगानयनोद्देशेनतपश्चकारेत्यर्थः ११ तत्पुत्रोंशुमानप्येवंममारेत्याह अंशुमानिति १२ १३ १४ ६२

गोपालसुंदरीरूपमिति कदाचिदाद्यालालिताप्रुंरूपाकृष्णाविग्रहेतितंत्रराजेस्यावतारस्यस्पष्टत्वात् ध्यानंचतंत्रांतरेस्पष्टमेव गोपालसुंदर्याः
गोलोकेअधिष्ठात्रीदेवतामुख्यत्वेनगोपालसुंदर्यैवसृष्टेरादौमूलप्रकृतेर्गोपालसुंदरीउत्पन्नाततोन्याः शक्तयस्तएवास्मिन्भागवतेगोपालसुंदरी
रूपश्रीकृष्णस्यपुनःपुनर्महिमाप्रोच्यतेइतिबोध्यं सखीवेषधारीश्रीकृष्णोगोपालसुंदरी १५ १६ प्रकृतेःपरमितिवास्तविकात्मरूपेणवर्णनं



द्विभुजंमुरलीहस्तंकिशोरंगोपवेषिणं गोपालसुंदरीरूपंभक्तानुग्रहरूपिणं १५ स्वेच्छामयंपरंब्रह्मपरि
पूर्णतमप्रभुं ब्रह्मविष्णुशिवाद्यैश्चस्तुतंमुनिगणैर्नुतं १६ निर्लिप्तंसाक्षिरूपंचनिर्गुणंप्रकृतेःपरं ईषि-
द्धास्यप्रसन्नास्यंभक्तानुग्रहकारकं १७ वन्हिशुद्धांशुकाधानरत्नभूषणभूषितं तुष्टावदृष्ट्वानृपतिःप्रण
म्यचपुनःपुनः १८ लीलयाचवरंप्रापवांछितंवंशतारणं कृत्वाचस्तवनंदिव्यंपुलकांकितविग्रहः १९
श्रीभगवानुवाच भारतंभारतीशापाद्गच्छशीघ्रंसुरेश्वरि सगरस्यसुतान्सर्वान्पूतान्कुरुममाज्ञया २०
त्वत्स्पर्शवायुनापूतायास्यंतिमममंदिरं बिभ्रतोमममूर्तीश्चदिव्यस्यंदनगामिनः २१ मत्पार्षदाभवि
ष्यंतिसर्वकालंनिरामयाः समुच्छिद्यकर्मभोगान्कृतान्जन्मनिजन्मनि २२ कोटिजन्मार्जितंपाप-
भारतेयत्कृतंनृभिः गंगायावातस्पर्शेननश्यतीतिश्रुतौश्रुतं २३ स्पर्शनाद्दर्शनाद्देव्याःपुण्यंदश-
गुणंततः मौसलस्नानमात्रेणसामान्यदिवसेनृणां २४ शतकोटिजन्मपापंनश्यतीतिश्रुतौश्रुतं
यानिकानिचपापानिब्रह्महत्यादिकानिच २५ जन्मसंख्यार्जितान्येवकामतोपिकृतानिच तानिसर्वाणि
नश्यंतिमौसलस्नानतोनृणां २६

१७ १८ दर्शनोत्तरंस्तवनंकृत्वावांछितंवंशतारणंवरंत्वसूर्वजोद्धारार्थेगंगांददामीत्येवंरूपंप्रापेत्यन्व
यः १९ इत्थंगोपालसुंदरीरूपःश्रीकृष्णोवरंदत्वागंगांयदुक्तवांस्तदाह श्रीभगवानुवाच भारतंभारतीशापादिति २० २१ २२ २३ २४ २५ २६

किंचिदिति पुण्याहदिवसस्नानजंफलंवेदायत्किंचिदेवबुद्धेरविषयत्वाद्वदंतीत्यर्थः २७ संकल्पंस्नानसंकल्पजन्यंफलमित्यर्थः २८
संकल्परहितमुसलस्नानतोविधिरहितस्नानतो यत्फलं पूर्वोक्तं तस्माद्दशगुणंसंकल्पपुरःसरस्नानतोभवतीत्यर्थः २९
३० अक्षयायामक्षय्यनवम्यां ३१ स्नानफलमुक्त्वादानफलमाह सामान्यदिवसेति शतगुणमिति सामान्यदिवसस्नानाच्छतगुणंगं-

पुण्याहंस्नानतःपुण्यंवेदोनैववदंतिच्च किंचिद्वदंतितेविप्रफलमेवयथागमं २७ ब्रह्मविष्णुशिवाद्याश्चसर्वे
नैववदंतिच्च सामान्यदिवसस्नानसंकल्पंशृणुसुंदरि २८ पुण्यंदशगुणंचैवमौसलस्नानतःपरं ततस्त्रिंशद्गु
णंपुण्यंरविसंक्रमणेदिने २९ अमायांचापितत्तुल्यंद्विगुणंदक्षिणायने ततोदशगुणंपुण्यंनराणामुत्तरा-
यणे ३० चातुर्मास्यांपौर्णमास्यामनंतंपुण्यमेवच्च अक्षयायांचतत्तुल्यंचैतद्वेदेनिरूपितं ३१ असंख्यपुण्यफ
लदमेतेषुस्नानदानकं सामान्यदिवसस्नानाद्दानाच्छतगुणंफलं ३२ मन्वंतराद्यायांतिथौयुगाद्यायांतथेवच्च
माघस्यसितसप्तम्यांभीष्माष्टम्यांतथैवच्च ३३ अथाप्यशोकाष्टम्यांचनवम्यांचतथाहरेः ततोपिद्विगुणंपुण्यं
नंदायांतवदुर्लभं ३४ दशहरादशम्यांतुयुगाद्यादिसमंफलं नंदासमंचवारुण्यांमहत्पूर्वेचतुर्गुणं ३५ ततश्च
तुर्गुणंपुण्यंहिमहत्पूर्वकेसति पुण्यंकोटिगुणंचैवसामान्यस्नानतोपियत् ३६ चंद्रोपरागसमयेसूर्येदशगु
णंततः पुण्यमर्द्धोदयेकालेततःशतगुणंफलं ३७ इत्येवमुक्त्वादेवेशोविररामतयोःपुरः तमुवाचततोगंगाभक्ति
नम्रात्मकंधरा ३८

गातीरदानात्फलंभवतीत्यर्थः ३२ ३३ हरेर्नवम्यांरामनवम्यांनंदायांतवेतितवदशहरायांयानंदाप्रतिपत्तिथिस्तस्यामित्यर्थः ३४
नंदापूर्वोक्ता महत्पूर्वेपुल्लिंगमार्षं महावारुण्यामित्यर्थः ३५ हिमहत्पूर्वकेसतीति हिमहच्छब्दपूर्वकत्वेवारुणीशब्दस्यसतीत्यर्थः तेनमहामहावारुणीतिसिद्धं
३६ चंद्रोपरागसमयेसामान्यस्नानफलात्पूर्वोक्तात्कोटिगुणंफलंभवतीत्यर्थः सूर्येसूर्यग्रहेचंद्रग्रहणाद्दशगुणमित्यर्थः ततःसूर्यग्रहफलात् ३७ तयोर्गंगाभा
गीरथयोः ३८

३९ ४० ४१ ममान्यद्वांछितमिति भूतले मम पतिः कोवा भविष्यतीत्येतद्रूपं वांछितं लज्जया वक्तुं न शक्नोमीति भावः ४२ ४३ विदग्धायाविर हिण्याः ४४ सौभाग्यासुरव्येत्यर्थः ४५ ४६ ४७ ४८ ४९ ५० प्रकृतेर्मूलप्रकृतेर्भुवनेश्वर्या भक्तस्य संस्पर्शादित्यर्थः ५१



गंगोवाच यामिचेद्भारतं नाथ भारतीशापतः पुरा तवाज्ञया च राजेंद्र तपसा न्वैव सांप्रतं ३९ दास्यंति पापिनो मह्यं पापानि यानि कानि च तानि मे केन नश्यंति तमुपायं वद प्रभो ४० कति कालं परिमितं स्थितिर्मे तत्र भारते क दायास्यामि देवेश तद्विष्णोः परमं पदं ४१ ममान्यद्वांछितं यच्च तत्सर्वं जानासि सर्ववित् सर्वांतरात्मन्सर्वज्ञ तदुपायं वद प्रभो ४२ श्रीभगवानुवाच जानामि वांछितं गंगे तव सर्वं सुरेश्वरि पतिस्ते द्रवरूपाया लवणोदो भविष्यति ४३ ममांशास्वरूपश्च त्वं च लक्ष्मीस्वरूपिणी विदग्धाया विदग्धेन संगमो गुणवान्भुवि ४४ यावंत्यः संति नद्यश्च भारत्याद्याश्च भारते सौभाग्या त्वं च तास्वेव लवणोदस्य सो रते ४५ अद्य प्रभृति देवेशि कलेः पंचसहस्रकं वर्षं स्थितिस्ते भारत्याः शापेन भारते भुवि ४६ नित्यं त्वमब्धिना सार्द्धं करिष्यसि रहो रतिं त्वमेव रसिका देवि रसिकेंद्रेण संयुता ४७ त्वां स्तोष्यंति च स्तोत्रेण भगीरथकृतेन च भारतस्था जनाः सर्वे पूजयिष्यंति भक्तितः ४८ कण्वशाखोक्तध्यानेन ध्यात्वा त्वां पूजयिष्यति यः स्तौति प्रणमेन्नित्यं सोश्वमेधफलं लभेत् ४९ गंगा गंगेति यो ब्रूयाद्योजनानां शतैरपि मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ५० सहस्रपापिनां स्नानाद्यत्पापं ते भविष्यति प्रकृतेर्भक्तसंस्पर्शाद्देवतद्धि विनंक्ष्यति ५१ पापिनां तु सहस्राणां शवस्पर्शेन यत्त्वयि तन्मंत्रोपासकस्नानात्तदघं च विनंक्ष्यति ५२

पापिनां सहस्राणां शवानां स्पर्शेन च यत्पापं त्वयि भविष्यति तदपि तन्मंत्रोपासकस्नानात्तस्या मूलप्रकृतेर्भुवनेश्वर्या मंत्रा मायाबीजप्रभृतयस्तदुपासकस्य स्नानात्तदघं नंक्ष्यतीत्यर्थः तदुक्तं मुंडमालायां मदंशाश्चैव ये भूतास्तेशे-

कृष्णाविग्रहसंभूतांकृष्णशरीरोद्भवामियंकथावक्ष्यमाणाध्यायेस्पष्टा २ इंदुशतकैश्चमृष्टाशुद्धायाप्रभातस्याआकरांखनिं ३ ४ नानाचि-
त्रसमन्वितंबिभ्रतीत्यर्थः ५ बिंबफलंविनिंद्यंयस्यैतादृशमच्छंचार्वोष्ठपुटंबिभ्रतीत्यर्थः सुष्ठापद्धतायायादंतपंक्त्या ६ ७ रंभास्तंभोविनिंदितो·

कृष्णाविग्रहसंभूतांकृष्णातुल्यांपरांसतीं वन्हिशुद्धांशुकाधानांरत्नभूषणभूषितां २ शरत्पूर्णेंदुशतकमृष्टशो
भाकरांपरां ईषद्धास्यप्रसन्नास्यांशश्वत्सुस्थिरयौवनां ३ नारायणप्रियांशांतांतत्सौभाग्यसमन्वितां बिभ्र
तींकबरीभारंमालतीमाल्यसंयुतं ४ सिंदूरबिंदुललितंसार्द्धंचंदनबिंदुभिः कस्तूरीपत्रकंगंडेनानाचित्र-
समन्वितं ५ पक्वबिंबविनिंद्याच्छचार्वोष्ठपुटमुत्तमं मुक्तापंक्तिप्रभामुष्टदंतपंक्तिमनोरमां ६ सुचारुवक्र
नयनंसकटाक्षंमनोहरं कठिनंश्रीफलाकारंस्तनयुग्मंचबिभ्रती ७ बृहच्छ्रोणिंसुकाठिनांरंभास्तंभविनिं
दितां स्थलपद्मप्रभामुष्टपदपद्मयुगंबरं ८ रक्तपादुकसंयुक्तंकुंकुमाक्तंसयावकं देवेंद्रमौलिमंदारमकरं
दकणारुणं ९ सुरसिद्धमुनींद्रैश्चदत्तार्घसंयुतंसदा तपस्विमौलिनिकरभ्रमरश्रेणिसंयुतं १० मुक्तिप्र
दंमुमुक्षूणांकामिनांसर्वभोगदं वरांवरेण्यांवरदांभक्तानुग्रहकारिणीं ११ श्रीविष्णोःपदद्दात्रींचभजेविष्णु
पदींसतीं इत्यनेनैवध्यानेनध्यात्वात्रिपथगांशुभां १२ दत्वासंपूजयेद्ब्रह्मन्नुपचाराणिषोडश आसनंपा
दमर्घ्यंचस्नानीयंचानुलेपनं १३ धूपंदीपंचनैवेद्यंतांबूलंशीतलंजलं वसनंभूषणंमाल्यंगंधमाचमनी
यकं १४ मनोहरंस्कृतल्पंचदेयान्येतानिषोडश दत्वाभक्त्याचप्रणमेत्संस्तूयसंपुटांजलिः १५

ययास्वकीयोरुद्वयशोभयेतिशेषः पदपद्मयुगंबरंवरूंतत्पर्यंतंबिभ्रतीतिशेषः ८ रत्नपादुकेत्यारभ्यसर्वभोगदमेतत्पर्यंतंपाद
पद्मस्यविशेषणानि यावकंपादभूषणंतत्सहितं ९ १० ११ १२ उपचाराणिदत्वेत्यन्वयः नपुंसकत्वमार्षं १३ १४ १५ ६२ ६२

१६ १७ शिवसंगीतेति इदंसर्वमनुपदोक्तकथायांस्पष्टीभविष्यतिशिवसगीतेनसंमुग्धोमोहितोयः श्रीकृष्णस्तस्यांगसमुद्भवां राधांगद्रवेणसंयुतांराधांगजलेनसयुतां १८ १९ कार्तिक्यांपौर्णमास्यांराधामहोत्सवेय ज्जन्मप्रथमतोभूदितिपूर्वान्वयस्यायोजनीयं २० कोटियोजनेति



संपूज्यैवंप्रकारेणसोश्वमेधफलंलभेत् नारदउवाच श्रोतुमिच्छामिदेवेशलक्ष्मीकांतजगत्पते १६ विष्णो
र्विष्णुपदीस्तोत्रंपापघ्नंपुण्यकारकं श्रीनारायणउवाच शृणुनारदवक्ष्यामिपापघ्नंपुण्यकारणं १७ शिव
संगीतसंमुग्धश्रीकृष्णांगसमुद्भवां राधांगद्रवसंयुक्तांतां गंगांप्रणमाम्यहं १८ यज्जन्मसृष्टेरादौचगो-
लोकेरासमंडले सन्निधानेशंकरस्यतांगंगांप्रणमाम्यहं १९ गोपैर्गोपीभिराकीर्णेशुभेराधामहोत्सवे कार्ति
कीपूर्णिमायांचतांगंगांप्रणमाम्यहं २० कोटियोजनविस्तीर्णादैर्घ्येलक्षगुणाततः समावृतायागोलोकंतां
गंगांप्रणमाम्यहं २१ षष्टिलक्षयोजनायाततोदैर्घ्येचतुर्गुणा समावृतायावैकुंठेतांगंगांप्रणमाम्यहं २२
त्रिंशल्लक्षयोजनायादैर्घ्येपंचगुणाततः आवृताब्रह्मलोकेयातांगंगांप्रणमाम्यहं २३ त्रिंशल्लक्षयोजना
यादैर्घ्येचतुर्गुणाततः आवृताशिवलोकेयातांगंगांप्रणमाम्यहं २४ लक्षयोजनविस्तीर्णादैर्घ्येसप्तगु
णाततः आवृताध्रुवलोकेया तांगंगांप्रणमाम्यहं २५ लक्षयोजनविस्तीर्णादैर्घ्येपंचगुणाततः आ
वृताचंद्रलोकेयातांगंगांप्रणमाम्यहं २६ षष्टिसहस्रयोजनायादैर्घ्येदशगुणाततः आवृतासूर्यलोकेयातां
गंगांप्रणमाम्यहं २७ लक्षयोजनविस्तीर्णादैर्घ्येपंचगुणाततः आवृतायातपोलोकेतांगंगांप्रणमाम्यहं २८

अतिदीर्घातिविस्तृतेत्येवतात्पर्यंबोध्यंनतुतावद्योजनदीर्घविस्तृतत्वेअसंभवात् एवमेवोत्तरत्रापि २१ ग्रंथार्थस्तुस्पष्टएवआयामेनष
ष्टिलक्षयोजनेत्यर्थः एवमुत्तरत्रबोध्यं २२ २३ २४ २५ २६ २७ २८ ६२ ६३ ६४

सहस्रयोजनायामादैर्घ्येदशगुणाततः आवृताजनलोकेयातांगंगांप्रणमाम्यहं २९ दशलक्षयोजनाया
दैर्घ्येपंचगुणाततः आवृतायामहर्लोकंतांगंगांप्रणमाम्यहं ३० सहस्रयोजनायामादैर्घ्येशतगुणाततः
आवृतायाचकैलासंतांगंगांप्रणमाम्यहं ३१ शतयोजनविस्तीर्णादैर्घ्येदशगुणाततः मंदाकिनीयेंद्रलोके
तांगंगांप्रणमाम्यहं ३२ पातालेभोगवतीचैवविस्तीर्णादशयोजना ततोदशगुणादैर्घ्येतांगंगांप्रणमाम्य
हं ३३ क्रोशैकमात्रविस्तीर्णाततःक्षीणाचकुत्रचित् क्षितौचालकनंदायातांगंगांप्रणमाम्यहं ३४ स
त्येयाक्षीरवर्णाचत्रेतायामिंदुसन्निभा द्वापरेचंद्रनाभायातांगंगांप्रणमाम्यहं ३५ जलप्रभाकलौयाच
नान्यत्रपृथिवीतले स्वर्गेचनित्यंक्षीराभातांगंगांप्रणमाम्यहं ३६ यत्तोयकणिकास्पर्शेपापिनांज्ञानसं
भवः ब्रह्महत्यादिकंपापंकोटिजन्मार्जितंदहेत् ३७ इत्येवंकथिताब्रह्मन्गंगापद्यैकविंशतिः स्तोत्ररूपं
चपरमंपापघ्नंपुण्यजीवनं ३८ नित्यंयोहिपठेद्भक्त्यासंपूज्यचसुरेश्वरीं सोश्वमेधफलंनित्यंलभतेनात्रसंशयः
३९ अपुत्रोलभतेपुत्रंभार्याहीनोलभेत्स्त्रियं रोगात्प्रमुच्यतेरोगीबंधान्मुक्तोभवेद्ध्रुवं ४० अस्पष्टकीर्तिःसु
यशामूर्खोभवतिपंडितः यःपठेत्प्रातरुत्थायगंगास्तोत्रमिदंशुभं ४१ शुभंभवेच्चदुःस्वप्नेगंगास्नानफलंल
भेत् श्रीनारायणउवाच स्तोत्रेणानेनगंगांचस्तुत्वाचैवभगीरथः ४२ जगामतांगृहीत्वाचयत्रनष्टाश्च
सागराः वैकुंठंतेययुस्तूर्णंगंगायाःस्पर्शवायुना ४३ भगीरथेनसानीतातेनभागीरथीस्मृता इत्येवंकथितंसर्वंगं
गोपाख्यानमुत्तमं ४४ पुण्यदंमोक्षदंसारंकिंभूयःश्रोतुमिच्छसि नारदउवाच कथंगंगात्रिपथगाजाताभुवन
पाविनी ४५

नारायणेउपरतेप्रथमंगंगायाजन्मगोलोकेकार्तिक्यांपौर्णिमायांश्रीगोपालसुंदरीरूपकृष्णशरीरात्कथंजातमित्यादिकंपृच्छति नारदउवाच कथंगंगात्रिपथगेति ४५ तत्रस्थास्तल्लोकस्थाः ४६ ४७ ४८ ऊषुः संपूज्यस्थिताइत्यर्थः कृष्णसंगीतारूष्णसंबंधिनीसंगीतशास्त्राधिष्ठात्रीत्यर्थः ४९ हारकंरत्नहारमित्यर्थः ५० मणिसारंसर्वोत्तमंमणिं ५१ हारसारंहारश्रेष्ठं ५२ विष्णुमायाब्रह्ममाया

कुत्रवाकेनविधिनातत्सर्वंवदमेप्रभो तत्रस्थाश्चजनायेयेतेचकिंचक्रुरुत्तमं ४६ एतत्सर्वं तुविस्तीर्णंकृत्वावक्तुमिहार्हसि नारायणउवाच कार्तिकीपूर्णिमायांतुराधायाःसुमहोत्सवः ४७ कृष्णःसंपूज्यतांराधामुवासरासमंडले कृष्णेनपूजितांतांतुसंपूज्यहृष्टमानसाः ४८ ऊषुर्ब्रह्मादयःसर्वेऋषयःशौनकादयः एतस्मिन्नंतरेकृष्णसंगीताचसरस्वती ४९ जगौसुंदरतालेनवीणयाचमनोहरं तुष्टोब्रह्माददौतस्यैरत्नेंद्रसारहारकं ५० शिवोमणींद्रसारंतुसर्वब्रह्मांडदुर्लभं कृष्णःकौस्तुभरत्नंचसर्वरत्नात्सरंवरं ५१ अमूल्यरत्ननिर्माणंहारसारंचराधिका नारायणश्चभगवान्ददौमालांमनोहरां ५२ अमूल्यरत्ननिर्माणंलक्ष्मीःकनककुंडलं विष्णुमायाभगवतीमूलप्रकृतिरीश्वरी ५३ दुर्गानारायणीशानाब्रह्मभक्तिंसुदुर्लभां धर्मबुद्धिंचधर्मश्चयशश्चविपुलंभवे ५४ वन्हिशुद्धांशुकंवन्हिर्वायुश्चमणिनूपुरान् एतस्मिन्नंतरेशंभुर्ब्रह्मणाप्रेरितोमुहुः ५५ जगौश्रीकृष्णसंगीतंरासोल्लाससमन्वितं मूर्छांप्रापुःसुराःसर्वेचित्रपुत्तलिकायथा ५६ कष्टेनचेतनांप्राप्यददृशूरासमंडले स्थलंसर्वंजलाकीर्णंराधाकृष्णविहीनकं ५७

मूलप्रकृतिर्मूलप्रकृतेःसाक्षादुद्भवान्मूलप्रकृतित्वं ५३ ब्रह्मभक्तिंपरमात्मभक्तिंभवेप्रपंचे ५४ ५५ कृष्णसंगीतंरासोल्लासस्यवर्णनंयस्मिंस्तादृशंगोपालसुंदर्यात्मककृष्णोद्देश्यकंसंगीतंगानमित्यर्थः एतस्यकृष्णस्यगोपालसुंदर्यात्मकत्वेनपूर्वमभिधानान्नवमस्कंधेसर्वत्रकृष्णशब्देनगोपालसुंदर्यात्मकृष्णस्यैवात्रग्रहणमितिबोध्यं ५६ ५७ ५८ ५९

सर्वंतीर्थमिति लोकोद्धारार्थंराधाकृष्णास्तीर्थरूपोजातइत्यर्थः ५८ ५९ अयमेववांछितोवरइत्यर्थः ६० सर्वात्माहमिति अहंसर्वात्मासर्व
व्यापकोस्म्येवनकदाचिन्ममभवतांचवियोगोस्तितथेयराधिकाशक्तिरपिसर्वव्यापिकास्त्येवेतिनतयापिभवतांवियोगोस्तिकेवलमावयोर्देहे
नैवभवतांवियोगोजातस्तत्रमिथ्यादेहेनकिंकर्तव्यंभवतामस्तिनकिंचिदपीत्यर्थः ६१ अथापिममभक्तानांदर्शनार्थंमन्मूर्तिरपेक्षितेतीच्छथय
दितदायन्मयोच्यतेतत्कर्तव्यमित्याह मनवइति ६२ ६३ स्वयंविधातरिति हेविधातस्त्वंजगद्गुरुंशिवंप्रत्याज्ञांकुरु ६४ किंविषयामितिचेत्तत्रा

अत्युच्चैरुरुदुःसर्वेगोपागोप्यःसुराद्विजाः ध्यानेनब्रह्माबुबुधेसर्वंतीर्थमभीप्सितं ५८ गतश्चराधयासार्द्धंश्रीकृ
ष्णोद्रवतामिति ततोब्रह्मादयःसर्वेतुष्टुवुःपरमेश्वरं ५९ स्वमूर्तिंदर्शयविभोवांछितंवरमेवनः एतस्मिन्नं
तरेतत्रवाग्बभूवाशरीरिणी ६० तामेवशुश्रुवुःसर्वेसुव्यक्तंमधुरान्वितां सर्वात्माहमियंशक्तिर्भक्तानुग्रहवि
ग्रहा ६१ ममाप्यस्याश्चदेहेनकर्त्तव्यंचकिमावयोः मनवोमानवाःसर्वेमुनयश्चैववैष्णवाः ६२ मन्मंत्रपूतामां
द्रष्टुमागमिष्यंतिमत्सदं मूर्तिंद्रष्टुंचसुव्यक्तांयदीच्छथसुरेश्वराः ६३ करोतुशंभुस्तत्रैवंमदीयंवाक्यपालनं स्व
यंविधातस्त्वंब्रह्मन्नाज्ञांकुरुजगद्गुरुं ६४ कर्तुंशास्त्रविशेषंचवेदांगंसुमनोहरं अपूर्वमंत्रनिकरैःसर्वाभीष्टफल
प्रदैः ६५ स्तोत्रैश्चनिकरैर्ध्यानैर्युतंपूजाविधिक्रमैः मन्मंत्रकवचस्तोत्रंकृत्वायत्नेनगोपनं ६६ भवंतिविमुखा
येनजनामातत्करिष्यति सहस्रेषुशतेष्वेकोमन्मंत्रोपासकोभवेत् ६७ जनामन्मंत्रपूताश्चगमिष्यंतिचमत्सदं
अन्यथानभविष्यंतिसर्वेगोलोकवासिनः ६८

ह कर्तुमिति शास्त्रंसात्वतंतंत्रमित्यर्थः ६५ ६५ भवंतीति येनगोपनेनज
नाःपापिष्ठामयिविमुखाभविष्यंतितद्गोपनंकरिष्यतिकरोत्वित्यर्थः सर्वथागोपनेशास्त्रप्रणयनंव्यर्थमेवस्यादितिचेत्पुण्यवतांसाधूनामग्रे
प्रकाशंकरोत्वित्यभिप्रायेणाह सहस्रेष्विति ६७ अन्यथाममशास्त्राभावे ६८ ७ ७ ७ ७

ननुकेषांचिदग्रेप्रकाशनेपिपरंपरयासर्वत्रप्रकाशोभविष्यतितितश्चसर्वेपिगोलोकवासिनोभविष्यंतितदाब्रह्मांडंनिष्फलंप्राणिनामभावात्स्या
दितिचेत्त्वंहेब्रह्मन्पंचप्रकारान्सात्त्विकादिभेदेननानाविधाञ्जनान्कुरुकर्मवशात्तदातेजनाःपापबाहुल्यात्प्रकाशमानमपितंत्रंनग्रहीष्यंतित
तश्चनब्रह्मांडांतर्गतलोकानामभावेनब्रह्मांडंनिष्फलंस्यादित्यभिप्रायेणाह निष्फलंचेति ६९ हेब्रह्मन्निदंमच्छास्त्रंकर्तुंशिवोयदिप्रतिज्ञां
करिष्यतिततोमन्मूर्तिदर्शनंस्यादित्याह इदंकर्तुमिति ७० ७१ ७२ स्वीकारमिति गंगाजलंहस्तेगृहीत्वाशपथपुरःसरंप्रतिज्ञांकृतवानि

निष्फलंभवितासर्वंब्रह्मांडंन्नैवब्रह्मणः जनाःपंचप्रकाराश्चयुक्ताःस्रष्टुंभवेभवे ६९ पृथिवीवासिनःकेचित्के
चित्स्वर्गनिवासिनः इदंकर्तुंमहादेवःकरोतिदेवसंसदि ७० प्रतिज्ञांसुदृढांसद्यस्ततोमूर्तिंचद्रक्ष्यति इत्येवमु
क्त्वागगनेविरराससनातनः ७१ तच्छ्रुत्वाजगतांधातातमुवाचशिवंमुदा ब्रह्मणोवचनंश्रुत्वाज्ञानेशोज्ञानि
नांवरः ७२ गंगातोयंकरेकृत्वास्वीकारंचचकारसः संयुक्तंविष्णुमायायामंत्रौघैःशास्त्रमुत्तमं ७३ वेदसारं
करिष्यामिप्रतिज्ञापालनायच गंगातोयमुपस्पृश्यमिथ्यायदिवदेज्जनः ७४ सयातिकालसूत्रंचयावद्वै
ब्रह्मणोवयः इत्युक्तेशंकरेब्रह्मन्गोलोकसुरसंसदि ७५ आविर्बभूवश्रीकृष्णोराधयासहितस्ततः तंसुदृष्ट्वा
चसंतुष्टास्तुष्टुवुःपुरुषोत्तमं ७६ परमानंदपूर्णाश्चचक्रुश्चपुनरुत्सवं कालेनशंभुर्भगवान्मुक्तिदीपंचकारसः
७७ इत्येवंकथितंसर्वंसुगोप्यंचसुदुर्लभं सएवद्रवरूपासागंगागोलोकसंभवा ७८

त्यर्थः प्रतिज्ञास्वरूपमाह-
संयुक्तमिति विष्णुमायायाराधायामंत्रौघैःसहितंशास्त्रंविष्णुमंत्रविषयंवेदसारंवेदाविरुद्धंकरिष्यामीत्यर्थः ७३ गंगाजलेनशपथंकृत्वा
तत्कार्याकरणेमहाननर्थइतिदर्शयितुंशिवेनगंगाजलंगृहीतमित्यभिप्रायेणाह गंगातोयमिति ७४ हेब्रह्मन्हेनारदेतिनारायणोक्तिः
७५ ७६ मुक्तिदीपंमुक्तिप्रकाशकंसात्वतंतंत्रमित्यर्थः सएवश्रीकृष्णएवद्रवरूपागंगेत्युच्यतइत्यर्थः ७७ ७८ ६९ ६९

७९ इतिश्रीदेवीभागवततिलकेनवमस्कंधेद्वादशोध्यायः १२ षट्त्रिंशदधिकैःपद्यैःशतसंख्यैस्तुजान्हवी नारायणप्रियाजाताविस्तरादेतदु च्यते १ कलेःपंचसहस्रांतेभुवंत्यक्त्वावैकुंठेगंगागमिष्यतीत्युक्तंतत्रगोलोकोद्भवागंगागोलोकंविहायकिमितिवैकुंठेगमिष्यतीत्यभिप्रायेण- पृच्छति नारदउवाच कलेरिति क्कगतेति वैकुंठेइतिपूर्वमुक्तमपितन्मोषणंकुत्वेयमुक्तिः १ २ पद्मावतीगंगाचोभेनद्यौवैकुंठेगतेइत्यर्थः

राधाकृष्णांगसंभूताभुक्तिमुक्तिफलप्रदा स्थानेस्थानेस्थापितासाकृष्णेनचपरात्मना ११ कृष्णस्वरूपापरमा सर्वब्रह्मांडपूजिता इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेद्वादशोध्यायः १२ नारदउवाच कलेःपंच सहस्राब्देसमतीतेसुरेश्वर क्कगतासामहाभागतन्मेव्याख्यातुमर्हसि १ नारायणउवाच भारतंभारती शापात्समागत्येश्वरेच्छया जगामतत्रवैकुंठेशापांतेपुनरेवसा २ भारतीभारतंत्यक्त्वातज्जगामहरेःपदं प द्मावतीचशापांतेगंगासाचैवनारद ३ गंगासरस्वतीलक्ष्मीश्चैतास्तिस्रःप्रियाहरेः तुलसीसहिताब्रह्मंश्चत स्रःकीर्तिताःशुभाः ४ नारदउवाच केनोपायेनसादेवीविष्णुपादाब्जसंभवा ब्रह्मकमंडलुस्थाचश्रुता शिवप्रियाचसा ५ बभूवसामुनिश्रेष्ठगंगानारायणप्रिया अहोकेनप्रकारेणतन्मेव्याख्यातुमर्हसि ६ श्रीनारायणउवाच पुराबभूवगोलोकेसागंगाद्रवरूपिणी राधाकृष्णांगसंभूतातदंशातत्स्वरूपिणी ७ द्रवाधिष्ठातृदेवीयारूपेणाप्रतिमाभुवि नवयौवनसंपन्नासर्वाभरणभूषिता ८

३ ननुगोलोकंविहाय किमितिवैकुंठंगताइतिचेद्वैकुंठवासिनोनारायणस्ययतएताश्चतस्रःस्त्रियोभवंतिततइत्याह गंगेति ४ तत्रगंगाकथंविष्णुपदाब्जा न्निर्गताकथंवानारायणस्त्रीजाताब्रह्मणाकथंकमंडलौस्थापिताशिवेनकथंमस्तकेधृतातत्सर्वंवर्णयेत्याह नारदउवाच केनोपायेनेति शि वप्रियाशिववधूःकथंजाता ५ ६ नदंशाराधाकृष्णांशा ७ द्रवोजलंतत्स्वामिनी ८ ९ ९ ९ ९

तप्तकांचनेति पूर्वस्फटिकरूपत्वेनवर्णनंत्वनिशुद्धत्वाभिप्रायेण ९ सुपीनाकठिनाश्रोणिर्यस्याःसुनितंबयुगंबरंवस्त्रंयस्याः १० अथद्वि तीयांतानांपदानांबीभ्रतीत्यनेनान्वयः वक्रिमंवामं ११ १२ १३ १४ द्रवरूपिणींगंगामूर्तिंधृत्वाकृष्णसन्निधौकामातुरास्थि-



शरन्मध्यान्हपद्मास्यासस्मितासुमनोहरा तप्तकांचनवर्णाभाशरच्चंद्रसमप्रभा ९ स्निग्धप्रभातिसुस्निग्धाशु द्धसत्वस्वरूपिणी सुपीनकठिनश्रोणिःसुनितंबयुगंबरा १० पीनोन्नतंसुकठिनंस्तनयुग्मंसुवर्तुलं सुचारु नेत्रयुगलंसकटाक्षंसुवक्रिमं ११ वंक्रिमंकबरीभारंमालतीमाल्यसंयुतं सिंदूरबिंदुललितंसार्द्धंचंदनबिंदुभिः १२ कस्तूरीपत्रिकायुक्तंगंडयुग्मंमनोरमं बंधूककुसुमाकारमधरोष्ठंचसुंदरं १३ पक्कदाडिमबीजाभदंत पंक्तिसमुज्वलं वाससीवन्हिशुद्धेचनीवियुक्तेचबिभ्रती १४ सासकामाकृष्णापार्श्वेसमुवाससुलज्जिता वाससासुखमाच्छाद्यलोचनाभ्यांविभोर्मुखं १५ निमेषरहिताभ्यांचपिबंतीसततंमुदा प्रफुल्लवदनाहृ- र्षान्नवसंगमलालसा १६ मूर्छिताप्रभुरूपेणपुलकांकितविग्रहा एतस्मिन्नंतरेतत्रविद्यमानाचराधि- का १७ गोपीत्रिंशत्कोटियुक्ताकोटिचंद्रसमप्रभा कोपेनरक्तपद्मास्यारक्तपंकजलोचना १८ पीतचंपक वर्णाभागजेंद्रमंदगामिनी अमूल्यरत्ननिर्माणनानाभूषणभूषिता १९ अमूल्यरत्नखचितममूल्यंवन्हि शौचकं पीतवस्त्रस्ययुगलंनीवीयुक्तंचबिभ्रती २० स्थलपद्मप्रभामुष्टंकोमलंचसुरंजितं कृष्णादत्तार्घ्य संयुक्तंविन्यसंतीपदांबुजं २१ रत्नेंद्रसारनिर्माणविमानादवरुह्यसा सेव्यमानाचऋषिभिःश्वेतचामरवा युना २२ कस्तूरीबिंदुभिर्युक्तंचंदनेनसमन्वितं दीपदीपप्रभाकारंसिंदूरंबिंदुशोभितं २३

नेतिसमुदायार्थः



१५ १६ १७ गंगांपत्नीमवलोक्यराधाकोपिताजातेत्याह कोपेनेति १८ १९ २० २१ २२ २३ ६७ ६७

२४ २५ २६ २७ २८ २९ नम्रभागोनीचस्थानं ३० ३१ ३२ द्वादशवर्षवयोवर्तीकन्याचासावभिनवयौवनाचेत्यर्थः

दधतीभालमध्येचसीमंताधःस्थलोज्वले पारिजातप्रसूनानांमालायुक्तंसुवंक्रिमं २४ सुचारुकबरीभारंकंपयं-
तीसुकंपिता सुचारुरागसंयुक्तमोष्ठंकंपयतीरुषा २५ गत्वावासकृष्णपार्श्वे रत्नसिंहासनेशुभे सखीनांचसमूहे
श्चपरिपूर्णाविभोःप्रिया २६ तांदृष्ट्वाचसमुत्तस्थौकृष्णःसादरपूर्वकं संभाष्यमधुरालापैःसस्मितश्चससंभ्रमः
२७ प्रणेमुरतिसंत्रस्तागोपानम्रात्मकंधराः तुष्टुवुस्तेचभक्त्याचतुष्टावपरमेश्वरः २८ उत्थायगंगासहसास्तु-
तिंबहुचकारसा कुशलंपरिपप्रच्छभीतातिविनयेनच २९ नम्रभागस्थितात्रस्ताशुष्ककंठोष्ठतालुका ध्या
नेनशरणायत्ताश्रीकृष्णचरणांबुजे ३० तांहृत्पद्मस्थितांकृष्णोभीतायैचाभयंददौ बभूवस्थिरचित्तासा
सर्वेश्वरवरेणच ३१ ऊर्ध्वसिंहासनस्थांचराधांगंगाददर्शया सुस्निग्धांसुखदृश्यांचज्वलंतींब्रह्मतेजसा ३२
असंख्यब्रह्मणःकर्त्रीमादिसृष्टेःसनातनीं सदाद्वादशवर्षीयांकन्याभिनवयौवनां ३३ विश्ववृंदेनिरूपमां
रूपेणचगुणेनच शांतांकांतामनंतांतामाद्यंतरहितांसतीं ३४ शुभांसुभद्रांसुभगांस्वामिसौभाग्यसंयु
तां सौंदर्यसुंदरींश्रेष्ठांसर्वासुसुंदरीषुच ३५ कृष्णार्द्धांगांकृष्णसमांतेजसावयसात्विषा पूजितांचमहाल
क्ष्मींलक्ष्म्यालक्ष्मीश्वरेणच ३६ प्रच्छाद्यमानांप्रभयासभामीशस्यसुप्रभां सखीदत्तंचतांबूलंभुक्तवतींच
दुर्लभं ३७ अजन्यांसर्वजननींधन्यांमान्यांचमानिनीं कृष्णप्राणाधिदेवींचप्राणप्रियतमांरमां ३८
दृष्ट्वारासेश्वरींतृप्तिंनजगामसुरेश्वरी निमेषरहिताभ्यांचलोचनाभ्यांपपौचता ३९ एतस्मिन्नंतरेराधा
जगदीशमुवाचसा वाचामधुरयाशांताविनीतासस्मितामुने ४०

३३ ३४ ३५ महालक्ष्मींराधां ३६ ३७ ३८ ३९ ४०

४१ ४२ ४३ ४४ ४५ कृष्णेनपूर्वंकृतानपराधाननुवदति दृष्टस्त्वमिति विरजानाम्नीकाचिद्गोपी ४६ देहंतत्याजेति राधा
त्रासादित्यर्थः ४७ कोटियोजनेति इयमुक्तिरतिशयदीर्घविस्तृतत्वेएवनतुतावत्प्रमाणदीर्घविस्तृतत्वेपीत्यर्थः ४८ तदंतिकेविरजानदी

राधोवाच केयंप्राणेशकल्याणीसस्मितात्वन्मुखांबुजं पश्यंतीसस्मितंपार्श्वेसकामावक्रलोचना ४१ मूर्च्छांप्रा
प्नोतिरूपेणपुलकांकितविग्रहा वस्त्रेणमुखमाच्छाद्यनिरीक्षंतीपुनःपुनः ४२ त्वंचापितांसंनिरीक्ष्यसकामःस-
स्मितःसदा मयिजीवतिगोलोकेभूतादुर्वृत्तिरीदृशी ४३ त्वमेवचैवदुर्वृत्तंवारंवारंकरोषिच क्षमांकरोमिप्रे-
म्णाचस्त्रीजातिःस्निग्धमानसा ४४ संगृह्येमांप्रियामिष्टांगोलोकाद्गच्छलंपट अन्यथानहितेभद्रंभविष्यति
व्रजेश्वर ४५ दृष्टस्त्वंविरजायुक्तोमयाचंदनकानने क्षमाकृतामयापूर्वंसखीनांवचनादहो ४६ त्वयामच्छब्द
मात्रेणतिरोधानंकृतंपुरा देहंतत्याजविरजानदीरूपाबभूवसा ४७ कोटियोजनविस्तीर्णाततोदैर्घ्येचतुर्गुणा
अद्यापिविद्यमानासातवसत्कीर्तिरूपिणी ४८ गृहंमयिगतायांचपुनर्गत्वातदंतिके उच्चैरुरोदविरजेविरजेच
तिसंस्मरन् ४९ तदातोयात्समुत्थायसायोगात्सिद्धयोगिनी सालंकारामूर्तिमतीददौतुभ्यंचदर्शनं ५० तत-
स्तांचसमाक्षिप्यवीर्याधानंकृतंत्वया ततोबभूवुस्तस्यांचसमुद्राःसप्तएवच ५१ दृष्टस्त्वंशोभयागोप्यायु
क्तश्चंपककानने सद्योमच्छब्दमात्रेणातिरोधानंकृतंत्वया ५२ शोभादेहंपरित्यज्यजगामचंद्रमंडले ततस्त
स्याःशरीरंवस्निग्धंतेजोबभूवह ५३ संविभज्यत्वयादत्तंहृदयेनविदूयता रत्नायकिंचित्स्वर्णायकिंचिन्मणिव
रायच ५४

समीपेत्वंपुनर्गत्वेत्यर्थः ४९ ५० समाक्षिप्यआकृष्यमिथुनीभूय सप्तसमुद्रास्तदधिष्ठातारः पुरुषाः
५१ द्वितीयमपराधमाह दृष्टस्त्वमिति ५२ स्निग्धंशीतलंकोमलंवा ५३ ५४ ६७ ६७ ६७

५५ ५६ तृतीयमपराधमाह दृष्टस्त्वमिति ५७ ५८ ५९ ६० ६१ ६२ चतुर्थमपराधमाह शांतीति ६३ ६४ ६५

किंचित्स्त्रीणांमुखाब्जेभ्यः किंचिद्राज्ञेचकिंचन किंचित्किसलयेभ्यश्चपुष्पेभ्यश्चापिकिंचन ५५ किंचित्फलेभ्यः पक्केभ्यः सस्येभ्यश्चापिकिंचन नृपदेवगृहेभ्यश्चसंस्कृतेभ्यश्चकिंचन ५६ किंचिन्नूतनपत्रेभ्योदुग्धेभ्यश्चापिकिंचन दृष्टस्त्वंप्रभयागोप्यायुक्तोवृंदावनेवने ५७ सद्योमच्छब्दमात्रेणतिरोधानंकृतंत्वया प्रभादेहंपरित्यज्यजगामसूर्यमंडले ५८ ततस्तस्याःशरीरंचतीव्रंतेजोबभूवह संविभज्यत्वयादत्तंप्रेम्णाप्ररुदतापुरा ५९ विसृष्टंचक्षुषोःकृष्णालज्जयाचभयेनच हुताशनायकिंचिच्चयक्षेभ्यश्चापिकिंचन ६० किंचित्पुरुषसिंहेभ्योदेवेभ्यश्चापिकिंचन किंचिद्विष्णुजनेभ्यश्चनागेभ्यापिचकिंचन ६१ ब्राह्मणेभ्योमुनिभ्यश्चतपस्विभ्यश्चकिंचन स्त्रीभ्यःसौभाग्ययुक्ताभ्योयशस्विभ्यश्चकिंचन ६२ तच्चदत्वाचसर्वेभ्यः पूर्वंप्ररुदितंत्वया शांतिगोप्यायुतस्त्वंचदृष्टोसिरासमंडले ६३ वसंतेपुष्पशय्यायांमाल्यवांश्चंदनोक्षितः रत्नप्रदीपैर्युक्तेचरत्ननिर्माणमंदिरे ६४ रत्नभूषणभूषाढ्योरत्नभूषितयासह तयादत्तंचतांबूलंभुक्तवांश्चपुराविभो ६५ सद्योमच्छब्दमात्रेणतिरोधानंकृतंत्वया शांतिर्देहंपरित्यज्यभियालीनात्वयिप्रभो ६६ ततस्तस्याःशरीरंचगुणश्रेष्ठंबभूवह संविभज्यत्वयादत्तंप्रेम्णाप्ररुदतापुरा ६७ विश्वेलुविपिने किंचिद्ब्राह्मणेचमयिप्रभो शुद्धसत्वस्वरूपायैकिंचिल्लक्ष्म्यैपुराविभो ६८ त्वन्मंत्रोपासकेभ्यश्चशाक्तेभ्यश्चापिकिंचन तपस्विभ्यश्चधर्मायधर्मिष्ठेभ्यश्चकिंचन ६९ मयापूर्वंचत्वंदृष्टोगोप्याचक्षमयासह सुवेषयुक्तोमालावान्गंधचंदनचर्चितः ७०

६६ ६७ मयिराधिकायां ६८ ६९ पंचममपराधमाह मयापूर्वमिति ७०

७१ इतिपूर्वजातंसत्यंवानवेतिस्मर ७२ गृहीतंमयेतिशेषः ७३ ७४ ७५ ७६ ७७ ७८ ७९ स्वजलंपूर्वमुत्पन्नं ८०



रत्नभूषितयागंधचंदनोक्षितयासह सुखेनमूर्छितस्तल्पेपुष्पचंदनचर्चिते ७१ श्लिष्टोनिद्रितयासद्यः सुखे नवसंगमात् मयाप्रबोधितासाचभवांश्चस्मरणंकुरु ७२ गृहीतंपीतवस्त्रंचमुरलीचमनोहरा वनमाला-कौस्तुभश्चाप्यमूल्यंरत्नकुंडलं ७३ पश्चात्प्रदत्तंप्रेम्णाचसखीनांवचनाद्हो लज्जयाकृष्णवर्णोभूद्भवान्पापेनयःप्रभो ७४ क्षमादेहंपरित्यज्यलज्जयापृथिवींगता ततस्तस्याःशरीरंचगुणश्रेष्ठंबभूवह ७५ सेविभज्यत्वयादत्तंप्रेम्णाप्ररुदतापुनः किंचिद्दत्तंविष्णवेचवैष्णवेभ्यश्चकिंचन ७६ धार्मिकेभ्यश्चधर्मायदुर्बलेभ्यश्चकिंचन तपस्विभ्योपिदेवेभ्यःपंडितेभ्यश्चकिंचन ७७ एतत्तेकथितंसर्वंकिंभूयःश्रोतुमिच्छसि त्वद्गुणंनैवबहुशोनजानामिपरंप्रभो ७८ इत्येवमुक्त्वासाराधारक्तपंकजलोचना गंगांवक्तुंसमारेभेनम्रास्यांलज्जितांसतीं ७९ गंगारहस्यंविज्ञाययोगेनसिद्धयोगिनी तिरोभूयसभामध्येस्वजलंप्रविवेशसा ८० राधायोगेनविज्ञायसर्वत्रावस्थितांचतां पानंकर्तुंसमारेभेगंडूषात्सिद्धयोगिनी ८१ गंगारहस्यंविज्ञाययोगेनसिद्धयोगिनी श्रीकृष्णचरणांभोजेविवेशशरणंययौ ८२ गोलोकेसाचवैकुंठेब्रह्मलोकादिकेतथा ददर्शराधासर्वत्रनैवगंगांददर्शसा ८३ सर्वत्रजलशून्यंचशुष्कपंकंचगोलकं जलजंतुसमूहैश्चमृतदेहैःसमन्वितं ८४ ब्रह्मविष्णुशिवानंतधर्मेंद्रेंदुदिवाकराः मनवोमुनयःसर्वेदेवसिद्धतपस्विनः ८५ गोलोकंचसमाजग्मुःशुष्ककंठोष्ठतालुकाः सर्वेप्रणेमुर्गोविंदंसर्वेशंप्रकृतेःपरं ८६ वरंवरेण्यंवरदंवरिष्ठंवरकारणं गोपिकागोपवृंदानांसर्वेषांप्रवरंप्रभुं ८७

८१ ८२ ८३ जलशून्यंचेति गंगाजलस्यकृष्णचरणेलीनत्वात् ८४ ८५ ८६ ८७ ८८

८८ ८९ ९० ९१ ९२ ९३ ९४ ९५ ९६ ९७ ९८ ९९ १०० १ किंसेव्यंसेवकंकिंवेति सर्वे

निरीहंचनिराकारंनिर्लिप्तंचनिराश्रयं निर्गुणंचनिरुत्साहंनिर्विकारंनिरंजनं ८८ स्वेच्छामयंचसाकारंभक्ता
नुग्रहकारकं सत्वस्वरूपंसत्येशंसाक्षिरूपंसनातनं ८९ परंपरेशंपरमंपरमात्मानमीश्वरं प्रणम्यतुष्टुवुःस
र्वेभक्तिनम्रात्मकंधराः ९० सगद्गदाःसाश्रुनेत्राःपुलकांकितविग्रहाः सर्वेसंस्तूयसर्वेशंभगवंतंपरात्परं ९१
ज्योतिर्मयंपरंब्रह्मसर्वकारणकारकं अमूल्यरत्ननिर्माणचित्रसिंहासनस्थितं ९२ सेव्यमानंचगोपालैःश्वेत
चामरवायुना गोपालिकानृत्यगीतंपश्यंतंसस्मितंमुदा ९३ प्राणाधिकप्रियतमराधावक्षःस्थलस्थितं तया
प्रदत्तंतांबूलंभुक्तवंतंसुवासितं ९४ परिपूर्णतमंरासेददृशुश्चसुरेश्वरं मुनयोमानवाःसिद्धास्तपसान्वतपस्वि
नः ९५ प्रहृष्टमनसःसर्वेजग्मुःपरमविस्मयं परस्परंसमालोक्यप्रोचुस्तेचचतुर्मुखं ९६ निवेदितंजगन्नाथं
स्वाभिप्रायमभीप्सितं ब्रह्मातद्वचनंश्रुत्वाविष्णुंकृत्वास्वदक्षिणे ९७ वामतोवामदेवंचजगामकृष्णासंनि
धिं परमानंदयुक्तंचपरमानंदरूपिणं ९८ सर्वंकृष्णमयंधातादद्दर्शरासमंडले सर्वसमानवेषंचसमानासनसं
स्थितं ९९ द्विभुजंमुरलीहस्तंवनमालाविभूषितं मयूरपिच्छचूडंचकौस्तुभेनविराजितं १०० अतीवकमनी
यंचसुंदरंशांतविग्रहं गुणभूषणरूपेणतेजसावयसात्विषा १ परिपूर्णतमंसर्वंसर्वैश्वर्यसमन्वितं किंसेव्यं
सेवकंकिंवादृष्ट्वानिर्वक्तुमक्षमः २ क्षणंतेजःस्वरूपंचरूपंतत्रस्थितंक्षणं निराकारंचसाकारंददर्शद्विविधं
क्षणं ३ एकमेवक्षणंकृष्णंराधयारहितंपरं प्रत्येकासनसंस्थंचतयासार्द्धंचतत्क्षणं ४ राधारूपधरंकृष्णंकृ
ष्णरूपंकलत्रकं किंस्त्रीरूपंचपुरुषंविधाताध्यातुमक्षमः ५

षांतत्रत्यानांभगवत्समानरूपैश्वर्यवत्त्वात्दुर्ज्ञेयत्वमितिभावः २ ३
४ कलत्रंकंराधाकृष्णरूपे

त्यर्थः एतेनप्रकृतिपुरुषयोरत्यंताभेदःसूचितः ५ परिहारमपराधक्षमापनं ६ ७ ८ ९ १० ११ राधाइमामितिच्छेदः यूयमिमांगंगांराधांप्रा



हृत्पद्मस्थंचश्रीकृष्णंध्यात्वाध्यानेनचक्षुषा चकारस्तवनंभक्त्यापरिहारमनेकधा ६ ततःस्वचक्षुरुन्मील्य पुनश्चतदनुज्ञया ददर्शकृष्णमेकंचराधावक्षःस्थलस्थितं ७ स्वपार्षदैःपरिवृतंगोपीमंडलमंडितं पुनःप्रणेमुस्तंदृष्ट्वातुष्टुवुःपरमेश्वरं ८ तदभिप्रायमाज्ञायतानुवाचपरमेश्वरः सर्वात्मासचसर्वज्ञःसर्वेशःसर्वभावनः ९ श्रीभगवानुवाच आगच्छकुशलंब्रह्मन्नागच्छकमलापते इहागच्छमहादेवशश्वत्कुशलमस्तुवः १० आगताहिमहाभागागंगानयनकारणात् गंगाचचरणांभोजेभयेनशरणंगता ११ राधेमांपातुमिच्छंती दृष्ट्वामत्सन्निधानतः दास्यामिमांचभवतांयूयंकुरुतनिर्भयां १२ श्रीकृष्णस्यवचःश्रुत्वासस्मितःकमलोद्भवः तुष्टावराधामाराध्यांश्रीकृष्णपरिपूजितां १३ वक्त्रैश्चतुर्भिःसंस्तूयभक्तिनम्रात्मकंधरः धाताचतुर्णांवेदानामुवाचचतुराननः १४ चतुराननउवाच गंगात्वदंगसंभूताप्रभोश्चरासमंडले युवयोर्द्रवरूपासामुग्धयोःशंकरस्वनात् १५ कृष्णांशात्वदंशाचत्वत्कन्यासदृशीप्रिया त्वन्मंत्रग्रहणंकृत्वाकरोतुतवपूजनं १६ भविष्यतिपतिस्तस्यावैकुंठेशश्चतुर्भुजः भूस्थायाःकलयातस्याःपतिर्लवणवारिधिः १७ गोलोकस्थाचयागंगासर्वत्रस्थातथांबिके तदंबिकात्वंदेवेशिसर्वदासात्वदात्मजा १८ ब्रह्मणोवचनंश्रुत्वास्वीचकारचसस्मिता बहिर्बभूवसाकृष्णपादांगुष्ठनखाग्रतः १९ तत्रैवसत्कृताशांतातस्थौतेषांचमध्यतः उवासतोयादुत्थायतदधिष्ठातृदेवता २० तत्तोयंब्रह्मणाकिंचित्स्थापितंचकमंडलौ किंचिद्दधारशिरसिचंद्रार्धकृतशेखरः २१

र्थनयानिर्भयांकुरुत

१२ १३ १४ मुग्धयोर्मोहितयोः १५ १६ कलयाभूस्थायाइत्यन्वयः १७ तदंबिकातस्यागंगायामातात्वमित्यर्थः १८ १९ २० २१

२२ २३ यस्त्वंगंगाकृष्णशरीरान्निर्गतासापदांबुजात्कथंजाता ब्रह्मकमंडलौकथंगताशिवशिरसिकथंगता नारायणप्रियाकथंजातेतितत्सर्वंविस्त

गंगायैराधिकामंत्रंप्रददौकमलोद्भवः तत्स्तोत्रंकवचंपूजांविधानंध्यानमेवच २२ सर्वंतत्सामवेदोक्तंपुरश्चर्याक्रमंतथा गंगातामेवसंपूज्यवैकुंठंप्रययौसह २३ लक्ष्मीःसरस्वतीगंगातुलसीविश्वपाविनी एतानारायणस्यैवच तस्त्रोयोषितोमुने २४ अथतंसस्मितःकृष्णोब्रह्माणंसमुवाचसः सर्वकालस्यवृत्तांतंदुर्बोधमविपश्चितां २५ श्रीकृष्णउवाच गृहाणगंगांहेब्रह्मन्हेविष्णोहेमहेश्वर शृणुकालस्यवृत्तांतमत्तोब्रह्मन्निशामय २६ यूयंचयेन्ये देवाश्चमुनयोमनवस्तथा सिद्धायशस्विनश्चैवयेयेत्रैवसमागताः २७ एतेजीवंतिगोलोकेकालचक्रविवर्जिते जलप्लुतंसर्वविश्वंजातंकल्पक्षयोधुना २८ ब्रह्माद्यायेन्यविश्वस्थास्तेविलीनाधुनामयि वैकुंठंचविनासर्वंजलमग्नंचपद्मज २९ गत्वासृष्टिंकुरुपुनर्ब्रह्मलोकादिकंभवं स्वंब्रह्मांडंविरचयपश्चाद्गंगाप्रयास्यति ३० एवमन्येषुविश्वेषुसृष्टोब्रह्मादिकंपुनः करोम्यहंपुनःसृष्टिंगच्छशीघ्रंसुरैःसह ३१ गताबहुतरःकालोयुष्माकंचचतुर्मुखाः गताःकतिविधास्तेचभविष्यंतिचवेधसः ३२ इत्युक्त्वाराधिकानाथोजगामांतःपुरेमुने देवागत्वापुनःसृष्टिंचक्रुरेवप्रयत्नतः ३३ गोलोकेचस्थितागंगावैकुंठेशिवलोकके ब्रह्मलोकेस्थितान्यत्रयत्र यत्रपुरःस्थिता ३४ तत्रैवसागतागंगाचाज्ञयापरमात्मनः निर्गताविष्णुपादाब्जात्तेनविष्णुपदीस्मृता ३५ इत्येवंकथितंब्रह्मन्गंगोपाख्यानमुत्तमं सुखदंमोक्षदंसारंकिंभूयःश्रोतुमिच्छसि ३६ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेगंगोपाख्याननामत्रयोदशोध्यायः १३

रेणवर्णितंतदुपसंहरति लक्ष्मीःसरस्वतीति २४ २५ २६ २७ कल्पक्षयोधुनेति खंडप्रलयःकेषांचिद्ब्रह्मांडानांजातइत्यर्थः २८ तदेवाह ब्रह्माद्याइति २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ इतिश्रीदेवीभागवततिलकेनवमस्कंधेत्रयोदशोध्यायः १३

त्रयोविंशतिभिः पद्यैर्गंगाविष्ण्वोः परस्परं संबंधस्तु कुतः केनेत्येतदत्राभिधीयते १ पूर्वोक्तमनूद्य नारदः पृच्छति नारदउवाच लक्ष्मीसर
स्वतीति १ २ ३ राधाकृष्णांगयोः संभूता ४ तदंगसंभवा कृष्णांगसंभवा तं कृष्णं विनानान्यं पतिं वृणोतीत्यर्थः ५ तर्ह्यत्र किमर्थमागते

नारदउवाच लक्ष्मीः सरस्वती गंगा तुलसी विश्वपाविनी एता नारायणस्यैव चतस्रश्च प्रिया इति १ गंगाज
गाम वैकुंठमिदमेव श्रुतं मया कथं सा तस्य पत्नी च बभूवेति च न श्रुतं २ श्रीनारायणउवाच गंगाजगाम वै
कुंठं तत्पश्चाज्जगतां विधिः गत्वोवाच तया सार्द्धं प्रणम्य जगदीश्वरं ३ ब्रह्मोवाच राधाकृष्णांगसंभू
ताया देवी द्रवरूपिणी नवयौवनसंपन्ना सुशीला सुंदरी वरा ४ शुद्धसत्त्वस्वरूपा च क्रोधाहंकारवर्जिता त
दंगसंभवानान्यं वृणोतीयं च त्वं विना ५ तत्रातिमानिनी राधा सा च तेजस्विनी वरा समुद्युक्ता पातुमिमां भी
तेयं बुद्धिपूर्वकं ६ विवेश चरणांभोजे कृष्णस्य परमात्मनः सर्वत्र गोलकं शुष्कं दृष्ट्वाहमगमं तदा ७ गो-
लोके यत्र कृष्णश्च सर्ववृत्तांतप्राप्तये सर्वांतरात्मा सर्वेषां ज्ञात्वाभिप्रायमेव च ८ बहिश्चकार गंगां च पादां
गुष्ठनखाग्रतः दत्त्वास्यै राधिकामंत्रं पूरयित्वा च गोलकान् ९ प्रणम्य तां च राधेशं गृहीत्वात्रागमं प्रभो गां
धर्वेण विवाहेन गृहाणेमां सुरेश्वरीं १० सुरेश्वरेषु रसिको रसिकेयं समागता त्वं रत्नपुंसु देवेश स्त्रीरत्नं स्त्रीष्वि
यं सती ११ विदग्धाया विदग्धेन संगमो गुणवान्भवेत् उपस्थितां स्वयं कन्यां न गृह्णाति हि यः पुमान् १२
तं विहाय महालक्ष्मी रुष्टा याति न संशयः यो भवेत्पंडितः सोपि प्रकृतिं नावमन्यते १३ सर्वे प्राकृतिकाः
पुंसः कामिन्यः प्रकृतेः कलाः त्वमेव भगवान्नाथो निर्गुणः प्रकृतेः परः १४

तिचेच्छृणु तत्रातीति इमां गंगां पातुं भ-
क्षितुं समुद्युक्ता यदा तदेयं भीता सती कृष्णस्य चरणे विवेश गुप्ता बभूव ६ ७ ८ ९ १० रसिके त्वयि ११ १२ १३ प्राकृतिका मूलप्रकृतेरुद्भूताः कामिन्यो

पिप्रकृतेः कलाः मूलप्रकृतेरेवोद्भूताः अतः परस्परमेकत्वादवमानो न कर्त्तव्य इत्यर्थः तदुक्तं पुराणांतरे स्त्रियस्तुष्टाः स्त्रियो रुष्टास्तुष्टा रुष्टाश्च देवताः
वर्धयंति कुलं तुष्टा नाशयंत्यपमानिता इति ननु कृष्णासक्ते यं कथं मां वरितुमागतेति चेद्युवयोः कृष्णनारायणयोः पूर्वोक्तोत्पत्त्यनुसारेणैकत्वादि-
त्याह त्वमेवेति १४ १५ सा च राधिका दक्षिणांशः वामांशः कमला येन कारणेनैवं रीत्योभयोः कृष्णनारायणयोरभेदस्तेन कारणेनेत्यर्थः

अर्द्धांगाद्द्विभुजः कृष्णो योऽर्द्धांगेन चतुर्भुजः कृष्णवामांगसंभूता बभूव राधिका पुरा १५ दक्षिणांशः स्वयं सा च
वामांशः कमला तथा तेनेयं त्वां वृणोत्येव यतस्त्वद्देहसंभवा १६ एकांगं चैव स्त्रीपुंसोर्यथा प्रकृतिपूरुषौ इत्ये
वमुक्त्वा धाता तां तं समर्प्य जगाम सः १७ गांधर्वेण विवाहेन तां जग्राह हरिः स्वयं नारायणः करं धृत्वा पुष्पचंद
नचर्चितं १८ रेमे रमापतिस्तत्र गंगया सहितो मुदा गंगा पृथ्वीं गता या सा स्वस्थानं पुनरागता १९ निर्गता विष्णुपा
दाब्जात्तेन विष्णुपदीति च मूर्च्छां संप्राप सा देवी नवसंगमलीलया २० रसिका सुखसंभोगाद्रसिकेश्वरसंयुता
तां दृष्ट्वा दुःखिता वाणी पद्मया वर्जितापि च २१ नित्यमीर्ष्यति तां वाणी न च गंगा सरस्वतीं गंगा शशाप कोपेन
भारते च हरिप्रिया २२ गंगया सह तस्यैव तिस्रो भार्या रमापतेः सार्द्धं तुलस्या पश्चाच्च तस्याश्चाभवन्मुने
२३ इति श्रीदेवीभागवते महापुराणे नवमस्कंधे चतुर्दशोऽध्यायः १४ नारद उवाच नारायणप्रिया साध्वी
कथं सा च बभूव ह तुलसी कुत्र संभूता का वा सा पूर्वजन्मनि १

१६ यथा मूलप्रकृतियुक्तः पुरुषः परमात्मा एकस्तथा स्त्री
पुंसोरेकांगमेव भवतीत्यर्थः १७ १८ उपसंहरति गंगेति एवंप्रकारेण पृथ्वीं गता पुनः स्वस्थानं वैकुंठं गता १९ २० वर्जिता निवारितापि तां गंगां
वाणी सरस्वती नित्यमीर्ष्यति द्वेष्टि गंगा तु न च सरस्वतीं द्वेष्टि सर्वेयं पूर्वोक्तकथोपसंहारः २१ २२ २३ इति श्रीदेवीभागवततिलके नवम
स्कंधे चतुर्दशोऽध्यायः १४ अर्धाधिके कपंचाशत्पद्यैरथ तु नारदः ज्ञातुं तुलस्युपाख्यानं पप्रच्छेति च वर्ण्यते १ ६५ ६५

तुलस्युपाख्यानंपृच्छति नारदउवाच नारायणप्रियेति १ प्रकृतेःपरंविष्णुंकेनतपसाप्राप्तेत्यन्वयः २ ३ ४ एतादृशीमहाविष्णुप्रियासत्यपी-
त्यर्थः असुरग्रस्ताराधणेनपीडितेत्यर्थः ५ प्रेरयन्मांकथाश्रवणेप्रवर्तयत्सन्निष्ठतीत्यर्थः अतश्छेत्तुमर्हसिसंदेहमित्याह छेत्तुमिति ६ ७

कस्यवासाकुलेजाताकस्यकन्याकुलेसती केनवातपसासाचसंप्राप्ताप्रकृतेःपरं २ निर्विकारंनिरीहंचसर्वविश्व-
स्वरूपकं नारायणंपरंब्रह्मपरमेश्वरमीश्वरं ३ सर्वाराध्यंचसर्वेशंसर्वज्ञंसर्वकारणं सर्वाधारंसर्वरूपंसर्वेषांपरिपा
लकं ४ कथमेतादृशीदेवीवृक्षत्वंसमवापह कथंसाप्यसुरग्रस्तासंबभूवतपस्विनी ५ सुस्निग्धंमेमनोलोलं
प्रेरयन्मांमुहुर्मुहुः छेत्तुमर्हसिसंदेहंसर्वसंदेहभंजन ६ नारायणउवाच मनुश्चदक्षसावर्णिःपुण्यवान्वैष्णा
वःशुचिः यशस्वीकीर्तिमांश्चैवविष्णोरंशसमुद्भवः ७ तत्पुत्रोब्रह्मसावर्णिधर्मिष्ठोवैष्णवःशुचिः तत्पुत्रोध
र्मसावर्णिर्वैष्णवश्चजितेंद्रियः ८ तत्पुत्रोरुद्रसावर्णिर्भक्तिमान्विजितेंद्रियः तत्पुत्रोदेवसावर्णिविष्णुव्रतप
रायणः ९ तत्पुत्रइंद्रसावर्णिर्महाविष्णुपरायणः वृषध्वजश्चतत्पुत्रोवृषध्वजपरायणः १० यस्याश्रमेस्वयंशं
भुरासीद्देवयुगत्रयं पुत्रादपिपरःस्नेहोनृपेतस्मिन्शिवस्यच ११ नचनारायणंमेनेनलक्ष्मींनसरस्वतीं पूजांचस
र्वदेवानांदूरीभूतांचकारसः १२ भाद्रेमासिमहालक्ष्मीपूजांमत्तोबभंजह तथामाघीयपंचम्यांविस्तृतांसर्वदेवतैः
१३ पापःसरस्वतीपूजांदूरीभूतांचकारसः यज्ञंचविष्णुपूजांचनिंदंतंतंदिवाकरः १४ चुकोपदेवोभूपेंद्रंशशापशि
वकारणात् भ्रष्टश्रीस्त्वंचभवेतितंशशापदिवाकरः १५

९ वृषध्वजपरायणःशिवभक्तः १० देवानांयुगत्रयं ११ १२ बभंजह नकृतवा
न् १३ सरस्वतीपूजांमाघपंचम्या यज्ञंअग्निहोत्रादिकं निंदंतंसर्वदेवान्निंदंतंवृषध्वजंराजानंदिवाकरश्चुकोपेत्यन्वयः १४ शिवकारणात्सर्वव्या-
पकस्यसर्वदेवतामयस्यशिवस्यपरिच्छेदकत्वात्द्वैतभावेनपूजनादित्यर्थः एतेनैकंदेवंपरिच्छिन्नतयाज्ञात्वातमेवसंपूज्यान्यदेवतापूजनत्यागेम

हाननर्थोभवति किंतुस्वेष्टदेवंसर्वात्मकत्वेनज्ञात्वासर्वदेवतास्वरूपंस्वेष्टदेवमभेदबुध्यावेदोक्तानुष्ठानप्रकारेणतत्तत्कालेतत्तद्देवतारूपेणपू
जयेदित्युक्तंभवतीतिबोध्यं १५ अधावच्छंकरइति इमामेववेदोक्तांमर्यादांस्थापयितुमेतादृशभक्तस्यस्वेष्टदेवतयापिकल्याणंकर्तुंनन

शूलंगृहीत्वातंसूर्यमधावच्छंकरःस्वयं पित्रासार्द्धंदिनेशश्चब्रह्माणंशरणंययौ १६ शिवस्त्रिशूलहस्तश्चब्र-
ह्मलोकंययौक्रुधा ब्रह्मासूर्यंपुरस्कृत्यवैकुंठंचययौभिया १७ ब्रह्मकश्यपमार्तंडाःसंत्रस्ताःशुष्कतालुकाः ना
रायणंचसर्वेशंतेययुःशरणंभिया १८ मूर्ध्नाप्रणेमुस्तेगत्वातुष्टुवुश्चपुनःपुनः सर्वंनिवेदनंचक्रुर्भयस्यकार
णंहरौ १९ नारायणश्चकृपयातेभ्यश्चह्यभयंददौ स्थिराभवंतहेभीताभयंकिंचमयिस्थिते २० स्मरं-
तियेयत्रतत्रमांविपत्तौभयान्विताः तांस्तत्रगत्वारक्ष्यामिचक्रहस्तस्त्वरान्वितः २१ पाताहंजगतांदेवाःक
र्ताचसततंसदा स्रष्टाचब्रह्मरूपेणसंहर्ताशिवरूपतः २२ शिवोहंत्वमहंचापिसूर्योहंत्रिगुणात्मकः विधायना
नारूपंचकरोमिसृष्टिपालनं २३ यूयंगच्छतभद्रंवोभविष्यतिभयंकुतः अद्यप्रभृतिमद्वरेणभयंवोनास्तिशं
करात् २४ सर्वेशोवैसभगवान्शंकरश्चसतांपतिः भक्ताधीनश्चभक्तानांभक्तात्माभक्तवत्सलः २५ सुदर्शनः
शिवश्चैवममप्राणाधिकःप्रियः ब्रह्मांडेषुनतेजस्वीहेब्रह्मन्ननयोःपरः २६ शक्तःस्रष्टुंमहादेवःसूर्यकोटिंचली
लया कोटिंचब्रह्मणामेवंनासाध्यंशूलिनःप्रभोः २७ बाह्यज्ञानंनैवकिंचित्ध्यायतेमांदिवानिशं मन्मंत्रान्मद्गु
णान्भक्त्यापंचवक्त्रेणगायति २८

शक्यतइतिबोधनार्थंसूर्येणममाभिलषितंकृतमितिजानन्नपिसर्वज्ञःशिवोभिनिवेशेनसूर्यंप्रत्य
धावन्गतवानितिभावः पित्राकश्यपेन १६ १७ १८ १९ मयिस्थितेकिंभयंनकिमपीत्यर्थः २० २१ २२त्वंब्रह्माप्यहमेव २३ २४ विष्णुःशंकरस्यपू
र्वोक्ताभिप्रायंमनसिज्ञात्वासम्यक्शंकरेणकृतमित्यभिप्रायेणशंकरंस्तौति सर्वेशइति २५ सुदर्शनःसूर्यः २६ २७ बाह्यंज्ञानंतस्यनकिंचिदप्यस्तिकिंतुनिरं

तरंमामेवध्यायतीत्यर्थः २८ २९शिवस्यमोक्षस्याधिष्ठाता ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२



अहमेवच्चिंतयामितत्कल्याणंदिवानिशं यथाच्चमांप्रपद्यंतेतांस्तथैवभजाम्यहं २९ शिवस्वरूपोभगवाञ्शिवाधिष्ठा
तृदेवता शिवंभवतितस्माच्चशिवंतेनविदुर्बुधाः३० एतस्मिन्नंतरेतत्रजगामशंकरःस्थितः शूलहस्तोवृषारूढोरक्त
पंकजलोचनः ३१ आरुह्यचवृषाच्चूर्णंभक्तिनम्रात्मकंधरः ननामभक्त्यातंशांतंलक्ष्मीकांतंपरात्परं ३२ रत्नसिंहा
सनस्थंचरत्नालंकारभूषितं किरीटिनंकुंडलिनंचक्रिणंवनमालिनं ३३ नवीननीरदश्यामंसुंदरंचचतुर्भुजं चतुर्भु
जैःसेवितंचश्वेतचामरवायुना ३४ चंदनोक्षितसर्वांगंभूषितंपीतवाससं लक्ष्मीप्रदत्ततांबूलंभुक्तवंतंचनारद
३५ विद्याधरीनृत्यगीतंपश्यंतंसस्मितंसदा ईश्वरंपरमात्मानंभक्तानुग्रहविग्रहं ३६ तंननाममहादेवोब्रह्मणा
नमितश्चसः ननामसूर्योभक्त्याचसंत्रस्तश्चंद्रशेखरं ३७ कश्यपश्चमहाभक्त्यातुष्टावचननामच शिवःसंस्तू
यसर्वेशंसमुवाससुखासने ३८ सुखासनेसुखासीनंविश्रांतंचंद्रशेखरं श्वेतचामरवातेनसेवितंविष्णुपार्षदैः
३९ पीयूषतुल्यंमधुरंवचनंसुमनोहरं विष्णुरुवाच आगतोसिकथंचात्रवदकोपस्यकारणं ४० महादेवउ
वाच वृषध्वजंचमद्भक्तंममप्राणाधिकंप्रियं सूर्यःशशापइतिमेप्रकोपस्यतुकारणं ४१ पुत्रवत्सलशोकेनसू
र्यंहंतुंसमुद्यतः सब्रह्माणंप्रपन्नश्चसूर्यश्चसविधिस्त्वयि४२त्वयियेशरणापन्नाध्यानेनवचसापिवा निरापदाविं
शंकास्तेजरामृत्युश्चतेर्जिताः ४३ प्रत्यक्षंशरणापन्नास्तत्फलंकिंवदामिभो हरिस्मृतिश्चाभयदासर्वमंगलदासदा
४४ किंमेभक्तस्यभवितातन्मेब्रूहिजगत्प्रभो श्रीहतस्यास्यमूढस्यसूर्यशापेनहेतुना ४५ विष्णुरुवाच
कालोतियातोदैवेनयुगानामेकविंशतिः वैकुंठघटिकार्द्धेनशीघ्रंगच्छत्वमालयं ४६ ४३ ४४ ४५ ४६

५९

४७ ४८ कमलातपसालक्ष्म्युद्देश्यकंतपस्ययायुक्तौ कलयांशेनलक्ष्मीर्भविष्यतिअवतरिष्यति ४९ ५० ५१ इतिश्रीदेवीभागवततिलकेनवम
स्कंधेपंचदशोध्यायः १५ त्रिषष्टिश्लोकवर्यैस्तु अर्द्धश्लोकेनचाधिकैःमहालक्ष्म्याराजगृहेजन्मसम्यगथोच्यते १ नारायणस्तदुत्तरंजातंवृत्तांत

वृषध्वजोमृतःकालाद्दुर्निवार्यात्सुदारुणात् रथध्वजश्चतत्पुत्रोमृतःसोपिश्रियाहृतः ४७ तत्पुत्रौचमहाभागौधर्मध्वज
कुशध्वजौ हृतश्रियौसूर्यशापात्स्मृतौपरमवैष्णवौ ४८ राज्यभ्रष्टौश्रियाभ्रष्टौकमलातपसारतौ तयोश्चभार्ययोर्ल
क्ष्मीःकमलाचभविष्यति ४९ संपद्युक्तौतदातौचनृपश्रेष्ठौभविष्यतः मृतस्तेसेवकःशंभोगच्छयूयंचगच्छत ५० इत्युक्त्वा
चसलक्ष्मीकःसभातोभ्यंतरंगतः देवाजग्मुःसंप्रहृष्टाःस्वाश्रमंपरमंमुदा ५१ शिवश्चतपसेशीघ्रंपरिपूर्णतमोययौ इति
श्रीदेवीभागवतेमहापुराणेनवमस्कंधेनारायणनारदसंवादेशक्तिप्रादुर्भावेपंचदशोध्यायः १५ श्रीनारायणउवाच
लक्ष्मींतौचसमाराध्यचोग्रेणतपसामुने वरमिष्टंचप्रत्येकंसंप्रापतुरभीप्सितं १ महालक्ष्मीवरेणैवतौपृथ्वीशौबभू
वतुः पुण्यवंतौपुत्रवंतौधर्मध्वजकुशध्वजौ २ कुशध्वजस्यपत्नीचदेवीमालावतीसती सासुषावचकालेनकमलांशां
सुतांसतीं ३ साचभूमिष्ठकालेनज्ञानयुक्ताबभूवह कृत्वावेदध्वनिंस्पष्टमुत्तस्थौसूतिकागृहात् ४ वेदध्वनिंसाचका
रजातमात्रेणकन्यका तस्मात्तांचवेदवतींप्रवदंतिमनीषिणः ५ जातमात्रेणसुस्नाताजगामतपसेवनं सर्वैर्निषिद्धाय
त्नेननारायणपरायणा ६ एकमन्वंतरंचैवपुष्करेचतपस्विनी अत्युग्रांचतपस्यांचलीलयाहिचकारसा ७ तथापिपु
ष्टानक्लिष्टानवयौवनसंयुता शुश्रावसाचसहसासुवाचमशरीरिणीं ८ जन्मांतरेचतेभर्ताभविष्यतिहरिःस्वयं ब्रह्मादि
भिर्दुराराध्यंपतिंलप्स्यसिसुंदरि ९

माह लक्ष्मींतौचेति १ २ कमलांशांलक्ष्म्यंशांभूमिष्ठकालेनबहुकालेनसुतांकन्यांसासु
षावेत्याह सुषावेति ३ साचजन्मनैवज्ञानयुक्ताल्क्ष्म्यंशत्वाद्बभूवह ४ ५ जातमात्रेणजन्ममात्रेण ६ ७ सुवाचंदेववाचं ८ ९ ६२ ६२

१० ११ १२ १३ १४ शृंगारंमैथुनं १५ १६ तस्यरावणस्यस्तवनंसुकृतंपरलोकप्रदानेनफलंचकारेत्यर्थः नहिपराशक्तेःस्तवनंव्यर्थंभविष्यती
ति १७ इदंममवाचोबलंसामर्थ्यंविलोकय १८ देहत्यागमिति परपुरुषेणस्पृष्टदेहस्यदुष्टत्वात्तत्त्यागएवोचितइतिसतीधर्ममर्यादाबोधिता १९



इतिश्रुत्वाचसात्वष्टाचकारहपुनस्तपः अतीवनिर्जनस्थानेपर्वतेगंधमादने १० तत्रैवसुचिरंतस्थाविश्वस्यसमुवास-
सा ददर्शपुरतस्तत्ररावणंदुर्निवारणं ११ दृष्ट्वासातिथिभक्त्याचपाद्यंतस्मैददौकिल सुस्वादभूतंचफलंजलंचापिसु
शीतलं १२ तच्चभुक्त्वासपापिष्ठश्चोवासतत्समीपतः चकारप्रश्नमितितांकात्वंकल्याणिवर्तसे १३ तांदृष्ट्वासवरारो
हांपीनश्रोणिपयोधरां शरत्पद्मोत्सवास्यांचसस्मितांसुदतींसतीं १४ मूर्छामवापरूपणःकामबाणप्रपीडितः सक
रेणसमाकृष्यशृंगारंकर्तुमुद्यतः १५ सतीचुकोपदृष्ट्वातंस्तंभितंचचकारह सजडोहस्तपादैश्चकिंचिद्वक्तुंनचक्षमः
१६ तुष्टावमनसादेवींप्रययौपद्मलोचनां सातुष्टातस्यस्तवनंसुकृतंचचकारह १७ साशशापमदर्थेत्वंविनंक्ष्य-
सिसबांधवः स्पृष्टाहंचत्वयाकामाद्बलंचाप्यवलोकय १८ इत्युक्त्वासाचयोगेनदेहत्यागंचकारसा गंगायांतांच
संन्यस्यस्वगृहंरावणोययौ १९ अहोकिमद्भुतंदृष्टंकिंकृतंवानयाधुना इतिसंचिंत्यसंचिंत्यविललापपुनःपुनः २० सा
चकालांतरेसाध्वीबभूवजनकात्मजा सीतादेवीतिविख्यातायदर्थेरावणोहतः २१ महातपस्विनीसाचतपसापूर्वज-
न्मतः लेभेरामंचभर्तारंपरिपूर्णतमंहरिं २२ संप्रापतपसाराध्यंदुराराध्यंजगत्पतिं सारमासुचिरंरेमेरामेणसहसुं-
दरी २३ जातिस्मरानस्मरतितपसश्चक्लमंपुरा सुखेनतज्जहौसर्वंदुःखंचापिसुखंफले २४ नानाप्रकारविभवंचकारसुचि
रंसती संप्राप्यसुकुमारंतमतीवनवयौवना २५

विललापरावणः २० २१ २२ २३ तपसःक्लमंखेदं दुःखंचापिसुखंफलेइति
परिणामेउत्तमफलेसतिदुःखमपिसुखमेवभवतीत्यर्थः २४ तंरामं २५ ७२ ७२ ७२ ७२ ७२ ७२ ७२ ७२

२६ २७ २८ २९ ३० जगत्प्रसूंसीतां ३१ विप्रोनाहंकिंतुहुताशनः ३२ लक्ष्मणंप्रतितमर्थंनप्रकाश्यनप्रकटीकृत्य ३३ ३४ इदंगोप्यंवस्तुकस्मै-

गुणिनंरसिकंशांतंकांतंदेवमनुत्तमम् स्त्रीणांमनोज्ञंरुचिरंतथालेभेयथेप्सितं २६ पितुःसत्यपालनार्थंसत्यसंधोरघूद्वहः
जगामकाननंपश्चात्कालेनचबलीयसा २७ तस्थौससमुद्रनिकटेसीतयालक्ष्मणेनच ददर्शतत्रवन्हिंचविप्ररूपधरंहरिः
२८ रामंचदुःखितंदृष्ट्वासचदुःखीबभूवह उवाचकिंचित्सत्येष्टंसत्यंसत्यपरायणः २९ द्विजउवाच भगवन्श्रूयतांराम
कालोयंयदुपस्थितः सीताहरणकालोयंतवैवसमुपस्थितः ३० दैवंचदुर्निवार्यंचनचदैवात्परोबली जगत्प्रसूंमयिन्य
स्यछायांरक्षांतिकेधुना ३१ दास्यामिसीतांतुभ्यंचपरीक्षासमयेपुनः दैवैःप्रस्थापितोहंचनचविप्रोहुताशनः ३२
रामस्तद्वचनंश्रुत्वानप्रकाश्यचलक्ष्मणं स्वीकारंवचसश्चक्रेत्हृदयेनविदूयता ३३ वन्हिर्योगेनसीतायामायासीतां
चकारह तत्तुल्यगुणासर्वांगांददौरामायनारद ३४ सीतांगृहीत्वासययौगोप्यंवक्तुंनिषिध्यच लक्ष्मणोनैवबुबुधेगो
प्यमन्यस्यकाकथा ३५ एतस्मिन्नंतरेरामोददर्शकनकंमृगं सीतातंप्रेरयामासतदर्थेयत्नपूर्वकं ३६ संन्यस्यलक्ष्म
णंरामोजानक्यारक्षणेवने स्वयंजगामतूर्णंतंविव्याधसायकेनच ३७ लक्ष्मणेतिचशब्दंसकृत्वाचमाययामृगः
प्राणांस्तत्याजसहसापुरोदृष्ट्वाहरिंस्मरन् ३८ मृगदेहंपरित्यज्यदिव्यरूपंविधायच रत्ननिर्माणयानेनवैकुंठंसजगा
मह ३९ वैकुंठलोकद्वार्यासीत्किंकरोद्वारपालयोः पुनर्जगामतद्वारमादेशाद्वारपालयोः ४० अथशब्दंचसाश्रुत्वा
लक्ष्मणेतिचविक्लवं तंहिसाप्रेरयामासलक्ष्मणंरामसन्निधौ ४१ गतेचलक्ष्मणेरामंरावणोदुर्निवारणः सीतांगृहीत्वा
प्रययौलंकामेवस्वलीलया ४२

चिह्नकुंनिषिध्यसीतांगृहीत्वासोग्निर्ययौ ३५ ३६ ३७ ३८ ३९ पूर्वंद्वारपालयोःकिंकरआसीत्स
कारणवशाद्राक्षसोभूत्सपुनरपिरामबाणेनहतोवैकुंठेद्वारपालयोःसमीपेजगामेत्यर्थः ४० ४१ ४२ ७ ७ ७ ७

४३ ४४ ४५ ४६ तांसीतांवह्निपरीक्षांदिव्यं ४७ वह्निंरामंचछायासीताइतःपरंकिमहंकरिष्यामिकिंमयाकर्तव्यमित्युपायंवदस्वेत्युवाच ४८ ४९ ५०



विषादच्चरामश्चवनेदृष्ट्वाचलक्ष्मणं तूर्णंचस्वाश्रमंगत्वासीतांनैवददर्शसः ४३ मूर्छांसप्रापसुचिरंविललापभृशंपुनः पुनः
पुनश्चबभ्रामतदन्वेषणपूर्वकं ४४ कालेनप्राप्यतद्वार्तांगोदावरीनदीतटे सहायान्वानरान्कृत्वाबबंधसागरंहरिः ४५ लंकां
गत्वारघुश्रेष्ठोजघानसायकेनच कालेनप्राप्यतंहत्वारावणंबांधवैःसह ४६ तांचवह्निपरीक्षांचकारयामाससत्वरं हुताशस्त
त्रकालेतुवास्तवींजानकींददौ ४७ उवाचछायावह्निंचरामंचविनयान्विता करिष्यामीतिकिमहंतदुपायंवदस्वमे ४८
श्रीरामाग्नीऊचतुः त्वंगच्छतपसेदेविपुष्करंचसुपुण्यदं कृत्वातपस्यांतत्रैवस्वर्गलक्ष्मीर्भविष्यसि ४९ साचतद्वचनंश्रु
त्वाप्रतप्यपुष्करेतपः दिव्यंत्रिलक्षवर्षंचस्वर्गलक्ष्मीर्बभूवह ५० साचकालेनतपसायज्ञकुंडसमुद्भवा कामिनीपांडवानांच
द्रौपदीद्रुपदात्मजा ५१ कृतेयुगेवेदवतीकुशध्वजसुताशुभा त्रेतायांरामपत्नीचसीतेतिजनकात्मजा ५२ तच्छायाद्रौ
पदीदेवीद्वापरेद्रुपदात्मजा त्रिहायणीचसंप्रोक्ताविद्यमानायुगत्रये ५३ नारदउवाच प्रियाःपंचकथंतस्याबभूवुर्मु
निपुंगव इतिमच्चित्तसंदेहंभंजसंदेहभंजन ५४ नारायणउवाच लंकायांवास्तवीसीतारामंसंप्रापनारद रूपयौवन
संपन्नाछायाचबहुचिंतया ५५ रामाग्न्योराज्ञयातप्तुसुपास्तेशंकरंपरं कामातुरापतिव्यग्राप्रार्थयंतीपुनःपुनः ५६ पतिं
देहिपतिंदेहिपतिंदेहित्रिलोचन पतिंदेहिपतिंदेहिपंचवारंचकारसा ५७ शिवस्तत्प्रार्थनांश्रुत्वाप्रहस्यरसिकेश्वरः प्रिये
तवप्रियाःपंचभविष्यंतिवरंददौ ५८ तेनसापांडवानांचबभूवकामिनीप्रिया इतितेकथितंसर्वंप्रस्तावंवास्तवंशृणु ५९ अ
थसंप्राप्यलंकायांसीतांरामोमनोहरां बिभीषणायतांलंकांदत्वायोध्यांययौपुनः ६०

साचेति स्वर्गलक्ष्मीः ५१ ५२ यतोयुग
त्रयेवर्तमानाततस्त्रिहायणीतिनामहायनशब्दोत्रयुगपरः ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३

६१ ६२ ६३ इतिश्रीदेवीभागवततिलकेनवमस्कंधेषोडशोध्यायः १६ अष्टाधिकैश्चचत्वारिंशत्पद्यैस्तुसविस्तरं धर्मध्वजसुतायास्तुतुलस्याश्च
कथोच्यते १ तुलसीकथायांप्रवृत्तायांप्रसंगागतांकुशध्वजसुताकथांसमाप्यधर्मध्वजसुतायास्तुलस्याःकथामाह श्रीनारायणउवाच धर्मध्वज

एकादशसहस्राब्दंकृत्वाराज्यंचभारते जगामसर्वैर्लोकैश्चसार्द्धंवैकुंठमेवच ६१ कमलांशावेदवतीकमलायांवि
वेशसा कथितंपुण्यमाख्यानंपुण्यदंपापनाशनं ६२ सततंमूर्तिमंतश्चवेदाश्चत्वारएवच संतियस्याश्चजिव्हाग्रे
साचवेदवतीश्रुता ६३ धर्मध्वजसुताख्यानंनिबोधकथयामिते इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेषोड
शोध्यायः १६ श्रीनारायणउवाच धर्मध्वजस्यपत्नीचमाधवीतिचविश्रुता नृपेणसार्धंसारामेरम्येचगंधमादने
१ शय्यांरतिकरींकृत्वापुष्पचंदनचर्चितां चंदनालिप्तसर्वांगीपुष्पचंदनवायुना २ स्त्रीरत्नमतिचार्वंगीरत्नभूष-
णभूषिता कामुकीरसिकासृष्टारसिकेनचसंयुता ३ सुरतेविरतिर्नास्तितयोःसुरतिविज्ञयोः गतंदेववर्षशतंनज्ञा
तंचदिवानिशं ४ ततोराजामतिंप्राप्यसुरताद्विरराम च कामुकीसुंदरीकिंचिन्नचतृप्तिंजगामसा ५ दधारगर्भंसा-
सद्योदैवादब्दशतंसती श्रीगर्भाश्रीयुतासाचसाबभूवदिनेदिने ६ शुभेक्षणेशुभदिनेशुभयोगेनचसंयुते शुभ
लग्नेशुभांशेचशुभस्वामिग्रहान्विते ७ कार्तिकीपूर्णिमायांतुसितवारेचपाद्मज सुषावसाचपद्मांशंपद्मिनीतांम-
नोहरां ८ शरत्पार्वणचंद्रास्यांशरत्पंकजलोचनां पक्वबिंबाधरोष्टींचपश्यंतींसस्मितांगृहं ९ हस्तपादतलारक्तां-
निम्ननाभिंमनोरमां तदधस्त्रिवलीयुक्तांनितंबयुगवर्तुलां १० शीतेसुखोष्णसर्वांगींग्रीष्मेचसुखशीतलां श्यामां
सुकेशींरुचिरांन्यग्रोधपरिमंडलां ११

स्येति साआरामेइतिच्छेदः १ २ ३ ४ ५ ६ ७ सितवारेशुक्रवा
रे पाद्मजपद्माज्जातोब्रह्मापाद्मस्तस्माज्जातोनारदःपाद्मजः ८ ९ १० न्यग्रोधसटावल्लंबायमानंकेशपरिमंडलंयस्याःसा ११ ६२

१२ तुलसीति तुलामुपमामस्यनिक्षिपतिसातुलसी असुक्षेपणेइतिधातोः पचाद्यचिशकंध्वादित्वात्सररूपेगोरादिपाठान्ङीष् भूमिष्ठमात्रेणभूमौपतन-



पीनचंपकवर्णाभांसुंदरीष्वेवसुंदरीं नरानार्यश्चतांदृष्ट्वातुलनांदातुमक्षमाः १२ तेननाम्नाचतुलसीतांवदंतिम
नीषिणः साचभूमिष्ठमात्रेणयोग्याऽस्त्रीप्रकृतिर्यथा १३ सर्वैर्निषिद्धातपसेजगामबदरीवनं तत्रदेवाब्दलक्षंन्चच
कारपरमंतपः १४ मनसानारायणःस्वामीभवितेतिचनिश्चिता ग्रीष्मेपंचतपाःशीतेतोयवस्त्राचप्रावृषि १५ आ
सनस्थावृष्टिधाराःसहंतीतिदिवानिशं विंशत्सहस्त्रवर्षंचफलतोयाशनाचसा १६ त्रिंशत्सहस्त्रवर्षंचपत्राहारातप-
स्विनी चत्वारिंशत्सहस्राब्दंवाय्वाहाराकृशोदरी १७ ततोदशसहस्त्राब्दंनिराहाराबभूवसा निर्लक्षांचैकपाद-
स्थांदृष्ट्वातांकमलोद्भवः १८ समाययौवरंदातुंपरंबदरिकाश्रमं चतुर्मुखंचसादृष्ट्वाननामहंसवाहनं १९ तामुवा
चजगत्कर्ताविधाताजगतामपि ब्रह्मोवाच वरंवृणीष्वतुलसियत्तेमनसिवांछितं २० हरिभक्तिंहरेर्दास्य
मजरामरतामपि तुलस्युवाच शृणुतातप्रवक्ष्यामियन्मेमनसिवांछितं २१ सर्वज्ञस्यापिपुरतःकालज्जाम
मसांप्रतं अहंतुतुलसीगोपीगोलोकेहंस्थितापुरा २२ कृष्णप्रियाकिंकरीचतदंशातत्सखीप्रिया गोविंदरति
संभुक्तामतृप्तांमांचमूर्छितां २३ रासेश्वरीसमागत्यददर्शरासमंडले गोविंदंभर्त्सयामासमांशशापरुषान्विता २४
याहित्वंमानवींयोनिमित्येवंचशशापह मामुवाचसगोविंदोमदंशंन्चचतुर्भुजं २५ लभिष्यसितपस्तप्त्वाभारतेब्र
ह्मणोवरात् इत्येवमुक्त्वादेवेशोप्यंतर्धानंचकारसः २६ देव्याभियातनुंत्यक्त्वाप्राप्तंजन्मगुरोभुवि अहंनारा
यणंकांतंशांतंसुंदरविग्रहं २७ सांप्रतंतंपतिंलब्धुंवरयेत्वंचदेहिमे ब्रह्मदेवउवाच सुदामानामगोपश्चश्रीकृष्णांगस
मुद्भवः २८

मात्रेणेत्यर्थः १३ १४ तोयवस्त्रा तोयमेववस्त्रंयस्याजलस्थेत्यर्थः १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८

राधिकाशापादितिसन्चशापोवक्ष्यमाणः २९ ३० विलंभितुंत्वामालिंगयितुं ३१ ३२ ३३ ३४ ३५ रक्षाधिदेवीति तुलसीवृक्षस्ययाधिदेव्य

तदंशश्चातितेजस्वीलेभेजन्मन्चभारते सांप्रतंराधिकाशापाद्दनुवंशसमुद्भवः २९ शंखचूडेतिविख्यातस्त्रैलोक्येनन्च
तत्समः गोलोकेत्वांपुराद्दृष्ट्वाकामोन्मथितमानसः ३० विलंभितुंनशशाकराधिकायाःप्रभावतः सन्चजातिस्मरस्त
स्मात्सुदामाभूच्च्यसागरे ३१ जातिस्मरात्वमपिसासर्वंजानासिसुंदरि अधुनातस्यपत्नीत्वंसंभविष्यसिशोभने ३२
पश्चान्नारायणंशांतंकांतमेववरिष्यसि शापान्नारायणस्यैवकलयादैवयोगतः ३३ भविष्यसिवृक्षरूपात्वंपूता
विश्वपाविनी प्रधानासर्वपुष्पेषुविष्णुप्राणाधिकाभवेः ३४ त्वयाविनान्चसर्वेषांपूजान्चविफलाभवेत् वृंदावनेवृ
क्षरूपानाम्नावृंदावनीतिच ३५ त्वत्पत्रैर्गोपिगोपाश्चपूजयिष्यंतिमाधवं वृक्षाधिदेवीरूपेणसार्द्धंकृष्णेनसंततं
३६ विहरिष्यसिगोपेनस्वच्छंदंमद्वरेणच इत्येवंवचनंश्रुत्वासस्मिताहृष्टमानसा ३७ प्रणनामच ब्रह्माणंतंचकिं
चिदुवाचसा तुलस्युवान्च यथामेद्विभुजेकृष्णेवांच्छाचश्यामसुंदरे ३८ सत्यंब्रवीमिहेतातनतथान्चचतुर्भुजे
अतृप्ताहंचगोविंदेदैवाच्छृंगारभंगतः ३९ गोविंदस्यैववचनात्प्रार्थयामिचतुर्भुजं त्वत्प्रसादेनगोविंदंपुनरेवसुदु
र्लभं ४० ध्रुवमेवलभिष्यामिराधाभीतिंप्रमोचय ब्रह्मदेवउवाच गृहाणराधिकामंत्रंददामिषोडशाक्षरं
४१ तस्याश्चप्राणतुल्यात्वंमद्वरेणभविष्यसि शृंगारंयुवयोर्गोप्यंनज्ञास्यतिचराधिका ४२ राधासमात्वंसु
भगेगोविंदस्यभविष्यसि इत्येवमुक्त्वादत्त्वाचदेव्यावैषोडशाक्षरं ४३ मंत्रंचैवजगद्धातास्तोत्रंचकवचंपरं सर्वपूजा
विधानंचपुरश्चर्याविधिक्रमं ४४ परांशुभाशिषंचैवपूजांचैवचकारसा बभूवसिद्धासादेवीतत्प्रसादाद्रमायथा ४५

धिदेवतारूपीमूर्तिमतीतद्रूपेणेत्यर्थः ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ९२ ९

४६ ४७ ४८ इतिश्रीदेवीभागवततिलकेनवमस्कंधेसप्तदशोध्यायः १७ एकाधिकैः शतश्लोकैः शंखचूडेनसंगतिः जातातुलस्याः संवादोप्यभूत्तेने



सिद्धमंत्रेणतुलसीवरंप्रापयथोदितं बभुजेचमहाभोगंयद्विश्वेषुचदुर्लभं ४६ प्रसन्नमनसादेवीतत्याजतपसः क्लमं सिद्धेफलेनराणांचदुःखंचसुखमुत्तमं ४७ भुक्त्वापीत्वाचसंतुष्टाशयनंचचकारसा तल्पेमनोरमेतत्रपुष्पचंदनचर्चिते ४८ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेनारदनारायणसंवादेतुलस्युपाख्यानेसप्तदशोध्यायः १७ श्रीनारायणउवाच तुलसीपरितुष्टाचसुष्वापहृष्टमानसा नवयौवनसंपन्नावृषध्वजवरांगना १ चिक्षेपपंचबाणश्चपंचबाणांश्चतांप्रति पुष्पायुधेनसादग्धापुष्पचंदनचर्चिता २ पुलकांचितसर्वांगीकंपितारक्तलोचना क्षणंसाशुष्कतांप्रापक्षणंमूर्छामवापह ३ क्षणमुद्विग्नतांप्रापक्षणंतंद्रांसुखावहां क्षणंचदहनंप्रापक्षणंप्रापप्रसन्नतां ४ क्षणंसाचेतनांप्रापक्षणंप्रापविषण्णतां उत्तिष्ठंतीक्षणंतल्पाद्गच्छंतीनिकटंक्षणं ५ भ्रमंतीक्षणमुद्वेगान्निवसंतीक्षणंपुनः क्षणमेवसमुद्वेगात्सुष्वापपुनरेवसा ६ पुष्पचंदनतल्पंचतद्बभूवातिकंटकं विषहारिसुखंदिव्यंसुंदरंचफलंजलं ७ निलयंचबिलाकारंसूक्ष्मवस्त्रंहुताशनः सिंदूरपत्रकंचैवव्रणतुल्यंचदुःखदं ८ क्षणंददर्शतंद्रायांसुवेषंपुरुषंसति सुंदरंचयुवानंचसस्मितंरसिकेश्वरं ९ चंदनोक्षितसर्वांगंरत्नभूषणभूषितं आगच्छंतंमाल्यवंतंपिबंतंतन्मुखांबुजं १० कथयंतंरतिकथांब्रुवंतंमधुरंमुहुः संभुक्तवंतंतल्पेचसमाश्लिष्यंतमीप्सितं ११ पुनरेवतुगच्छंतमागच्छंतंचसन्निधौ यांतंकयासिप्राणेशतिष्ठेत्येवमुवाचसा १२ पुनश्चचेतनांप्राप्यविललापपुनःपुनः एवंसायौवनंप्राप्यतस्थौतत्रैवनारद १३

तिकथ्यते १ तपश्चर्यातस्तुलस्यामुपरतायामनंतरंजातंरत्नमाह तुलसीपरितुष्टाचेति १ २ ३ ४ विषण्णतांखिन्नतां निकटंतल्पनिकटं ५ ६ सुंदरंसुखंसुखकरंफलंजलंच विषहारिविषोपमं ७ ८ ९ १० ११ १२ १३ ६७

१४ यत्तेमनसिवांछितंतद्भवत्वितिवरंप्राप्यबदरींचसमाययावित्यन्वयः १५ १६ १७ १८ १९ २० २१ यावकंपादभूषणंतस्यावलिःपंक्तिः २२ २३ २४ २५ -

शंखचूडोमहायोगीजैगीषव्यान्मनोहरं कृष्णामंत्रंचसंप्राप्यकृत्वासिद्धंतुपुष्करे १४ कवचंचगलेबध्वासर्वमंगलमंग
लं ब्रह्मणश्चवरंप्राप्ययत्तेमनसिवांछितं १५ आज्ञयाब्रह्मणःसोपिबदरींचसमाययौ आगच्छंतंशंखचूडंददर्श
तुलसीमुने १६ नवयौवनसंपन्नंकामदेवसमप्रभं श्वेतचंपकवर्णाभंरत्नभूषणभूषितं १७ शरत्पार्वणचंद्रास्यंशर
त्पंकजलोचनं रत्नसारविनिर्माणविमानस्थंमनोहरं १८ रत्नकुंडलयुग्मेनगंडस्थलविराजितं पारिजातप्रसूनानां
मालावंतंचसुस्थितं १९ कस्तूरीकुंकुमायुक्तंसुगंधिचंदनान्वितं सादृष्ट्वासन्निधावेतंमुखमाच्छाद्यवाससा २०
सस्मितातंनिरीक्षंतीसकटाक्षंपुनःपुनः बभूवातिनम्रमुखीनवसंगमलज्जिता २१ शारदिंदुविनिंद्यैकस्वमुखेंदुविरा
जिता अमूल्यरत्ननिर्माणयावकावलिसंयुता २२ मणींद्रसारनिर्माणक्वणन्मंजीररंजिता दधतीकबरीभारंमाल
तीमाल्यसंयुतं २३ अमूल्यरत्ननिर्माणमकराकृतिकुंडला चित्रकुंडलयुग्मेनगंडस्थलविराजिता २४ रत्नेंद्रसार
हारेणस्तनमध्यस्थलोज्ज्वला रत्नकंकणकेयूरशंखभूषणभूषिता २५ रत्नांगुलीयकैर्दिव्यैरंगुल्यावलिराजिता।
दृष्ट्वातांललितांरम्यांसुशीलांसुंदरींसतीं २६ उवासतत्समीपेतुमधुरंतामुवाचसः शंखचूडउवाच कात्वंकस्यचक
न्याचधन्यामान्याचयोषितां २७ कात्वंमानिनिकल्याणिसर्वकल्याणदायिनि मौनीभूतेकिंकरेमांसंभाषांकुरुसुं
दरि २८ इत्येवंवचनंश्रुत्वासकामावामलोचना सस्मितानम्रवदनासकामंतमुवाचसा २९ तुलस्युवाच धर्मध्व
जसुताहंचतपस्यायांतपोवने तपस्विन्यहंतिष्ठामिकस्त्वंगच्छयथासुखं ३० कामिनींकुलजातांचरहस्येकाकिनीं
सतीं नपृच्छतिकुलेजातइत्येवंमेश्रुतौश्रुतं ३१

२६ २७ २८ २९ तपस्यायांतिष्ठामीत्यन्वयः ३० कुलेजातःकुलीनोनपृच्छतीत्यर्थः ३१

कीदृशः पुरुषस्तर्हि कामिनीं पृच्छति तत्राह लंपट इति ३२ कीदृशीं कामिनीं तत्राह आपातरमणीयामित्यादि प्रसन्नवदनेक्षणामित्यंतं ३३ ३४ ३५ दुराशयो नय



लंपटोऽसत्कुलेजातो धर्मशास्त्रार्थवर्जितः येनाश्रुतः श्रुतेरर्थः सकामीच्छति कामिनीं ३२ आपातमधुरांमन्त्यामं
तकांपुरुषस्यतां विषकुंभाकाररूपाममृतास्यांचसंततं ३३ त्हृदयेक्षुरधाराभांशश्वन्मधुरभाषिणीं स्वकार्यप-
रिनिष्पत्त्यैतत्परांसततंचतां ३४ कार्यार्थेस्वामिवशगामन्यथैवावशांसदा स्वांतर्मलिनरूपांचप्रसन्नवदनेक्षणां
३५ श्रुतौपुराणेयासांचचरित्रमतिदूषितं तासुकोविश्वसेत्प्राज्ञः प्रज्ञावांश्चदुराशयः ३६ तासांकोवारिपुर्मित्रं
प्रार्थयंतिनवंनवं दृष्ट्वासुवेषंपुरुषमिच्छंतीत्हृदयेसदा ३७ बाह्येस्वार्थसतीत्वंचज्ञापयंतीप्रयत्नतः शश्वत्कामा
चरामाचकामाधारामनोहरा ३८ बाह्येछलात्खेदयंतीस्वांतर्मैथुनमानसा कांतंहसंतीरहसिबाह्येतीवसुलज्जिं
ता ३९ मानिनीमैथुनाभावेकोपनाकलहांकुरा सुप्रीताभूरिसंभोगात्स्वल्पमैथुनदुःखिता ४० सुमिष्टान्नाच्छीत
तोयादाकांक्षंतीचमानसे सुंदरंरसिकंकांतंयुवानंगुणिनंसदा ४१ सुतात्परमभिस्नेहंकुर्वतीरसिकोपरि प्राणाधि
कंप्रियतमंसंभोगकुशलंप्रियं ४२ पश्यंतीरिपुतुल्यंचवृद्धंवामैथुनाक्षमं कलहंकुर्वतीशश्वत्तेनसार्द्धंसुकोपना
४३ वाचयाभक्षयंतीतंसर्पआखुमिवोल्बणं दुःसाहसस्वरूपाचसर्वदोषाश्रयासदा ४४ ब्रह्मविष्णुशिवादीनां
दुःसाध्यामोहरूपिणी तपोमार्गार्गलाशश्वन्मोक्षद्वारकपाटिका ४५ हरिभक्तिव्यवहितासर्वमायाकरंडिका सं
सारकारागारेचशश्वन्निगडरूपिणी ४६ इंद्रजालस्वरूपाचमिथ्याचस्वप्नरूपिणी बिभ्रतीबाह्यसौंदर्यमधोंग
मतिकुत्सितं ४७

इत्यर्थः ३६ कोवारिपुः कोवामित्रंनकोपिरिपुर्मित्रंवेत्यर्थः स्वार्थपराएवकेवलं ३७ ३८ खेदयंतीपुरुषमित्यर्थः ३९ ४० ४१
४२ ४३ ४४ तपोमार्गार्गलांतपोमार्गप्रतिबंधकां ४५ भक्तिव्यवहिताभक्तिरहिता अधोंगंयोनिरूपम् ४६ ४७ ६८ ६९ ६७

रक्तेनारक्तं ४८ ४९ ५० ५१ ५२ लक्ष्मीःसरस्वतीति लक्ष्म्यादीनांपूर्णावताराणांगंगादीनामंशावताराणांतथाकलाकलांशानांचस्वरूपंप्रशस्यमन्यद
प्रशस्यमित्यर्थः सृष्टिसूत्रस्वरूपाचसृष्टिमूलभूतेत्यर्थः ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० कलांशस्वरूपंचोत्तममित्यर्थः स्वर्वैश्यादिक

नानाविण्मूत्रपूयानामाधारंमलसंयुतं दुर्गंधिदोषसंयुक्तंरक्तारक्तमसंस्कृतं ४८ मायारूपामायिनांचविधिनानिर्मि
तापुरा विषरूपामुमुक्षूणामद्रक्ष्याप्यनवांछिता ४९ इत्युक्त्वातुलसीतंचविरराममचनारद सस्मितःशंखचूडश्चप्रव
क्तुमुपचक्रमे ५० शंखचूडउवाच त्वयायत्कथितंदेविनचसर्वमलीककं किंचित्सत्यमलीकंचकिंचिन्मत्तो
निशामय ५१ निर्मितंद्विविधंधात्रास्त्रीरूपंसर्वमोहनं कृत्यारूपंवास्तवंचप्रशस्यंचाप्रशंसितं ५२ लक्ष्मीःसरस्व
तीदुर्गासावित्रीराधिकादिका सृष्टिसूत्रस्वरूपान्चआद्यासृष्टिर्विनिर्मिता ५३ एतासामंशरूपंचस्त्रीरूपंवा-
स्तवंस्मृतं तत्प्रशस्यंयशोरूपंसर्वमंगलकारकं ५४ शतरूपादेवहूतीस्वधास्वाहाचदक्षिणा छायावतीरोहिणी
चवरुणानीशचीतथा ५५ कुबेरस्यचपत्नीयाप्यदितिश्चदितिस्तथा लोपामुद्रानुसूयाचकोटभीतुलसीतथा ५६
अहल्यारुंधतीमेनातारामंदोदरीतथा दमयंतीवेदवतीगंगाचमनसातथा ५७ पुष्टिस्तुष्टिःस्मृतिर्मेधाकालि
काचवसुंधरा षष्ठीमंगलचंडीचमूर्तिश्चधर्मकामिनी ५८ स्वस्तिश्श्रद्धाचशांतिश्चकांतिक्षांतिस्तथापरा निद्रा
तंद्राक्षुत्पिपासासंध्यारात्रिदिनानिच ५९ संपत्तिर्धृतिकीर्तीचक्रियाशोभाप्रभाशिवा यत्स्त्रीरूपंचसंभूतमु
त्तमंतुयुगेयुगे ६० कलाकलांशरूपंचस्वर्वैश्यादिकमेवच तदप्रशस्यंविश्वेषुपुंश्चलीरूपमेवच ६१ सत्त्वप्रधा
नंयद्रूपंतद्युक्तंचप्रभावतः तदुत्तमंचविश्वेषुसाध्वीरूपंप्रशंसितं ६२ तद्वास्तवंचविज्ञेयंप्रवदंतिमनीषिणः
रजोरूपंतमोरूपंकलासुविधिसंस्मृतं ६३

मेवचेत्सस्यतदप्रशस्यमित्युत्तरेणान्वयः ६१ साध्वीरूपमुत्तममित्याह सत्त्वप्रधानमिति ६२ ६३

६४ यतएतामध्यमाएतादृशदोषविशिष्टाअतोरजोरूपस्यस्त्रीवस्तुनःसाध्वीत्वंनैवोपजायतइत्यर्थः ६५ तमोरूपंतुदुर्निवार्य्यत्वादधममेवेत्यर्थः ६६
तथाच तवलक्ष्म्यंशत्वात्तवरूपंत्वदुक्तरीत्यानिंद्यंनकिंत्वतिप्रशस्तमेवभवतीतिममत्वयीच्छाजातायुक्तेतिभावः यदुक्तंत्वयाकुलीनःपरस्त्रियंनपश्यती

मध्यमारजसश्चांशास्तास्तुभोगेषुलोलुपाः स्रुखसंभोगवश्याश्चस्वकार्येनिरताःसदा ६४ कपटामोहकारिण्यो
धर्मार्थविमुखाःसदा रजोरूपस्यसाध्वीत्वमतोनैवोपजायते ६५ इदंमध्यमरूपंचप्र वदंतिमनीषिणः तमोरू
पंदुर्निवार्यमधमंत द्विदुर्बुधाः ६६ नपृच्छतिकुलेजातःपंडितश्चपरस्त्रियं निर्जनेनिर्जलेवापिरहस्यपिपरस्त्रि
यं ६७ आगच्छामित्वत्समीपमाज्ञयाब्रह्मणोधुना गांधर्वेणविवाहनत्वांग्र हीष्यामिशोभने ६८ अहमेवशंख
चूडोदेवविद्रावकारकः दनुवंशोविशेषेणस्रुदामाहंहरेःपुरा ६९ अहमष्टसुगोपेषुगोपोपिपार्षदेषुच अधुना
दानवेंद्रोहंराधिकायाश्चशापतः ७० जातिस्मरोहंजानामिकृष्णमंत्रप्रभावतः जातिस्मरात्वंतुलसीसंभुक्ताह
रिणापुरा ७१ त्वमेवराधिकाकोपाज्जातासिभारतेभुवि त्वांसंभोक्तुमुत्स्रुकोहंनालंराधाभयात्ततः ७२ इत्येव
मुक्त्वा सपुमान्विरराममहामुने सस्मितंतुलसीतुष्टाप्रवक्तुमुपचक्रमे ७३ तुलस्युवाच एवंविधोबुधोनित्यंविश्वेषु
चप्रशंसितः कांतमेवंविधंकांताशश्वदिच्छतिकामतः ७४ त्वयाहमधुनासत्यंविचारेणपराजिता सनिंदितश्चा
प्यशुचिर्यःपुमांश्चस्त्रियाजितः ७५ निंदंतिपितरोदेवाबांधवाःस्त्रीजितांतरं स्त्रीजितंमनसामातापिताभ्राता
चनिंदति ७६ तितत्तथैवतथाप्यहंब्रह्मणआज्ञयात्वत्समीपमागतोस्मीत्यभिप्रायेणाह नपृच्छतीति ६७ ६८ दनुवंशेजातःपुरापूर्वंहरेःसखासुदा
माहं अधुनातुशापाद्दनोर्वंशेजातइत्यर्थः ६९ ७० पूर्वकथांस्मारयति जातिस्मरोहमिति ७१ संभोक्तुंनालंसमर्थोराधाभयादित्यन्वयः ७२ ७३ एवंविधोवक्ष्यमाण
स्त्रीजितादन्यइत्यर्थः विश्वेषुलोकेषु ७४ त्वयाहंविचारेणपूर्वोक्तवादेनजितास्मिनमयालंजितइतित्वंस्त्रीजितोनासीत्यर्थः ७५ ७६ ६७ ६८

७७ एषुवर्णसंकरश्चेत्समातृवत्यज्जातीयामातातज्जात्युक्तसूतकपरिपालनेनशुध्येदित्यर्थः स्त्रीजितस्यतुदेहांतप्रायश्चित्तेनैवशुद्धिरित्याह अशुचि

शुद्धोविप्रोदशाहेनजातकेमृतकेयथा भूमिपोद्वादशाहेनवैश्यःपंचदशाहतः ७७ शूद्रोमासेनवेदेषुमातृवद्धीनसं करः अशुचिःस्त्रीजितःशुध्येच्चितादहनकालतः ७८ नगृण्हंतीच्छयातस्यपितरःपिंडतर्पणं नगृण्हंतीवदेवाश्चतस्य पुष्पजलादिकं ७९ किंवाज्ञानेनतपसाजपहोमप्रपूजनैः किंविद्ययाचयशसास्त्रीभिर्यस्यमनोहृतं ८० विद्याप्रभाव ज्ञानार्थंमयात्वंचपरीक्षितः कृत्वापरीक्षांकांतस्यवृणोतिकामिनीवरं ८१ वरायगुणहीनायवृद्धायाज्ञानिनेतथा दरिद्रायचमूर्खायरोगिणेकुत्सितायच ८२ अत्यंतकोपयुक्तायवात्यंतदुर्मुखायच पंगवेचांगहीनायचांधायबधि रायच ८३ जडायचैवमूकायक्लीबतुल्यायपापिने ब्रह्महत्यांलभेत्सोपिस्वकन्यांप्रददातियः ८४ शांतायगुणिनेचै वयूनेचविदुषेपिच साधवेचसुतांदत्वादशयज्ञफलंलभेत् ८५ यःकन्यापालनंकृत्वाकरोतियदिविक्रयं विक्रेता धनलोभेनकुंभीपाकंसगच्छति ८६ कन्यामूत्रंपुरीषंचतत्रभक्षतिपातकी कृमिभिर्दंशितःकाकैर्यावदिंद्राश्च तुर्दश ८७ तदंतेव्याधिसंयुक्तंसलभेज्जन्मनिश्चितं विक्रीणातिमांसभारंवहत्येवदिवानिशं ८८ इत्येवमुक्त्वा तुलसीविररामतपोनिधे ब्रह्मोवाच किंकरोषिशंखचूडसंवादमनयासह ८९ गांधर्वेणविवाहेनत्वंचास्याग्र हणंकुरु त्वंहिपुरुषेषुरत्नंस्त्रीषुरत्नंत्वियंसती ९० विदग्धायाविदग्धेनसंगमोगुणवान्भवेत् निर्विरोधसुखंराज- न्कोवात्यजतिदुर्लभं ९१ योऽविरोधसुखत्यागीसपशुर्नात्रसंशयः किंपरीक्षसित्वंकांतमीदृशंगुणिनंसति ९२

रिति एता दृशोतिनीचोयमितिभावः ७८ तदेवाह नगृण्हंतीति ७९ ८० मयातुतवविद्यापरीक्षाकृतेत्याह विद्याप्रभावेति ८१ ८२ ८३ ८४ ८५ ८६ ८७ ८८ एत स्मिन्नंतरेतत्रब्रह्मागत्योवाचेत्यर्थाद्बोध्यं किमुवाचतदाह ब्रह्मोवाच किंकरोषीति ८९ ९० ९१ ९२ ६९ ६९ ६९ ६९

९३ ९४ ९५ ९६ ९७ ९८ ९९ १०० इतिश्रीदेवीभागवततिलके नवमस्कंधेष्टादशोध्यायः १८ चतुर्नवतिपद्येस्तुतुलसीशंखचूडयोः विवाहानंतरं

देवानामसुराणांचदानवानांविमर्दकं यथालक्ष्मीश्चलक्ष्मीशेयथाकृष्णेचराधिका ९३ यथामयिचसावित्रीभवानीच
भवेयथा यथाधरावराहेचदक्षिणाचयथाध्वरे ९४ यथात्रेरनुसूयाचदमयंतीयथानले रोहिणीचयथाचंद्रेयथा
कामेरतिःसती ९५ यथादितिःकश्यपेचवसिष्ठेरुंधतीसती यथाहल्यागौतमेचदेवहूतिश्चकर्दमे ९६ यथाबृह
स्पतौताराशतरूपामनौयथा यथाचदक्षिणायज्ञेयथास्वाहाहुताशने ९७ यथाशचीमहेंद्रेचयथापुष्टिर्गणेश्वरे
देवसेनायथास्कंदेधर्मेमूर्तिर्यथासती ९८ सौभाग्यासुप्रियात्वंचशंखचूडेतथाभव अनेनसार्धंसुचिरंसुंदरेण
चसुंदरि ९९ स्थानेस्थानेविहारंचयथेच्छंकुरुसंततं पश्चात्प्राप्स्यसिगोलोकेश्रीकृष्णंपुनरेवसा १०० चतुर्भुजं
चवैकुंठेशंखचूडेमृतेसति इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेष्टादशोध्यायः १८ नारदउवाच वि-
चित्रमिदमाख्यानंभवतासमुदाहृतं श्रुतेनयेनमेतृप्तिर्नकदापिहिजायते १ ततःपरंतुयज्जातंतत्त्वंवदमहामते
नारायणउवाच इत्येवमाशिषंदत्वास्वालयंचययौविधिः २ गांधर्वेणविवाहेनजगृहेतांचदानवः स्वर्गेदुंदुभि
वाद्यंचपुष्पवृष्टिर्बभूवह ३ सरेमेरामयासार्द्धंवासगेहेमनोरमे मूर्छांसाप्रापतुलसीनवसंगमसंगता ४ निम
ग्नानिर्जलेसाध्वीसंभोगसुखसागरे चतुःषष्टिकलामानंचतुःषष्टिविधंसुखं ५ कामशास्त्रेयन्निरुक्तंरसिकानां
यथेप्सितं अंगप्रत्यंगसंश्लेषपूर्वकंस्त्रीमनोहरं ६ तत्सर्वंरसशृंगारंचकाररसिकेश्वरः अतीवरम्यदेशेचसर्वजंतु
विवर्जिते ७

देवावैकुंठंजग्मुरुत्तमं १ इत्थंब्रह्मणातौबोधिताविस्युक्तंततःपरंकिंजातमितिपृच्छति नारदउवाच विचित्रमिदमिति १ २ ३
४ चतुःषष्टिशृंगारकलाभिर्मीयतेपरिछिद्यतेतत्तादृशंचतुःषष्टिविधंसुखंताः कलाश्चरसालोकेस्पष्टीकृताः ५ ६ ७ ६९ ६९

८ ९ १० ११ जहारपरस्परशरीरावयवमर्दनेन १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३

पुष्पचंदनतल्पेच पुष्पचंदनवायुना पुष्पोद्यानेनदीतीरे पुष्पचंदनचर्चिते ८ गृहीत्वा रसिको रासे पुष्पचंदनचर्चि
तां भूषितो भूषणेनैव रत्नभूषणभूषितां ९ स्मरते विरतिर्नास्तितयोः सुरतिविज्ञयोः जहारमानसं भर्तुर्लोलया ली
लया सती १० चेतनां रसिकायाश्च जहाररसभाववित् वक्षसश्चंदनं राज्ञास्तिलकं विजहारसा ११ सच जहारत-
स्याश्च सिंदूरं बिंदुपत्रकं सलहक्षस्सुरोजेच नखरेखां ददौ मुदा १२ साददौ तद्वामपार्श्वे करभूषणलक्षणं राजा
तदोष्ठपुटकेददौ रदनदंशनं १३ तद्गंडयुगलेसाच प्रददौ तच्चतुर्गुणं आलिंगनं चुंबनं च जंघादिमर्दनंतथा १४
एवं परस्परं क्रीडां चक्रतुस्तौ विजानतौ सुरते विरतेतौ च समुत्थाय परस्परं १५ सुवेषंचक्रतुस्तत्र यद्यन्मनसि वांछि
तं चंदनैः कुंकुमारक्तैः सातस्य तिलकं ददौ १६ सर्वांगे सुंदरे रम्ये चकारचानुलेपनं सुवासंचैव तांबूलं वन्हिश
द्धेंच वाससी १७ पारिजातस्य कुसुमं जरारोगहरं परं अमूल्यरत्ननिर्माणमंगुलीयकमुत्तमं १८ सुंदरंच मणि
वरं त्रिषुलोकेषु दुर्लभं दासीनवाहमित्येवं समुच्चार्य पुनः पुनः १९ ननाम परया भक्त्या स्वामिनं गुणशालिनं स
स्मिता तन्मुखांभोज लोचनाभ्यां पुनः पुनः २० निमेषरहिताभ्यां च कटाक्षं च सुसुंदरं सचतां च समाकृष्य चका
र वक्षसि प्रियां २१ सस्मितं वाससाच्छन्नं ददर्श मुखपंकजं चुचुंब कठिने गंडे बिंबोष्ठौ पुनरेव च २२ ददौ तस्यै वस्त्र
युग्मं वरुणादाहृतंचयत् तदाहृतां रत्नमालां त्रिषु लोकेषु दुर्लभां २३ ददौ मंजीरयुग्मंच स्वाहाया आहृतंचयत् के
यूरयुग्मंछायाया रोहिण्याश्चैव कुंडले २४ अंगुलीयकरत्नानि रत्याश्च करभूषणं शंखंचरुचिरं चित्रं यद्दत्तं विश्वकर्म
णा २५

स्वाहाया वन्हेर्पदाहृतं छायायाः सूर्यपत्न्याः रोहिण्याश्चंद्रपत्न्याः २४ २५ ६५ ६५ ६५ ६५

विचित्राणांपद्मकानांपद्मरागमणीनांश्रेणयोयस्यांशय्यायां २६ पत्रकंचंदनवल्लीरूपं २७ २८ २९ ३० ३१ ३२ ३३ ३४



विचित्रपद्मकश्रेणींशय्यांचापिसुदुर्लभां भूषणानिचदत्त्वाचभूपोहासंचकारह २६ निर्ममेकबरीभारेतस्या मांगल्यभूषणं सुचित्रंपद्मकंगंडेकपोलेस्याःसमंतया २७ चंद्रलेखात्रिभिर्युक्तंचंदनेनसुगंधिना परीतंपरितश्चित्रैःसार्द्धंकुंकुमबिंदुभिः २८ ज्वलत्प्रदीपाकारंचसिंदूरतिलकंददौ तत्पादपद्मयुगलेस्थलपद्मविनिंदिते २९ चित्रालक्तकरागंचनखरेषुददौमुदा स्ववक्षसिमुहुर्न्यस्यसरागंचरणांबुजं ३० हेदेवितवदासोहमित्युच्चार्य पुनःपुनः रत्नभूषितहस्तेनतां चकृत्वास्ववक्षसि ३१ तपोवनंपरित्यज्यराजास्थानांतरंययौ मलयेदेवनिलयेशैले शैलेतपोवने ३२ स्थानेस्थानेतिरम्येचपुष्पोद्यानेचनिर्जने कंदरेकंदरेसिंधुतीरेचैवातिसुंदरे ३३ पुष्पभद्रानदीतीरेनीरवातमनोहरे पुलिनेपुलिनेदिव्येनद्यांनद्यांनदेनदे ३४ मधौमधुकराणांचमधुरध्वनिनादिते विस्पंदनेस्रुरसनेनंदनेगंधमादने ३५ देवोद्यानेनंदनेचचित्रचंदनकानने चंपकानांकेतकीनामाधवीनांचमाधवे ३६ कुंदानांमालतीनांचकुमुदांभोजकानने कल्पवृक्षेकल्पवृक्षेपारिजातवनेवने ३७ निर्जनेकांचनेस्थानेधन्येकांचनपर्वते कांचीवनेकिंजलकेकंचुकेकांचनाकरे ३८ पुष्पचंदनतल्पेषुपुंस्कोकिलरुतश्रुते पुष्पचंदनसंयुक्तःपुष्पचंदनवायुना ३९ कामुक्याकामुकःकामात्सरेमेरामयासह नहितृप्तोदानवेंद्रस्तृप्तिंनैवजगामसा ४० हविषाकृष्णावर्त्मेवववृधेमदनस्तयोः तयासहसमागत्यस्वाश्रमंदानवस्ततः ४१ रम्यंक्रीडालयंगत्वाविजहारपुनःपुनः एवंसबुभुजेराज्यंशंखचूडःप्रतापवान् ४२ एकमन्वंतरंपूर्णंराजराजेश्वरोमहान् देवानामसुराणांचदानवानांचसंततं ४३

विस्पंदनेतन्नाम्निवनेतथैवसुरसननाम्निवने ३५ माधवेवसंते माधवीनांवासंतीमाधवीलतेत्यमराद्वासंतीलतानांवनेइत्युत्तरेणान्वयः ३६ ३७ ३८ पुंस्कोकिलरुतंश्रुतंप्रसिद्धंयस्मिंस्तस्मिन्वने ३९ ४० ४१ ४२ ४३

गंधर्वाणांकिंनराणांराक्षसानांचशांतिदः त्वताधिकारादेवाश्चचरंतिभिक्षकायथा ४४ तेसर्वेतिविषण्णा-
श्चप्रजग्मुर्ब्रह्मणःसभां वृत्तांतंकथयामासूरुरुदुश्चभृशंमुहुः ४५ तदाब्रह्मासुरैःसार्द्धंजगामशंकरालयं
सर्वेशंकथयामासविधाताचंद्रशेखरं ४६ ब्रह्माशिवश्चतैःसार्द्धंवैकुंठंचजगामह दुर्लभंपरमंधामजराम‍ृ
त्युहरंपरं ४७ संप्रापचवरंद्वारमाश्रमाणांहरेरहो ददर्शद्वारपालांश्चरत्नसिंहासनस्थितान् ४८ शोभिता
न्पीतवस्त्रैश्चरत्नभूषणभूषितान् वनमालान्वितान्सर्वाञ्श्यामसुंदरविग्रहान् ४९ शंखचक्रगदापद्मधरांश्चैवच
तुर्भुजान् सस्मितान्स्मेरवक्त्रास्यान्पद्मनेत्रान्मनोहरान् ५० ब्रह्मातान्कथयामासवृत्तांतंगमनार्थकं
तेनुज्ञांचददुस्तस्मैप्रविवेशतदाज्ञया ५१ एवंषोडशद्वाराणिनिरीक्ष्यकमलोद्भवः देवैःसार्द्धंतानतीत्य-
प्रविवेशहरेःसभां ५२ देवर्षिभिःपरिवृतांपार्षदैश्चचतुर्भुजैः नारायणस्वरूपैश्चसर्वैःकौस्तुभभूषितैः
५३ नवेंदुमंडलाकारांचतुरस्त्रांमनोहरां मणींद्रहारनिर्माणांहीरासारसुशोभितां ५४ अमूल्यरत्न
खचितांरचितांस्वेच्छयाहरेः माणिक्यमालाजालाभांमुक्तापंक्तिविभूषितां ५५ मंडितांमंडलाकारैर
त्नदर्पणकोटिभिः विचित्रैश्चित्ररेखाभिर्नानाचित्रविचित्रितां ५६ पद्मरागेंद्ररचितांरुचिरांमणिपंक
जैः सोपानशतकैर्युक्तांस्यमंतकविनिर्मितैः ५७ पट्टसूत्रग्रंथियुक्तैश्चारुचंदनपल्लवैः इंद्रनीलस्तंभ
वर्यैर्वेष्टितांसुमनोहरां ५८ सद्रत्नपूर्णकुंभानांसमूहैश्चसमन्वितां पारिजातप्रसूनानांमालाजालैर्वि
राजितां ५९

६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६९ ७० ७१ ७२ शापमाह तत्रैकदेति ७३



कस्तूरीकुंकुमारक्तैः सुगंधिचंदनद्रुमैः सुसंस्कृतां तु सर्वत्र वासितां गंधवायुना ६० विद्याधरीसमूहानां
नृत्यजालैर्विराजितां सहस्रयोजनायामां परिपूर्णां च किंकरैः ६१ ददर्श श्रीहरिं ब्रह्माशंकरश्च सुरैः सह
वसंतं तन्मध्यदेशे यथेंदुं तारकावृतं ६२ अमूल्यरत्ननिर्माणचित्रसिंहासने स्थितं किरीटिनं कुंडलिनं वनमा
लाविभूषितं ६३ चंदनोक्षितसर्वांगं बिभ्रतं केलिपंकजं पुरतो नृत्यगीतं च पश्यंतं सस्मितं मुदा ६४ शांतंस
रस्वतीकांतं लक्ष्मीधृतपदांबुजं लक्ष्म्या प्रदत्ततांबूलं भुक्तवंतं सुवासितं ६५ गंगया परया भक्त्या सेवितं श्वे
तचामरैः सर्वैश्च स्तूयमानं च भक्तिनम्रात्मकंधरैः ६६ एवंविशिष्टं तं दृष्ट्वा परिपूर्णतमं प्रभुं ब्रह्मादयः सुराः स
र्वे प्रणम्य तुष्टुवुस्तदा ६७ पुलकांचितसर्वांगाः साश्रुनेत्राश्च गद्गदाः भक्त्याश्च परया भक्त्या भीतानम्रात्मकंध
राः ६८ कृतांजलिपुटो भूत्वा विधाता जगतामपि वृत्तांतं कथयामास विनयेन हरेः पुरः ६९ हरिस्तद्वचनं
श्रुत्वा सर्वज्ञः सर्वभाववित् प्रहस्योवाच ब्रह्माणं रहस्यं च मनोहरं ७० श्रीभगवानुवाच शंखचूडस्य वृ
त्तांतं सर्वं जानामि पद्मज मद्भक्तस्य च गोपस्य महातेजस्विनः पुरा ७१ शृणु तत्सर्ववृत्तांतमितिहासं पुरा
तनं गोलोकस्यैव चरितं पापघ्नं पुण्यकारकं ७२ सुदामा नाम गोपश्च पार्षदप्रवरो मम स प्राप दानवीं योनिं रा
धाशापात्सुदारुणात् ७३ तत्रैकदाहमगमं स्वालयाद्रासमंडलं विरजा अपि नीलाच मम प्राणाधिकापरा ७४
सा मां विरजया सार्द्धं विज्ञाय किंकरीमुखात् पश्चात्क्रुद्धा सा जगाम न ददर्श च तत्र मां ७५ विरजां च नदीरूपां मां
ज्ञात्वा च तिरोहितं पुनर्जगाम सा दृष्ट्वा स्वालयं सखिभिः सह ७६ विरजां कांचनगोपीं प्राणाधिकाराधा ७४ ७५ ७६

५८

७७ ७८ ७९ ८० तत्ताडनंतेनशंखचूडेनकृतंतासांसखीनांताडनंश्रुत्वेत्यर्थः ८१ मांप्रणम्यगच्छंतंशंखचूडंतुष्टासावारयामासेत्यन्वयः वि

मांदृष्ट्वामंदिरेदेवीसुदाम्नासहितंपुरा भृशंसाभर्त्सयामासमौनीभूतंचसुस्थिरं ७७ तच्छ्रुत्वासहमानश्चसुदा
मातांचुकोपह सचतांभर्त्सयामासकोपेनममसन्निधौ ७८ तच्छ्रुत्वाकोपयुक्तासारक्तपंकजलोचना बहि
ष्कर्तुंचकाराज्ञांसंत्रस्तंममसंसदि ७९ सखीलक्षंसमुत्तस्थौदुर्वारंतेजसोल्बणं बहिश्चकारतंतूर्णंजल्पंतंचपुनः
पुनः ८० साचतत्ताडनंतासांश्रुत्वारुष्टाशशापह याहिरेदानवींयोनिमित्येवदारुणंवचः ८१ तंगच्छंतंशपं
तंचरुदंतंमांप्रणम्यच वारयामासतुष्टासारुदंतीकृपयापुनः ८२ हेवत्सतिष्ठमागच्छक्वयासीतिपुनःपुनः
समुच्चार्यचतत्पश्चाज्जगामसाचविक्लवं ८३ गोप्यश्चरुरुदुःसर्वागोपाश्चापिसुदुःखिताः तेसर्वेराधिकाचा
पितत्पश्चाद्बोधितामया ८४ आयास्यतिक्षणार्धेनकृत्वाशापस्यपालनं सुदामंस्त्वमिहागच्छेत्युक्त्वासा
चनिवारिता ८५ गोलोकस्यक्षणार्धेनचैकंमन्वंतरंभवेत् पृथिव्याजगतांधातरित्येववचनंध्रुवं ८६ इत्येवं
शंखचूडश्चपुनस्तत्रैवयास्यति महाबलिष्ठोयोगेशःसर्वमायाविशारदः ८७ ममशूलंगृहीत्वाचशीघ्रंग
च्छतभारतं शिवःकरोतुसंहारंममशूलेनरक्षसः ८८ ममैवकवचंकंठेसर्वमंगलकारकं बिभर्तिदानवःशश्व
त्संसारेविजयीततः ८९ तस्मिन्ब्रह्मस्थितेनैवनकोपिहिंसितुंक्षमः तद्याचनांकरिष्यामिविप्ररूपोहमे
वच ९० सतीत्वहानिस्तत्पत्न्यायत्रकालेभविष्यति तत्रैवकालेतन्मृत्युरितिदत्तोवरस्त्वया ९१ तत्प
त्न्याश्चोदरेवीर्यमर्पयिष्यामिनिश्चितं तत्क्षणेचैवतन्मृत्युर्भविष्यतिनसंशयः ९२

क्वयासीदं ८२ ८३

८४ ८५ ८६ ८७ रक्षसः दानवस्य ८८ ८९ ९० ९१ ९२ ६२ ६२ ६२ ६२

पश्चात्स्वेति तत्पत्नीत्यर्थः ९३ ९४ इतिश्रीदेवीभाग॰ तिलके नवमस्कंधेएकोनविं॰ १९ चतुरशीतिपद्यैस्तु शंखचूडासुरस्यच देवानांचैवसंग्रामो यथावदभिवर्ण्यते १ भारतेदेवागमनोत्तरंजातंवृत्तमाह ब्रह्माशिवमिति १ २ ३ महेंद्रनगरादुत्कृष्टं ४ ५ ६ वणिजांमहा

पश्चात्सादेहमुत्सृज्य भविष्यति मम प्रिया इत्युक्त्वा जगतांनाथो ददौ शूलं हरायच ९३ शूलंदत्वाययौ-
शीघ्रंहरिरभ्यंतरंमुदा भारतंचययुर्देवा ब्रह्मरुद्रपुरोगमाः ९४ इतिश्रीदेवीभागवतेमहापुराणेनवम
स्कंधेएकोनविंशोध्यायः १९ श्रीनारायणउवाच ब्रह्माशिवंसन्नियोज्यसंहारेदानवस्यच जगामस्वा
लयंतूर्णंयथास्थानंसुरोत्तमाः १ चंद्रभागानदीतीरेवटमूलेमनोहरे तत्रतस्थौमहादेवोदेवविस्तारहेत
वे २ दूतंकृत्वाचित्ररथंगंधर्वेश्वरमीप्सितं शीघ्रंप्रस्थापयामासशंखचूडांतिकंमुदा ३ सर्वेश्वराज्ञया
शीघ्रंययौतन्नगरंपरं महेंद्रनगरोत्कृष्टंकुबेरभवनाधिकं ४ पंचयोजनविस्तीर्णंदैर्घ्येतद्विगुणंभवेत्
स्फटिकाकारमणिभिर्निर्मितंयानवेष्टितं ५ सप्तभिःपरिखाभिश्चदुर्गमाभिःसमन्वितं ज्वलदग्निनिभैः
शश्वत्कल्पितंरत्नकोटिभिः ६ युक्तंचवीथीशतकैर्मणिवेदिविचित्रितैः परितोवणिजांसौधैर्नानावस्तुविरा
जितैः ७ सिंदूराकारमणिभिर्निर्मितैश्चविचित्रितैः भूषितंभूषितैर्दिव्यैराश्रमैःशतकोटिभिः ८ गत्वाद
दर्शतन्मध्येशंखचूडालयंपरं अतीववलयाकारंयथापूर्णेंदुमंडलं ९ ज्वलदग्निशिखाक्ताभिःपरिखाभि
श्चतसृभिः तद्दुर्गमंचशत्रूणामन्येषांसुगमंसुखं १० अत्युच्चैर्गगनस्पर्शिमणिशृंगविराजितं राजितंद्वाद
शद्वारैर्द्वारपालसमन्वितं ११ मणींद्रसारनिर्माणैःशोभितंलक्षमंदिरैः शोभितंरत्नसोपानैरत्नस्तंभविराजि
तं १२

जनानांवैश्यानां ७ ८ ९ १० अत्युच्चैश्चतानिगगनस्पर्शीणिमणिशृंगानितैर्विराजितं ११ १२ ६५ ६७

१३ १४ रणस्यरणसंबंधिनंयुद्धाव्हानार्थमागतंदूतरूपंपुरुषंश्रुत्वानकोपिरक्षतितस्यप्रतिबंधोनक्रियतइत्यर्थः एतादृशःशंखचूडःशूरइतिभावः १५
रणस्यसर्वंवृत्तांतंराजानंप्रतिशीघ्रंविज्ञापयतइत्युवाच १६ १७ १८ १९ २० माल्येनसहितंलेपनंदधतमित्यन्वयः २१ पुष्पदंतइति चित्रर-

तद्दृष्ट्वापुष्पदंतोपिवरंद्वारंददर्शसः द्वारेनियुक्तंपुरुषंशूलहस्तंचसस्मितं १३ तिष्ठंतंपिंगलाक्षंचताम्रवर्णंभयंकरं
कथयामासवृत्तांतंजगामतदनुज्ञया १४ अतिक्रम्यन्चतद्द्वारंजगामाभ्यंतरंपुनः नकोपिरक्षतिश्रुत्वादूतरूपंर-
णस्यच १५ गत्वासोभ्यंतरद्वारंद्वारपालमुवाचह रणस्यसर्ववृत्तांतंविज्ञापयतमाचिरं १६ सचतंकथयित्वाच-
दूतोगंतुमुवाचह सगत्वाशंखचूडंतंददर्शसुमनोहरं १७ राजमंडलमध्यस्थंस्वर्णसिंहासनेस्थितं मणींद्ररचितंदिव्यंर
त्नदंडसमन्वितं १८ रत्नकृत्रिमपुष्पैश्चप्रशस्तैःशोभितंसदा भृत्येनमस्तकेन्यस्तंस्वर्णछत्रंमनोहरं १९ सेवितं
पार्षदगणैरुचिरैःश्वेतचामरैः सुवेषंसुंदरंरम्यंरत्नभूषणभूषितं २० माल्येनलेपनंसूक्ष्मंसुवस्त्रंदधतंमुने दान
वेंद्रैःपरिवृतंसुवेषैश्चत्रिकोटिभिः २१ शतकोटिभिरन्यैश्चभ्रमद्भिरस्त्रपाणिभिः एवंभूतंचतंदृष्ट्वापुष्पदंतःस
विस्मयः २२ उवाचसन्चवृत्तांतंयदुक्तंशंकरेणच पुष्पदंतउवाच राजेंद्रशिवभृत्योहंपुष्पदंताभिधःप्रभो २३
यदुक्तंशंकरेणैवतद्ब्रवीमिनिशामय राज्यंदेहिचदेवानामधिकारंचसांप्रतं २४ देवाश्चशरणापन्नादेवेशंश्रीहरिं
परं हरिर्दत्वास्यशूलंचतेनप्रस्थापितःशिवः २५ पुष्पभद्रानदीतीरेवटमूलेत्रिलोचनः विषयंदेहितेषांचयुद्धं
वाकुरुनिश्चितं २६ गत्वावक्ष्यामिकिंशंभुमथतद्दूदमामपि दूतस्यवचनंश्रुत्वाशंखचूडःप्रहस्यच २७ प्रभा
तेहंगमिष्यामित्वंचगच्छेत्युवाचह सगत्वोवाचतंतूर्णंवटमूलस्थमीश्वरं २८

थगंधर्वस्यैवनामांतरं पुष्पदंतइति
२२ २३ २४ २५ पुष्पभद्रेति चंद्रभागायानामांतरं विषयंस्वदेशंतेषांदेवानां २६ २७ २८

२९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ अभयासारिपुंरिपवेभयंददातीत्यर्थः ३८ ३९ ४०

शंखचूडस्यवचनंतदीयंतन्मुखोदितं एतस्मिन्नंतरेस्कंदआजगामशिवांतिकं २९ वीरभद्रश्चनंदीचमहाका
लःसुभद्रकः विशालाक्षश्चबाणश्चपिंगलाक्षोविकंपनः ३० विरूपोविकृतिश्चैवमणिभद्रश्चबाष्कलः कपिला
ख्योदीर्घदंष्ट्रोविकटस्ताम्रलोचनः ३१ कालकंठोबलीभद्रःकालजिव्हःकुटीचरः बलोन्मत्तोरणश्लाघीदुर्जयो
दुर्गमस्तथा ३२ अष्टौचभैरवारौद्रारुद्राश्चैकादशस्मृताः वसवोष्टौवासवश्चआदित्याद्वादशस्मृताः ३३ हुता
शनश्चचंद्रश्चविश्वकर्माश्विनौचतौ कुबेरश्चयमश्चैवजयंतोनलकूबरः ३४ वायुश्चवरुणश्चैवबुधश्चमंगल
स्तथा धर्मश्चशनिरीशानःकामदेवश्चवीर्यवान् ३५ उग्रदंष्ट्राचोग्रचंडाकोटराकैटभीतथा स्वयंचाष्टभुजादेवी
भद्रकालीभयंकरी ३६ रत्नेंद्रसारनिर्माणविमानोपरिसंस्थिता रक्तवस्त्रपरीधानारक्तमाल्यानुलेपना ३७ नृ
त्यंतीचहसंतीचगायंतीसुस्वरंमुदा अभयंददातिभक्तेभ्योभयासाचभयंरिपुं ३८ बिभ्रतीविकटांजिव्हांसु
लोलांयोजनायतां शंखचक्रगदापद्मखड्गचर्मधनुःशरान् ३९ खर्परंवर्तुलाकारंगंभीरंयोजनायतं त्रिशूलं
गगनस्पर्शिशक्तिंचयोजनायतां ४० मुद्गरंमुसलंवज्रंखेटंफलकमुज्ज्वलं वैष्णवास्त्रंवारुणास्त्रंवान्हेयंनागपा
शकं ४१ नारायणास्त्रंगांधर्वंब्रह्मास्त्रंगारुडंतथा पर्जन्यास्त्रंपाशुपतंजृंभणास्त्रंचपार्वतं ४२ माहेश्वरास्त्रं
वायव्यंदंडंसंमोहनंतथा अव्यर्थमस्त्रकंदिव्यंदिव्यास्त्रशतकंपरं ४३ आगत्यतत्रतस्थौचयोगिनीनांत्रिको
टिभिः सार्द्धंचडाकिनीनांचविकटानांत्रिकोटिभिः ४४ भूतप्रेतपिशाचाश्चकूष्मांडाब्रह्मराक्षसाः वेतालारा
क्षसाश्चैवयक्षाश्चैवतुकिन्नराः ४५

४१ ४२ ४३ ४४ ४५ ६२ ६७

४६ ४७ ४८ ४९ मनसिवांछितंरतिक्रीडां ५० ५१ ५२ ५३ ५४ ५५ ५६ यापराप्रकृतिःसैवब्रह्मादीनामीश्वरइत्यर्थः ५७ सप्रकृतिरूपएवेश्वरः पातासंहर्त्तास्रष्टाचभवतिसएवात्माभवतिसएवकालस्यापिनर्त्तकः ५८ सएवसृष्टिकालेस्वाभिन्नांप्रकृतिंमा-

ताभिश्चैवसहस्कंदःप्रणम्यचंद्रशेखरं पितुःपार्श्वेसहायार्थेसमुवासतदाज्ञया ४६ अथदूतेगतेतत्रशंखचूडः
प्रतापवान् उवाचतुलसींवार्तांगत्वाभ्यंतरमेवच ४७ रणवार्त्तांचसाश्रुत्वाशुष्ककंठोष्ठतालुका उवाचमधुरंसा-
ध्वीत्हृदयेनविदूयता ४८ तुलस्युवाच हेप्राणबंधोहेनाथतिष्ठमेवक्षसिक्षणं हेप्राणाधिष्ठातृदेवरक्षमेजी
वितंक्षणं ४९ भुंक्ष्वजन्मसमासाद्ययन्मेमनसिवांछितं पश्यामित्वांक्षणंकिंचिल्लोचनाभ्यांचसादरं ५० आं
दोलयंतेप्राणामेमनोदग्धंचसंततं दुःस्वप्नश्चमयादृष्टश्चाद्यैवचरमेनिशि ५१ तुलसीवचनंश्रुत्वाभुक्त्वापी
त्वानृपेश्वरः उवाचवचनंप्राज्ञोहितंसत्यंयथोचितं ५२ शंखचूडउवाच कालेनयोजितंसर्वंकर्मभोगनि
बंधनं शुभंहर्षंसुखंदुःखंभयंशोकश्चमंगलं ५३ कालेभवंतिवृक्षाश्चस्कंधवंतश्चकालतः क्रमेणपुष्पवं
तश्चफलवंतश्चकालतः ५४ तेषांफलानिपक्वानिप्रभवंत्येवकालतः तेसर्वेफलिताःकालेपातंयांतिचकाल
तः ५५ कालेभवंतिविश्वानिकालेनश्यंतिसुंदरि कालात्स्रष्टाचसृजतिपातापातिचकालतः ५६ संहर्त्ता-
संहरेत्कालक्रमेणसंचरंतिते ब्रह्मविष्णुशिवादीनामीश्वरःप्रकृतिःपरा ५७ स्रष्टापाताचसंहर्तासचात्मा-
कालनर्त्तकः कालेसएवप्रकृतिंस्वाभिन्नांस्वेच्छयाप्रभुः ५८ निर्मायकृतवान्सर्वान्विश्वस्थांश्चचराचरान्
सर्वेशःसर्वरूपश्चसर्वात्मापरमेश्वरः ५९ जनंजनेनजनिताजनंपातिजनेनयः जनंजनेनहरतेतंदेवंभजसांप्र
तं ६०

यारव्यांनिर्मायपृथक्कृत्यचराचरंचकृतवानित्यर्थः ५९ सएवजनेनजनंजनिताजनयितेत्यर्थः तथाजनेनजनंपातिरक्षति तथाजनेनजनंहर

ति यस्मादेवंमूलप्रकृत्यात्मकईश्वरएवकरोतिसर्वंतस्मात्तादृशस्येच्छांकोनिवारयितुंसमर्थस्तर्हिकिंकर्तव्यमितिचेत्तमेवशरणंगंतव्यमित्याह तंदेवमि
ति ६० ६१ मृत्युश्चरतिजंतुष्विति तथाचश्रुतिः भीषाप्माद्वातःपवते भीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावतिपंचमइति ६२



यस्याज्ञयावातिवातःशीघ्रगामीचसांप्रतं यस्याज्ञयाचतपनस्तपत्येवयथाक्षणं ६१ यथाक्षणंवर्षतींद्रोमृ-
त्युश्चरतिजंतुषु यथाक्षणंदहत्यग्निश्चंद्रोप्यमतिशीतवान् ६२ मृत्योर्मृत्युंकालकालंयमस्यचयमंपरं विभुंस्र
ष्टुश्चस्रष्टारंपातुश्चपातृकंभवे ६३ संहर्तारंचसंहर्तुस्तंदेवंशरणंव्रज कोवाबंधुश्चकेषांवासर्वबंधुंभजप्रिये ६४
अहंकोवाचत्वंकावाविधिनायोजितःपुरा त्वयासार्द्धंकर्मणाचपुनस्तेनवियोजितः ६५ अज्ञानीकातरःशोकेवि
पत्तौनचपंडितः सुखंदुःखंक्रमत्येवकालनेमिक्रमेणाच ६६ नारायणंतंसर्वेशंकांतंयास्यसिनिश्चितं तपःकृ
तंयदर्थंचपुराबदरिकाश्रमे ६७ मयात्वंतपसालब्धाब्रह्मणस्तुवरेणाच हर्यर्थेयत्तवतपोहरिंप्राप्स्यसिकामि
नि ६८ वृंदावनेचगोविंदंगोलोकेत्वंलभिष्यसि अहंयास्यामितल्लोकंतनुंत्यक्त्वाचदानवीं ६९ तत्रद्रक्ष्यसिमां
त्वंचद्रक्ष्यामित्वांचसांप्रतं अगमंराधिकाशापाद्भारतंचसुदुर्लभं ७० पुनर्यास्यामितत्रैवकःशोकोमेशृणु-
प्रिये त्वंचदेहंपरित्यज्यदिव्यरूपंविधायच ७१ तत्कालंप्राप्स्यसिहरिंमाकांतेकातराभव इत्युक्त्वाचदिनां
तेचतयासार्द्धंमनोहरं ७२ सुष्वापशोभनेतल्पेपुष्पचंदनचर्चिते नानाप्रकारविभवंचकाररत्नमंदिरे ७३ रत्न
प्रदीपसंयुक्तेस्त्रीरत्नंप्राप्यसुंदरीं निनायरजनींराजाक्रीडाकौतुकमंडलैः ७४ कृत्वावक्षसितांकांतांरुदंतीम
तिदुःखितां कृशोदरींनिराहारांनिमग्नांशोकसागरे ७५ पुनस्तांबोधयामासदिव्यज्ञानेनज्ञानवित् पुराकृष्णेन
यद्दत्तंभांडीरेतत्त्वमुत्तमं ७६ ६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ ७३ ७४ ७५ गोलोकेभांडीरेस्थानेतत्त्वंज्ञानं ७६

मंगलेन

७७ ७८ ७९ ८० ८१ ८२ ८३ ८४ इतिश्रीदेवीभागवततिलकेनवमस्कंधेविंशोध्यायः २० द्व्यशीतिपद्यवर्यैस्तुशंखचूड

सचतस्यैददौसर्वंसर्वशोकहरंपरं ज्ञानंसंप्राप्यसादेवीप्रसन्नवदनेक्षणा ७७ क्रीडांचकारहर्षेणसर्वंमत्वेतिनश्व
रं तौदंपतीचक्रीडंतौनिमग्नौसुखसागरे ७८ पुलकांचितसर्वांगौमूर्छितौनिर्जनेमुने अंगप्रत्यंगसंयुक्तौसुप्री-
तौसुरतोत्सुकौ ७९ एकांगौचतथातौद्वौचार्द्धनारीश्वरौयथा प्राणेश्वरंचतुलसीमेनेप्राणाधिकंपरं ८० प्राणा
धिकांचतांमेनेराजाप्राणेश्वरींसतीं तौस्थितौसुखसुप्तौचतंद्रितौसुंदरौसमौ ८१ सुवेषौसुखसंभोगादन्वेष्टौ
सुमनोहरौ क्षणंसुचेतनौतौचकथयंतौरसाश्रयात् ८२ कथांमनोरमांदिव्यांहसंतौचक्षणंपुनः क्षणंचकेलिसं
युक्तौरसभावसमन्वितौ ८३ सुरतेविरतिर्नास्तितौतद्विषयपंडितौ सततंजययुक्तौद्वौक्षणंनैवपराजितौ ८४
इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेनारदनारायणसंवादेशक्तिप्रादुर्भावेविंशोध्यायः २० श्रीना
रायणउवाच श्रीकृष्णंमनसाध्यात्वारक्षःकृष्णपरायणः ब्राह्मेमुहूर्तेउत्थायपुष्पतल्पान्मनोहरात् १ रात्रि
वासःपरित्यज्यस्नात्वामंगलवारिणा धौतेचवाससीधृत्वाकृत्वातिलकमुज्ज्वलं २ चकाराह्निकमावश्यमभी
ष्टदेववंदनं दध्याज्यमधुलाजांश्चददर्शवस्तुमंगलं ३ रत्नश्रेष्ठंमणिश्रेष्ठंवस्त्रश्रेष्ठंचकांचनं ब्राह्मणेभ्यो
ददौभक्त्यायथानित्यंचनारद ४ अमूल्यरत्नंयत्किंचिन्मुक्तामाणिक्यहीरकं ददौविप्रायगुरवेयात्रामंगलहेत
वे ५ गजरत्नमश्वरत्नंधनरत्नंमनोहरं ददौसर्वंदरिद्रायविप्रायमंगलायच ६ भांडाराणांसहस्राणिनगराणां
द्विलक्षकं ग्रामाणांशतकोटिंचब्राह्मणायददौमुदा ७

महेशयोः युद्धंमहात्रासकरंयथावदभिवर्ण्यते १ रात्र्युत्तरंजातं
वृत्तमाह श्रीकृष्णमिति रक्षोराक्षसः १ २ ३ नित्यंनित्यदानं ४ ५ ६ स्वस्यमरणंनिश्चितंज्ञात्वाभांडाराणिददावित्याह ७

८ ९ १० धानुष्काणांधनुर्धराणां ११ १२ १३ भांडोपंद्रव्यसमूहंत्रिंशदक्षौहिणीबाधंपीडितंचकाररक्षितंत्रिंशदक्षौहिणीभिश्चकोरेत्य



पुत्रंकृत्वातुराजेंद्रंसर्वेषुदानवेषुच पुत्रेसमर्प्यभार्यानांराज्यंचसर्वसंपदं ८ प्रजानुचरसंघंचभांडारंवाहनादिकं
स्वयंसन्नाहयुक्तश्चधनुष्पाणिर्बभूवह ९ भृत्यद्वाराक्रमेणैवचकारसैन्यसंचयं अश्वानांचत्रिलक्षेणलक्षेणवरहस्ति
नां १० रथानामयुतेनैवधानुष्काणांत्रिकोटिभिः त्रिकोटिभिर्वर्मिणांचशूलिनांचत्रिकोटिभिः ११ कृतासेनाप
रिमितादानवेंद्रेणनारद तस्यांसेनापतिश्चैवयुद्धशास्त्रविशारदः १२ महारथःसविज्ञेयोरथिनांप्रवरोरणे त्रि
लक्षाक्षौहिणीसेनापतिंकृत्वानराधिपः १३ त्रिंशदक्षौहिणीबाधंभांडौघंचचकारह बहिर्बभूवशिबिरान्मनसा
श्रीहरिंस्मरन् १४ रत्नेंद्रसारनिर्माणविमानमारुरोहसः गुरुवर्गान्पुरस्कृत्यप्रययौशंकरांतिकं १५ पुण्यभद्रानदी
तीरेयत्राक्षयवटःशुभः सिद्धाश्रमंचसिद्धानांसिद्धिक्षेत्रंचनारद १६ कपिलस्यतपःस्थानंपुण्यक्षेत्रेचभार
ते पश्चिमोदधिपूर्वेचमलयस्यचपश्चिमे १७ श्रीशैलोत्तरभागेचगंधमादनदक्षिणे पंचयोजनविस्तीर्णादै-
र्घ्येशतगुणातथा १८ शुद्धस्फटिकसंकाशाभारतेचसुपुण्यदा शाश्वतीजलपूर्णाचपुण्यभद्रानदीशुभा १९
लवणाब्धिप्रियाभार्याशश्वत्सौभाग्यसंयुता शरावतीमिश्रिताचनिर्गतासाहिमालयात् २० गोमतींवाम-
तःकृत्वाप्रविष्टापश्चिमोदधौ तत्रगत्वाशंखचूडोददर्शचंद्रशेखरं २१ वटमूलेसमासीनंसूर्यकोटिसमप्रभं
कृत्वायोगासनंदृष्ट्वामुद्रायुक्तंचसस्मितं २२ शुद्धस्फटिकसंकाशंज्वलंतंब्रह्मतेजसा त्रिशूलपट्टिशधरंव्याघ्र-
चर्मांबरंवरं २३ भक्तमृत्युहरंशांतंगौरीकांतंमनोहरं तपसांफलदातारंदातारंसर्वसंपदां २४ आशुतोषंप्रसन्ना
स्यंभक्तानुग्रहकातरं विश्वनाथंविश्वबीजंविश्वरूपंचविश्वजं २५ र्थः १४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५

२६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ देवानांक्त्रमेविषयेमि-

विश्वंभरंविश्ववरंविश्वसंहारकारकं कारणंकारणानांचनरकार्णवतारणं २६ ज्ञानप्रदंज्ञानबीजंज्ञानानंदं-
सनातनं अवरुह्यविमानाच्चतंदृष्ट्वादानवेश्वरः २७ सर्वैःसार्धंभक्तियुक्तःशिरसाप्रणनामसः वामतोभद्रका
लींचस्कंदंचतत्पुरःस्थितं २८ आशिषंचददौतस्मैकालीस्कंदश्चशंकरः उत्तस्थुरागतंदृष्ट्वासर्वेनंदीश्वरादयः २९
परस्परंचभाषांतेचक्रुस्तत्रचसांप्रतं राजाकृत्वाचसंभाषामुवासशिवसन्निधौ ३० प्रसन्नात्मामहादेवोभगवां-
स्तमुवाचह महादेवउवाच विधाताजगतांब्रह्मापिताधर्मस्यधर्मवित् ३१ मरीचिस्तस्यपुत्रश्चवैष्णवश्चा
पिधार्मिकः कश्यपश्चापितत्पुत्रोधर्मिष्ठश्चप्रजापतिः ३२ दक्षःप्रीत्याददौतस्मैभक्त्याकन्यास्त्रयोदश तास्वे
कांचदनुःसाध्वीतत्सौभाग्यविवर्द्धिता ३३ चत्वारिंशद्दनोःपुत्रादानवास्तेजसोल्बणाः तेष्वेकोविप्रचित्तिश्च-
महाबलपराक्रमः ३४ तत्पुत्रोधार्मिकोदंभोविष्णुभक्तोजितेंद्रियः जजापपरमंमंत्रंपुष्करेलक्षवत्सरं ३५शु
क्राचार्यंगुरुंकृत्वाकृष्णस्यपरमात्मनः तदात्वांतनयंप्रापपरंकृष्णपरायणं ३६ पुरात्वंपार्षदोगोपोगोपेष्वपिसु
धार्मिकः अधुनाराधिकाशापाद्भारतेदानवेश्वरः ३७ आब्रह्मस्तंबपर्यंतंतुच्छंमेनेचवैष्णवः सालोक्यसार्ष्टि-
सारूप्यंसामीप्यंचहरेरपि ३८ दीयमानंनगृह्णंतिवैष्णवाःसेवनंविना ब्रह्मत्वममरत्वंवातुच्छंमेनेचवैष्णवः
३९ इंद्रत्वंवामनुत्वंवानमेनेगणनासुच कृष्णभक्तस्यतेकिंवादेवानांविषयेभ्रमे ४० देहिराज्यंचदेवानांम-
त्प्रीतिंरक्षभूमिप सुखंस्वराज्येत्वंतिष्ठदेवास्तिष्ठंतुवैपदे ४१ अलंभूतविरोधेनसर्वेकश्यपवंशजाः यानिकानिचपा
पानिब्रह्महत्यादिकानिच ४२

थ्यारूपेदेशेतवकिंवाफलंनकिमपीत्यर्थः ४० ४१सर्वेयूयंदेवासुराःकश्यपवंशोत्पन्नाबंधवोऽतोनपरस्परंद्रोहोयु-
क्तइत्यर्थः ४२

दैवेभ्योराज्येदत्तेममसंपदोहानिः स्यात्तत्राह स्वसंपदामिति ४३ ४४ ४५ ब्रह्मणोन्यूनत्वंकालवशादुपपाद्यधर्मस्यापिन्यूनत्वमाह धर्मः सत्येइ
ति सत्येसत्ययुगेपूर्णोधर्मइत्यर्थः ४६ ४७ कुह्वांअमावास्यायां ४८ ४९ प्रकांडतांप्रचंडतां ५० ५१ ५२ ५३



ज्ञातिद्रोहस्यपापानिकलांनार्हतिषोडशीं स्वसंपदांचहानिंचयदिराजेंद्रमन्यसे ४३ सर्वावस्थाचसमतांकेषां
यातिचसर्वदा ब्रह्मणश्चतिरोभावोलयेप्राकृतिकेसदा ५४ आविर्भावः पुनस्तस्यप्रभावादीश्वरेच्छया ज्ञान
वृद्धिश्चतपसास्मृतिलोपश्चनिश्चितं ४५ करोतिसृष्टिंज्ञानेनस्रष्टासोपिक्रमेणच परिपूर्णतमोधर्मः सत्येस
त्याश्रयेसदा ४६ त्रिभागः सोपित्रेतायांद्विभागोद्वापरेस्मृतः एकभागः कलौपूर्वंतदंशश्चक्रमेणच ४७ कला
मात्रंकलेः शेषेकुह्वांचंद्रकलायथा यादृक्तेजोरवेर्ग्रीष्मेनतादृक्शिशिरेपुनः ४८ दिनेषुयादृक्मध्यान्हे
सायंप्रातर्नतत्समं उदयंयातिकालेनबाल्तांचक्रमेणच ४९ प्रकांडतांचतत्पश्चात्कालेस्तंपुनरेतिसः दिने
प्रच्छन्नतांयातिकालेनदुर्दिनेघने ५० राहुग्रस्तेकंपितश्चपुनरेवप्रसन्नतां परिपूर्णतमश्चंद्रः पूर्णिमायां
चजायते ५१ तादृशोनभवेन्नित्यंक्षयंयातिदिनेदिने पुनश्चपुष्टिमायातिपरः कुह्वादिनेदिने ५२ संपद्युक्तः
शुक्लपक्षेकृष्णेम्लानश्चयक्ष्मणा राहुग्रस्तेदिनेम्लानोदुर्दिनेनविरोचते ५३ कालेचंद्रोभवेच्छुक्लोभ्रष्टश्रीः
कालभेदतः भविष्यतिबलिश्चेंद्रोभ्रष्टश्रीः सुतलेधुना ५४ कालेनपृथ्वीसस्याढ्यासर्वाधारावसुंधरा काले-
जलेनिमग्नासातिरोभूतांबुविप्लुता ५५ कालेनश्यंतिविश्वानिप्रभवंत्येवकालतः चराचराश्चकालेननश्यंति
प्रभवंतिच ५६ ईश्वरस्यैवसमताब्रह्मणः परमात्मनः अहंमृत्युंजयोयस्मादसंख्यप्राकृतंलयं ५७

५४ ५५ ५६

यथैतेकालेननश्यंतितत्रनदुःखंतथातवसंपदस्त्वंचनंक्ष्यसितत्रकिंदुःखमित्यर्थः तर्हिन्यूनत्वादिदोषाभाववान्कस्तत्राह ईश्वरस्यैवेति यस्मात्परमात्म

नोनुग्रहादहं मृत्युंजयोजातोऽथच प्राकृतंलयंपश्यामि कारणात्मनाभिन्नः सन्सईश्वरइत्यर्थः सएवेश्वरोमायाविशिष्टत्वान्मायाशक्तिप्रकृतिपुरुषइ
त्यादिशब्दैर्व्यवह्रियते गजशरीरेप्रविष्टचैतन्यस्यगजइतिव्यवहारवत् ५७ ५८ अतोजन्ममरणादिभयमवश्यभावित्वात्त्याज्यमेवतर्हिकिंकर्तव्य
मितिचेत्सर्वभावेनमूलप्रकृतिरूपःसएवाराधनीयइत्याह तन्नामेति ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ गृहीत्वेति धर्मः

अदर्शंचापिद्रक्ष्यामिवारंवारंपुनःपुनः सचप्रकृतिरूपंचसएवपुरुषःस्मृतः ५८ सचात्मासचजीवश्चनानारू
पधरःपरः करोतिसततंयोहितन्नामगुणकीर्तनं ५९ कालेमृत्युंसजयतिजन्मरोगंभयंजरां स्रष्टाकृतोविधि-
स्तेनपाताविष्णुःकृतोभवेत् ६० अहंकृतश्चसंहर्तावयंविषयिणःकृताः कालाग्निरुद्रंसंहारेनियोज्यविषयेनृप
६१ अहंकरोमिसततंतन्नामगुणकीर्तनं तेनमृत्युंजयोहंचज्ञानेनानेननिर्भयः ६२ मृत्युर्मृत्युभयाद्या
तिवैनतेयादिवोरगाः इत्युक्त्वासचसर्वेशःसर्वभावनतत्परः ६३ विररामचशंभुश्चसभामध्येचनारद राजा
तद्वचनंश्रुत्वाप्रशशंसपुनःपुनः ६४ उवाचमधुरंदेवंपरंविनयपूर्वकं शंखचूडउवाच त्वयायत्कथितंदेवना
न्यथावचनंस्मृतं ६५ तथापिकिंचिद्यथार्थंश्रूयतांमन्निवेदनं ज्ञातिद्रोहेमहत्पापंत्वयोक्तमधुनाव्ययत् ६६ गृ
हीत्वातस्यसर्वस्वंकुतःप्रस्थापितोबलिः मयासमुद्धृतंसर्वमूर्ध्वमैश्वर्यमीश्वर ६७ सुतलाच्चसमुद्धर्तुंनालंतत्र
गदाधरः सभ्रातृकोहिरण्याक्षःकथंदेवैश्चहिंसितः ६८ शुंभादयश्चासुराश्चकथंदेवैर्निपातिताः पुरासमुद्रमथ
नेपीयूषंभक्षितंसुरैः ६९

वद्भिर्भवद्भिर्बलिर्धनंगृहीत्वाकुतः प्रस्थापितस्तत्रकिंनज्ञातिद्रोहोस्तीतितस्मात्परोपदेशेकुशलाएवयूयमितिप्रतिभाती
त्यभिप्रायः तलातालेगतमैश्वर्यमधुनामयोर्ध्वंसमुद्धृतंतत्कथंजीवन्दास्यामीतिभावः ६७ तर्हिबलिस्त्वयाकुतोनोद्धृतइतिचेत्सामर्थ्याभावादित्याह
सुतलाच्चेति समुद्धर्तुंबलिमितिशेषः कुतः सामर्थ्याभावोयतस्तत्रबलिद्वारिगदाधरस्तिष्ठतितिइत्यर्थः तथानेकेपराधाभवतांसंतीत्याह सभ्रातृकइति ६८
६९

तेसर्वेदेवाःप्रकृतेर्मूलप्रकृतिसंज्ञस्यपरमात्मनइत्यर्थः ७० ७१ पराजयोजयइति कदाचित्तेषांजयपराजयौकदाचिदस्माकमित्यर्थः इदंत्वधिकमित्याह तदावयोरितिआवयोर्देवासुरयोर्विरोधेतवागमनंनिःफलं ७२ कुतइतिचेत्तवदेवासुरयोःसमत्वादित्याह समसंबंधिनइति समसंबंधिनोबंधोर्देवासुरमित्रस्यतवात्रागमनंनोचितमितिभावः किंचइयंतेइति अस्माभिःसहयुद्धेतवमहतीलज्जाअस्मासुनीचत्वात्त्वयिमहत्वात् ७३ किंचजयेइति अ

क्लेशभाजोवयंतत्रतेसर्वेफलभोगिनः क्रीडाभांडमिदंविश्वंप्रकृतेःपरमात्मनः ७० यस्मैयत्रसददातितस्यैश्वर्यंभवेत्तदा देवदानवयोर्वादःशश्वन्नैमित्तिकःसदा ७१ पराजयोजयस्तेषांकालेस्माकंक्रमेणच तदावयोर्विरोधेवागमनंनिष्फलंपरं ७२ समसंबंधिनोबंधोरीश्वरस्यमहात्मनः इयंतेमहतीलज्जायुद्धेस्माभिःसहाधुना ७३ जयेततोधिकाकीर्तिर्हानिश्चैवपराजये इत्येतद्वचनंश्रुत्वाप्रहस्यचत्रिलोचनः ७४ यथोचितमुत्तरंतमुवाचदानवेश्वरं महादेवउवाच युष्माभिःसहयुद्धेमेब्रह्मवंशसमुद्भवैः ७५ कालज्ज्ञा महतीराजन्नाकीर्तिर्वापराजये युद्धमादौहरेरेवमधुनाकैटभेनच ७६ हिरण्यकशिपोश्चैवसहतेनात्मनानृप हिरण्याक्षस्ययुद्धंचपुनस्तेनगदाभृता ७७ त्रिपुरैःसहयुद्धंचमयापिचपुराकृतं सर्वेश्वर्य्याःसर्वमातुःप्रकृत्याश्चबभूवह ७८ सहशंभादिभिःपूर्वसमरःपरमाद्भुतः पार्षदप्रवरस्त्वंचकृष्णस्यपरमात्मनः ७९ येयेहताश्चदैतेयानहिकेपित्वयासमाः कालज्ज्ञामहतीराजन्ममयुद्धेत्वयासह ८० सुराणांशरणस्यैवप्रेषितश्चहरेरहो देहिराज्यंचदेवानामितिमेनिश्चितंवचः ८१

स्माकंजयेअस्माकमेवाधिकाकीर्तिस्तवजयेतुनतादृशीनहिसिंहःसृगालंहत्वाकीर्तिंलभते तवपराजयेतुतवमहतीहानिर्नतथास्माकंसाभवतीतिविशेषइति ७४ ७५ ७६ ७७ ७८ ७९ कालज्ज्ञेति अस्माकंदेवतानांदैत्यैःसहयुद्धंकर्तव्यमित्येवसनातनोधर्मश्चलितोस्ति ततोनकापिलज्ज्ञेत्यर्थः ८० शरणस्याश्रयस्यप्रेषितस्तेन प्रेषितइत्यर्थः ८१ ८२ ८२ ८२

८२ इतिश्रीदेवीभागवततिलकेनवमस्कंधेएकविंशोध्यायः २१ पंचसप्ततिपद्यैस्तुयुद्धारंभःसचोच्यते यत्रदेवासुराणांचपराक्रमउदीर्यते

"युद्धंवाकुरुमत्सार्धंवाग्व्ययेकिंप्रयोजनं" इत्युक्त्वाशंकरस्तत्रविररामचनारद उत्तस्थौशंखचूडश्चह्यमात्यैःस
हसत्वरं ८२ इतिश्रीदेवीभागवतेमहापुराणेअष्टादशसाहस्र्यांसंहितायांनवमस्कंधेनारदश्रीनारायणसं
वादेएकविंशोध्यायः २१ श्रीनारायणउवाच शिवंप्रणम्यशिरसादानवेंद्रःप्रतापवान् समारुरोहयानं
चसहामात्यैःससत्वरः १ शिवःस्वसैन्यंदेवांश्चप्रेरयामाससत्वरं दानवेंद्रःससैन्यश्चयुद्धारंभेबभूवह २
स्वयंमहेंद्रोयुयुधेसार्द्धंचवृषपर्वणा भास्करोयुयुधेविप्रचित्तिनासहसत्वरः ३ दंभेनसहचंद्रश्चचकारपरमं
रणं कालस्वरेणकालश्चगोकर्णेनहुताशनः ४ कुबेरःकालकेयेनविश्वकर्मामयेनच भयंकरेणमृत्युश्चसंहारेण
मयस्तथा ५ विकंकणेनवरुणश्चंचलेनसमीरणः बुधश्चधृतपृष्ठेनरक्ताक्षेणशनैश्चरः ६ जयंतोरत्नसारेण
वसवोवर्चसांगणैः अश्विनौचदीप्तिमताधूम्रेणनलकूबरः ७ धुरंधरेणधर्मश्चउषाक्षेणचमंगलः शोभाक
रेणवैभानुःपिठरेणचमन्मथः ८ गोधामुखेनचूर्णेनखड्गेनचध्वजेनच कांचीमुखेनपिंडेनधूम्रेणसहनंदिना
९ विश्वेनचपलाशेनादित्याद्यायुयुधुःपरे एकादशचरुद्रावैएकादशभयंकरैः १० महामारीचयुयुधेचो-
ग्रचंडादिभिःसह नंदीश्वरादयःसर्वेदानवानांगणैःसह ११ युयुधुश्चमहायुद्धेप्रलयेपिभयंकरे वटमूलेच
शंभुश्चतस्थौकाल्यासुतेनच १२ सर्वेचयुयुधुःसैन्यसमूहाःसततंमुने रत्नसिंहासनेरम्येकोटिभिर्दानवैःसह १३

१ शंखचूडोयुद्धार्थमुत्थितवानित्युक्तंतदुत्तरंजातंवृत्तमाह शिवंप्रणम्येति १ २ केनसाकंकस्ययुद्धंद्वंद्वयुद्धंजातंतदाह स्वयंमहेंद्रइति ३ अत्रतृतीयांतादैत्याःप्र
थमांतादेवाः ४ ५ ६ ७ ८ ९ गोधामुखादिभिरादित्याद्यायुयुधुः एकादशरुद्रा एकादशभयंकरैर्दैत्यैर्युयुधुः १० महामारीदैत्यपक्षीयाउग्रचंडादयोदेवताः
११ १२ १३

१४ १५ १६ १७ १८ १९ २० २१ २२ २३ राजाशंखचूडः २४ वन्ह्युत्थानं परस्परशस्त्रवर्षणात् २५



उवासशंखचूडश्चरत्नभूषणभूषितः शंकरस्यचयेयोधादानवैश्चपराजिताः १४ देवाश्चदुद्रुवुःसर्वेभीताश्चक्षततवि
ग्रहाः चकारकोपंस्कंदश्चदेवेभ्यश्चाभयंददौ १५ बलंचस्वगणानांचवर्द्धयामासतेजसा सोयमेकश्चयुयुधेदानवानां
गणैःसह १६ अक्षौहिणीनांशतकंसमरेचजघानसः असुरान्पातयामासकालीकमललोचना १७ पपौरक्तंदा-
नवानामतिक्रुद्धाततःपरं दशलक्षंगजेंद्राणांशतलक्षंचकोटिशः १८ समादायैकहस्तेनमुखेचिक्षेपलीलया कबं
धानांसहस्रंचननर्तसमरेमुने १९ स्कंदस्यशरजालेनदानवाःक्षतविग्रहाः भीताश्चदुद्रुवुःसर्वेमहारणपराक्र
माः २० वृषपर्वाविप्रचित्तिर्दंभश्चापिविकंकणः स्कंदेनसार्धंयुयुधुस्तेसर्वेविक्रमेणच २१ महामारीचयुयु
धेनबभूवपराङ्मुखी बभूवुस्तेचसंक्षुब्धाःस्कंदस्यशक्तिपीडिताः २२ नदुद्रुवुर्भयात्स्वर्गेपुष्पवृष्टिर्बभूवह
स्कंदस्यसमरंदृष्ट्वामहारुद्रंसमुल्बणं २३ दानवानांक्षयकरंयथाप्राकृतिकोलयः राजाविमानमारुह्यचकारबा
णवर्षणं २४ नृपस्यशरवृष्टिश्चघनस्यवर्षणंयथा महाघोरांधकारश्चवन्ह्युत्थानंबभूवच २५ देवाःप्रदुद्रुवुः
सर्वेप्यन्येनंदीश्वरादयः एकएवकार्तिकेयस्तस्थौसमरमूर्धनि २६ पर्वतानांचसर्पाणांशिलानांशाखिनांतथा नृपश्च
कारवृष्टिंचदुर्वारांचभयंकरीं २७ नृपस्यशरवृष्ट्याचप्रहितःशिवनंदनः नीहारेणाचसांद्रेणप्रहितोभास्करोय
था २८ धनुश्चिच्छेदस्कंदस्यदुर्वहंचभयंकरः बभंजचरथंदिव्यंचिच्छेदरथपीठकान् २९ मयूरंजर्जरीभूतंदि-
व्यास्त्रेणचकारसः शक्तिंचिच्छेदसूर्याभांतस्यवक्षस्यघातिनीं ३० क्षणंमूर्छांचसंप्रापबभूवचेतनःपुनः गृहीत्वा
तद्धनुर्दिव्यंयद्दत्तंविष्णुनापुरा ३१

२६ २७ २८ २९ वक्षस्यवक्षसइत्यर्थः ३० ३१ ६५ ६५

३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ कार्तिकस्यस्कंदस्यसमरंरक्षितुं ४२ वाद्यभांडःसमुदायः ४३

रत्नेंद्रसारनिर्माणंयानमारुह्यकार्तिकः शस्त्रास्त्रंचगृहीत्वाचचकाररणमुल्बणं ३२ सर्पाश्चपर्वतांश्चैववृक्षां
श्चप्रस्तरांस्तथा सर्वांश्चिच्छेदकोपेनदिव्यास्त्रेणशिवात्मजः ३३ वन्हिंनिर्वापयामासपार्जन्येनप्रतापवान् रथं
धनुश्चचिच्छेदशंखचूडस्यलीलया ३४ सन्नाहंसारथिंचैवकिरीटंमुकुटोज्वलं चिक्षेपशक्तिंशक्रश्लाघ्यांदानवेंद्रस्य
वक्षसि ३५ मूर्छासंप्राप्यराजाच्चचेतनश्चबभूवह आरुरोहयानमन्यंधनुर्जग्राहसत्वरः ३६ चकारशरजालंच
माययामायिनांवरः गुहंचच्छादसमरेशरजालेननारद ३७ जग्राहशक्तिमव्यग्रांशतसूर्यसमप्रभां प्रलयाग्निशि
खारूपांविष्णोश्चतेजसावृतां ३८ चिक्षेपतांचकोपेनमहावेगेनकार्तिके पपातशक्तिस्तद्गात्रेवन्हिराशिरिवो
ज्ज्वला ३९ मूर्छांसंप्रापशक्त्याचकार्तिकेयोमहाबलः कालीगृहीत्वातंक्रोडेनिनायशिवसन्निधौ ४० शिव
स्तंचापिज्ञानेनजीवयामासलीलया ददौबलमनंतंचसमुत्तस्थौप्रतापवान् ४१ कालीजगामसमरंरक्षितुंकार्ति
कस्यया वीरास्तामनुजग्मुश्चतेचनंदीश्वरादयः ४२ सर्वेदेवाश्चगंधर्वायक्षराक्षसकिन्नराः वाद्यभांडश्चबहु-
शःशतशोमधुवाहकाः ४३ साचगत्वाथसंग्रामंसिंहनादंचकारच देव्याश्चसिंहनादेनप्रापुर्मूर्च्छांचदानवाः
४४ अट्टाट्टहासमशिवंचकारचपुनःपुनः दृष्ट्वापपौचमाध्वीकंननर्तरणमूर्धनि ४५ उग्रदंष्ट्राचोग्रदंडाको
टर्कीचपपौमधु योगिनीडाकिनीनांचगणाःसुरगणादयः ४६ दृष्ट्वाकालींशंखचूडःशीघ्रमाजौसमाययौ
दानवाश्चभयंप्रापूराजातेभ्योभयंददौ ४७ कालीचिक्षेपवन्हिंचप्रलयाग्निशिखोपमं राजानिर्वापयामास
पार्जन्येनचलीलया ४८

४४ ४५ ४६ ४७ ४८ ५ ५

४९ ५० ५१ ५२ ५३ ५४ ५५ पाशुपतास्त्रत्यागंनिरोद्धुंआकाशवाणीबभूवेत्यर्थः ५६ ५७ ५८ ५९

चिक्षेपवारुणंसाचतीव्रंन्चमहदद्भुतं गांधर्वेणाच्चचिच्छेददानवेंद्रश्चलीलया ४९ माहेश्वरंप्रचिक्षेपकाली
वन्हिशिखोपमं राजाजघानतांशीघ्रंवैष्णवेनन्चलीलया ५० नारायणास्त्रंसादेवीचिक्षेपमंत्रपूर्वकं राजान
नामतद्दृष्ट्वाचावरुह्यरथादसौ ५१ उर्ध्वंजगामतच्चास्त्रंप्रलयाग्निशिखोपमं पपातशंखचूडश्चभक्त्यातंद
ण्डवद्भुवि ५२ ब्रह्मास्त्रंसाचचिक्षेपयत्नतोमंत्रपूर्वकं ब्रह्मास्त्रेणमहाराजोनिर्वापंचचकारसः ५३ तदाचिक्षे
पदिव्यास्त्रंसादेवीमंत्रपूर्वकं राजादिव्यास्त्रजालेनतन्निर्वाणंचकारच ५४ देवीचिक्षेपशक्तिंचयत्नतोयोजनाय
तां राजादिव्यास्त्रजालेनशतखंडांचकारह ५५ जग्राहमंत्रपूतंचदेवीपाशुपतंरुषा निक्षेपणंनिरोद्धुंचवाग्ब
भूवाशरीरिणी ५६ मृत्युःपाशुपतेनास्तिनृपस्यचमहात्मनः यावदस्तिचमंत्रस्यकवचंचहरेरिति ५७
यावत्सतीत्वमस्त्येवसत्याश्चनृपयोषितः तावदस्यजरामृत्युर्नास्तीतिब्रह्मणोवचः ५८ इत्याकर्ण्यभद्र
कालीनतच्चिक्षेपशस्त्रकं शतलक्षंदानवानांजग्रासलीलयाक्षुधा ५९ ग्रस्तुंजगामवेगेनशंखचूडंभयंकरी
दिव्यास्त्रेणसुतीक्ष्णेनवारयामासदानवः ६० खड्गंचिक्षेपसादेवीग्रीष्मसूर्योपमंयथा दिव्यास्त्रेणदानवेंद्रः
शतखंडंचकारसः ६१ पुनर्ग्रस्तुंमहादेवीवेगेनचजगामतं सर्वसिद्धेश्वरःश्रीमान्ववृधेदानवेश्वरः ६२ वेगेन
मुष्टिनाकालीकोपयुक्ताभयंकरी बभंजचरथंतस्यजघानसारथिंसती ६३ साचशूलंचचिक्षेपप्रलयाग्निशि
खोपमं वामहस्तेनजग्राहशंखचूडःस्वलीलया ६४ मुष्ट्याजघानतंदेवीमहाकोपेनवेगतः बभ्रामचतयादैत्यः
क्षणंमूर्छामवापच ६५

६० ६१ ग्रस्तुंग्रसितुं ६२ ६३ ६५ ६५

देव्यासहबाहुयुद्धंनचकारकिंतुतदाननाम किंचदेव्याअस्त्रंस्वयंचिच्छेदनतुतस्याउपरिस्वयंचिक्षेपस्वतेजसाअस्त्रंजयाहच कुतोनास्त्रंचिक्षेपयतोवैष्णव
स्ततोमातृबुद्ध्यानास्त्रंचिक्षेप ६६ ६७ ६८ ६९ ७० क्षतजंरक्तंक्षुधाक्षुधयापपौ ७१ ७२ ७३ पाशुपतेनहंतुमुद्युक्तेत्यर्थः तदेविशेषः

क्षणेनचेतनांप्राप्यसमुत्तस्थौप्रतापवान् नचकारबाहुयुद्धंदेव्यासहननामतां ६६ देव्याश्चास्त्रंसचिच्छेदजग्राहचस्वतेजसा
नास्त्रंचिक्षेपतांभक्तोमातृभक्त्यातुवैष्णवः ६७ गृहीत्वादानवंदेवीभ्रामयित्वापुनःपुनः ऊर्ध्वंचप्रापयामासमहावेगेनकोपि
ता ६८ ऊर्ध्वात्पपातवेगेनशंखचूडःप्रतापवान् निपत्यचसमुत्तस्थौप्रणम्यभद्रकालिकां ६९ रत्नेंद्रसारनिर्माणंविमानंसुमनो
हरं आरुरोहहर्षयुक्तोनविश्रांतोमहारणे ७० दानवानांचक्षतजंसादेवीचपपौक्षुधा पीत्वाभुक्त्वाभद्रकालीजगामशंकरांतिकं
७१ उवाचरणवृत्तांतंपौर्वापर्यंयथाक्रमं श्रुत्वाजहासशंभुश्चदानवानांविनाशनं ७२ लक्षंचदानवेंद्राणामवशिष्टंरणेधुना भुजं
त्यानिर्गतंवक्त्रात्तदन्यंभुक्तमीश्वर ७३ संग्रामेदानवेंद्रंचहंतुंपाशुपतेनवै अवध्यस्तवराजेतिवाग्बभूवाशरीरिणी ७४ राजेंद्र-
श्चमहाज्ञानीमहाबलपराक्रमः नचचिक्षेपमय्यस्त्रंचिच्छेदममसायकं ७५ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेना
रदनारायणसंवादेद्वाविंशोध्यायः २२ श्रीनारायणउवाच शिवस्तत्त्वंसमाकर्ण्यतत्त्वज्ञानविशारदः य
यौस्वयंचसमरेस्वगणैःसहनारद १ शंखचूडःशिवंदृष्ट्वाविमानादवरुह्यच ननामपरयाभक्त्याशिरसादंडव-
द्भुवि २ तंप्रणम्यचवेगेनविमानमारुरोहसः तूर्णंचकारसन्नाहंधनुर्जग्राहदुर्वहं ३ शिवदानवयोर्युद्धंपूर्णमब्द
शतंमुने नबभूवतुरन्योन्यंब्रह्मन्जयपराजयौ ४

७४ ७५ इतिश्रीदेवीभागवततिलकेनवमस्कंधेद्वाविंशोध्यायः २२
अर्धाधिकैश्चत्रिंशद्भिःपद्यैरथजनार्दनः शंखचूडस्यकवचंजहारेतिचवर्ण्यते १ भद्रकालीवाक्यश्रवणोत्तरंशिवोयच्चकारतदाह शिवस्तत्त्वमिति युद्धवृत्तां
तरूपंतत्त्वमित्यर्थः १ २ तंप्रणम्येति एतादृशोयंभगवद्भक्तइतिभावः सन्नाहंयुद्धोद्योगं ३ अब्दशतमभूदितिशेषः ४ ५ ६ ७

५ उद्धृतमुन्मथितंदानवानांशतकमनेकेदानवाइत्यर्थः ६ ७ ८ पश्चात्त्वामिति मत्पुरः प्रथमतोतिसत्यंकुरुदास्यामीतिशपथंकुरुपश्चात्त्वांयन्मदभि
लषितंतत्कथयिष्यामीत्यर्थः ९ १० कवचंभूर्जपत्रेविलिख्यस्वर्णपेटिकायांस्थापयित्वाकंठेयद्धृतंतदित्यर्थः ११ १२ १३ शिवकेशवयोरन्येनताभ्या



न्यस्तशस्त्रश्चभगवान्न्यस्तशस्त्रश्चदानवः रथस्थःशंखचूडश्चवृषस्थोवृषभध्वजः ५ दानवानांचशतक
मुद्धृतंचबभूवह रणेयेयेमृताःशंभुर्जीवयामासतान्विभुः ६ एतस्मिन्नंतरेवृद्धब्राह्मणःपरमातुरः आगत्यचर
णास्थानमुवाचदानवेश्वरं ७ वृद्धब्राह्मणउवाच देहिभिक्षांचराजेंद्रमह्यंविप्रायसांप्रतं त्वंसर्वसंपदांदा
तायन्मेमनसिवांछितं ८ निरीहायचवृद्धायतृषितायचसांप्रतं पश्चात्त्वांकथयिष्यामिपुरःसत्यंचकुर्वति ९
ॐमित्युवाचराजेंद्रःप्रसन्नवदनेक्षणः कवचार्थीजनश्चाहमित्युवाचेतिमायया १० तच्छ्रुत्वाकवचंदिव्यंज-
ग्राहहरिरेवच शंखचूडस्यरूपेणजगामतुलसींप्रति ११ गत्वातस्यांमाययाचवीर्याधानंचकारच अथशंभु
र्हरेःशूलंजग्राहदानवंप्रति १२ ग्रीष्ममध्याह्नमार्तंडप्रलयाग्निशिखोपमं दुर्निवार्य्यंचदुर्धर्षमव्यर्थंवैरिघातकं
१३ तेजसाचक्रतुल्यंचसर्वशस्त्रास्त्रसारकं शिवकेशवयोरन्यदुर्वहंचभयंकरं १४ धनुःसहस्रंदैर्घ्येणप्रस्थे
नशतहस्तकं सजीवंब्रह्मरूपंचनित्यरूपमनिर्दिशं १५ संहर्तुंसर्वब्रह्मांडमलंयत्स्वीयलीलया चिक्षेपतोल
नंकृत्वाशंखचूडेचनारद १६ राजाचापंपरित्यज्यश्रीकृष्णाचरणांबुजं ध्याने चकारभक्त्याचकृत्वायोगासनंधि
या १७ शूलंचभ्रमणंकृत्वापपातदानवोपरि चकारभस्मसात्तंचसरथंचावलीलया १८ राजाधृत्वादिव्य
रूपंकिशोरंगोपवेषकं द्विभुजंमुरलीहस्तंरत्नभूषणभूषितं १९

मन्येनपुरुषेणादुर्वहमित्यर्थः १४ प्रस्थेनविस्तारेण
सजीवंचेतनयासहितमित्यर्थः नित्यरूपमित्याद्यतिशयोक्तिः १५ १६ १७ १८ १९ ६७ ६७

भोज्यंकुंडमाह वाक्प्रदत्तामिति २३पांसुवेष्टंकुंडमाह तद्द्रव्यहारीति कन्याविक्रेताइत्यर्थः २४ शूलप्रोतंकुंडमाह भक्त्येति १५ १६प्रकंपनंकुंडमाह करोतीति



सवसेत्पांसुकुंडेचतद्भोजीशतवत्सरं तद्द्रव्यहारीयःसाधिपांसुवेष्टेशताब्दकं १४ निवसेच्छरशय्यायांममदूतेनताडि
तः भक्त्यानपूजयेद्विप्रःशिवलिंगंचपार्थिवं १५ सयातिशूलिनःपापाच्छूलप्रोतंसुदारुणं स्थित्वाशताब्दंतत्रैव
व्याधःसप्तजन्मसु १६ ततोभवेद्देवलश्चसप्तजन्मततःशुचिः करोतिकुंठितंविप्रंयद्भियाकंपतेद्विजः १७ प्रकं
पनेवसेत्सोपिविप्रलोमाब्दमेवच प्रकोपवदनाकोपात्स्वामिनंयाचपश्यति १८ कटूक्तिंतंप्रवदतिसोल्मुकंसंप्रयाति
हि उल्कांददातितद्वक्त्रेसततंममकिंकरः १९ दंडेनताडयेन्मूर्ध्नितल्लोमाब्दप्रमाणकं ततोभवेन्मानवीचविधवा
सप्तजन्मसु २० साभुक्त्वाचैववैधव्यंव्याधियुक्तातःशुचिः याब्राह्मणीशूद्रभोग्याचांधकूपेप्रयातिसा २१ त
प्तशौचोदकेध्वांतेतदाहारीदिवानिशं निवसेदतिसंतप्तायमदूतेनताडिता २२ शौचोदकेनिमग्नासायावदिंद्राश्च
तुर्दश काकीजन्मसहस्राणिशतजन्मानिसूकरी २३ सृगालीशतजन्मानिशतजन्मानिकुक्कुटी पारावतीसप्तजन्म-
वानरीसप्तजन्मसु २४ ततोभवेत्साचांडालीसर्वभोग्याचभारते ततोभवेच्चरजकीयक्ष्मग्रस्ताचपुंश्चली २५ ततः
कुष्ठयुतातैलकारीशुद्धाभवेत्ततः निवसेद्वेधनेवेश्यापुंगीचदंडताडने २६ जलरंध्रेवसेद्वेश्याकुलटादेहचूर्णके
स्वैरिणीदलनेचैवधृष्टाचशोषणेतथा २७ निवसेद्यातनायुक्ताममदूतेनताडिता विण्मूत्रभक्षासततंया
वन्मन्वंतरंसति २८ ततोभवेद्विट्कृमिश्चलक्षवर्षंततःशुचिः ब्राह्मणोब्राह्मणींगच्छेत्क्षत्रियांवापिक्षत्रियः २९

कुंठितंकुतर्केण १७ उल्कामुखंकुंडमाह प्रकोपेति १८ १९ २० अंधकूपकुंडमाह ब्राह्मणीशूद्रभोग्येति २१ २२ २३ २४ २५ वेधनंकुंडमाह नि
वसेदिति ताडनादिपंचकुंडान्याह पुंगीचेति २६ २७ २८ कषकुंडमाह ब्राह्मणइति २९ ६९ ६९ ६९ ६९ ६९

परदारैस्सहेत्यर्थः कषेयांतितयासहेत्यपिपाठः ३० ३१ शूर्पकुंडमाह क्षत्रियोब्राह्मणीमिति ३२ ३३ ३४ ज्वालामुखंकुंडमाह करेधृत्वेति तुल
सींकरेधृत्वाकृतांप्रतिज्ञांयोनपालयेदित्यर्थः ३५ तथैवगंगातोयेपिज्ञेयं ३६ शिलांशालग्रामशिलां देवप्रतिमांवाकरेकृत्वाकृतांप्रतिज्ञांयोनपाल-
येदित्यर्थः तथास्वदक्षिणहस्तंतस्यहस्तोपरिदत्वाकृतांप्रतिज्ञामित्यर्थः ३७ स्थित्वेति देवगृहेस्थित्वाकृतांप्रतिज्ञांयोनपालयेदितिशेषः तयाब्रा-

वैश्योवैश्यांचशूद्रांवाशूद्रश्चापिव्रजेद्यदि सवर्णपरदारैश्चकषायंयांतितेजनाः ३० भुक्त्वाकषायंतत्सो
दंनिवसेद्द्वादशाब्दकं ततोविप्रोभवेच्छुद्धस्ततोवैक्षत्रियादयः ३१ योषितश्चापिशुध्यंतीत्येवमाहपिता
महः क्षत्रियोब्राह्मणींगच्छेद्वैश्योवापिपतिव्रते ३२ मातृगामीभवेत्सोपिशूर्पेचनरकेवसेत् शूर्पाकारैश्च
कृमिभिर्ब्राह्मण्यासहभक्षितः ३३ प्रतप्तमूत्रभोजीचयमदूतेनताडितः तत्रैवयातनांभुंक्तेयावदिंद्राश्चतु
र्दश ३४ सप्तजन्मवराहश्चछागलश्चततःशुचिः करेधृत्वातुतुलसींप्रतिज्ञांयोनपालयेत् ३५ मिथ्यावाश
पथंकुर्यात्सचज्वालामुखंव्रजेत् गंगातोयंकरेकृत्वाप्रतिज्ञांयोनपालयेत् ३६ शिलांवादेवप्रतिमांस-
चज्वालामुखंव्रजेत् दत्वादक्षिणहस्तंचप्रतिज्ञांयोनपालयेत् ३७ स्थित्वादेवगृहेवापिसचज्वालामुखंव्रजेत्
आस्पृश्यब्राह्मणंगांचज्वालावन्हिंव्रजेद्द्विजः ३८ नपालयेत्प्रतिज्ञांचसचज्वालामुखंव्रजेत् मित्रद्रोहीकृ
तघ्नश्चयश्चविश्वासघातकः ३९ मिथ्यासाक्ष्यप्रदश्चैवसचज्वालामुखंव्रजेत् एतेतत्रवसंत्येवयावदिंद्रा
श्चतुर्दश ४० तथांगारप्रदग्धाश्चयमदूतेनताडिताः चांडालस्तुलसींस्पृष्ट्वासप्तजन्मततःशुचिः ४१

ह्मणंगांचा-
स्पृश्यस्पर्शंकृत्वाकृतांप्रतिज्ञामित्यर्थः ३८ नपालयेदिति पूर्वोक्तंशपथमकृत्वापिकृतांप्रतिज्ञांयोनपालयेत्सोपीत्यर्थः ३९ ४० एतेशपथकारिणोज्वा
लामुखेवसंति ज्वालामुखभोगोत्तरंकःशपथकारीकिंजन्मप्राप्नोतीतितदुच्यते चांडालइति तुलसींस्पृष्ट्वायेन कृताप्रतिज्ञानपालितासज्वालामुखभो

गोत्तरंसप्तजन्मसुचांडालोभवतीत्येवंसर्वत्रज्ञेयं ४१ ४२ ब्रह्मकृमिर्ब्राह्मणगृहस्थःकृमिः ४३ ४४ ४५ गंडकइति गंडकःपुंसिखङ्गेस्यात्संध्यावि-
द्याप्रभेदयोः अवच्छेदेंतरायेचेतिमेदिनीकोशाल्लक्षणयांतरायकर्ताविघ्नकर्ताभवतीत्यर्थः ४६ मंडूकः सप्तजन्मसु भल्लूकइत्यपिपाठः ४७ एतेषांसर्वे

म्लेच्छोगंगाजलस्पर्शीपंचजन्मततःशुचिः शिलास्पर्शीविट्कृमिश्चसप्तजन्मसुसुंदरि ४२ अर्चास्पर्शी
ब्रह्मकृमिःसप्तजन्मततःशुचिः दक्षहस्तप्रदाताचसर्पश्चसप्तजन्मसु ४३ ततोभवेद्ब्रह्महीनोमानवश्च
ततःशुचिः मिथ्यावादीदेवगृहेदेवलःसप्तजन्मसु ४४ विप्रादिस्पर्शकारीचव्याघ्रजातिर्भवेद्ध्रुवं ततो
भवेच्चमूकःसबधिरश्चत्रिजन्मनि ४५ भार्याहीनोबंधुहीनोवंशहीनस्ततःशुचिः मित्रद्रोहीचनकुलः
कृतघ्नश्चापिगंडकः ४६ विश्वासघातीव्याघ्रश्चसप्तजन्मसुभारते मिथ्यासाक्षीचवक्तव्येमंडूकःसप्त
जन्मसु ४७ पूर्वान्सप्तापरान्सप्तपुरुषान्हंतिचात्मनः नित्यक्रियाविहीनश्चजडत्वेनयुतोद्विजः ४८ य-
स्यानास्थावेदवाक्येमंदंहसतिसंततं व्रतोपवासहीनश्चसद्वाक्यपरनिंदकः ४९ धूम्रांधेचवसेत्सोपि
शताब्दंधूम्रभक्षकः जलजंतुर्भवेत्सोपिशतजन्मक्रमेणच ५० ततोनानाप्रकारश्चमत्स्यजातिस्ततः
शुचिः यःकरोत्युपहासंचदेवब्राह्मणयोर्धने ५१ पातयित्वासपुरुषान्दशपूर्वान्दशापरान् सोयंयाति
चधूम्रांधंधूमध्वांतसमन्वितं ५२ धूम्रक्लिष्टोधूम्रभोजीवसेत्तत्रचतुर्गुणं ततोमूषकजातिश्चसप्तज
न्मसुभारते ५३ ततोनानाविधाःपक्षिजातयःकृमिजातिभिः ततोनानाविधावृक्षाःपशवश्चततोनरः ५४

षांचतु
र्दशपुरुषाअप्यधःपतंतीत्याह पूर्वान्सप्तेति धूम्रांधकुंडमाह नित्यक्रियेति ४८ मंदंहसतिकपटेन ४९ ५० उपहास्यंइदमतिनिंद्यंभवतीत्यभिप्रायेण
धनमित्युपलक्षणंतद्वस्तुमात्रस्य ५१ ५२ चतुर्गुणमिति शताब्दंधूम्रभक्षकइतिपूर्वमुक्तंतदपेक्षयार्थाच्चतुर्गुणंग्राह्यंचतुर्युगमित्यपिपाठः ५३ ५४

नागवेष्टनंकुंडमाह विप्रोदैवज्ञइति ५५ ५६ ५७ ५८ ५९ इतिश्रीदेवीभागवतेतिलकेनवमस्कंधेपंचत्रिंशोध्यायः ३५ अर्धाधिकैस्त्रयस्त्रिंशा
त्सद्यैर्यमपुरीभयं देवभक्त्यानश्यतीतिविस्तरेणोपवर्ण्यते १ नरकुंडवर्णनंतदधिकारिणस्तद्यातनाश्चश्रुत्वाकोहिनरोभूत्वातेषुपातकेष्वेकमपिपातकंन

विप्रोदैवज्ञजीवीचवैद्यजीवीचिकित्सकः लाक्षालोहादिव्यापारीरसादिविक्रयीचयः ५५ सयातिनागवेष्टंच-
नागैर्वेष्टितमेवच वसेत्सलोमभानाब्दंतत्रैवनागपाशितः ५६ ततोनानाविधाःपक्षिजातयश्चततोनरः ततो
भवेत्सुगणकोवैद्यश्चसप्तजन्मसु ५७ गोपश्चकर्मकारश्चरंगकारस्ततःशुचिः प्रसिद्धानिचकुंडानिकथितानि
पतिव्रते ५८ अन्यानिचाप्रसिद्धानिक्षुद्राणिसंतितत्रवै संतिपातकिनस्तेषुस्वकर्मफलभोगिनः ५९ भ्रमं
तिनानायोनिंचकिंभूयःश्रोतुमिच्छसि इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेपंचत्रिंशोध्यायः ३५
साविच्युवाच धर्मराजमहाभागवेदवेदांगपारग नानापुराणेतिहासेयत्सारंतत्प्रदर्शय १ सर्वेषुसार
भूतंयत्सर्वेष्टंसर्वसंमतं कर्मच्छेदबीजरूपंप्रशस्तंसुखदंनृणां २ सर्वप्रदंचसर्वेषांसर्वमंगलकारणं ॥
यदुःखंनपश्यंतियेनवैसर्वमानवाः ३ कुंडानितेनपश्यंतितेषुनैवपतंतिच नभवेद्येनजन्मादितत्कर्मवद
सांप्रतं ४ किमाकाराणिकुंडानितानिचानिर्मितानिच केनचकेनैवरूपेणतत्रतिष्ठंतिपापिनः ५ स्वदे
हेभस्मसाद्भूतेयातिलोकांतरंनरः केनदेहेनवाभोगंकरोतिचशुभाशुभं ६ सुचिरंक्लेशभोगेनकथंदे-
होननश्यति देहोवाकिंविधोब्रह्मंस्तन्मेव्याख्यातुमर्हसि ७

कुर्यात्ततश्चकथंगतिर्भविष्यतीतिभीतासावित्रीपृच्छति धर्म-
राजेति यत्सारंसंसारोद्धारकारकमित्यर्थः १ २ सर्वप्रदंसर्वंब्रह्मतत्प्रदं ३ ४ किंचप्रश्नांतरमाह किमाकाराणीति ५ प्रश्नांतरमाह स्वदेहइति देहेभ
स्मनिजातेकेनदेहेनपरलोकेशुभाशुभंभोगंकरोतीत्यर्थः ६ किंचप्रश्नांतरमाह सुचिरमिति क्षणमात्रंवन्हौपतितंवस्तुदग्धंभवति अनेकवर्षवन्ह्यादिकुंडे

षुपतितोदेहः कथंननष्टोभवतीत्यर्थः तस्माद्विलक्षणोदेहःस्यात् सचकीदृशइतिवदेत्यर्थः ७ ८ ९ पंचदेवाःशिवशक्तिविष्णुगणेशसूर्याः



नारायणउवाच सावित्रीवचनंश्रुत्वाधर्मराजोहरिंस्मरन् कथांकथयितुमारेभेकर्मबंधनिकृंतनीं ८ धर्मराजउवाच वत्सेचतुर्षुवेदेषुधर्मेषुसंहितासुच पुराणेष्वितिहासेषुपांचरात्रादिकेषुच ९ अन्येषुधर्मशास्त्रेषुवेदांगेषुचसुव्रते सर्वेष्टंसारभूतंचपंचदेवानुसेवनं १० जन्ममृत्युजराव्याधिशोकसंतापनाशनं सर्वमंगलरूपंचपरमानंदकारणं ११ कारणंसर्वसिद्धीनांनरकार्णवतारणं भक्तिवृक्षांकुरकरंकर्मवृक्षनिकृंतनं १२ विमोक्षसोपानमिदमविनाशपदंस्मृतं सालोक्यसार्ष्टिसारूप्यसामीप्यादिप्रदंशुभे १३ कुंडानियमदूतेश्वरक्षितानि सदाशुभे नहिपश्यंतिस्वप्नेच पंचदेवार्चकानराः १४ देवीभक्तिविहीनायेतेपश्यंतिममालयं यांतियेहरितीर्थंवाश्रयंतिहरिवासरं १५ प्रणमंतिहरिंनित्यंहर्यर्चांकलयंतिच नयांतितेपिघोरांचममसंयमिनींपुरीं १६ त्रिसंधिपूताविप्राश्चशुद्धाचारसमन्विताः निवृत्तिंनैवलप्स्यंतिदेवीसेवांविनानराः १७ स्वधर्मनिरताचाराःस्वधर्मनिरतास्तथा गच्छंतोमृत्युलोकंचदुर्दर्शाममकिंकराः १८ भीताःशिवोपासकेभ्योवैनतेयादिवोरगाः स्वदूतंपाशहस्तंचगच्छंतंवारयाम्यहं १९ यास्यंतितेत्रसर्वत्रहरिदासाश्रयंविना कृष्णमंत्रोपासकाच्चैवैनतेयादिवोरगाः २० देवीमंत्रोपासकानांनाम्नांचैवनिकृंतनं करोतिनरवलेखन्याचित्रगुप्तश्चभीतवत् २१ मधुपर्कादिकंतेषांकुरुतेचपुनःपुनः विलंघ्यब्रह्मलोकंचलोकंगच्छंतितेसति २२

१० ११ १२ १३ १४ १५ १६ १७ स्वधर्मनिरतेति स्वधर्मेनिरतोबाह्यआचारोयेषांतथास्वधर्मेनिरतमंतःकरणंयेषांतेस्वधर्मनिरताः १८ १९ २० नाम्नामज्ञानाच्चित्रगुप्तेनलिखितानां २१ लोकंगच्छंतीति मणिद्वीपसंज्ञकंदेवीलोकंगच्छंतीत्यर्थः २२

२३ यथाच्चप्रज्वलद्वन्हावितिपूर्वान्वयि मोहोपिसंमोहंप्राप्नोतितान्प्रतिमोहोनगच्छतीत्यर्थः २४ ततस्तस्मात्पुरुषाल्लोभक्रोधौगच्छतइत्य-
र्थः २५ येयेनयांतीति पंचदेवोपासकाइत्यर्थः २६ अधुनाद्वितीयप्रश्नोत्तरंविस्तरेणाग्रेवक्तव्यमस्तीतितद्विहायान्यप्रश्नानामुत्तराण्याह शृ

दुरितानिचनश्यंतियेषांसंस्पर्शमात्रतः तेमहाभाग्यवंतोहिसहस्त्रकुलपावनाः २३ यथाच्चप्रज्वलद्वन्हौ
शुष्काणिचतृणानिच प्राप्नोतिमोहःसंमोहंतांश्चदृष्ट्वाचभीतवत् २४ कामश्चकामिनंयातिलोभक्रोधौ-
ततःसति मृत्युःप्रलीयतेरोगोजराशोकोभयंतथा २५ कालःशुभाशुभंकर्महर्षोभोगस्तथैवच येये
नयांतितांपीडाकथितास्तेमयासति २६ शृणुदेहविवरणंकथयामियथागमं पृथिवीवायुराकाश-
स्तेजस्तोयमितिस्फुटं २७ देहिनांदेहबीजंचस्त्रष्टुःसृष्टिविधौपरं पृथिव्यादिपंचभूतैर्योदेहोनिर्मितो
भवेत् २८ सकृत्रिमोनश्वरस्यभस्मसाच्चभवेदिह बद्धांगुष्ठप्रमाणश्चयोजीवःपुरुषःकृतः २९ बि
भर्तिसूक्ष्मंदेहंतंतद्रूपंभोगहेतवे सदेहोनभवेद्भस्मज्वलदग्नौयमालये ३० जलेननष्टोदेहीवाप्रहारेसुचि
रंकृते नशस्त्रेणनवास्त्रेणसुतीक्ष्णकंटकेनतथा ३१ तप्तद्रवेतप्तलोहेतप्तपाषाणएवच प्रतप्तप्रतिमाश्लेषे
यत्पूर्वपतनेपिच ३२ नदग्धोनचभग्नःसभुंक्तेसंतापमेवच कथितोदेहवृत्तांतःकारणंचयथागमं ३३ कुं
डानांलक्षणंसर्वंबोधायकथयामिते इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेषट्त्रिंशोऽध्यायः ३६
धर्मराजउवाच पूर्णेंदुमंडलाकारंसर्वंकुंडंचवर्तुलं निम्नंपाषाणभेदैश्चपाचितंबहुभिःसति १ ण्विति पंचभूतात्मकेदेहेद

ग्धेप्यंगुष्ठपरिमितोलिंगदेहोमोक्षपर्यंतंकथमपिवन्ह्यादिकुंडेषुपतितोपिननश्यतीतितेनदेहेनभोगः संभवतीतिसमुदायार्थः २७ २८ २९ ३० ३१
३२ ३३ इतिश्रीदेवीभागवततिलकेनवमस्कंधेषट्त्रिंशोध्यायः ३६ एकोनविंशत्यधिकैःशतश्लोकैःसविस्तरं कुंडानांलक्षणंसम्यक्यथावदभिवर्ण्य

ते १ अथकुंडाकारविषयकस्यसाविव्याकृतप्रश्नस्योत्तरमाह पूर्णेंदुमंडलेति अतिनिम्नमित्यपिपाठः पाषाणभेदैर्विलक्षणपाषाणरूपां गारैःपाचितंज्वलितमित्यर्थः १ २ ऊर्ध्वंशतहस्तपरिमिताःशिखाज्वालास्ताभिःसमन्वितं ३ तप्तकुंडाकारमाह प्रतप्तोदकेति काकुशब्दंत त्रस्थितानांप्राणिनांशब्दस्यानुकरणंकाकुइति ४ ५ तद्दूतैरित्यत्रतदितिपूर्वान्वयि तप्तक्षारोदकमाह तप्तक्षारेति पुनःकाकैश्चसंकुलंन

ननश्वरंचाप्रलयंनिर्मितंचेश्वरेच्छया कुशदंपातकानांचनानारूपंतदालयं २ ज्वलदंगाररूपंचशत हस्तशिखान्वितं परितःक्रोशमानंचवह्निकुंडंप्रकीर्तितं ३ महाशब्दंप्रकुर्वद्भिःपापिभिःपरिपूरितं र क्षितंममदूतैश्चताडितैश्चापिसंततं ४ प्रतप्तोदकपूर्णंचहिंस्रजंतुसमन्वितं महाघोरंकाकुशब्दंप्रहारेण दृढेनच ५ क्रोशार्द्धमानंतद्दूतैस्ताडितैर्ममपार्षदैः तप्तक्षारोदकैःपूर्णंपुनःकाकैश्चसंकुलं ६ संकुलंपापि भिश्चैवक्रोशमानंभयानकं त्राहीतिशब्दंकुर्वद्भिर्ममदूतैश्चताडितैः ७ प्रचलद्भिरनाहारैःशुष्ककंठोष्ठता- लुकैः विड्भिरेवकृतंपूर्णंक्रोशमानंचकुत्सितं ८ अतिदुर्गंधिसंसक्तंव्याप्तंपापिभिरन्वहं ताडितैर्ममदूतै श्वतदाहारैःक्रूदारुणैः ९ रक्षेतिशब्दंकुर्वद्भिस्तत्कीटैरेवभक्षितैः तप्तमूत्रद्रवैःपूर्णंमूत्रकीटैश्चसंकु लं १० युक्तंमहापातकिभिस्तत्कीटैर्भक्षितैःसदा गव्यूतिमानंध्वांतात्तंशब्दकृद्भिश्चसंततं ११ मद्दूते स्ताडितैर्घोरैःशुष्ककंठोष्ठतालुकैः श्लेष्मपूर्णंप्रशमितंतत्कीटैःपूरितंसदा १२ तद्भोजिभिःपापिभि श्चवेष्टितंवेष्टितैःसदा क्रोशार्धंगरकुंडंचगरभोजिभिरन्वितं १३ गरकीटैर्भक्षितैश्चपापिभिःपूर्णमेव- च ताडितैर्ममदूतैश्चशब्दकृद्भिश्चकंपितैः १४

कैश्चसंकुलमित्यपिपाठः ६ भयानककुंडमाह संकुलंपापिभिरिति ७ विट्कुंडमाह विड्भिरिति ८ ९ मूत्रकुंडमाह तप्तमूत्रेति १० ११ श्लेष्मकुंडमाह श्लेष्मपूर्णमिति १२ वेष्टितैःश्लेष्मणेतिशेषः गरकुंडमाह क्रोशार्द्धमिति १३ १४

दूषिकाकुंडमाह नेत्रयोरिति १५ वसाकुंडमाह वसारसेनेति क्रोशतूर्यंक्रोशचतुर्थांशमानमित्यर्थः १६ शक्रकुंडमाह १७ द्रवद्भिर्धावद्भिः रक्तकुंडमाह दुर्गंधीति वापीमानंप्रमाणंपूर्वमुक्तंतन्मानं १८ कीटभक्षितैःपापिभिःसंकुलमित्यन्वयः अश्रुकुंडमाह पूर्णनेत्राश्रुभिरिति १९ वापीतुर्येति पूर्वोक्तवापीमान

सर्पाकारैर्वज्रदंष्ट्रैःशष्कंकंठैःसुदारुणैः नेत्रयोर्मलपूर्णंचक्रोशार्धंकीटसंयुतं १५ पापिभिःसंकुलंशश्वद्भ्रमद्भिः कीटभक्षितैः वसारसेनसंपूर्णंक्रोशतुर्यंसुदुःसहं १६ तद्भोजिभिःपातकिभिर्यमदूतैश्चताडितैः शुक्रकुंडंक्रोशमितंशक्रकीटैश्चसंयुतं १७ पापिभिःसंकुलंशश्वद्द्रवद्भिः कीटभक्षितैः दुर्गंधिरक्तपूर्णंचवापीमानंगभीरकं १८ तद्भोजिभिःपापिभिश्चसंकुलंकीटभक्षितं पूर्णंनेत्राश्रुभिस्तत्संबहुपापिभिरन्वितं १९ वापीतुर्यप्रमाणंचरुदद्भिः कीटभक्षितैः नृणांगात्रमलैर्युक्तंतद्भक्षैःपापिभिर्युतं २० ताडितैर्यमदूतैश्चव्यग्रैश्चकीटभक्षितैः कर्णविट्परिपूर्णंचतद्भक्षैःपापिभिर्वृतं २१ वापीतुर्यप्रमाणंचब्रुवद्भिः कीटभक्षितैः मज्जापूर्णंनराणांचमहादुर्गंधिसंयुतं २२ महापातकिभिर्युक्तंवापीतुर्यप्रमाणकं परिपूर्णंस्निग्धमांसैर्यमदूतैश्चताडितैः २३ पापिभिःसंकुलंचैववापीमानंभयानकं कन्याविक्रयिभिश्चैवतद्भक्ष्यैःकीटभक्षितैः २४ पोहीतिशब्दंकुर्वद्भिस्त्रासितैश्चभयानकैः वापीतुर्यप्रमाणंचनरवादिकचतुष्टयं २५ पापिभिःसंयुतंशश्वन्मयदूतैश्चताडितैः प्रतप्ततामकुंडंचताम्रोपर्युल्मुकान्वितं २६ ताम्राणांप्रतिमालक्षैःप्रतप्तैर्व्याप्तंसदा प्रत्येकंप्रतिमाश्लिष्टैरुदद्भिःपापिभिर्युतं २७

चतुर्थांशमानमित्यर्थः गात्रमलकुंडमाह नृणामिति २० कर्णविट्कुंडमाह कर्णविडिति २१ ब्रुवद्भिर्हाहेतिशब्दंकुर्वाणैः मज्जाकुंडमाह मज्जापूर्णमिति २२ मांसकुंडमाह परिपूर्णमिति २३ २४ नखादिकुंडचतुष्टयमाह वापीतुर्येति चतुष्टयंनखकुंडलोमकुंडकेशकुंडास्थिकुंडात्मकमित्यर्थः २५ प्रतप्तताम्रकुंडमाह प्रतप्तेति २६ २७

गव्यूतिस्त्रीक्रोशयुगं लोहकुंडमाह प्रतप्तेति २८ २९ ३० चर्मकुंडमाह चर्मकुंडमिति तप्तसुराकुंडमाह तप्तसुरेति ३१ कंटककुंडमाह अतःशाल्मलीति ३२ धनुर्मानैर्हस्तचतुष्टयपरिमितैः कंटकैरित्यर्थः ३३ वृक्षाग्रान्च्छाल्मलीरक्षाग्रान्निपतद्भिः कंटकैरित्यर्थः ३४



गव्यूतिमानंविस्तीर्णंयमदूतैश्चताडितैः प्रतप्तलोहधारंचज्वलदंगारसंयुतं २८ लोहानांप्रतिमाश्लिष्टैरुदद्भिःप्राणिभिर्युतं प्रत्येकंप्रतिमाश्लिष्टैःशश्वत्प्रज्वलितैर्भिया २९ रक्षरक्षेतिशब्दंचकुर्वद्भिर्दूतताडितैः महापातकिभिर्युक्तंद्विगव्यूतिप्रमाणकं ३० भयानकंध्वांतयुक्तंलोहकुंडंप्रकीर्तितं चर्मकुंडंतप्तसुराकुंडंवाप्यर्द्धमेवच ३१ तद्भोजिपापिभिर्व्याप्तंयमदूतैश्चताडितैः अतःशाल्मलीकुंडंचवृक्षकंटकशोभितं ३२ लक्षपौरुषमानंचक्रोशमानंचदुःखदं धनुर्मानैःकंटकैश्चसुतीक्ष्णैःपरिवेष्टितं ३३ प्रत्येकंविद्धगात्रैश्चमहापातकिभिर्युतं वृक्षाग्रान्निपतद्भिश्चयमदूतैश्चपातितैः ३४ जलंदेहीतिशब्दंचकुर्वद्भिःशुष्कतालुकैः महाभियातिव्यग्रैश्चदंडैःसंभग्नमस्तकैः ३५ प्रचलद्भिर्यथातप्ततैलजीविभिरेवच विषोदैस्तक्षकाणांचपूर्वंचक्रोशमानकं ३६ तद्भक्षैःपापिभिर्युक्तंयमदूतैश्चताडितैः प्रतप्ततैलपूर्णंचकीटादिपरिवर्जितं ३७ महापातकिभिर्युक्तंदग्धांगारैश्चवेष्टितं कुकुशब्दंप्रकुर्वद्भिश्चलद्भिर्दूतपीडितैः ३८ ध्वांतयुक्तंक्रोशमानंकुशदंचभयानकं शूलाकारैःसुतीक्ष्णाग्रैर्लोहशस्त्रैश्चवेष्टितं ३९ शस्त्रतल्पस्वरूपंचक्रोशतूर्यप्रमाणकं वेष्टितंतत्पातकिभिःकुंतविद्धैश्चवेष्टितैः ४०

३५ तत्रदृष्टांतोयथेति विषोदंकुंडमाह विषोदैरिति ३६ प्रतप्ततैलकुंडमाह प्रतप्तेति ३७ ३८ कुंतकुंडमाह शूलाकारैरिति ३९ तल्पमास्तरणंकुंतंशस्त्रविशेषः ४० ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२

कृमिकुंडमाह कीटैरिति ४१ ४२ पूयकुंडमाह द्विगव्यूतीति ४३ सर्पकुंडमाह तालेति ४४ मशकुंड दंशकुंडगरलकुंडान्याह कुंडत्रय
मिति ४५ ४६ वज्रदंष्ट्रकुंडवृश्चिककुंडद्वयमाह वज्रेति ४७ दंशितैर्दष्टैरित्यर्थः शरकुंडशूलकुंडखड्गकुंडान्याह कुंडत्रयमिति

ताडितैर्यमदूतैश्च शुष्ककंठोष्ठतालुकैः कीटैश्च शंकुप्रमितैः सर्पमानैर्भयंकरैः ४१ तीक्ष्णदंतैश्च विकृतै
र्व्याप्तं ध्वांतयुतं सति महापातकिभिर्युक्तं यमदूतैश्च ताडितैः ४२ द्विगव्यूतिप्रमाणं च पूयकुंडं प्रचक्षते
तद्भक्ष्यैः प्राणिभिर्युक्तं यमदूतैश्च ताडितैः ४३ तालवृक्षप्रमाणैश्च सर्पकोटिभिरावृतं सर्पवेष्टितगात्रै-
श्च पापिभिः सर्पभक्षितैः ४४ संकुलं शब्दकृद्भिश्च यमदूतैश्च ताडितैः कुंडत्रयं मशादीनां पूर्णं च मशका
दिभिः ४५ सर्वक्रोशार्द्धमानं च महापातकिभिर्युतं हस्तपादादिबद्धैश्च क्षतजौघेन लोहितैः ४६ हा
हेति शब्दं कुर्वद्भिस्ताडितैर्यमपार्षदैः वज्रवृश्चिकयोः कुंडं ताभ्यां च परिपूरितं ४७ वाप्यर्द्धं पापिभिर्यु
क्तं वज्रवृश्चिकदंशितैः कुंडत्रयं शरादीनां तैरेव परिपूरितं ४८ तैर्विद्धैः पापिभिर्युक्तं वाप्यर्द्धं रक्तलो
हितैः तप्ततोयोदकैः पूर्णं सध्वांतं गोलकुंडकं ४९ कीटैः संकुलमानैश्च भक्षितैः पापिभिर्युतं वा-
प्यर्द्धमानं भीतैश्च पापिभिः कीटभक्षितैः ५० रुदद्भिः क्रोशमानैश्च यमदूतैश्च ताडितैः अतिदुर्गंधि
संयुक्तं दुःखदं पापिनां सदा ५१ दारुणैर्विकृताकारैर्भक्षितं पापिभिर्युतं वाप्यर्द्धं परिपूर्णं च जलस्थै
र्नक्रकोटिभिः ५२ विण्मूत्रश्लेष्मभक्षैश्च संयुतं शतकोटिभिः काकैश्च विकृताकारैर्भक्षितैः पापि-
भिर्युतं ५३ मंथानकुंडं बीजकुंडं ताभ्यां पूर्णं धनुःशतं भक्षितैः पापिभिर्युक्तं शब्दकृद्भिश्च संततं ५४

४८ वाप्यर्द्ध-
मानं कुंडत्रयं गोलकुंडमाह तप्ततोयोदकैरिति ४९ ५० ५१ नक्रकुंडमाह दारुणैरिति ५२ काककुंडमाह विण्मूत्रेति ५३ मंथानकुंडमाह मंथानेति बीजकुंड

माह बीजेति मंथानबीजोकीटविशेषौ ५४ वज्रकुंडमाह धनुःशतमिति जीवयुक्तंवज्राकारदंष्ट्रान्वितजीवयुक्तमित्यर्थः ५५ तप्तपाषाणकुंड माह वापीद्विगुणेति ५६ तीक्ष्णपाषाणकुंडमाह क्षुरधारोपमैरिति परंतीक्ष्णपाषाणकुंडमित्यर्थः लालाकुंडमाह लालाकुंडंचलोहितैरितिलोहितयुक्तैः प्राणिभिरन्वितमित्यर्थः ५७ मसीकुंडमाह तप्तांजनेति तप्तोयोंजनाचलस्तदाकारैःपाषाणैरन्वितमित्यर्थः ५८यमदूतैश्चताडि

धनुःशतंजीवयुक्तंपापिभिःसंकुलंसदा शब्दकृद्भिर्वज्रदंष्ट्रैःसांद्रध्वांतमयंपरं ५५ वापीद्विगुणमानंच तप्तप्रस्तरनिर्मितं ज्वलदंगारसदृशंचलद्भिःपापिभिर्युतं ५६ क्षुरधारोपमैस्तीक्ष्णैःपाषाणैर्निर्मितंपरं महापातकिभिर्युक्तंलालाकुंडंचलोहितैः ५७ क्रोशमात्रंचगंभीरंममदूतैश्चताडितैः तप्तांजनाचलाकारैःपरिपूर्णंधनुःशतं ५८ चलद्भिःपापिभिर्युक्तंममदूतैश्चताडितैः पूर्णंचूर्णद्रवैःक्रोशमानंपापिभिरन्वितं ५९ तद्रोजिभिःप्रदग्धैश्चममदूतैश्चताडितैः कुंडंकुलालचक्रंचघूर्णमानंचसंततं ६० सुतीक्ष्णंषोडशारंचचूर्णितैःपापिभिर्युतं अतीववक्रंनिम्नंचद्विगव्यूतिप्रमाणकं ६१ कंदराकारनिर्माणंतप्तोदैश्च समन्वितं महापातकिभिर्युक्तंभक्षितैर्जलजंतुभिः ६२ ज्वलद्भिःशब्दकृद्भिश्चध्वांतयुक्तंभयानकं कोटिभिर्विकृताकारैःकच्छपैश्चसुदारुणैः ६३ जलस्थैःसंयुतंतैश्चभक्षितैःपापिभिर्युतं ज्वालाकलापैस्तेजोभिर्निर्मितंक्रोशमानकं ६४ शब्दकृद्भिःपातकिभिःसंयुतंक्लेशदंसदा क्रोशमानंचगंभीरंतप्तभस्मभिरन्वितं ६५

तैर्महापातकिभिर्युक्तमित्यनुक्तस्थलेसर्वत्रबोध्यम् चूर्णकुंडमाह पूर्णचूर्णेति सप्तचूर्णरेणुभिरित्यर्थः ५९ चक्रकुंडमाह कुलालेति घूर्णमानंभ्रममाणं ६० वक्रकुंडमाह अतीववक्रमिति ६१ कंदरादरीः६२ कूर्मकुंडमाह कोटिभिरिति ६३ जलस्थैः कच्छपैः संयुतंतैः कच्छपैर्भक्षितैःपापिभिर्युतमित्यन्वयः ज्वालाकुंडमाह ज्वालाकलापैरिति ६४ भस्मकुंडमाह क्रोशमानमिति ६५ ६५ ६५ ६५ ६५ ६५

६६ दग्धकुंडमाह क्रोशमानंध्वांतयुक्तमिति क्रोशमानंपापिभिःशब्दायमानं ६७ ६८ ६९ ७० तप्तसूचीकुंडमाह प्रतप्तसूचीति असिपत्रकुं
डमाह असीवेति यस्यतालतरोः पत्रस्यधाराऽसीवासिलताधारेवभवति तस्यतालतरोरधःक्रोशार्धमानाधोदेशेपतत्तालसमन्वितंतदसिपत्रकुंडंभवती

शश्वज्ज्वलद्भिःसंयुक्तंपापिभिर्भस्मभक्षितैः सप्तपाषाणलोहानांसमूहैःपरिपूरितैः ६६ पापिभिर्दग्धगात्रैश्च-
युक्तंचशुष्कतालुकैः क्रोशमानंध्वांत युक्तंगंभीरमतिदारुणं ६७ ताडितैश्चप्रदग्धैश्चदग्धकुंडंप्रकीर्ति
तं अतीवोर्मियुतंतोयंप्रतप्तक्षारसंयुतं ६८ नानाप्रकारैर्विरुतैर्जलजंतुभिरन्वितं द्विगव्यूतिप्रमाणंचगं-
भीरंध्वांतसंयुतं ६९ तद्भक्ष्यैःपातकिभिर्युक्तंदंशितैःर्जलजंतुभिः ज्वलद्भिःशब्दरुद्भिश्चनपश्यद्भिःपरस्परं
७० प्रतप्तसूचिकुंडंचकीर्तितंचभयानकं असीवधारापत्रस्याप्युच्चैस्तालतरोरधः ७१ क्रोशार्द्धमानंकुं
डंचपतत्पत्रसमन्वितं पापिनांरक्तपूर्णंचवृक्षाग्रात्पततांध्रुवं ७२ परित्राहीतिशब्दंचकुर्वतामसतामपि गं
भीरंध्वांतयुक्तंचरक्तकीटसमन्वितं ७३ तदसिपत्रकुंडंचकीर्तितंचभयानकं धनुःशतप्रमाणंचक्षुरधारा-
स्त्रसंयुतं ७४ पापिनांरक्तपूर्णंचक्षुरधारंभयानकं सूचीमुखास्त्रसंयुक्तंपापिरक्तौघपूरितं ७५ पंचाशद्ध
नुरायामंक्लेशदंचसूचीमुखं कस्यचिज्जंतुभेदस्यगोकाख्यस्यमुखाकृति ७६ कूपरूपंगभीरंचधनुर्विंशत्प्र-
माणकं महापातकिनांचैवमहत्क्लेशप्रदंपरं ७७ तत्कीटभक्षितानांचनम्रास्यानांचसंततं कुंडंनक्रमुखा
कारंधनुःषोडशमानकं ७८

त्यर्थः दीर्घस्तुछांदसः क्षुरधारकुंडमाह धनुःशतेति ७१ ७२ ७३ ७४ सूचीमुखकुंडमाह
सूचीमुखेति ७५ गोकामुखकुंडमाह कस्यचिदिति गोकाख्यस्यगोकानामकस्यकस्यचिज्जंतुविशेषस्यमुखस्येवमुखंयस्यतद्गोकामुखमित्यभिप्रा
यः ७६ ७७ तत्कीटभक्षितानां गोकामुखकीटभक्षितानांपातकिनामित्यर्थः नक्रमुखाकारकुंडमाह कुंडंनक्रेति ७८ ६९ ६९ ६९

गजदंशकुंडमाह धनुःशतमिति पापिभिःसंयुतमित्यादिकमत्राप्युदाहार्य्यं ७९ गोमुखाकारंकुंडमाह धनुस्त्रिंशदिति ८० कुंभीपाककुंड-
माह कालचक्रेणेति कालाकारभयंकरचक्रेणेत्यर्थः ८१ तस्मिन्कुंभीपाकेन्यानिकुंडान्यप्यंतर्भूतानिसंतीत्याह कुत्रचित्तप्ततैलमिति ८२ मू

गंभीरंकूपरूपंचपापिनांसंकुलंसदा धनुःशतप्रमाणंन्चकीर्तितंगजदंशनं ७९ धनुस्त्रिंशत्प्रमाणंन्चकुंडं
न्चगोमुखाकृति पापिनांक्लेशदंशश्चद्गोमुखंपरिकीर्तितं ८० कालन्चक्रेणसंयुक्तं भ्रममाणंभयानकं
कुंभाकारंध्वांतयुक्तंद्विगव्यूतिप्रमाणकं ८१ लक्षपौरुषमानंन्चगंभीरंविस्तृतंसति कुत्रचित्तप्ततैलंन्चता
म्रादिकुंडमेवच ८२ पापिनांन्चप्रधानैश्चमूर्छितैःकृमिभिर्युतं परस्परंचनश्यद्भिःशब्दकृद्भिश्चसंततं
८३ ताडितैर्यमदूतैश्चमुसलैर्मुद्गरैस्तथा घूर्णमानैःपतद्भिश्चमूर्छितैश्चक्षणंक्षणं ८४ पातितैर्यमदूतै
श्चरुदंत्यस्मात्क्षणंपुनः यावंतःपापिनःसंतिसर्वकुंडेषुसुंदरि ८५ ततश्चतुर्गुणाःसंतिकुंभीपाकेचदुःख
दे सुचिरंवध्यमानास्तेभोगदेहाननश्वराः ८६ सर्वकुंडप्रधानंन्चकुंभीपाकंप्रकीर्तितं कालनिर्मितसूत्रेण
निबद्धायत्रपापिनः ८७ उत्थापिताश्चदूतैश्चक्षणमेवनिमज्जिताः निश्वासबद्धाःसुचिरंतथामोहंगताः
पुनः ८८ अतीवक्लेशसंयुक्तादेहभोगेनसुंदरि प्रतप्ततोययुक्तंचकालसूत्रंप्रकीर्तितं ८९ अवटःकू
पभेदश्चमत्स्योदःसउदाहृतः प्रतप्ततोयपूर्णंन्चचतुर्विंशत्प्रमाणकं ९० व्याप्तंमहापातकिभिर्व्यादग्धां
गैश्चसंततं महदूतैस्ताडितैःशश्वदवटोदंप्रकीर्तितं ९१

र्छितैःपापिनांप्रधानैःकृमिभिश्चयुत मित्यर्थः ८३ ८४ ८५ ८६
कालसूत्रंकुंडमाह कालनिर्मितेति कालेननिर्मितमतिकर्कशंसूत्रमित्यर्थः ८७ ८८ ८९ मत्स्योदकुंडमाह अवटइतिसएव
मत्स्योदइत्यर्थः तल्लक्षणमाह प्रतप्तेति चतुर्विंशतिधनुःप्रमाणकंविस्तरेणेत्यर्थः ९० ९१ ९२ ९३ ९४ ९५

धनुःशतेतत्प्रमाणेगर्तैइत्यर्थः ९२ कृमिकंतुकंकुंडमाह अरुंतुदेति अरुंतुदंकृमिकंतुकं ९३ पांसुभोज्यंकुंडमाह तप्तपांसुभिरिति ९४ पाशवेष्टनंकुंड
माह पातमात्रेणेति पतनमात्रेणेत्यर्थः ९५ शूलप्रोतमाह पातमात्रेणेति ९६ प्रकंपनंकुंडमाह पततामिति ९७ उल्कामुखंकुंडमाह ददत्येवहीति उल्का

यत्रोदस्पर्शमात्रेणसर्वव्याधिश्च पापिनां भवेदकस्मात्पततांयस्मिन्कुंडेधनुःशते ९२ अरुंतुदैर्भक्षितैस्तुप्राणि
भिर्यच्चसंकुलं हाहेतिशब्दंकुर्वद्भिस्तदेवारुंतुदंविदुः ९३ तप्तपांसुभिराकीर्णंज्वलद्भिस्तुषदग्धकैः तद्भक्षैः
पापिभिर्युक्तंपांसुभोजैर्धनुःशतं ९४ पातमात्रेणपापीचपाशेनवेष्टितोभवेत् क्रोशमात्रेणकुंडंचतत्पाशवेष्टनं
विदुः ९५ पातमात्रेणपापीचशूलेनवेष्टितोभवेत् धनुर्विंशत्प्रमाणंचशूलप्रोतंप्रकीर्तितं ९६ पततांपा
पिनांयत्रभवेदेवप्रकंपनं अतीवहिमतोयान्तंक्रोशार्द्धंचप्रकंपनं ९७ ददत्येवहिमेदूतायत्रोल्काःपापि
नांमुखे धनुर्विंशत्प्रमाणंतदुल्काभिश्चसुसंकुलं ९८ लक्षपौरुषमानंचगंभीरंचधनुःशतं नानाप्र
कारकृमिभिःसंयुक्तंचभयानकं ९९ अत्यंधकारव्याप्तंचकूपाकारंचवर्तुलं तद्भक्ष्यैःपापिभिर्युक्तंप्रणाश्य
द्भिःपरस्परं १०० तप्ततोयप्रदग्धैश्चज्वलद्भिःकीटभक्षितैः ध्वांतेनचक्षुषांचांधंरंधकूपंप्रकीर्तितं १ नाना
प्रकारशस्त्रौघैर्यत्रविद्धाश्चपापिनः धनुर्विंशत्प्रमाणंचवेधनंतत्प्रकीर्तितं २ दंडेनताडितायत्रयमदूतै-
श्चपापिनः धनुःषोडशमानंचतत्कुंडंदंडताडनं ३ निरुद्धाश्चमहाजालैर्यथामीनाश्चपापिनः धनुर्विंश
त्प्रमाणंचजालरंध्रंप्रकीर्तितं ४ पततांपापिनांकुंडेदेहश्चूर्णोभवेदिह लोहबंदीनिबद्धानांकोटिपौरुषमानकं ५

ज्वलत्काष्ठानि ९८ अंधकूपमाह लक्षपौरुषमानंचेति गंभीरमधइत्यर्थः धनुःशतंविस्तीर्णं ९९ १०० १०१ वेधनंकुंडमाह नानाप्रकारेति २ ताडनंकुंडमाह दंडे
नेति ३ जालरंध्रकुंडमाह निरुद्धाइति ४ देहचूर्णकुंडमाह पततांपापिनामिति लोहबंदीलोहबेडीतिभाषया ५ ६ ६ ६ ६

धनुर्विंशत्प्रमाणकंविस्तृत्या ६ दलनंकुंडमाह दलिताइति ७ शोषणंकुंडमाह पतनेनैवेति १०८ १०९ कषंकुंडमाह नानाचर्मेति १० शूर्पकुं
डमाह शूर्पाकारमुखमिति ११ १२ ज्वालामुखंकुंडमाह प्रतप्तवालुकेति ११३ १४ १५ धूम्रांधंकुंडमाह तप्तेष्टकाभ्यंतरितमिति १६ नागवे

गंभीरंध्वांतसंयुक्तंधनुर्विंशत्प्रमाणकं मूर्च्छितानांजडानांचदेहचूर्णप्रकीर्तितं ६ दलिताःपापिनोयत्र
यमदूतैश्चताडिताः धनुःषोडशमानंचतत्कुंडंदलनंस्मृतं ७ पतनेनैवपापीचशुष्ककंठोष्ठतालुकः वालु
कासुचतप्तासुधनुस्त्रिंशत्प्रमाणकं ८ शतपौरुषमानंचगंभीरंध्वांतसंयुतं शोषणंकुंडमेतद्धिपापिनांप
रदुःखदं ९ नानाचर्मकषायोदपरिपूर्णधनुःशतं दुर्गंधियुक्तंतद्भक्ष्यैःप्राणिभिःसंकुलंकषं १० शूर्पा-
कारमुखंकुंडंधनुर्द्वादशमानकं तप्तलोहवालुकाभिःपूर्णपातकिसंयुतं ११ दुर्गंधियुक्तंतद्भक्ष्यैःपापि-
भिःसंकुलंसति शूर्पाकारमुखंकुंडंधनुर्द्वादशमात्रकं १२ प्रतप्तवालुकापूर्णमहापातकिभिर्युतं अंत
रग्निशिखानांचज्वालाव्याप्तमुखंसदा १३ धनुर्विंशतिमात्रंचप्रमाणंयस्यसुंदरि ज्वालाभिर्दग्धगात्रैश्च
पापिभिर्व्याप्तमेवच १४ तन्महाक्लेशदंशश्वत्कुंडंज्वालामुखंस्मृतं पातमात्राद्यत्रपापीमूर्च्छितोवैनरोभ
वेत् १५ तप्तेष्टकाभ्यंतरितंव्याप्यर्धजिह्मकुंडकं धूम्रांधकारसंयुक्तंधूम्रांधैःपापिभिर्युतं १६ धनुःशतंश्वा
सरुद्धैर्धूम्रांधंपरिकीर्तितं पातमात्राद्यत्रपापीनागैश्चवेष्टिताभवेत् १७ धनुःशतंनागपूर्णंतन्नागैर्वे-
ष्टितंभवेत् षडशीतिचकुंडानिमयोक्तानिनिशामय ११८ लक्षणंचापितेषांचकिंभूयःश्रोतुमिच्छसि इ
तिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेनारदनारायणसंवादेसावित्र्युपाख्यानेसप्तत्रिंशोऽध्यायः ३७

ष्टनंकुंडमाह पातमात्राद्यत्रेति १७ ११८ इतिश्रीदेवीभागवततिलकेनवमस्कंधे सप्तत्रिंशोध्यायः ३७ ६२ ६२ ६२

नवतिश्लोकवर्यैश्च षट्पद्यैः संयुतैस्तथा देव्याः कृत्वा महोत्कर्षं भक्तिं रूपं च वर्ण्यते १ पूर्वाध्यायेनानायातनाप्रदानिकुंडानिश्रुत्वातिभीतासावित्रीदेवीभक्त्या सर्वमिदंभयादिकं नश्यतीति धर्मराजवदनात्पूर्वंश्रुत्वा यया भक्त्या सर्वमिदं नश्यति सा भक्तिरेव प्रथमं गुरुप्रसादं विना दुर्लभेत्यभिप्रायेण धर्मराजं गुरुं प्रति देवीभक्तिमेव याचते देवीभक्तिं देहीति गुरुप्रसादमंतरा दुर्लभास्तीति त्वमेव प्रसादं कृत्वा देहीत्यभिप्रायः भक्तिमेव वर्णयति पुंसामिति द्वारबीजं भक्तिरूपं वस्त्विति शेषः नपुंसकप्रयोगात् १ २ किंच मुक्तयः कतिविधाः संति तासां लक्षणं च किं तथा भक्तेः स्वरूपं किं तद्भेदाश्च कति संति तथा निषेकः कृतकर्मणां भोगो वक्ष्यमाणलक्षणस्तस्य खंडनं नाशनं च केन भवति तदेतत्सर्वं वदेत्यभिप्रायेण पृच्छति मुक्तिश्चेति ३ ननु त्वमेव बुद्ध्या जानीहीति चेत्तत्राह तत्वज्ञानेति विधिना दैवेन स्त्रीजातिर्वेदशास्त्रानधिकारिण्यतिमूढा निर्मिता तथा च तादृशी सा कथमतिसूक्ष्मं वस्तु स्वबुद्ध्या ज्ञातुं समर्थेति भावः न

सावित्र्युवाच देवीभक्तिं देहि मह्यं साराणां चैव सारकं पुंसां मुक्ति द्वारबीजं नरकार्णवतारकं १ कारणं मुक्ति साराणां सर्वाशुभविनाशनं दारकं कर्मवृक्षाणां कृतपापौघहारणं २ मुक्तिश्च कतिधा प्रभ्वस्ति किं वा ता सां च लक्षणं देवीभक्तिं भक्तिभेदं निषेकस्यापि खंडनं ३ तत्वज्ञानविहीना च स्त्रीजातिर्विधिनिर्मिता किंचिज्ज्ञानं सारभूतं वद वेदविदांवर ४ सर्वं दानं च यज्ञश्च तीर्थस्नानं व्रतं तपः अज्ञानिज्ञानदानस्य कलां नार्हंति षोडशीं ५ पितुः शतगुणा माता गौरवे चेति निश्चितं मातुः शतगुणः पूज्यो ज्ञानदाता गुरुः प्रभो ६ ननु तादृश्या

मूढया मया पि किं वक्तव्यमिति चेत्तत्राह किंचिज्ज्ञानमिति केवलं सारभूतं वस्तु गुर्वनुग्रहवशान्मूढे नापि ज्ञातुं शक्यते तर्कादिकमेव तु बुद्धिसाध्यं तन्नास्ति चेन्मास्त्विति भावः तथा च श्रुतिः यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मन इति वेदविदांवरेत्यनेन नचिकेतसे बालकाय त्वयैव कृपया ब्रह्मविद्योपदिष्टा तया च स ज्ञानिप्रवरो जात इति कठवल्युक्ता कथा सूचिता ४ मादृश्याः पामराया अनाथाया उद्धारे महती धर्मवृद्धिस्तवस्या-दित्याह सर्वं दानं चेति अनेन चोपदेश्यवस्तुनः सर्वसारभूतत्वं स्वस्य च तस्मिन्नातुरता सूचिता ५ ननु तव परमेश्वरे यद्यपि प्रेमास्ति तथापि गुरौ नास्तीति

चेत्तत्राह पितुःशतगुणेति मनसात्वयिप्रेमानिरतिशयएवममास्तिबाह्यंसेवादिकंतुतवपरमेश्वरस्यमयाकिंकर्तुंशक्यतइतिभावः ६ इत्थंसा
वित्रीवाक्यंश्रुत्वाहृदयेसगद्गदोधर्मराजआह धर्मराजउवाच पूर्वंसर्वइति हेवत्सेयत्त्वयाज्ञानंप्रार्थ्यतेसर्वांछितस्तेमनसिविद्यमानोवरोम
यापूर्वमेवदत्तोनातः परमधिकंज्ञानमस्तितत्रैवविश्वासंकुर्वितिभावः यस्याभगवत्याः प्रसादेनतत्त्वज्ञानंजायतेतद्भक्तिरधुनाप्रार्थ्यतेचेत्सापिमद्वर

धर्मराजउवाच पूर्वंसर्वोवरोदत्तोयस्तेमनसिवांछितः अधुनाशक्तिभक्तिस्तेवत्सेभवतुमद्वरात् ७
श्रोतुमिच्छसिकल्याणिश्रीदेवीगुणकीर्तनं वक्तॄणांपृच्छकानांचश्रोतॄणांकुलतारणं ८ शेषोवक्त्रस
हस्रेणनहियद्वक्तुमीश्वरः मृत्युंजयोनक्षमश्चवक्तुंपंचमुखेनच ९ धाताचतुर्णांवेदानांविधाताजग
तामपि ब्रह्माचतुर्मुखोनैवनालंविष्णुश्चसर्ववित् १० कार्तिकेयःषण्मुखेननापिवक्तुमलंध्रुवं नगणेशः
समर्थश्चयोगींद्राणांगुरोर्गुरुः ११ सारभूताश्चशास्त्राणांवेदाश्चत्वारएवच कलामात्रंयद्गुणानांनवदंतिबुधा
श्चये १२ सरस्वतीजडीभूतानालंतद्गुणवर्णने सनत्कुमारोधर्मश्चसनंदनश्चसनातनः १३ सनकःकपिलः
सूर्योयेऽन्येचब्रह्मणःसुताः विचक्षणानयद्वक्तुंकिंचान्येजडबुद्धयः १४ नयद्वक्तुंक्षमाःसिद्धामुनींद्रा
योगिनस्तथा केचान्येचवयंकेवाश्रीदेव्यागुणवर्णने १५ ध्यायंतेयत्पदांभोजंब्रह्मविष्णुशिवादयः अ
तिसाध्यंस्वभक्तानांतदन्येषांसुदुर्लभं १६ कश्चित्किंचिद्विजानातितद्गुणोत्कीर्तनंशुभं अतिरिक्तंविजा
नातिब्रह्माब्रह्मविशारदः १७

प्रसादाद्भवत्वित्याह अधुनाशक्तिभक्तिस्तेइति ७ अथयदिमूलप्रकृतेर्जगन्मातुर्गुणश्रवणेत
ववांछास्तिचेत्तत्राह श्रोतुमिच्छसीति ८ तस्यागुणवर्णनंतुमहतामपिदुःशंकमित्याह शेषोवक्त्रसहस्रेणेति ९ १० ११ यद्गुणानांयस्यभग
वत्यागुणानामित्यर्थः १२ १३ १४ १५ १६ लोकेषुकश्चिन्मनुष्यःकिंचिद्विजानातितदपेक्षयाअतिरिक्तमधिकंतुब्रह्माविजानातीत्याह कश्चि
दिति १७

तदपेक्षयाधिकंगणेशोजानातीत्याह ततोतिरिक्तमिति १८ १९ तत्रैवगोलोके एव तद्गुणोत्कीर्तनं भगवतीगुणोत्कीर्तनंश्रीकृष्णेनशिवंप्रतिकथितमित्यर्थः धर्मंचेति तच्छ्रुत्वातस्याः देव्याः प्रापकंधर्मंतंत्रादिषुशिवःशिवलोकमागत्यकथयामासेत्यर्थः २० तमेवधर्मंपृच्छतेभास्वतेसूर्यायधर्ममूर्तिर्भगवान्कथयामासेत्याह धर्मस्त्विति यांभगवतीमाराध्यमसितासूर्यस्तपसाप्रापभगवतीस्वरूपमितिशेषः २१ स्वंविषयंयमलोकाधिपत्यंदेवैर्दीयमानंनगृण्हामिनगृहीतवान् कुतोयतोहं वैराग्ययुक्तस्ततोलोकानांपीडाकरमधिकारंकथंग्रहीष्यामि किंतुतपसेगंतुमिच्छामिइच्छांकृतवान् २२

ततोतिरिक्तंजानातिगणेशोज्ञानिनांगुरुः सर्वातिरिक्तंजानातिसर्वज्ञःशंभुरेवसः १८ तस्मैदत्तंपुराज्ञानं-
कृष्णेनपरमात्मना अतीवनिर्जनेरण्येगोलोकेरासमंडले १९ तत्रैककथितंकिंचित्तद्गुणोत्कीर्तनंशुभं धर्मं
चकथयामासशिवलोकेशिवःस्वयं २० धर्मस्तुकथयामासभास्वतेपृच्छतेतथा यांमाराध्यमसितापिसं
प्रापतपसासति २१ पूर्वंस्वविषयंचाहंनगृण्हामिप्रयत्नतः वैराग्ययुक्तस्तपसेगंतुमिच्छामिसुव्रते २२
तदामांकथयामासपितातद्गुणकीर्तनं यथागमंतद्वदामिनिबोधातीवदुर्गमं २३ तद्गुणंसानजानाति
तदन्यस्यचकाकथा यथाकाशोनजानातिस्वांतमेववरानने २४ सर्वात्मासर्वभगवान्सर्वकारणकारणः
सर्वेश्वरश्चसर्वाद्यःसर्ववित्परिपालकः २५ नित्यरूपीनित्यदेहीनित्यानंदोनिराकृतिः निरंकुशोनिराशंकोनि
र्गुणश्चनिरामयः २६

तदामामिति यदैवमिच्छांकृतवांस्तदामसितासूर्यःतस्याभगवत्यागुणकीर्तनंस्वरूपानुभवोयेनभवतितथात्कृतवांस्तदाहंभगवतीस्वरूपज्ञानेननिर्भयोभूत्वाधिकारंयमलोकस्यकृतवानित्यर्थः तदेवमसित्रोपदिष्टंत्वांप्रतिकथयामीत्याह यथागममिति २३ तद्गुणमिति सैवस्वयं भगवतीस्वस्यगुणंनजानातितदन्यस्यतुकाकथातथापियथामतिवक्ष्यामीतिभावः तत्रदृष्टांतमाह यथाकाशइति २४ मायाविशिष्टब्रह्मरूपिण्याभगवत्याःस्वरूपंप्रथमतः सकलकारणकारणंवर्णयति सर्वात्मेति २५ नित्योदेहःस्वरूपंयस्य २६ ६९ ६९ ६९ ६९

सएवपरमात्मामायाविशिष्टः प्रकृतिर्मूलप्रकृतिर्भगवतीत्यर्थः यथागजशरीरेप्रविष्टचैतन्यस्यगजेतिसंज्ञातथामायाशरीरेप्रविष्टचैतन्यस्यमायाप्र
कृतिरितिसंज्ञेतिभावः तस्याविकाराः प्रकृतपदवाच्याः सर्वेभवंतीत्यर्थः २७ तदेवोपपादयति स्वयंपुमांश्चेति स्वयमेवात्माप्रकृतियोगात्प्रकृ-
तिशब्दवाच्यइत्यर्थः २८ २९ सासर्वकारणभूतामूलप्रकृतिः सृष्टिसमयेभूतोत्पत्तिक्रमेण ब्रह्मांडंसृष्ट्वाभक्तानुग्रहार्थंनानारूपाणिबभारतत्रक-

निर्लिप्तःसर्वसाक्षीचसर्वाधारःपरात्परः मायाविशिष्टःप्रकृतिस्तद्विकाराश्चप्राकृताः २७ स्वयंपुमांश्चप्रकृति
स्तावभिन्नौपरस्परं यथावन्हेस्तस्यशक्तिर्नभिन्नास्त्येवकुत्रचित् २८ सेयंशक्तिर्महामायासच्चिदानंदरू
पिणी रूपंबिभर्त्यरूपाचभक्तानुग्रहहेतवे २९ गोपालसुंदरीरूपंप्रथमंसासमर्जह अतीवकमनीयंच
सुंदरंसुमनोहरं ३० नवीननीरदश्यामंकिशोरंगोपवेषकं कंदर्पकोटिलावण्यंलीलाधाममनोहरं ३१ श
रन्मध्यान्हपद्मानांशोभामोचनलोचनं शरत्पार्वणकोटींदुशोभाप्रच्छादनाननं ३२ अमूल्यरत्ननि
र्माणंनानाभूषणभूषितं सस्मितंशोभितंशश्वदमूल्यपीतवाससा ३३ परब्रह्मस्वरूपंचज्वलंतंब्रह्म
तेजसा सुखदृश्यंचशांतंचराधाकांतमनंतकं ३४ गोपीभिर्वीक्ष्यमाणंचसस्मिताभिश्चसंततं रासमंडल
मध्यस्थंरत्नसिंहासनस्थितं ३५ वंशींक्वणंतंद्विभुजंवनमालाविभूषितं कौस्तुभेंद्रमणींद्रेणशश्वद्व
क्षःस्थलोज्ज्वलं ३६ कुंकुमागरुकस्तूरीचंदनार्चितविग्रहं चारुचंपकमालाक्तंमालतीमाल्यमंडितं ३७
चारुचंद्रकशोभाढ्यंचूडावंक्रिमराजितं एवंभूतंचध्यायंतेभक्ताभक्तिपरिप्लुताः ३८

स्मिंश्वेतकल्पेगोपालरूपमेवप्रथ
मतोबभारेत्याह गोपालसुंदरीति तदुक्तंतंत्रराजे कदाचिदाद्याललितापुंरूपाकृष्णविग्रहेति कूर्मपुराणेपिप्रकृत्याःप्रथमोभागउमादेवीयशस्विनी
व्यक्तःसर्वमयोविष्णुःस्त्रीसंज्ञोलोकभावनइतिगोपालसुंदरीसखीवेषधारीश्रीकृष्णः कृष्णाध्यानमाह अतीवेति ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८

३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ इंद्रायुश्चेति-

यद्भयाज्जगतांधाताविधत्तेसृष्टिमेवच कर्मानुसाराल्लिखितंकरोतिसर्वकर्मणां ३९ तपसांफलदाताचकर्म
णांचयदाज्ञया विष्णुःपाताचसर्वेषांयद्भयात्पातिसंततं ४० कालाग्निरुद्रःसंहर्तासर्वविश्वेषुयद्भयात्
शिवोमृत्युंजयश्चैवज्ञानिनांचगुरोर्गुरुः ४१ यज्ज्ञानाज्ज्ञानवानस्तियोगीशोज्ञानविल्प्रभुः परमानंदयुक्त
श्चभक्तिवैराग्यसंयुतः ४२ यद्भयाद्वातिपवनःप्रवरःशीघ्रगामिना तपनश्चप्रतपतियद्भयात्संततंसति ४३
यदाज्ञयावर्षतींद्रोमृत्युश्चरतिजंतुषु यदाज्ञयादहेद्वन्हिर्जलमेवंसुशीतलं ४४ दिशोरक्षंतिदिक्पालामहाभी
तायदाज्ञया भ्रमंतिराशिचक्राणिग्रहाश्चयद्भयेनच ४५ भयात्फलंतिवृक्षाश्चपुष्प्यंत्यपिचयद्भयात् यदाज्ञां
तुपुरस्कृत्यकलः कालेहरेद्भयात् ४६ तथाजलस्थलस्थाश्चनजीवंतियदाज्ञया अकालेनाहरेद्वि्द्धरणे-
षुविषमेषुच ४७ धत्तेवायुस्तोयराशिंतोयंकूर्मंतदाज्ञया कूर्मोनंतंसचक्षोणींसमुद्रान्सांश्चपर्वतान् ४८
सर्वांश्चैवक्षमारूपानानारत्नंबिभर्तिया यतःसर्वाणिभूतानिस्थीयंतेहंतितत्रहि ४९ इंद्रायुश्चैवदिव्यानां
युगानमेकसप्ततिः अष्टाविंशेशक्रपातेब्रह्मणश्चदिवानिशं ५० एवंत्रिंशद्दिनैर्मासोद्वाभ्यामाभ्यामृतुःस्मृ
तः ऋतुभिःषड्भिरेवाब्दंब्रह्मणोवैवयःस्मृतं ५१ ब्रह्मणश्चनिपातेचचक्षुरुन्मीलनंहरेः चक्षुरुन्मीलनेतस्य
लयंप्राकृतिकंविदुः ५२ प्रलयेप्राकृतेसर्वेदेवाद्याश्चचराचराः लीनाधाताविधाताचश्रीकृष्णनाभि-
पंकजे ५३

तदुक्तंप्रपंचसारे युगानामेकसप्तत्यामन्वंतरमिहोच्यते ब्रह्मणोदिवसेप्रोक्तामनवस्तुचतुर्दश तावतीतस्यरात्रिश्चकथिताकालवेदि
भिः तयाविधंतदब्दानांशतंलमपिजीवसील्यंतं ५० वयःस्मृतमिति एवंशतवर्षपरिमितमितिशेषः ५१ ५२ ५३ ६ ६ ६

५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ विराडंशाश्चमहतीति क्षुद्रविराड्रूपाणिमहतिमहाविराड्रूपेलीनानीत्यर्थः अ
त्रनवमस्कंधेप्रथमाध्यायेयस्माद्यस्माद्यस्योसत्तिरुक्तातस्मिन्नेवतस्यलयउक्तइतिबोध्यं ६२ ६३ ६४ ६५ ६६ एतादृश

विष्णुःक्षीरोदशायीचवैकुंठेयश्चतुर्भुजः विलीनोवामपार्श्वेचकृष्णस्यपरमात्मनः ५४ यस्यज्ञानेशिवो-
लीनोज्ञानाधीशःसनातनः दुर्गायांविष्णुमायायांविलीनाःसर्वशक्तयः ५५ साचकृष्णस्यबुद्धौचबुद्ध्यधि
ष्ठातृदेवता नारायणांशःस्कंदश्चलीनोवक्षसितस्यच ५६ श्रीकृष्णांशश्चतद्बाहौदेवाधीशोगणेश्वरः प
द्मांशांशैवपद्मायांसाराधायांचसुव्रते ५७ गोप्यश्चापिचतस्यांचसर्वाश्चदेवयोषितः कृष्णप्राणाधिदे-
वीसातस्यप्राणेषुसंस्थिता ५८ सावित्रीचसरस्वत्यांवेदाःशास्त्राणियानिच स्थितावाणीचजिह्वायांतस्यै
वपरमात्मनः ५९ गोलोकस्यचगोपाश्चविलीनास्तस्यलोमसु तत्प्राणेषुचसर्वेषांप्राणावाताहुताशनः
६० जठराग्नौविलीनाश्चजलंतद्रसनाग्रतः वैष्णवाश्चरणांभोजेपरमानंदसंयुताः ६१ सारात्साररताभ
क्तीरसपीयूषपायिनः विराडंशाश्चमहतिलीनाःकृष्णेमहाविराट् ६२ यस्यैवलोमकूपेषुविश्वानिनिखिलानि
च यस्यचक्षुषउन्मेषेप्राकृतःप्रलयोभवेत् ६३ चक्षुरुन्मीलनेसृष्टिर्यस्यैवपुनरेवसः यावत्कालोनिमे
षेणतावदुन्मीलनेनच ६४ ब्रह्मणश्चशताब्देचसृष्टेःसूत्रलयःपुनः ब्रह्मसृष्टिलयानांचसंख्यानास्त्येव
सुव्रते ६५ यथाभूरजसांचैवसंख्याननैवविद्यते चक्षुर्निमेषेप्रलयोयस्यसर्वांतरात्मनः ६६ उन्मीलनेपुनः
सृष्टिर्भवेदेवेश्वरेच्छया सकृष्णःप्रलयेतस्यांप्रकृतौलीनएवहि ६७

महावैभववान्कृष्णस्तयामूलप्रकृत्यासृष्टिस
मयेप्रथममुत्पादितः सप्रलयसमयेतस्यामेवविलीनोभवतीत्याह सकृष्णइति ६७ ६७ ६७ ६७ ६७ ६७

तत्रश्रुतिंप्रमाणयति सदेवेदमिति ६८ ६९ एतादृश्यामूलप्रकृत्यागुणकीर्तनंकर्तुंकः समर्थोनकोपीत्याह तद्गुणोत्कीर्तनमिति अधुना-
सावित्र्यापृष्टान्मुक्तिभेदानाह मुक्तयश्चेति ७० मुक्त्यपेक्षयाभक्तिर्गरीयसीतिभक्तौश्रद्धोत्पादनार्थमुक्त्वामुक्तिभेदानाह तत्प्रधानेति मुक्त्यपेक्ष
याप्रधानेत्यर्थः ७१ विभोर्मूलप्रकृतेःसेवनंविनेत्यर्थः ७२ शिवत्वादीन्यपिनिर्वाणमोक्षांतानिस्थानानिभक्तास्तुच्छतयाविदुरित्याह शिवत्वमि

एकैवत्वपराशक्तिर्निर्गुणःपरमःपुमान् सदेवेदमग्रआसीदितिवेदविदोविदुः ६८ मूलप्रकृतिरव्यक्ताप्यव्या
कृतपदाभिदा चिदभिन्नत्वमापन्नाप्रलयेसैवतिष्ठति ६९ तद्गुणोत्कीर्तनंवक्तुंब्रह्मांडेषुचकः क्षमः मु
क्तयश्चचतुर्वेदैर्निरुक्ताश्चचतुर्विधाः ७० तत्प्रधानादेवभक्तिर्मुक्तेरपिगरीयसी सालोक्यदाभवेदेकात-
थासारूप्यदापरा ७१ सामीप्यदायनिर्वाणप्रदामुक्तिश्चतुर्विधा भक्तास्तानहिवांछंतिविनातत्सेवनंवि
भोः ७२ शिवत्वममरत्वंचब्रह्मत्वंचावहेलया जन्ममृत्युजराव्याधिभयशोकादिकंदनं ७३ दिव्यरू
पधारणंचनिर्वाणंमोक्षणंविदुः मुक्तिश्चसेवारहिताभक्तिःसेवाविवर्द्धिनी ७४ भक्तिमुक्त्योरयंभेदो
निषेकखंडनंशृणु विदुर्बुधानिषेकंचभोगंचकृतकर्मणां ७५ तत्खंडनंचशुभदंश्रीविभोःसेवनंपरं त
त्वज्ञानमिदंसाध्विस्थिरंचलोकवेदयोः ७६ निर्विघ्नंशुभदंचोक्तंगच्छवत्सेयथासुखं इत्युक्त्वासूर्यपुत्र
श्चजीवयित्वाचतत्पतिं ७७ तस्यैशुभाशिषंदत्वागमनंकर्तुमुद्यतः दृष्ट्वायमंचगच्छंतंसासावित्रीप्रणम्य
च ७८ रुरोदचरणौधृत्वासाधुच्छेदेनदुःखिता सावित्रीरोदनंश्रुत्वायमश्चैवकृपानिधिः ७९

ति विदुस्तुच्छतयेतिशे
षः ७३ कुतोभक्तानांमुक्त्यपेक्षया भक्तौनिर्भरइतिचेत्तत्रहेतुमाह मुक्तिश्चेति अत्रयतइतिशेषः ७४ निषेकखंडनस्यस्वरूपंसावित्र्यापृष्टंवक्तुंप्रथमतोनिषेकस्वरू
पंवक्ति विदुर्बुधाइति ७५ श्रीविभोर्मूलप्रकृतेःसेवनंसर्वकृतकर्मणांनिषेकपदवाच्यानांखंडनंनाशनमित्यर्थः तस्मात्तदेवसर्वैराश्रयणीयमितिभावः उपसंहरति तत्त्वज्ञा-
नमिति ७६ ७७ ७८ साधुच्छेदेनसाधुवियोगेन ७९ ६२

एतादृशींसुशीलांकन्यांपुनः कदाहंद्रक्ष्यामीतिकन्यावियोगजन्यदुःखेनयमोपिरोदनंकृतवानित्याह स्वयंचैवरुरोदहेति तदुक्तंपुत्रात्प्रियतरः शिष्योयदियोग्यगुणोभवेदिति ८० तल्लोकंदेवीलोकंमणिद्वीपसंज्ञकं इतःपरंत्वंगृहंगत्वान्यत्सर्वंहित्वादेवीव्रतानिकुर्वित्याह गत्वेति देवीव्रतान्याह सावित्र्याश्चेति ८१ ८२ ८३ विभोःपदंमूलप्रकृतेःस्थानंमंगलदायिनींमंगलचंडिकां ८४ षष्ठींदेवसेनाभिधां ८५ कार्तिक्यां

नामित्युवाचसंतुष्टःस्वयंचैवरुरोदह धर्मउवाच लक्षवर्षसुखंभुंक्त्वापुण्यक्षेत्रेचभारते ८० अंतेयास्यसितल्लोकंयत्रदेवीविराजते गत्वाचस्वगृहंभद्रेसावित्र्याश्चव्रतंकुरु ८१ द्विसप्तवर्षपर्यंतंनारीणांमोक्षकारणं ज्येष्ठशुक्लचतुर्दश्यांसावित्र्याश्चव्रतंशुभं ८२ शुक्लाष्टम्यांभाद्रपदेमहालक्ष्म्यायथाव्रतं द्व्यष्टवर्षंव्रतंचैवप्रत्यादेयंशुचिस्मिते ८३ करोतिभक्त्यायानारीसायातिचविभोःपदं प्रतिमंगलवारेचदेवींमंगलदायिनीं ८४ प्रतिमासंशुक्लषष्ठ्यांषष्ठींमंगलदायिनीं तथाचाषाढसंक्रांत्यांमनसांसर्वसिद्धिदां ८५ राधांरासेचकार्तिक्यांकृष्णप्राणाधिकप्रियां उपोष्यशुक्लाष्टम्यांचप्रतिमासंवरप्रदां ८६ विष्णुमायांभगवतींदुर्गांदुर्गार्तिनाशिनीं प्रकृतिंजगदंबांचपतिपुत्रवतीषुच ८७ पतिव्रतासुशुद्धासुयंत्रेषुप्रतिमासुच यानारीपूजयेद्भक्त्याधनसंतानहेतवे ८८ इहलोकेसुखंभुक्त्वायात्यंतेश्रीविभोःपदं एवंदेव्याविभूतीश्चपूजयेत्साधकोनिशं ८९ सर्वकालंसर्वरूपासंसेव्यापरमेश्वरी नातःपरतरंकिंचित्कृतकृत्यत्वदायकं ९०

कार्तिकपौर्णमास्यांराधां शुक्लाष्टम्यामिति दुर्गाव्रतंतदुक्तमीशानसंहितायां एकादशीकोटिसहस्रतुल्याजन्माष्टमीपर्वतराजपुत्र्याः ततोपिशुक्लागुणिताशतेनपराशरव्यासवसिष्ठमुख्यैः ८६ ८७ एतादेवतास्तदुक्तदिनेषुयंत्रेषुप्रतिमासुवायानारीपूजयेदिति सर्वत्रद्वितीयांतपदानामत्रान्वयः ८८ विभोःपदंमूलप्रकृतेःस्थानं ८९ इत्थंव्रतानिकुर्वतीसर्वकालंमूलप्रकृतिंश्रीभुवनेश्वरींभजेत्याह सर्वकालमिति नातःपरतरमिति देवीभजनादधिकंकृतकृत्यत्वदायकंनैवास्ति ततस्तत्कृत्वावत्सेतिष्ठशांताभव

अहंगुरुस्त्वद्धृदये चैतन्यरूपेणतिष्ठामिततोमद्वियोगजन्यखेदेनरोदनंमाकुर्विंतिभावः ९० ९१ अन्यान्स्वबांधवान् ९२ जनकः पिता साच
सावित्री ९३ देवीलोकंमणिद्वीपं ९४ सावित्रीपदनिरुक्तिमाह सवितुश्चेति सूर्यमंडलात्मकसवितुरधिदेवीतदंतर्यामिब्रह्मरूपिणीमंत्रः सूर्यांत
र्गतब्रह्मप्रतिपादकोगायत्रीरूपस्तदधिष्ठात्रीचदेवतायतस्ततोभगवत्यागायत्र्याः सावित्रीनामेत्यर्थः सवितुरियंसावित्रीतिव्युत्पत्तेः किंचवेदानांसावि

इत्युक्त्वातांधर्मराजोजगामनिजमंदिरं गृहीत्वास्वामिनंसाचसावित्रीचनिजालयं ९१ सावित्रीसत्यवांश्चैव
प्रययोचयथागमं अन्यांश्चकथयामासस्ववृत्तांतंहिनारद ९२ सावित्रीजनकःपुत्रान्संप्राप्तःप्रक्रमेणच श्व
शुरश्चक्षुषीराज्यंसाचपुत्रान्वरेणच ९३ लक्षवर्षंसुखंभुक्त्वापुण्यक्षेत्रेचभारते जगामस्वामिनासार्धंदेवी
लोकंपतिव्रता ९४ सवितुश्चाधिदेवीयामंत्राधिष्ठातृदेवता सावित्रीह्यपिवेदानांसावित्रीतेनकीर्तिता
९५ इत्येवंकथितंवत्ससावित्र्याख्यानमुत्तमं जीवकर्मविपाकंचकिंपुनःश्रोतुमिच्छसि ९६ इतिश्रीदेवीभा
गवतेमहापुराणेनवमस्कंधेना० ना० सावि० अष्टत्रिंशोऽध्यायः ३८ नारदउवाच श्रीमूलप्रकृतेर्देव्यागा
यत्र्यास्तुनिराकृतेः सावित्रीयमसंवादेश्रुतंवैनिर्मलंयशः १ तद्गुणोत्कीर्तनंसत्यंमंगलानांचमंगलं अधुना
श्रोतुमिच्छामिलक्ष्म्युपाख्यानमीश्वर २ केनादौपूजितासापिकिंभूताकेनवापुरा तद्गुणोत्कीर्तनंमह्यंवद
वेदविदांवर ३

त्रीजननीतेषामुत्पादनकर्त्रीभवतिततोपिसावित्रीनामेत्याहसावित्रीह्यपीति सूयतेप्राणिप्रसवंकरोतीति
सासावित्रीतिव्युत्पत्तेः ९५ ९६ इतिश्रीदेवीभागवततिलकेनवमस्कंधेष्टत्रिंशोऽध्यायः ३८ अर्धाधिकैस्त्रयस्त्रिंशत्पद्यैरथसविस्तरं म
हालक्ष्म्याउपाख्यानंयथावदभिवर्ण्यते १ सावित्र्युपाख्यानानंतरंमहालक्ष्म्याउपाख्यानंपृच्छति श्रीमूलप्रकृतेरिति मूलप्रकृतेर्गायत्र्याश्चयशः
श्रुतमित्यन्वयः १ २ केनकर्त्रीकिंभूताकिंस्वरूपाकेनमंत्रेणस्तोत्रेणचेत्यर्थः ३ ६७ ६७ ६७ ६७ ६७

पूर्वोक्तंवृत्तंकथयति सृष्टेरादाविति देवीराधावामांशःकृष्णस्यवामांशइत्यपिपाठः ४ ५ ६ ७ यथैवराधायागुणास्तथैवलक्ष्म्याअपिगुणाइ-
त्याह स्वीयरूपेणेति ८ ९ चकमेद्विभुजमित्यर्थः १० तद्गौरवेणराधायागौरवेण ११ महालक्ष्मीपदनिरुक्तिमाह लक्ष्यतेइति लक्ष्यतेदृश्यतेयया-

नारायणउवाच सृष्टेरादौपुराब्रह्मन्कृष्णस्यपरमात्मनः देवीवामांशसंभूताबभूवरासमंडले ४ अतीव
सुंदरीश्यामान्यग्रोधपरिमंडिता यथाद्वादशवर्षीयाशश्वत्सुस्थिरयौवना ५ श्वेतचंपकवर्णाभासुखदृश्या
मनोहरा शरत्पार्वणकोटींदुप्रभाप्रच्छादनानना ६ शरन्मध्यान्हपद्मानांशोभामोचनलोचना सादेवीद्वि
विधाभूतासहसैवेश्वरेच्छया ७ स्वीयरूपेणवर्णेनतेजसावयसात्विषा यशसावाससाकृत्याभूषणेनगु
णेनच ८ स्मितेनवीक्षणेनैवप्रेम्णावानुनयेनच तद्वामांशान्महालक्ष्मीर्दक्षिणांसाचराधिका ९ राधा-
दौवरयामासद्विभुजंचपरात्परं महालक्ष्मीश्चतत्पश्चात्चकमेकमनीयकं १० कृष्णास्तद्गौरवेणैवद्विधारूपो
बभूवह दक्षिणांशश्चद्विभुजोवामांशश्चचतुर्भुजः ११ चतुर्भुजायद्विभुजोमहालक्ष्मींददौपुरा लक्ष्य
तेदृश्य तेविश्वंस्निग्धदृष्ट्यायथानिशं १२ देवीभूताचमहतीमहालक्ष्मीश्चसास्मृता राधाकांतश्चद्विभु
जोलक्ष्मीकांतश्चतुर्भुजः १३ शुद्धसत्वस्वरूपाचगोपैर्गोपीभिरावृता चतुर्भुजश्चवैकुंठंप्रययौपद्मयास
ह १४ सर्वांशेनसमौतौद्वौकृष्णनारायणौपरौ महालक्ष्मीश्चयोगेननानारूपाबभूवसा १५ वैकुंठेचमहा
लक्ष्मीःपरिपूर्णतमारमा शुद्धसत्वस्वरूपाचसर्वसौभाग्यसंयुता १६ प्रेम्णासाचप्रधानाचसर्वासुरमणी
षुच स्वर्गेषुस्वर्गलक्ष्मीश्चशक्रसंपत्स्वरूपिणी १७ पातालेनागलक्ष्मीश्चराजलक्ष्मीश्चराजसु गृहलक्ष्मी
र्गृहेष्वेवगृहिणांचकलांशतः १८

सालक्ष्मीरित्यर्थः १२ १३ १४ योगेनशक्त्या १५ १६ १७ कलांशतइति एतानिरूपाण्यंशरूपाणीत्यर्थः पूर्णा

शस्तुवैकुंठेएवास्तीत्यर्थः १८ सुरभ्यादयोपिलक्ष्म्यंशभूताइत्याह गवांप्रसूतिरिति १९ २० २१ २२ २३ एतेषुसर्वेषुलक्ष्म्यंशाःसंतीत्यर्थः
२४ किंभूतेत्यस्योत्तरमुक्त्वाकेनादौपूजितेत्यस्योत्तरमाह वैकुंठेपूजितेति २५ ततःपरंकेनकेनकस्मिन्कालेपूजितेत्यत्राह २६ २७ २८

संपत्स्वरूपागृहिणांसर्वमंगलमंगला गवांप्रसूतासासुरभिर्दक्षिणायज्ञकामिनी १९ क्षीरोदसिंधुकन्या
साश्रीरूपापद्मिनीषुच शोभास्वरूपाचंद्रेचसूर्यमंडलमंडिता २० विभूषणेषुरत्नेषुफलेषुचजलेषुच
नृपेषुनृपपत्नीषुदिव्यस्त्रीषुगृहेषुच २१ सर्वसस्येषुवस्त्रेषुस्थानेषुसंस्कृतेषुच प्रतिमासुचदेवानांमं
गलेषुघटेषुच २२ माणिक्येषुचमुक्तासुमाल्येषुचमनोहरा मणींद्रेषुचहीरेषुक्षीरेषुचंदनेषुच २३
वृक्षशाखासुरम्यासुनवमेघेषुवस्तुषु वैकुंठेपूजितासादौदेवीनारायणेनच २४ द्वितीयेब्रह्मणाभक्त्या
तृतीयेशंकरेणच विष्णुनापूजितासाचक्षीरोदेभारतेमुने २५ स्वायंभुवेनमनुनामानवेंद्रैश्चसर्वतः
ऋषींद्रैश्चमुनींद्रैश्चसद्भिश्चगृहिभिर्भवे २६ गंधर्वैश्चैवनागाद्यैःपातालेषुचपूजिता शुक्लाष्टम्यांभाद्र
पदेकृतापूजाचब्रह्मणा २७ भक्त्याचपक्षपर्यंतंत्रिषुलोकेषुनारद चैत्रेपौषेचभाद्रेचपुण्यमंगलवास
रे २८ विष्णुनापूजितासाचत्रिषुलोकेषुभक्तितः वर्षांतेपौषसंक्रांत्यांमाघ्यामावाह्यमंगले २९ मनु
स्तांपूजयामाससाभूताभुवनत्रये पूजितासामहेंद्रेणमंगलेनैवमंगले ३० केदारेणैवनीलेनसुबलेननले
नच ध्रुवेणोत्तानपादेनशक्रेणबलिनातथा ३१ कश्यपेनचदक्षेणकर्दमेनविवस्वता प्रियव्रतेनचंद्रेण
कुबेरेणैववायुना ३२ यमेनवन्हिनाचैववरुणेनैवपूजिता एवंसर्वत्रसर्वेषुपूजितावंदितासदा ३३

२९ मंगलेनराज्ञा ३० केदारनीलादयोराजानः ३१ ३२ ३३

इतिश्रीदेवीभागवततिलकेनवमस्कंधेएकोनचत्वारिंशोध्यायः ३९ ध्यधिकैर्नवतिश्लोकैर्नारदायसविस्तरं लक्ष्मीजन्मनिमित्तंचप्रो-

सर्वैश्वर्याधिदेवीसासर्वसंपत्स्वरूपिणी इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेएकोनचत्वारिंशो
ध्यायः ३९ नारदउवाच नारायणप्रियासाचवरावैकुंठवासिनी वैकुंठाधिष्ठातृदेवीमहालक्ष्मीः
सनातनी १ कथंबभूवसादेवीपृथिव्यांसिंधुकन्यका पुराकेनस्तुतादौसातन्मेव्याख्यातुमर्हसि २
श्रीनारायणउवाच पुरादुर्वाससःशापाद्भ्रष्टश्रीश्वपुरंदरः बभूवदेवसंघश्चमर्त्यलोकेचनारद ३ ल-
क्ष्मीःस्वर्गादिकंत्यक्त्वारुष्टापरमदुःखिता गत्वालीनाचवैकुंठेमहालक्ष्मीश्चनारद ४ तदाशोकाद्ययुः
सर्वेदुःखिताब्रह्मणःसभां ब्रह्माणंचपुरस्कृत्यययुर्वैकुंठमेवच ५ वैकुंठेशरणापन्नादेवानारायणेपरे
अतीवदैन्ययुक्ताश्चशुष्ककंठोष्ठतालुकाः ६ तदालक्ष्मीश्चकलयापुराणपुरुषाज्ञया बभूवसिंधुक-
न्यासासर्वसंपत्स्वरूपिणी ७ तयामथित्वाक्षीरोदंदेवादैत्यगणैःसह संप्रापुश्चमहालक्ष्मींविष्णु-
स्तांचददर्शह ८ सुरादिभ्योवरंदत्वावनमालांचविष्णवे ददौप्रसन्नवदनातुष्टाक्षीरोदशायिनी ९
देवाश्चाप्यसुरग्रस्तंराज्यंप्रापुश्चनारद तांसंपूज्यचसंभूयसर्वत्रचनिरापदः १० नारदउवाच कथं
शशापदुर्वासामुनिश्रेष्ठःकदाचन केनदोषेणवाब्रह्मन् ब्रह्मिष्ठस्तत्त्ववित्पुरा ११ ममंथुःकेनरूपेणज
लधिंतेसुरादयः केनस्तोत्रेणवादेवीशक्रंसाक्षाद्बभूवसा १२ कोवातयोश्चसंवादोबभूवतद्वद प्रभो
श्रीनारायणउवाच मधुपानप्रमत्तश्चत्रैलोक्याधिपतिःपुरा १३

क्त्यतेभक्तिशालिने १ नारदोलक्ष्म्युत्पत्तिंपृच्छतिना
रायणेति १ केनस्तुतासतीसिंधुकन्याकाजातेत्यर्थः २ ३ ४ ५ ६ कलयांशेन ७ ८ ९ १० ११ १२ तयोःशक्रदुर्वाससोः १३

१४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८

क्रीडांचकाररहसिरंभयासहकामुकः कृत्वाक्रीडांतयासार्द्धंकामुक्याहृतमानसः १४ तस्थौतत्रम
हारण्येकामोन्मथितमानसः केलासशिखरेयांतंवेकुंठादृषिसत्तमं १५ दुर्वाससंददर्शेंद्रोज्वलंतंब्र
ह्मतेजसा ग्रीष्ममध्यान्हमार्तंडसहस्रप्रभमीश्वरं १६ प्रतप्तकांचनाकारंजटाभारमहोज्ज्वलं शुक्लय
ज्ञोपवीतंच्चीरदंडोकमंडलुं १७ महोज्वलंचतिलकंबिभ्रतंचेंदुसन्निभं समन्वितंशिष्यलक्षैर्वेदवेदां
गपारगैः १८ दृष्ट्वाननामशिरसासंप्रमत्तःपुरंदरः शिष्यवर्गतदाभक्त्यातुष्टावचमुदान्वितं १९ मुनि
नाचसशिष्येणदत्तास्तस्मैशुभाशिषः विष्णुदत्तंपारिजातपुष्पंचसुमनोहरं २० तज्जरारोगमृत्युघ्नंशो
कघ्नंमोक्षकारकं शक्रःपुष्पंगृहीत्वाचप्रमत्तोराज्यसंपदा २१ पुष्पंसन्यस्तयामासतदैवकरिमस्तके हस्ती
तत्स्पर्शमात्रेणारूपेणाचगुणेनच २२ तेजसावयसाकस्माद्विष्णुतुल्योबभूवह त्यक्त्वाशक्रंगजेंद्रश्चजगा
मघोरकाननं २३ नशशाकमहेंद्रस्तंरक्षितुंतेजसामुने तत्पुष्पंत्यक्तवंतंचदृष्ट्वाशक्रंसुनीश्वरः २४ तमु
वाचमहारुष्टोशशापचरुषान्वितः मुनिरुवाच अरेश्रियाप्रमत्तस्त्वंकथंमामवमन्यसे २५ मद्दत्तपुष्पंद-
त्तंचगर्वेणकरिमस्तके विष्णोर्निवेदितंचैवनैवेद्यंवाफलंजलं २६ प्राप्तिमात्रेणभोक्तव्यंत्यागेनब्रह्महाभ
वेत् भ्रष्टश्रीर्भ्रष्टबुद्धिश्चपुरभ्रष्टोभवेत्तुसः २७ यस्त्यजेद्विष्णुनैवेद्यंभाग्येनोपस्थितंशुभं प्राप्तिमा
त्रेणायोभुंक्तेभक्तोविष्णुनिवेदितं २८ पुंसांशतंसमुद्धृत्यजीवन्मुक्तःस्वयंभवेत् नैवेद्यभोजनंकृत्वानि
त्यंयःप्रणमेद्धरिं २९ पूजयेत्स्तौतिवाभक्त्यासविष्णुसदृशोभवेत् तत्स्पर्शवायुनासद्यस्तीर्थौघश्चविशु-
ध्यति ३०

२९ ३०

३१ ३२ ३३ ३४ ३५ ब्राह्मणान्नंतीर्थप्रतिग्राहिणांब्राह्मणानामन्नमित्यर्थः ३६ ३७ ३८ ३९ ४० ४१

तत्पादरजसामूढसद्यःपूतावसुंधरा पुंश्चल्यन्नमवीरान्नंशूद्रश्राद्धान्नमेवच ३१ यद्धरेरनिवेद्यंचवृथा
मांसस्यभक्षणं शिवलिंगप्रदानंच यद्वृत्तंशूद्रयाजिना ३२ चिकित्सकद्विजान्नंचदेवलान्नंतथैवच क
न्याविक्रयिणामन्नंयदन्नंयोनिजीविनां ३३ उच्छिष्टान्नंपर्युषितंसर्वभक्षावशेषितं शूद्रापतिद्विजा
नांचवृषवाहद्विजान्नकं ३४ अदीक्षितद्विजानांचयदन्नंशवदाहिनां अगम्यागामिनांचैवद्विजानाम
न्नमेवच ३५ मित्रद्रुहांकृतघ्नानामन्नंविश्वासघातिनां मिथ्यासाक्ष्यप्रदान्नंचब्राह्मणान्नंतथैवचं ३६
एतेसर्वेविशुध्यंतिविष्णोर्नैवेद्यभक्षणात् श्वपचश्चेद्विष्णुसेवीवंशानांकोटिमुद्धरेत् ३७ हरेरभक्तो
मनुजःस्वंचरक्षितुमक्षमः अज्ञानाद्यदिगृण्हातिविष्णोर्निर्माल्यमेवच ३८ सप्तजन्मार्जितात्पापा-
न्मुच्यतेनात्रसंशयः ज्ञात्वाभक्त्याचगृण्हातिविष्णोर्नैवेद्यमेवच ३९ कोटिजन्मार्जितात्पापान्मुच्यतेनि
श्चितंहरे यस्मात्त्वंस्थापितंपुष्पंगर्वेणकरिमस्तके ४० तस्माद्युष्मान्परित्यज्ययातुलक्ष्मीर्हरेःपदं
नारायणस्यभक्तोहंनबिभेमिसुराद्विधः ४१ कालान्मृत्योर्जरातश्चकानन्यान्गणयामिच्च किंकरि
ष्यतितेतातःकश्यपश्चप्रजापतिः ४२ बृहस्पतिर्गुरुश्चैवनिःशंकस्यचमेहरे इदंपुष्पंयस्यमूर्ध्नितस्यै
वपूजनंपरं ४३ इतिश्रुत्वामहेंद्रश्चधृत्वासचरणंमुनेः उच्चैरुरोदशोकार्तस्तमुवाचभयाकुलः ४४
महेंद्रउवाच दत्तःसमुचितःशापोमह्यंमायापहःप्रभो त्वतांनयाचेसंपत्तिंकिंचिज्ज्ञानंचदेहिमे ४५

४२ ४३ ४४ मायापहः प्रभोइत्यत्रमह्यंमत्तायहे प्रभोइत्यपिपाठः मायापहोमोहनाशकइत्यर्थः किमेवंप्रार्थनयालक्ष्मीप्राप्तिमिच्छसिने

त्याह त्वतांनयान्वेइति तर्हिकिंप्रार्थ्यतेतत्राह किंचिज्ज्ञानमिति संसारोद्धारकंज्ञानंदेहीत्यर्थः ४५ ऐश्वर्यकुतोनप्रार्थ्यतेइतिचेत्तत्राह ऐ
श्वर्यमिति महादोषकरत्वात्तस्यप्रार्थनानक्रियतइत्यर्थः ४६ इंद्रेणसंपन्नावुक्तंदोषंमुनिरंगीकृत्यतदुक्तंदोषमेवविशदयतिजन्ममृत्युजरेति बी-
जांकुरंलक्ष्मीरूपं ४७ ४८ ४९ ५० ५१ प्रवृत्तिलक्षणधर्मेयत्फलंतदाह चरंतीति निर्विरोधमुन्मत्तवदित्यर्थः ५२ अयाती

ऐश्वर्यंविपदांबीजंज्ञानप्रच्छन्नकारणं मुक्तिमार्गकुठारश्चभक्तेश्चव्यवधायकं ४६ मुनिरुवाच जन्ममृ
त्युजराशोकरोगबीजांकुरंपरं संपत्तितिमिरांधश्चमुक्तिमार्गंनपश्यति ४७ संपन्मत्तोविमूढश्चसुरामत्तः
सएवच बांधवैर्वेष्टितःसोपिबंधुत्वेनैवहेहरे ४८ संपत्तिमदमत्तश्चविषयांधश्चविह्वलः महाकामीरा
जसिकःसत्वमार्गंनपश्यति ४९ द्विविधोविषयांधश्चराजसस्तामसःस्मृतः अशास्त्रज्ञस्तामसश्चशास्त्र
ज्ञोराजसःस्मृतः ५० शास्त्रंचद्विविधंमार्गंदर्शयत्सुरपुंगव प्रवृत्तिबीजमेकंचनिवृत्तेःकारणंपरं ५१
चरंतिजीविनश्चादौप्रवृत्तेर्दुःखवर्त्मनि स्वच्छंदंचप्रसन्नंचनिर्विरोधंचसंततं ५२ आयातिमधुनोलो
भात्क्लेशेनसुखमानितः परिणामेनाशबीजेजन्ममृत्युजराकरे ५३ अनेकजन्मपर्यंतंकृत्वाचभ्रमणंमु
दा स्वकर्मविहितायांचनानायोन्यांक्रमेणच ५४ ततःक्लेशानुग्रहाच्चसत्संगंलभतेचसः सहस्रेषु-
शतेष्वेकोभवाब्धिपारकारणं ५५ साधुस्तत्वप्रदीपेनमुक्तिमार्गंप्रदर्शयेत् तदाकरोतियत्नंचजीवोबंध
नखंडने ५६ अनेकजन्मयोगेनतपसानशनेनच तदालभेन्मुक्तिमार्गंनिर्विघ्नंसुखदंपरं ५७ इदंश्रुत्वागु
रोर्वक्त्राद्यत्पृच्छसिपुरंदर मुनेस्तद्वचनंश्रुत्वावीतरागोबभूवसः ५८ ति यथामधुनोलोभात् भ्रमरआयातिकमलेतस्मि
न्मुकुलितेस्वयंबद्धोभवतीतिनजानातितथायंप्राणीक्लेशेदुःखरूपेसंसारेसुखमानितः सुखबुद्धिः सन्नायाति नाशबीजेजन्ममृत्युजरास्थानेसंसारेइ-
तिभावः ५३ ५४ ५५ ५६ ५७ यस्मात्प्रवृत्ति-

मार्गोनमुक्तिदस्तस्मात्प्रवृत्तिमार्गंविहायसद्गुरुमाश्रित्यज्ञानाभ्यासेनमुक्तोभवेदितिनियन्त्वयापृष्टंज्ञानंतन्मयोक्तमितिभावः ५८ वर्धयामासणि
च्प्रयोगआर्षः वदृधेइत्यर्थः ५९ ६० ६१ ६२ साश्रुनेत्रंईश्वरेपूर्णप्रेम्णोलक्षणमेतत् ६३ ६४ ६५ ६६ पुनरनंतरंवरो

वैराग्यंवर्द्धयामासतस्यब्रह्मन्दिनेदिने मुनेःस्थानाद्गृहंगत्वासंददर्शामरावतीं ५९ दैत्यैरसुरसंघैश्चस
माकीर्णांभयाकुलां विषमोपप्लवांकुत्रबंधुहीनांचकुत्रचित् ६० पितृमातृकलत्रादिविहीनामतिचं
चलां शत्रुग्रस्तांचतांदृष्ट्वाजगामवाक्पतिंप्रति ६१ शक्रोमंदाकिनीतीरेददर्शगुरुमीश्वरं ध्यायमानं
परंब्रह्मगंगातोयेस्थितपरं ६२ सूर्याभिसंमुखंपूर्वमुखंचविश्वतोमुखं साश्रुनेत्रंपुलकिनंपरमानंदसंयु
तं ६३ वरिष्ठंचगरिष्ठंचधर्मिष्ठंश्रेष्ठसेवितं प्रेष्ठंचबंधुवर्गाणामतिश्रेष्ठंचज्ञानिनां ६४ ज्येष्ठंचभ्रातृव
र्गाणामनिष्टंसुरवैरिणां दृष्ट्वागुरुंजपंतंचतत्रतस्थौसुरेश्वरः ६५ प्रहरांतेगुरुंदृष्ट्वाचोत्थितंप्रणनामसः
प्रणम्यचरणांभोजेरुरोदोच्चैर्मुहुर्मुहुः ६६ वृत्तांतंकथयामासब्रह्मशापादिकंतथा पुनर्वरोपलब्धिं
चज्ञानप्राप्तिंसुदुर्लभां ६७ वैरिग्रस्तांचस्वपुरींक्रमेणैवसुरेश्वरः शिष्यस्यवचनंश्रुत्वासुबुद्धिर्वदतांव-
रः ६८ बृहस्पतिरुवाचेदंकोपसंरक्तलोचनः गुरुरुवाच श्रुतंसर्वंसुरश्रेष्ठमारोदीर्वचनंशृणु ६९ न
कातरोहिनीतिज्ञोविपत्तौनकदाचन संपत्तिर्वाविपत्तिर्वानश्वराभ्रमरूपिणी ७० पूर्वस्वकर्मायत्ताचस्व
यंकर्तातयोरपि सर्वेषांचभवत्येवशश्वज्जन्मनिजन्मनि ७१

पलब्धिंज्ञानप्राप्तिरूपांमुनेःसकाशाज्जातांचकथयामासे
त्यर्थः ६७ सुरेश्वरःकथयामासेत्यन्वयः ६८ ६९ विपत्तावपिनीतिज्ञोधैर्यंत्यक्त्वाकातरोनभवतीत्यर्थः नीतिमेवाह संपत्तिर्वेति ७० पूर्वेति यतःसा
संपत्तिर्वाविपत्तिर्वापूर्वजन्मनिकृतस्वकर्मायत्तातदधीनाभवतिततस्तयोःकर्तापिस्वयमेवभवतितस्मात्कर्मानुरूपंफलंभविष्यत्येवनकातरतयातन्नाशो

भविष्यतीत्यर्थः एतादृशंदुःखंसर्वेषांभवतीत्याह सर्वेषांचेति ७१ ७२ ७३ ७४ कमलोद्भवंब्रह्माणंसंबोध्यतंप्रत्युक्तंकृष्णेनेत्यर्थः जन्मेति कृतकर्म
णां भोगावशेषेतेषांकर्मणामनुरूपंजन्मभारतेऽन्यत्रवाभवतीत्यन्वयः ७५ ७६ ७७ ७८ ७९ देशकालपात्रभेदेनकृतानांकर्मणांफलतारत

चक्रनेमिक्रमेणैवतत्रकापरिदेवना उक्तंहिस्वकृतंकर्मभुज्यतेखिलभारते ७२ शुभाशुभंचयत्किंचित्स्वक
र्मफलभुक्पुमान् नाभुक्तंक्षीयतेकर्मकल्पकोटिशतेरपि ७३ अवश्यमेवभोक्तव्यंकृतंकर्मशुभाशुभं इ
त्येवमुक्तंवेदेचकृष्णेनपरमात्मना ७४ सामवेदोक्तशाखायांसंबोध्यकमलोद्भवं जन्मभोगावशेषेचसर्वेषां
कृतकर्मणां ७५ अनुरूपंहितेषांचभारतेन्यत्रचैवहि कर्मणाब्रह्मशापंचकर्मणाचशुभाशिषं ७६ कर्म
णाचमहालक्ष्मींलभेद्दैन्यंचकर्मणा कोटिजन्मार्जितंकर्मजीविनामनुगच्छति ७७ नहित्यजेद्विनाभोगं
तच्छायेवपुरंदर कालभेदेदेशभेदेपात्रभेदेचकर्मणां ७८ न्यूनताधिकभावोपिभवेदेवहिकर्मणा वस्तु
दानेनवस्तूनांसमंपुण्यंदिनेदिने ७९ दिनभेदेकोटिगुणमसंख्यंवाधिकंतथा समेदेशेचवस्तूनांदानेपुण्यं
समंस्मर ८० देशभेदेकोटिगुणमसंख्यंवाततोधिकं समेपात्रेसमेपुण्यंवस्तूनांकर्तुरेवच ८१ पात्र
भेदेशतगुणमसंख्यंवाततोधिकं यथाफलंतिसस्यानिन्यूनान्यप्याधिकानिच ८२ कर्षकाणांक्षेत्रभेदेपा
त्रभेदेफलंतथा सामान्यदिवसेविप्रदानंसमफलंभवेत् ८३ अमायांरविसंक्रांत्यांफलंशतगुणंभवेत्
चातुर्मास्यांपौर्णमास्यामनंतंफलमेवच ८४ ग्रहणेशशिनःकोटिगुणंचफलमेवच सूर्यस्यग्रहणेवा
पिततोशतगुणंभवेत् ८५ अक्षयायामक्षयंतदसंख्याफलमुच्यते एवमन्यत्रपुण्याहेफलाधिक्यंभवे
दिति ८६

-म्यंभवतीतिसविस्तरवर्णयति दिनभेदेइति ८० ८१ ८२ यथाकर्षकाणांक्षेत्रभेदसस्यानिन्यूनान्यधिकानिवाफलंतितद्वदित्यर्थः ८३
८४ ८५ अक्षयायांनवम्यां ८६

च्चकारालोचनंविचारंकृतवतीत्यर्थः तमेवविचारमाह अकृत्वेति द्विजन्मनांनित्यां २८ लभिष्यतिलप्स्यति पूर्वांप्रातःसंध्यां २९ ३० ३१

धर्मलोपभयेनैवच्चकारालोचनंसती अकृत्वापश्चिमांसंध्यांनित्यांचैवद्विजन्मनां २८ ब्रह्महत्यादिकंपापंलभिष्यतिपतिर्मम नोपतिष्ठतियःपूर्वांनोपास्तेयस्तुपश्चिमां २९ ससर्वत्राशुचिर्नित्यंब्रह्महत्यादिकंलभेत् वेदोक्तमितिसंचिंत्यबोधयामाससुंदरी ३० सचबुद्धोमुनिश्रेष्ठस्तांचुकोपभृशंमुने मुनिरुवाच कथंमेसुखिनःसाध्वीनिद्राभंगःकृतस्त्वया ३१ व्यर्थंव्रतादिकंतस्यायाभर्तुश्चापकारिणी तपश्चानशनंचैवव्रतंदानादिकंचतत् ३२ भर्तुरप्रियकारिण्याःसर्वंभवतिनिष्फलं ययाप्रियःपूजितश्चश्रीकृष्णःपूजितस्तया ३३ पतिव्रताव्रतार्थंचपतिरूपोहरिःस्वयं सर्वदानंसर्वयज्ञःसर्वतीर्थनिषेवणं ३४ सर्वंव्रततपःसर्वमुपवासादिकंचयत् सर्वधर्मश्चसत्यंचसर्वदेवप्रपूजनं ३५ तत्सर्वंस्वामिसेवायाःकलांनार्हतिषोडशीं पुण्येचभारतेवर्षेपतिसेवांकरोतिया ३६ वैकुंठेस्वामिनासार्द्धंसायातिब्रह्मणःपदं विप्रियंकुरुतेभर्तुर्विप्रियंवदतिप्रियं ३७ असत्कुलेप्रसूताहितत्फलंश्रूयतांसति कुंभीपाकंव्रजेत्सायावच्चंद्रदिवाकरौ ३८ ततोभवतिचांडालीपतिपुत्रविवर्जिता इत्युक्त्वाचमुनिश्रेष्ठोबभूवस्फुरिताधरः ३९ चकंपेतेनसासाध्वीभयेनोवाचतंपतिं साध्व्युवाच संध्यालोपभयेनैवनिद्राभंगःकृतस्तव ४० कुरुशांतिंमहाभागदुष्टायाममसुव्रत शृंगाराहारनिद्राणांयश्चभंगंकरोतिवै ४१ सव्रजेत्कालसूत्रंवैयावच्चंद्रदिवाकरः इत्युक्त्वामनसादेवीस्वामिनश्चरणांबुजे ४२ पपातभक्त्याभीताचरुरोदचपुनःपुनः कुपितंचमुनिंदृष्ट्वाश्रीसूर्यंशप्तुमुद्यतं ४३

३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० शृंगारोरतिः ४१ ४२ शप्तुमुद्यतमिति मदर्घ्यदानंविनाकथमयमस्ताचलंप्राप्तइतिहेतोः ४३

४४ ४५ ४६ यतोयस्मात्क्रोधात् ४७ ४८ ४९ प्रतिज्ञापालनायचेति यदीयंममाज्ञानपालयिष्यतितदैनांत्यक्ष्यामीतिवि

तत्राजगामभगवान्संध्ययासहनारद तत्रागत्यमुनिंसम्यगुवाचभास्करःस्वयं ४४ विनयेनचभीतश्च-
तयासहयथोचितं भास्करउवाच सूर्यास्तसमयंदृष्ट्वासाध्वीधर्मभयेनच ४५ बोधयामासत्वांविप्रशर
णंत्वामहंगतः क्षमस्वभगवन्ब्रह्मन्मांशप्तुंनोचितंमुने ४६ ब्राह्मणानांचहृदयंनवनीतसमंसदा तेषांक्ष
णार्द्धः क्रोधश्चयतोभस्मभवेज्जगत् ४७ पुनःस्रष्टुंद्विजःशक्तोनतेजस्वीद्विजात्परः ब्राह्मणोब्रह्मणोव
शःप्रज्वलन्ब्रह्मतेजसा ४८ श्रीकृष्णंभावयेन्नित्यंब्रह्मज्योतिःसनातनं सूर्यस्यवचनंश्रुत्वाद्विजस्तुष्टोब
भूवह ४९ सूर्योजगामस्वस्थानंगृहीत्वाब्राह्मणाशिषं तत्याजमनसांविप्रःप्रतिज्ञापालनायच ५० रुदं
तींशोकसंयुक्तांहृदयेनविदूयता सासस्मारगुरुंशंभुमिष्टदेवंविधिंहरिं ५१ कश्यपंजन्मदातारंविपत्तोभ
यकर्षिता तत्राजगामगोपीशोभगवाञ्छंभुरेवच ५२ विधिश्चकश्यपश्चैवमनसापरिचिंतितः दृष्ट्वाविप्रो
भीष्टदेवंनिर्गुणंप्रकृतेःपरं ५३ तुष्टावपरयाभक्त्याप्रणनाममुहुर्मुहुः नमश्चकारशंभुंचब्रह्माणंकश्यपं
तथा ५४ कथमागमनंदेवाइतिप्रश्नंचकारसः ब्रह्मातद्वचनंश्रुत्वासहसासमयोचितं ५५ प्रत्युवाचनम
स्कृत्यहृषीकेशपदांबुजं यदित्यक्ताधर्मपत्नीधर्मिष्ठामनसासती ५६ कुरुष्वास्यांसुतोत्पत्तिंस्वधर्मपालना
यवै जायायांचसुतोत्पत्तिंकृत्वापश्चात्त्यजेन्मुने ५७ अकृत्वातुसुतोत्पत्तिंविरागीयस्त्यजेत्प्रियां स्रव
तेतस्यपुण्यंचचालन्यांचयथाजलं ५८ ब्रह्मणोवचनंश्रुत्वाजरत्कारुर्मुनीश्वरः चकारनाभिसंस्पर्शंयोज
नंमंत्रपूर्वकं ५९

वाहसमयेकृताप्रतिज्ञेतितुपुराणांतरेप्रसिद्धंतस्याःपालनाय ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९

एवंमुनिश्रेष्ठेतिनारदसंबोधनंद्वितीयंप्रथमांतंजरत्कारोर्नाम ६० ६१ ६२ प्रियस्यपत्युः प्रियवादिनी ६३ योबंधुःसहरिभक्तिप्रदश्चेदेव



मनसायामुनिश्रेष्ठमुनिश्रेष्ठउवाचतां जरत्कारुरुवाच गर्भेणानेनमनसेतवपुत्रोभविष्यति ६० जितें
द्रियाणांप्रवरोधार्मिष्ठोब्राह्मणाग्रणीः तेजस्वीन्चतपस्वीन्चयशस्वीन्चगुणान्वितः ६१ वरोवेदविदांन्चैव
ज्ञानिनांयोगिनांतथा सन्चपुत्रोविष्णुभक्तोधार्मिकःकुलमुद्धरेत् ६२ नृत्यंतिपितरःसर्वेजन्ममात्रेणवै
मुदा पतिव्रतासुशीलायासाप्रियाप्रियवादिनी ६३ धर्मिष्ठापुत्रमातान्चकुलस्त्रीकुलपालिका हरिभ
क्तिप्रदोबंधुर्नचाभीष्टसुखप्रदः ६४ योबंधुश्चेत्सन्चपिताहरिवर्मप्रदर्शकः सागर्भधारिणीयान्चगर्भा-
वासविमोन्चनी ६५ दयारूपान्चभगिनीयमभीतिविमोन्चिनी विष्णुमंत्रप्रदातान्चसगुरुर्विष्णुभक्तिदः
६६ गुरुश्चज्ञानदोयोहियज्ज्ञानंकृष्णभावनं आब्रह्मस्तंबपर्यंतंयतोविश्वंचराचरं ६७ आविर्भूतंति
रोभूतंकिंवाज्ञानंतदन्यतः वेदजंयज्ञजंयद्यत्तत्सारंहरिसेवनं ६८ तत्त्वानांसारभूतंन्चहरेरन्यद्विडंबनं दत्तंज्ञा
नंमयातुभ्यंसस्वामीज्ञानदोहियः ६९ ज्ञानात्प्रमुन्च्यतेबंधात्सरिपुर्योहिबंधदः विष्णुभक्तियुतंज्ञानं-
नोददातिहियोगुरुः ७० सरिपुःशिष्यघातीन्चयतोबंधान्नमोन्चयेत् जननीगर्भजक्लेशाद्यमयातनयात
था ७१ नमोन्चयेद्यःसकथंगुरुस्तातोहिबांधवः परमानंदरूपंन्चकृष्णमार्गमनश्वरं ७२ नदर्शयेद्यःस
ततंकीदृशोबांधवोनृणां भजसाध्विपरंब्रह्माच्युतंकृष्णंचनिर्गुणं ७३ निर्मूलंन्चभवेत्पुंसांकर्मवैतस्यसे
वया मयाछ्छलेनत्वंत्यक्ताक्षमस्वैवंममप्रिये ७४

बंधुर्नकेवलमभीष्टसुखप्रदोबंधुरित्यर्थः एवंसर्वत्रयोज्यं ६४ ६५
६६ ६७ किंवाज्ञानमितिकिंशब्दःक्षेपे कृष्णःपरंब्रह्मतस्यभावनादन्यत्किंज्ञानमस्तिनकिमपीत्यर्थः ६८ ६९ ७० ७१ ७२ ७३ ७४

७५ ७६ ७७ यत्र स्मरामीति यदास्मरामितदामांप्रत्यागच्छेत्यर्थः ७८ ७९ ८० ८१ ८२ ८४ क्रोडमंकं ८५

क्षमायुतानांसाध्वीनांसत्त्वात्क्रोधोनविद्यते पुष्करेतपसेयामिगच्छदेवियथासुखं ७५ श्रीकृष्णाचरणांभोजे
निःस्पृहाणांमनोरथाः जरत्कारुवचःश्रुत्वामनसाशोककातरा ७६ साश्रुनेत्राचविनयादुवाचप्राणवल्ल
भं मनसोवाच दोषोनास्त्येवमेत्यक्तुंनिद्राभंगेनतेप्रभो ७७ यत्रस्मरामित्वांनित्यंतत्रमामागमिष्यसि बं
धुभेदः क्लेशतमःपुत्रभेदस्ततःपरं ७८ प्राणेशभेदःप्राणानांविच्छेदात्सर्वतःपरः पतिःपतिव्रतानांतुशतपु
त्राधिकंप्रियः ७९ सर्वस्मात्तुप्रियःस्त्रीणांप्रियस्तेनोच्यतेबुधैः पुत्रिणांचैवपुत्रेषुवैष्णवानांयथाहरौ ८०
नेत्रेयथैकनेत्राणांतृषितानांयथाजले क्षुधितानांयथान्नेचकामुकानांचमैथुने ८१ यथापरस्वेचौराणांय
थाजारेकुयोषितां विदुषांचयथाशास्त्रेवाणिज्येवणिजांयथा ८२ तथाशश्वन्मनःकांतेसाध्वीनांयो
षितांप्रभो इत्युक्त्वामनसादेवीपतित्वास्वामिनःपदे ८३ क्षणंचकारक्रोडेतांकृपयाचकृपानिधिः ने
त्रोदकेनमनसांस्नापयामासतांमुनिः ८४ साश्रुनेत्रामुनेःक्रोडंसिषेवेभेदकातरा तदाज्ञानेनतौद्वौच
विशोकौसंबभूवतुः ८५ स्मारंस्मारंपदांभोजंकृष्णस्यपरमात्मनः जगामतपसेविप्रःस्वकांतांसंप्रबो
ध्यच ८६ जगाममनसाशंभोःकैलासंमंदिरंगुरोः पार्वतीबोधयामासमनसांशोककर्षितां ८७
शिवश्चातीवज्ञानेनशिवेनचशिवालयः सुप्रशस्तेदिनेसाध्वीसुषुवेमंगलक्षणे ८८ नारायणांशंपुत्रं
तंयोगिनांज्ञानिनांगुरुं गर्भस्थितोमहाज्ञानंश्रुत्वाशंकरवक्त्रतः ८९ संबभूवचयोगींद्रोयोगिनांज्ञानि
नांगुरुः जातकंकारयामासवाचयामासमंगलं ९०

८६ ८७ ८८ ८९ ९० ९१

शिशोःशिवाय ९१ ९२ ज्ञानमपरोक्षंसंजीविनींवा ९३ यस्याःमनसायाःआस्तिकशब्दोस्मिन्नर्थेपृषोदरादित्वात्साधुः ९४ महामंत्रं

वेदांश्चपाठयामासशिवायचशिवःशिशोः मणिरत्नकिरीटांश्चब्राह्मणेभ्योददौशिवः ९१ पार्वतीचग
वांलक्षंरत्नानिविविधानिच शंभुश्चचतुरोवेदान्वेदांगानितरांस्तथा ९२ बालकंपाठयामासज्ञानंमृत्युंज
यंपरं भक्तिरस्त्यधिकाकांतेभीष्टदेवेगुरौतथा ९३ यस्यास्तेनचतत्पुत्रोबभूवास्तीकएवच जगामत
पसेविष्णोःपुष्करंशंकराज्ञया ९४ संप्राप्यचमहामंत्रंततश्चपरमात्मनः दिव्यंवर्षत्रिलक्षंचतपस्त-
प्त्वातपोधनः ९५ आजगाममहायोगीनमस्कर्तुंशिवंप्रभुः शंकरंचनमस्कृत्यस्थित्वातत्रैवबालकः
९६ साचाजगाममनसाकश्यपस्याश्रमंपितुः तांसपुत्रांसुतांदृष्ट्वामुदंप्रापप्रजापतिः ९७ शतलक्षं-
चरत्नानांब्राह्मणेभ्योददौमुने ब्राह्मणान्भोजयामाससोसंख्यान्श्रेयसेशिशोः ९८ अदितिश्चदिति
श्चान्यामुदंप्रापपरंतप सासपुत्राचसुचिरंतस्थौतातालयेसदा ९९ तदीयंपुनराख्यानंवक्ष्यामितन्निशा
मय अथाभिमन्युतनयेब्रह्मशापःपरिक्षिते १०० बभूवसहसाब्रह्मन्दैवदोषेणकर्मणा सप्ताहेसम-
तीतेतुतक्षकस्त्वांचधक्ष्यति १०१ शशापशृंगीतत्रैवकौशिक्याश्चजलेनवै राजाश्रुत्वातत्प्रवृत्तिंनिर्वा
तस्थानमागतः २ तत्रतस्थौचसप्ताहंदेहरक्षणतत्परः सप्ताहेसमतीतेतुगच्छंतंतक्षकंपथि ३ धन्वं
तरिर्नृपंभोक्तुंददर्शगामुकःपथि तयोर्बभूवसंवादःस्तप्रीतिश्चपरस्परं ४ धन्वंतरिर्मणिंप्रापतक्षकः
स्वेच्छयाददौ सययौतंगृहीत्वातुसंतुष्टोहृष्टमानसः १०५ मूलप्रकृतेर्मंत्रं ९५ ९६ ९७ ९८ ९९
१०० १०१ १०२ तक्षकमितिनृपंभोक्तुंगच्छंतंतक्षकंधन्वंतरिर्ददर्शेत्यन्वयः १०३ गामुकोगंतुकामः १०४ १०५ ६ ६

१०६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० प्रणवमायाश्रीबीजाद्यो

तक्षकोभक्षयामासनृपंतंमंचकेस्थितं राजाजगामतरसादेहंत्यक्त्वापरत्रच १०६ संस्कारंकारयामासपि
तुर्वेजनमेजयः राजाचकारयज्ञंचसर्पसत्रंततोमुने ७ प्राणांस्तत्याजसर्पाणांसमूहोब्रह्मतेजसा सतक्ष
कोवैभीतस्तुमहेंद्रंशरणंययौ ८ सेंद्रंचतक्षकंहंतुंविप्रवर्गःसमुद्यतः अथदेवाश्चसेंद्राश्चसंजग्मुर्मनसांतिकं ९
तांतुष्टावमहेंद्रश्चभयकातरविह्वलः ततआस्तीकआगत्ययज्ञंचमातुराज्ञया १० महेंद्रतक्षकप्राणा
न्ययाचेभूमिपंपरं ददौवरंनृपश्रेष्ठःकृपयाब्राह्मणाज्ञया ११ यज्ञंसमाप्यविप्रेभ्योदक्षिणांचददौमु-
दा विप्राश्चमुनयोदेवागत्वाचमनसांतिकं १२ मनसांपूजयामा सुस्तुष्टुवुश्चपृथक्पृथक् शक्रःसं-
भृतसंभारोभक्तियुक्तःसदाशुचिः १३ मनसांपूजयामासतुष्टावपरमादरं दत्त्वाषोडशोपचारंबलिंचतत्प्रि
यंतदा १४ प्रददौपरितुष्टश्चब्रह्मविष्णुशिवाज्ञया संपूज्यमनसांदेवींप्रययुःस्वालयंचते १५ इत्येवंक
थितंसर्वंकिंभूयःश्रोतुमिच्छसि नारदउवाच केनस्तोत्रेणतुष्टावमहेंद्रोमनसांसतीं १६ पूजाविधि-
क्रमंतस्याःश्रोतुमिच्छामितत्त्वतः नारायणउवाच सुस्नातःशुचिराचांतोधृत्वाधौतेचवाससी १७ रत्न
सिंहासनेदेवींवासयामासभक्तितः स्वर्गंगायाजलेनैवरत्नकुंभस्थितेनच १८ स्नापयामासमनसांमहेंद्रो
वेदमंत्रतः वाससीवासयामासवह्निशुद्धेमनोहरे १९ सर्वांगेचंदनंकृत्वापादार्घ्यंभक्तिसंयुतः गणेशंच
दिनेशंचवह्निंविष्णुंशिवंशिवां २० संपूज्यादौदेवषट्कंपूजयामासतांसतीं ॐ ह्रींश्रींमनसादेव्यैस्वाहे-
त्येवंचमंत्रतः २१

मनसादेव्यैस्वाहेत्यंतोमंत्रः १२१ ६२ ६२ ६२ ६२ ६२

दशाक्षरेणमूलमंत्रेण १२२ २३ २४ २५ २६ २७ नचशक्त इति तेनतवोत्तमस्वभावेनत्वांत्यक्तुंमुनिर्जरत्कारुर्नशक्तोयतोगमन।

दशाक्षरेणमूलेनददौसर्वंयथोचितं दत्वाषोडशोपचारान्दुर्लभान्देवनायकः १२२ पूजयामासभक्त्याच
विष्णुनाप्रेरितोमुदा वाद्यंनानाप्रकारंचवादयामासतत्रवै २३ बभूवपुष्पवृष्टिश्चनभसोमनसोपरि दे
वप्रियाज्ञयातत्रब्रह्मविष्णुशिवाज्ञया २४ तुष्टावसाश्रुनेत्रश्चपुलकांकितविग्रहः पुरंदरउवाच देवि
त्वांस्तोतुमिच्छामिसाध्वीनांप्रवरांवरां २५ परात्परांचपरमांनहिस्तोतुंक्षमोधुना स्तोत्राणांलक्षणंवेदे
स्वभावाख्यानतत्परं २६ नक्षमःप्रकृतेवक्तुंगुणानांगणनांतव शुद्धसत्त्वस्वरूपात्वंकोपहिंसाविवर्जि
ता १२७ नचशक्तोमुनिस्तेनत्यक्तुंयाच्ञाकृतायतः त्वंमयापूजितासाध्वीजननीमेयथादितिः १२८
दयारूपाचभगिनीक्षमारूपायथाप्रसूः त्वयामेरक्षिताःप्राणाःपुत्रदाराःसुरेश्वरि १२९ अहंकरोमि
त्वत्पूजांप्रीतिश्चवर्द्धतांसदा नित्यायद्यपिपूज्यात्वंसर्वत्रजगदंबिके १३० तथापितवपूजांचवर्द्धयामि
सुरेश्वरि येत्वामाषाढसंक्रांत्यांपूजयिष्यंतिभक्तितः १३१ पंचम्यांमनसाख्यायांमासांतेवादिनेदि
ने पुत्रपौत्रादयस्तेषांवर्धतेचधनानिवै १३२ यशस्विनःकीर्तिमंतोविद्यावंतोगुणान्विताः येत्वांन-
पूजयिष्यंतिनिंदंत्यज्ञानतोजनाः १३३ लक्ष्मीहीनाभविष्यंतितेषांनागभयंसदा त्वंस्वयंसर्वलक्ष्मी
श्चवैकुंठेकमलालया १३४ नारायणांशोभगवान्जरत्कारुर्मुनीश्वरः तपसातेजसात्वांचमनसाससृजे
पिता १३५ अस्माकंरक्षणायैवतेनत्वंमनसाभिधा मनसादेविशक्त्यात्वंस्वात्मनासिद्धयोगिनी १३६ यत्वांप्र

तिया च्चांकृतवांस्तस्मात्तसुत्तमगुणासीतिभावः २८ २९ ३० ३१ पंचम्यांमनसाख्यायामितिमनसेत्याख्यायस्याःसापंचमीनागपंचमीत्यर्थः ३२ ३३ ३४
३५ १३६

१३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ १४५ इतिश्रीदेवीभागवततिलकेनवमस्कंधेष्टचत्वारिंशोध्यायः ४८ त्रयस्त्रिंश-

तेनत्वंमनसादेवीपूजितावंदिताभव येभक्त्यामनसादेवीं पूजयंत्यनिशंभृशं ३७ तेनत्वांमनसादेवींप्रवदं-
तिमनीषिणः सत्यस्वरूपादेविस्वंशश्वत्सत्यनिषेवणात् ३८ योहित्वांभावयेन्नित्यंसत्वांप्राप्नोतितत्परः
इंद्रश्चमनसांस्तुत्वागृहीत्वाभगिनीवरं ३९ प्रजगामस्वभवनंभूषयासपरिच्छदं पुत्रेणसार्द्धंसादेवीचिरंत
स्थौपितुर्गृहे ४० धातृभिःपूजिताशश्वन्मान्यावंद्याचसर्वतः गोलोकात्सुरभिर्ब्रह्मन्तत्रागत्यसुपूजितां ४१
तांस्नापयित्वाक्षीरेणपूजयामाससादरं ज्ञानंचकथयामासगोप्यंसर्वसुदुर्लभम् ४२ तयादेवैःपूजितासा
स्वर्लोकंचपुनर्ययौ इंद्रस्तोत्रंपुण्यबीजंमनसांपूजयेत्पठेत् ४३ तस्यनागभयंनास्तितस्यवंशोद्भवस्यच
-विषंभवेत्सुधातुल्यंसिद्धस्तोत्रोयदाभवेत् ४५ पंचलक्षजपेनैवसिद्धस्तोत्रोभवेन्नरः सर्पशायीभवेत्सो
पिनिश्चितंसर्पवाहनः १४५ इतिश्रीदेवीभागवतेमहापुराणेनवमस्कंधेष्टचत्वारिंशोध्यायः ४८

नारदउवाच कावासासुरभिर्देवीगोलोकादागतात्वया तज्जन्मचरितंब्रह्मञ्छ्रोतुमिच्छामियत्नतः
१ नारायणउवाच गवामधिष्ठातृदेवीगवामाद्यागवांप्रसूः गवांप्रधानासुरभिर्गोलोकेसासमुद्भवा २
सर्वादिसृष्टेश्चरितंकथयामिनिशामय बभूवतेनतज्जन्मपुरावृंदावनेवने ३ एकदाराधिकानाथो
राधयासहकौतुकी गोपांगनापरिवृतोपुण्यवृंदावनंययौ ४

-महापद्येःसुरभ्याख्यानमुच्यते गावोयस्याः
समुद्भूतायाचगोनायिकास्मृता १ पूर्वाध्यायेसुरभ्यामहिमानंश्रुत्वापृच्छतिकावासेति १ समुद्भवेत्यर्शआद्यजंतंसमुद्भूतेत्य-
र्थः २ सर्वादिसृष्टेरिति सर्वगवामादावुत्पन्नायाइत्यर्थः तेनकारणेनेत्यर्थः ३ ४ ५ ६ ७

५ मनोरथोयथेष्टेच्छातद्रूपस्तस्याःसुरभ्यामनोरथोवत्सः ६ ७ भांडविस्त्रंसनेनहस्ताद्भांडस्यपतनेन ८ ९ १० यावंतोगोलोके-



सहसातत्ररहसिविजहाररसकौतुकात् बभूवक्षीरपानेच्छातस्यस्वेच्छामयस्यच ५ ससृजेसुरभिंदे
वीलीलयावामपार्श्वतः वत्सयुक्तांदुग्धवतींवत्सोनाममनोरथः ६ दृष्ट्वासवत्सांश्रीदामानवभांडेदुदो
हच क्षीरंसुधातिरिक्तंचजन्ममृत्युजराहरं ७ तदुष्णंचपयःस्वादुपपौगोपीपतिःस्वयं सरोबभूवपयसांभां
डविस्त्रंसनेनच ८ दीर्घंचविस्तृतंचैवपरितःशतयोजनं गोलोकेयंप्रसिद्धश्चसोपिक्षीरसरोवरः ९ गोपि
कानांचराधायाःक्रीडावापीबभूवसा रत्नेंद्ररचितापूर्णभूताचापीश्वरेच्छया १० बभूवकामधेनूनां
सहसालक्षकोटयः यावंतस्तत्रगोपाश्चसुरभ्यालोमकूपतः ११ तासांपुत्राश्चबहवःसंबभूवुरसंख्य
काः कथितान्वगवांसृष्टिस्तयाच्चपूजितंजगत् १२ पूजांचकारभगवान्सुरभ्याश्चपुरामुने ततोबभूव
तत्पूजात्रिषुलोकेषुदुर्लभा १३ दीपान्वितापरदिनेश्रीकृष्णस्याज्ञयाहरेः बभूवसुरभिःपूज्याधर्मव
क्त्रादिदंश्रुतं १४ ध्यानंस्तोत्रंमूलमंत्रंयद्यत्पूजाविधिक्रमं वेदोक्तंचमहाभागेनिबोधकथयामिते
१५ ॐसुरभ्यैनमइतिमंत्रस्तस्याःषडक्षरः सिद्धोलक्षजपेनैवभक्तानांकल्पपादपः १६ ध्यानंय
जुर्वेदगीतंतस्याःपूजाचसर्वतः ऋद्धिदावृद्धिदाचैवमुक्तिदासर्वकामदा १७ लक्ष्मीस्वरूपांपर-
मांराधांसहचरींपरां गवामधिष्ठातृदेवींगवामाद्यांगवांप्रसूं १८ पवित्ररूपांपूतांचभक्तानांसर्वका
मदां ययापूतंसर्वविश्वंतांदेवींसुरभिंभजे १९

गोपाःसंतितेषांगृहेएकैकाकामधेनुर्भवत्वितीच्छयाबभूवेत्यर्थः



११ १२ १३ दीपान्वितेति दीपान्विताआश्विनकृष्णामावास्यातस्याःपरदिनेइत्यर्थः १४ १५ प्रणवादिर्मंत्रः १६ १७ १८ १९ ६७

गवांबंधनस्तंभेइत्यर्थः २० २१ वाराहेकल्पेचिंतिताश्चिंतायुक्ताः २२ २३ २४ २५ २६ २७ २८ २९ सुरस्य
सुरसमूहस्य ३० ३१ ३२ ३३ इतिश्रीदेवीभागवततिलकेनवमस्कंधेएकोनपंचाशत्तमोध्यायः ४९ राधायाश्चैवदुर्गाया-

घटेवाधेनुशिरसिबंधस्तंभेगवामपि शालग्रामेजलाग्नौवासुरभिंपूजयेद्द्विजः २० दीपान्वितापरदिनेपूर्वा
ण्हेभक्तिसंयुतः यःपूजयेच्चसुरभिंसचपूज्योभवेद्भुवि २१ एकदात्रिषुलोकेषुवाराहेविष्णुमायया क्षी
रंजहारसुरभिश्चिंतिताश्चसुरादयः २२ तेगत्वाब्रह्मलोकेचब्रह्माणंतुष्टुवुस्तदा तदाज्ञयाच्चसुरभिं
तुष्टावपाकशासनः २३ पुरंदरउवाच नमोदेव्यैमहादेव्यैसुरभ्यैचनमोनमः गवांबीजस्वरूपायैनम-
स्तेजगदंबिके २४ नमोराधाप्रियायैचपद्मांशायैनमोनमः नमःकृष्णप्रियायैचगवांमात्रेनमोनमः
२५ कल्पवृक्षस्वरूपायैसर्वेषांसततंपरे क्षीरदायैधनदायैबुद्धिदायैनमोनमः २६ शुभदायैसुभद्रा-
यैगोप्रदायैनमोनमः यशोदायैकीर्तिदायैधर्मदायैनमोनमः २७ स्तोत्रश्रवणमात्रेणतुष्टाहृष्टाजगत्प्रसूः
आविर्बभूवतत्रैवब्रह्मलोकेसनातनी २८ महेंद्रायवरंदत्वावांछितंचापिदुर्लभं जगामसाचगोलोकंय
युर्देवादयोगृहं २९ बभूवविश्वंसहसादुग्धपूर्णंचनारद दुग्धंघृतंततोयज्ञस्ततःप्रीतिःसुरस्यच ३० इदं
स्तोत्रंमहापुण्यंभक्तियुक्तश्चयःपठेत् सगोमान्धनवांश्चैवकीर्तिमान्पुत्रवांस्तथा ३१ सस्नातःसर्वती
र्थेषुसर्वयज्ञेषुदीक्षितः इहलोकेसुखंभुक्त्वायात्यंतेकृष्णमंदिरे ३२ सुचिरंनिवसेत्तत्रकरोतिकृष्णसेवनं न
पुनर्भवनंतत्रब्रह्मपुत्रोभवेत्ततः ३३ इतिश्रीदेवीभा० म० नवमस्कंधेएकोनपंचाशत्तमोध्यायः ४९ नारदउ०
श्रुतंसर्वमुपाख्यानंप्रकृतीनांयथातथं यच्छ्रुत्वामुच्यतेजंतुर्जन्मसंसारबंधनात् १ विधानंसकलार्थदं समासतःप्रोच्यतेत्रशत
श्लोकैरतःपरं १

अत्रनवमस्कंधेतृतीयाध्यायेदुर्गायाश्चैवराधायाविस्तीर्णंचरितंमहत् तद्वत्सश्चात्रवक्ष्यामिसंक्षेपक्रमतः शृण्वित्युक्तंतत्पृच्छतिनारदः श्रुतंसर्वमिति १
२ महिमातुतयोर्वर्णितएवेतिनसपृच्छ्यतइत्याह महिमेति परयोराधादुर्गयोस्त्वंमहिमानं ३ ययोराधादुर्गयोःजगत्सर्वंपूर्वोक्तरीत्यांशोभवतीत्य
र्थः विधानंमंत्रानुष्ठानप्रकाररूपं ४ ५ मूलप्रकृतिरूपिण्याःपरसंविदोभुवनेश्वर्याः सकाशाज्जगदुद्भवेसतिसमष्टिव्यष्टिप्राणानामधिदैवतं
राधाशक्तिरूपंतथासमष्टिव्यष्टिबुद्धी नामधिदैवतंदुर्गारूपमितिशक्तियुग्मंप्रादुर्भूतमितिपूर्वकथास्मारिता ६ ७ यतएतच्छक्तियुग्मं

अधुनाश्रोतुमिच्छामिरहस्यंवेदगोपितं राधायाश्चैवदुर्गायाविधानंश्रुतिचोदितं २ महिमावर्णितो
तीवभवतापरयोर्द्वयोः श्रुत्वातंतद्भुतंचेतोनकस्यस्यान्मुनीश्वर ३ ययोरंशोजगत्सर्वंयन्नियम्यंचराचरं
ययोर्भक्त्याभवेन्मुक्तिस्तद्विधानंवदाधुना ४ नारायणउवाच शृणुनारदवक्ष्यामिरहस्यंश्रुतिनोदितं
यन्नकस्यापिचाख्यातंसारात्सारपरात्परं ५ श्रुत्वापरस्मैनोवाच्यंयतोतीवरहस्यकं मूलप्रकृतिरूपि-
ण्याःसंविदोजगदुद्भवे ६ प्रादुर्भूतंशक्तियुग्मंप्राणबुद्ध्यधिदैवतं जीवानांचैवसर्वेषांनियंतृप्रेरकंसदा
७ तदधीनंजगत्सर्वंविराडादिचराचरं यावत्तयोःप्रसादोनतावन्मोक्षोहिदुर्लभः ८ ततस्तयोःप्रसा-
दार्थंनित्यंसेवेततद्द्वयं तत्राद्योराधिकामंत्रंशृणुनारदभक्तितः ९ ब्रह्मविष्ण्वादिभिर्नित्यंसेवितोयंप
रात्परः श्रीराधेतिचतुर्थ्यंतंवह्निजायाततःपरं १० षडक्षरोमहामंत्रोधर्माद्यर्थप्रकाशकः मायाबीजा-
दिकश्चायंवांछाचिंतामणिःस्मृतः ११

प्राणबुद्ध्यधिदैवंततःसर्वनियंतृभवतीत्याह तदधीनमिति मोक्षोहीति बुद्धिप्राण
संयमनाधीनोहियोगविचारोतदधीनस्तुमोक्षस्तथाचबुद्धिप्राणाधिदेवताप्रसादमंतरासदुर्लभएवेत्यर्थः ८ ९ १० एतस्यमंत्रस्यादो-
मायाबीजंदत्वामंत्रोजप्तव्यइत्याह मायाबीजेति ह्रींश्रीराधायैस्वाहेतिमंत्रः ११ ६२ ६२ ६२ ६२

१२ कृष्णायाकाशवाचामूलदेव्यैवोपदेशः कृतइत्याह उपदेशादिति १३ तेनेत्यत्रोपदिष्टइत्यस्यानुवृत्तिः १४ अहमिति नारायणोक्तिः १५ राधामंत्रोपा
सनायाआवश्यकत्वमाह कृष्णार्चायांपूजायामित्यर्थः १६ १७ राधापदव्युत्पत्तिमाह राध्नोतीति साधयतीत्यर्थः अत्रोक्तानामिति दुर्गामंत्रव्यतिरि
क्तायेस्मिन्नवमस्कंधेमंत्राउक्तास्तेषांसर्वेषामहमेवनारायणाख्य ऋषिरित्यर्थः १८ अत्रचराधिकेति अत्रैवराधामंत्रे राधादेवताअन्यमंत्रेषुतुयाया

वक्त्रकोटिसहस्रैस्तुजिव्हाकोटिशतैरपि एतन्मंत्रस्यमाहात्म्यंवर्णितुंनैवशक्यते १२ जग्राहप्रथमंमंत्रंश्रीकृष्णो
भक्तितत्परः उपदेशान्मूलदेव्यागोलोकेरासमंडले १३ विष्णुस्तेनोपदिष्टस्तुतेनब्रह्माविराट्तथा तेनधर्म
स्तेनचाहमित्येषाहिपरंपरा १४ अहंजपामितंमंत्रंतेनाहमृषिरीरितः ब्रह्माद्याःसकलादेवानित्यंध्यायंति
तांमुदा १५ कृष्णार्चायांनाधिकारोयतोराधार्चनंविना वैष्णवैःसकलैस्तस्मात्कर्तव्यंराधिकार्चनं १६
कृष्णप्राणाधिदेवीसातदधीनोविभुर्यतः रासेश्वरीतस्यनित्यंतयाहीनोनतिष्ठति १७ राध्नोतिसकलान्का
मांस्तस्माद्राधेतिकीर्तिता अत्रोक्तानांमनूनांचऋषिरस्म्यहमेवच १८ छंदश्चदेवीगायत्रीदेवतात्रचराधि
का तारोबीजंशक्तिर्बीजंशक्तिस्तुपरिकीर्तिता १९ मूलावृत्त्याषडंगानिकर्तव्यानीतरत्रच अथध्यायेन्महादे
वींराधिकारासनायिकां २० पूर्वोक्तरीत्यातुमुनेसामवेदेविगीतया श्वेतचंपकवर्णाभांशरदिंदुसमाननां २१
कोटिचंद्रप्रतीकाशांशरदंभोजलोचनां बिंबाधरांपृथुश्रोणींकांचीयुतनितंबिनीं २२ कुंदपंक्तिसमानाभदंतपं
क्तिविराजितां क्षौमांबरपरीधानांवन्हिशुद्धांशुकान्वितां २३ ईषद्धास्यप्रसन्नास्यांकरिकुंभयुगस्तनीं सदाद्वा
दशवर्षीयांरत्नभूषणभूषितां २५

देवताउक्तासैवग्राह्येत्यर्थः तारोबीजमितिसर्वमंत्रेषुनारायणऋषिः देवीगायत्रीछंदः प्रणवोबीजं
भुवनेश्वरीशक्तिरित्यर्थः १९ सर्वमंत्रेषुषडंगमाह मूलावृत्त्येति मूलमंत्रस्यषड्वारमावृत्त्याषडंगइत्यर्थः २० विगीतयाकथितयारीत्येत्यर्थः २१ २२ २३ २४

२५ २६ २७ २८ २९ ३० तत्रैवयंत्रेएवस्नानशालांतांभावयित्वातस्यांशालायांनयेदित्यर्थः ३१ वाससीप्रथमंदत्वाततोनानालंका-
रान्दत्वाचंदनंदद्यादित्यर्थः ३२ ३३ ३४ ततोष्टदलेषुदेव्यग्रस्थितपत्रमारभ्यदक्षिणावर्तक्रमेणमालावत्याद्यष्टशक्तीः पूजयेदित्यर्थः वन्हि-



शृंगाररसिंधुलहरींभक्तानुग्रहकातरां मल्लिकामालतीमालाकेशपाशविराजितां २५ सुकुमारांगलतिकांरा
समंडलमध्यगां वराभयकरांशांतांशश्वत्सुस्थिरयौवनां २६ रत्नसिंहासनासीनांगोपीमंडलनायिकां
कृष्णप्राणाधिकांवेदबोधितांपरमेश्वरीं २७ एवंध्यात्वाततोबाह्येशालग्रामेघटेथवा यंत्रेवाष्टदलेदेवींपू
जयेत्तुविधानतः २८ आवाह्यदेवींतत्पश्चादासनादिप्रदीयतां मूलमंत्रंसमुच्चार्यचासनादीनिकल्पयेत्
२९ पाद्यंतुपादयोर्दद्यान्मस्तकेर्घ्यंसमीरितं मुखेत्वाचमनीयंस्यात्त्रिवारंमूलविद्यया ३० मधुपर्कंततो
दद्यादेकांगांचपयस्विनीं ततोनयेत्स्नानशालांतांचतत्रैवभावयेत् ३१ अभ्यंगादिस्नानविधिंकल्पयि
त्वायवाससी ततश्चचंदनंदद्यान्नानालंकारपूर्वकं ३२ पुष्पमालाबहुविधास्तुलसीमंजरीयुताः पारिजा
तप्रसूनानिशतपत्रादिकानिच ३३ ततःकुर्यात्पवित्रंतत्परिवारार्चनंविभोः अग्नीशासुरवायव्यमध्येदिक्ष्वं
गपूजनं ३४ कृत्वापश्चादष्टदलेदक्षिणावर्ततोग्रतः मालावतीमग्रदलेवन्हिकोणेचमाधवीं ३५ रत्न
मालांदक्षिणेचनैर्ऋत्येतुसुशीलकां पश्चाद्दलेशशिकलांपूजयेन्मतिमान्नरः ३६ मारुतेपारिजातांचाप्युत्त
रेचपरावतीं ईशानकोणेसंपूज्यासुंदरीप्रियकारिणी ३७ ब्राह्म्याद्यस्तुतद्बाह्येप्याशापालांस्तुभूपुरे वज्रा
दिकान्यायुधानिदेवीमित्थंप्रपूजयेत् ३८ ततोदेवींसावरणांगंधाद्यैरुपचारकैः राजोपचारसहितैःपूजयेन्मति
मान्नरः ३९

कोणेइति नात्रवन्हिकोणःप्रसिद्धोग्राह्यः प्रादक्षिण्येत्यनेनविरोधापत्तेः किंतुपूज्यपूजकयोर्मध्येप्राचीत्यनेनोक्तक्रमेणैवेति
बोध्यं ३५ ३६ ३७ ३८ ३९

ततस्तुवीतदेवेशींस्तोत्रैर्नामसहस्रकैः सहस्रसंख्यंचजपंनित्यंकुर्यात्प्रयत्नतः ४० यएवंपूजयेद्देवींराधांरासे-
श्वरींपरां सभवेद्विष्णुतुल्यस्तुगोलोकंयातिसंततं ४१ यःकार्तिक्यांपौर्णिमायांराधाजन्मोत्सवंबुधः कुरुतेत
स्यसान्निध्यंदद्याद्रासेश्वरीपरा ४२ केनचित्कारणेनैवराधावृंदावनेवने वृषभानुसुताजातागोलोकस्थायि
नीसदा ४३ अत्रोक्तानांतुमंत्राणांवर्णसंख्याविधानतः पुरश्चरणकर्मोक्तंदशांशंहोममाचरेत् ४४ तिलै
स्त्रिस्वादुसंयुक्तैर्जुहुयाद्भक्तिभावतः नारदउवाच स्तोत्रंवदमुनेसम्यक्येनदेवीप्रसीदति ४५ नारायणउ
वाच नमस्तेपरमेशानिरासमंडलवासिनि रासेश्वरिनमस्तेस्तुकृष्णप्राणाधिकप्रिये ४६ नमस्त्रैलोक्यज
ननिप्रसीदकरुणार्णवे ब्रह्मविष्ण्वादिभिर्देवैर्वंद्यमानपदांबुजे ४७ नमःसरस्वतीरूपेनमःसावित्रिशंकरि
गंगापद्मावतीरूपेषष्ठिमंगलचंडिके ४८ मनसीतुलसीरूपेनमोलक्ष्मीस्वरूपिणी नमोदुर्गेभगवतिनमस्ते
सर्वरूपिणि ४९ मूलप्रकृतिरूपांत्वांभजामःकरुणार्णवां संसारसागरादस्मानुद्धरांबदयांकुरु ५० इदं
स्तोत्रंत्रिसंध्यंयःपठेद्राधांस्मरन्नरः नतस्यदुर्लभंकिंचित्कदाचिच्चभविष्यति ५१ देहांतेचवसेन्नित्यंगोलो
केरासमंडले इदंरहस्यंपरमंनचाख्येयंतुकस्यचित् ५२ अधुनाशृणुविप्रेंद्रदुर्गादेव्याविधानकं यस्याःस्म
रणमात्रेणपलायंतेमहापदः ५३ एनांनभजतेयोहिताहृक्नास्त्येवकुत्रचित् सर्वोपास्यासर्वमाताशैवी
शक्तिर्महाद्भुता ५४ सर्वबुद्ध्यधिदेवीयमंतर्यामिस्वरूपिणी दुर्गसंकटहंत्रीतिदुर्गेतिप्रथिताभुवि ५५ वैष्ण
वानांचशैवानामुपास्येयंचनित्यशः मूलप्रकृतिरूपासासृष्टिस्थित्यंतकारिणी ५६ त्रिभिस्तिलैर्जुहुयादित्यर्थः ४५ ४६ ४७
४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६

शंभुवनिता भुवनेश्वरीबीजं ५७ चामुंडायैविच्चेइतिस्वरूपग्रहणं ५८ अस्यमंत्रस्यऋषित्रयं छंदस्त्रयंदेवतात्रयंबीजत्रयंशक्तित्रयंचास्ती
त्याह ब्रह्मविष्णुमहेशानाइति ५९ ६० ६१ स्तनयोरितिबीजत्रयंदक्षिणस्तने शक्तित्रयंवामस्तने ६२ चतुर्भिश्चामुंडायैइत्य क्ष
रचतुष्टयेन द्वाभ्यांविच्चेइत्यक्षरद्वयेन सर्वेणसर्वमंत्रेण जातियुक्तानिनमःस्वाहावषट्हुंवौषट्फट्पदयुक्तानीत्यर्थः ६३ वर्णन्यासमाह



तस्यानवाक्षरंमंत्रंवक्ष्येमंत्रोत्तमोत्तमं वाग्भवंशंभुवनिताकामबीजंततःपरं ५७ चामुंडायैपदंपश्चाद्वि
च्चेइत्यक्षरद्वयं नवाक्षरोमनुःप्रोक्तोभजतांकल्पपादपः ५८ ब्रह्मविष्णुमहेशानाऋषयोस्यप्रकीर्तिताः
छंदांस्युक्तानिसततंगायत्र्युष्णिगनुष्टुभः ५९ महाकालीमहालक्ष्मीःसरस्वत्यपिदेवता स्याद्रक्तदंति-
काबीजंदुर्गाचभ्रामरीतथा ६० नंदाशाकंभरीदिव्योभीमाचशक्तयःस्मृताः धर्मार्थकाममोक्षेषुविनि
योगउदाहृतः ६१ ऋषिश्छंदोदेवतानिमौलौवक्त्रेहृदिन्यसेत् स्तनयोःशक्तिबीजानिन्यसेत्सर्वार्थसिद्ध
ये ६२ बीजत्रयैश्चतुर्भिश्चद्वाभ्यांसर्वेणचैवहि षडंगानिमनोःकुर्याज्जातियुक्तानिदेशिकः ६३ शिखायां
लोचनद्वंद्वेश्रुतिनासाननेषुच गुदेन्यसेन्मंत्रवर्णान्सर्वेणव्यापकंचरेत् ६४ खड्गचक्रगदाबाणचापानिप
रिघंतथा शूलंभुशुंडींचशिरःशंखंसंदधतींकरैः ६५ महाकालींत्रिनयनांनानाभूषणभूषितां नीलांजन
समप्रख्यांदशपादाननांभजे ६६ मधुकैटभनाशार्थंयांतुष्टावांबुजासनः एवंध्यायेन्महाकालींकामबीजस्व
रूपिणीं ६७ अक्षमालांचपरशुंगदेषुकुलिशानिच पद्मंधनुष्कुंडिकांचदंडंशक्तिमसिंतथा ६८

शिखायांलोचने
ति लोचनद्वयंश्रुतिद्वयं नासाद्वयंचदक्षवामभेदेनसर्वेणसर्वमंत्रेण ६४ ध्यानमाह खड्गेति ६५ दशपादांदशाननांचेत्यर्थः ६६ कामबीजस्वरूपि
णींनवार्णमंत्रांतर्गतकामबीजदेवतारूपिणीमित्यर्थः वाच्यवाचकयोरभेदात्कामबीज स्वरूपत्वं ६७ महालक्ष्मीध्यानमाह अक्षमालांचेति ६८

मायाबीजस्वरूपिणींनवार्णमंत्रांतर्गतमायाबीजदेवतामित्यर्थः ६९ ७० महासरस्वतीध्यानमाह घंटाशूलेति ७१ वाणीबीजस्वरूपिणीं न
वार्णमंत्रांतर्गतवाग्भवबीजदेवतेत्यर्थः ७२ एतासांदेवतानांध्यानविशेषस्तुसप्तशतीरहस्यत्रयेस्तितद्व्याख्यानेचमयास्पष्टीकृतस्तत्रैवावधार्यः यंत्र
माह यंत्रमस्याइति त्र्यस्रंत्रिकोणमित्यर्थः ७३ ७४ जयादिशक्तीति जयायैनमः विजयायै० अजितायै० अपराजितायै० नित्यायै० विलासि

चर्मांबुजंतथाघंटांसुरापात्रंचशूलकं पाशंसुदर्शनंचैवदधतीमरुणप्रभां ६९ रक्तांबुजासनगतांमायाबीज
स्वरूपिणीं महालक्ष्मींभजेदेवमहिषासुरमर्दिनीं ७० घंटाशूलेहलंशंखंमुसलंचसुदर्शनं धनुर्बाणान्हृ
स्तपद्मैर्दधानांकुंदसंन्निभां ७१ शुंभादिदैत्यसंहर्त्रीवाणीबीजस्वरूपिणीं महासरस्वतींध्यायेत्सच्चिदानं
दविग्रहां ७२ यंत्रमस्याःशृणुप्राज्ञत्र्यस्रंषट्कोणसंयुतं ततोष्टदलपद्मंचचतुर्विंशतिपत्रकं ७३ भूगृहे
णसमायुक्तंयंत्रमेवंविचिंतयेत् शालग्रामेघटेवापियंत्रेवाप्रतिमासुवा ७४ बाणलिंगेथवासूर्येयजे-
द्देवीमनन्यधीः जयादिशक्तिसंयुक्तेपीठेदेवींप्रपूजयेत् ७५ पूर्वकोणेसरस्वत्यासहितंपद्मजंयजेत्
श्रियासहहरिंतत्रनैर्ऋतेकोणकेयजेत् ७६ पार्वत्यासहितंशंभुंवायुकोणेसमर्चयेत् देव्याउत्तरतःपूज्यः
सिंहोवामेमहासुरं ७७ महिषंपूजयेद्देतषट्कोणेषुयजेत्क्रमात् नंदजांरक्तदंतांचतथाशाकंभरींशिवां ७८
दुर्गांभीमांभ्रामरींचततोवसुदलेषुच ब्राह्मींमाहेश्वरींचैवकौमारींवैष्णवींतथा ७९

न्यै० दोग्ध्र्यै० अघोरायै०
मंगलायै० इत्येताःपीठशक्तयोनवमस्कंधोक्तसर्वदेवतानांबोध्याः पीठेनुक्तेशक्तिपीठमितिसामान्यपरिभाषोक्तत्वात् ७५ आवरणदेवताआह
पूर्वकोणेइति देव्यग्रकोणेइत्यर्थः सरस्वतीसहिताय ब्रह्मणेनमः इतिप्रयोगः एवमन्यत्रबोध्यं ७६ उत्तरतोदक्षिणदेशे वामेवामभागे तदु
क्तं वामभागेगतोदेव्याश्छिन्नशीर्षमहासुरं पूजयेन्महिषंयेनप्राप्तंसायुज्यमीशयेति ७७ ७८ वसुदलेषुअष्टदलेषु ७९ ६८ ६९

तत्त्वपत्रेषुचतुर्विंशतिपत्रेषु पूर्वतोदेव्यग्रपत्रमारभ्य ८० ८१ ८२ ८३ तद्वाह्येभूपुरे ८४ मंत्रार्थपूर्वकमिति अथमंत्रेमंत्रार्थः मंत्रेबीजत्रयं क्रमेणमहासरस्वतीमहालक्ष्मीमहाकालीनांवाचकंविच्चेइत्यत्रापिचित्चइइतिपदत्रयंक्रमेणचित्सदानंदानांवाचकं तच्चसंबोधनांतंबीजत्रयस्यक्रमेणविशेषणं चामुंडापदंब्रह्मविद्यावाचकं तादर्थ्येचतुर्थीअनुसंदध्महेइतिशेषः तथाचायमर्थः हेचिद्रूपिणिमहासरस्वतिहेसद्रूपिणिमहालक्ष्मीः हेआनंदरूपिणीमहाकालित्वांचामुंडायैब्रह्मविद्याप्राप्त्यर्थमनुसंदध्महेध्यायामइत्यर्थः तदयंसंग्रहः महासरस्वतिचित्तेमहालक्ष्मीः स

वाराहींनारसिंहींचऐंद्रींचामुंडकांतथा पूजयेच्चततःपश्चात्तत्त्वपत्रेषुपूर्वतः ८० विष्णुमायाचेतनाचबुद्धिर्निद्राक्षुधातथा छायाशक्तिःपरातृष्णाक्षांतिर्जातिश्चलज्जया ८१ शांतिःश्रद्धाकीर्तिलक्ष्म्यौधृतिर्वृत्तिःश्रुतिःस्मृतिः दयातुष्टिस्ततःपुष्टिर्माताभ्रांतिरितिक्रमात् ८२ ततोभूपुरकोणेषुगणेशंक्षेत्रपालकं बटुकंयोगिनीश्चापिपूजयेन्मतिमान्नरः ८३ इंद्राद्यानपितद्बाह्येवज्राद्यायुधसंयुतान् पूजयेदनयारित्यादेवींसावरणांततः ८४ राजोपचारान्विविधान्दद्याद्बाप्रतुष्टये ततोजपेन्नवार्णंचमंत्रंमंत्रार्थपूर्वकं ८५ ततःसप्तशतीस्तोत्रंदेव्याअग्रेतुसंपठेत् नानेनसदृशंस्तोत्रंविद्यतेभुवनत्रये ८६ ततश्चानेनदेवेशींतोषयेत्प्रत्यहंनरः धर्मार्थकाममोक्षाणामालयंजायतेनरः ८७ इतितेकथितंविप्रश्रीदुर्गायाविधानकं कृतार्थतायेनभवेत्तदेतत्कथितंतव ८८ सर्वेदेवाहरिब्रह्मप्रमुखामनवस्तथा मुनयोज्ञाननिष्ठाश्चयोगिनश्चाश्रमास्तथा ८९

दात्मिके महाकाल्यानंदरूपेत्वत्तत्त्वज्ञानसिद्ध्येअनुसंदध्महेदेविवयंत्वांहृदयांबुजेइति अयंचार्थः सप्तशतीगुप्तवतीटीकायांपदव्युत्पत्तिप्रदर्शनपूर्वकंभास्कररायैः प्रदर्शितस्ततएवावधार्यः ८५सप्तशतीस्तोत्रंमार्कंडेयपुराणेप्रसिद्धं ८६ अस्यमंत्रस्यचतुर्लक्षंपुरश्चरणं पायसान्नेनदशांशहोमः तदुक्तंकात्यायनीतंत्रेजपेच्चतुर्लक्षमेनंपायसान्नेनहोमयेदिति ८७ ८८ अस्यमंत्रस्यसर्वाराध्यत्वमाह सर्वेदेवाइति ८९

९० ९१ उपसंहरति तदेतदिति ९२ ग्रंथश्रवणफलमाह श्रुत्वैतदिति ९३ ९४ ९५ नित्यंपाठंनवमस्कंधस्यविधत्ते नित्यमेकैकमिति ९६
अस्मिन्ग्रंथेनवमस्कंधात्मके कार्यार्थेकर्तव्यांशकुनपरीक्षांविधत्तेशकुनांश्चेति तद्विधिमाह कुमारीति ९७ ९८ तयाकुमार्या ९९ १०० श्री
मच्छैवकुलोपन्नोरंगनाथात्मजः सुधीः श्रीलक्ष्मीगर्भसंभूतोनीलकंठोभिधानतः देवीभागवतस्यास्यव्याख्यानरहितस्यच व्याख्यां

लक्ष्म्यादयस्तथादेव्यः सर्वेध्यायंतितांशिवां तदेवजन्मसाफल्यंदुर्गास्मरणमस्तिचेत् ९० चतुर्दशापिमन
वोध्यात्वाच्चरणपंकजं मनुत्वंप्रासवंतश्चदेवाः स्वस्वंपदंतथा ९१ तदेतत्सर्वमाख्यातंरहस्यातिरहस्यकं
प्रकृतीनांपंचकस्यतदंशानांचवर्णनं ९२ श्रुत्वैतन्मनुजोनित्यंपुरुषार्थचतुष्टयं लभतेनात्रसंदेहः सत्यं
सत्यंमयोदितं ९३ अपुत्रोलभतेपुत्रंविद्यार्थीप्राप्नुयाच्चतां यंयंकामंस्मरेद्वापितंतंश्रुत्वासमाप्नुयात्
९४ नवरात्रेपठेदेतद्व्यग्रेतुसमाहितः परितुष्टाजगद्धात्रीभवत्येवहिनिश्चितं ९५ नित्यमेकैकमध्यायंप
ठेद्यः प्रत्यहंनरः तस्यवश्याभवेद्देवीदेवीप्रियकरोहिसः ९६ शकुनांश्चपरीक्षेतनित्यमस्मिन्यथाविधि
कुमारीदिव्यहस्तेनयद्वाबटुकरांबुजात् ९७ मनोरथंतुसंकल्प्यपुस्तकंपूजयेत्ततः देवींचजगदीशानीं
प्रणमेच्चपुनःपुनः ९८ सुस्नातांकन्यकांतत्रानीयाभ्यर्च्ययथाविधि शलाकांरोपयेन्मध्येतयास्वर्णनिनि
र्मितां ९९ शुभंवाप्यशुभंतत्रयदायातिचतद्भवेत् उदासीनेप्युदासीनंकार्यंभवतिनिश्चितं १०० इति
श्रीदेवीभागवतेमहापुराणेनवमस्कंधेपंचाशत्तमोध्यायः ५०

यः कृतवान्सम्यक्तिलकाख्यांमहत्तरां नवमस्कंधएतस्याः समासोभूच्छुभार्थदः तेनतुष्यतुसादेवीपंचप्रकृतिरूपिणी इतिश्रीशै
वकुलोत्पन्नरंगनाथात्मजलक्ष्मीगर्भसंभवनीलकंठकृतेदेवीभागवतव्याख्यानेतिलकाभिधानेनवमस्कंधेपंचाशत्तमोध्यायः ५०

श्रीगणेशायनमः देवेंद्रमौलिर्मंदारमकरंदकणारुणौ अरुणाचरणौवंदेकरुणावरुणालयौ ॥ १ ॥ चतुर्विंशतिभिः पद्यैर्मनोः स्वायं
भुवस्यच आख्यानंवर्ण्यतेसम्यग्यत्रदेव्याः कथानकं १ तत्राष्टमस्कंधादौजनमेजयेनराज्ञाभगवत्याविराट्स्वरूपंपृष्टं तथायस्मिन्यस्मिं
श्चवेस्थानेयेनयेनचपूज्यते तत्सर्ववदेतिपृष्टोव्यासोनारदनारायणसंवादमुखेनसर्ववर्णयामासनवमस्कंधपर्यंतं तथाष्टमस्कंधेएवान्यः प्रश्नः

श्रीगणेशायनमः नारदउवाच नारायणधराधारसर्वपालनकारणं भवतोदीरितंदेवीचरितंपापनाशनं
१ मन्वंतरेषुसर्वेषुयादेवीयत्स्वरूपिणी यदाकारेणाकुरुतेप्रादुर्भावंमहेश्वरी २ तान्नःसर्वान्समाख्या-
हिदेवीमाहात्म्यमिश्रितान् यथाचयेनयेनेहपूजितासंस्तुतापिहि ३ मनोरथान्पूरयतिभक्तानांभक्तवत्स
ला तन्नःशुश्रूषमाणानांदेवीचरितमुत्तमं ४ वर्णयस्वकृपासिंधोयेनाप्नोतिसुखंमहत् श्रीनारायण
उवाच आकर्णयमहर्षेत्वंचरितंपापनाशनं ५ भक्तानांभक्तिजननंमहासंपत्तिकारकं जगद्योनिर्महा
तेजाब्रह्मालोकपितामहः ६ आविरासीन्नाभिपद्माद्देवदेवस्यचक्रिणः सचतुर्मुखआसाद्यप्रादुर्भा
वंमहामते ७ मनुंस्वायंभुवंनामजनयामाससमानसात् समानसोमनुःपुत्रोब्रह्मणःपरमेष्ठिनः ८ श
तरूपाचतत्पत्नीजज्ञेधर्मस्वरूपिणी समनुःक्षीरसिंधोश्चतीरेपरमपावने ९ देवीमाराधयामासमहा
भाग्यफलप्रदां मूर्तिंचमृन्मयींतस्याविधायपृथिवीपतिः १०

कृतोमन्वंतरेषुसर्वेषुयद्यद्रूपेणपूज्यतेतत्सर्ववदेतितस्योत्त
रंनारदनारायणसंवादमुखेनैवदशमस्कंधेवदति तत्रनवमस्कंधांतेसर्वेमनवोभगवतीमेवाराध्यतत्तत्पदंप्रापुरितिप्रश्नबीजमुपलभ्यनारदःपृच्छ-
ति नारायणधराधरेति १ २ तान्नःसर्वानिति तान्सर्वानाकारानित्यर्थः किंचयेनयेनमंत्रेणस्तोत्रेणवापूजितासती मनोरथान्पूरयतितदपिवदेत्याह यथा
चयेनेति ३ शुश्रूषमाणानामितिबहुवचनंभक्त्यतिशयेनगौरवद्योतनार्थंभक्त्यतिशयद्योतनेएवपर्यवस्यति ४ ५ ६ ७ मानसात्अंतःकरणात् ८ जज्ञेउ
त्पादिता ९ १०

११ १२ १३ १४ १५ १६ १७ मादृशामस्मदादीनां १८ १९ २० प्रवृद्धाःमहांतः २१ २२ भवतांजायतां २३ २४ इतिश्रीदे-

उपासतेस्मतांदेवींवाग्भवंसजपन्रहः निराहारोजितश्वासोनियमव्रतकर्शितः ११ एकपादेनसंतिष्ठन्धरायाम-
निशंस्थिरः शतवर्षंजितःकामः क्रोधस्तेनमहात्मना १२ भेजेस्थावरतांदेव्याश्चरणौचिंतयन्हृदि तस्यत
त्तपसादेवीप्रादुर्भूताजगन्मयी १३ उवाचवचनंदिव्यंवरंवरयभूमिप ततआनंदजनकंश्रुत्वावाक्यंमहीपतिः
१४ वरयामासतान्हृत्स्थान्वरानमरदुर्लभान् श्रीमनुरुवाच जयदेविविशालाक्षिजयसर्वांतरस्थिते
१५ मान्येपूज्येजगद्धात्रिसर्वमंगलमंगले त्वत्कटाक्षावलोकेनपद्मभूःसृजतेजगत् १६ वैकुंठःपालय
त्येवहरःसंहरतेक्षणात् शचीपतिस्त्रिलोक्याश्चशासकोभवदाज्ञया १७ प्राणिनःशिक्षयत्येवदंडेनचप
रेतराट् यादसामधिपःपाशीपालनंमादृशामपि १८ कुरुतेसकुबेरोपिनिधीनांपतिरव्ययः हुतभुग्नै
र्ऋतोवायुरीशानःशेषएवच १९ त्वदंशसंभवाएवत्वच्छक्तिपरिबृंहिताः अथापियदिमेदेविवरोदेयो-
स्तिसांप्रतं २० तदाप्रवृद्धाःस्वर्गकार्येविघ्नानश्यंतुमेशिवे वाग्भवस्यापिमंत्रस्ययेकेचिदुपसेविनः २१
तेषांसिद्धिःसत्वरापिकार्याणांजायतामपि येसंवादमिमंदेविपठंतिश्रावयंतिच २२ तेषांलोकेभुक्ति
मुक्तीसुलभेभवतांशिवे जातिस्मरत्वंभवतुवक्तृत्वंसौष्ठवंतथा २३ ज्ञानसिद्धिःकर्ममार्गसंसिद्धिर-
पिचास्तुहि पुत्रपौत्रसमृद्धिश्चजायेदित्येवमेवचः २४ इतिश्रीदेवीभा०महा० दशमस्कंधेप्रथमोध्यायः १
श्रीदेव्युवाच भूमिपालमहाबाहोसर्वमेतद्भविष्यति यत्त्वयाप्रार्थितंतत्तेददामिमनुजाधिप १ वीभागवततिलकेदश

मस्कंधेप्रथमोध्यायः १ अष्टाविंशतिभिःपद्यैरर्धश्लोकाधिकैरथवरंदत्वाभगवतीविंध्याद्रिंचजगामह १ स्वायंभुवमनुस्तोत्रंश्रुत्वादेवीयद-

येकृतवतीतदाह श्रीदेव्युवाच भूमिपालेति १ २ मत्सदे ब्रह्मपदे ३ ४ कुंभोद्भवोगस्तिः गगनमंतरिक्षं स्पृशन्व्यापयन् ५ ६ ७



अहंप्रसन्नादैत्येंद्रनाशनामोघविक्रमा वाग्भवस्यजपेनैवतपसातेसुनिश्चितं २ राज्यंनिष्कंटकंतेस्तुपुत्रावंश कराअपि मयिभक्तिर्दृढावत्समोक्षांतेसत्सदेभवेत् ३ एववरान्महादेवीतस्मैदत्त्वामहात्मने पश्यतस्तुम नोरेवजगामविंध्यपर्वतं ४ योसौविंध्याचलोरुद्धःकुंभोद्भवमहर्षिणा भानुमार्गावरोधार्थंप्रवृत्तोगग नंस्पृशन् ५ साविंध्यवासिनीविष्णोरनुजावरदेश्वरी बभूवपूज्यालोकानांसर्वेषांमुनिसत्तम ६ ऋष यऊचुः कोसौविंध्याचलःसूतकिमर्थंगगनंस्पृशन् भानुमार्गावरोधंचकिमर्थंकृतवानसौ ७ कथंचमैत्रा वरुणिःपर्वतंतंमहोन्नतं प्रकृतिस्थंचकारेतिसर्वंविस्तरतोवद ८ नहितृप्यामहेसाधोत्वदास्यगलितामृ तं देव्याश्चरित्ररूपाख्यंपीत्वातृष्णाप्रवर्धते ९ सूतउवाच आसीद्विंध्याचलोनाममान्यःसर्वधराभृतां महावनसमूहाढ्योमहापादपसंवृतः १० सुपुष्पितैरनेकैश्चलतागुल्मैस्तुसंवृतः मृगावराहामहिषाव्या घ्राःशार्दूलकाअपि ११ वानराःशशकाऋक्षाःशृगालाश्चसमंततः विचरंतिसदाहृष्टाःपुष्टाएवमहो द्यमाः १२ नदीनदजलाक्रांतोदेवगंधर्वकिन्नरैः अप्सरोभिःकिंपुरुषैःसर्वकामफलद्रुमैः १३ एतादृ शेविंध्यनगेकदाचित्पर्यटन्महीं देवर्षिःपरमप्रीतोजगामस्वेच्छयामुनिः १४ तंदृष्ट्वासनगोमंक्षुतूर्णमु त्थायसंभ्रमात् पाद्यमर्घ्यंतथादत्त्वावरासनमथार्पयत् १५ सुखोपविष्टंदेवर्षिंप्रसन्नंनगऊचिवान् विं ध्यउवाच देवर्षेकथ्यतांजातआगमःकुतउत्तमः १६ तवागमनतोजातमनर्घ्यंममर्मंदिरं तवचंक्रमणादे वाभयार्थंहियथारवेः १७

मैत्रावरुणिरगस्तिः प्रकृतिस्थंयथापूर्वंस्वभावस्थं ८ ९ १० ११ १२ १३ १४ १५ १६ १७ ६९

इंद्रारिः शत्रुर्यस्यपर्वतपक्षच्छेदकत्वादिंद्रस्यपर्वतारित्वं स्वर्णगिरेःसुमेरोः १८ १९ अगपर्वत इतिचोक्त्वेतिसूतवाक्यं आविशत्त्यक्तवान् २०
शैलराट् विंध्याद्रिः देवऋषेइत्यत्रऋत्यकइतिप्रकृतिभावः २१ उक्तवचनं २२ गुरुःपिता २३ आवसथोगृहं २४ २५ २६ २७ एवं-
मानाभिमानंतमिति मानेनाभिमानोयस्यतं नैकेश्चिदपिप्रपंचेभिमानः कर्तव्यइतिशास्त्रमर्यादातथापिसोभिमानंकरोतीतितत्स्मरणासं-

अपूर्वंयन्मनोवृत्तंतद्ब्रूहिममनारद श्रीनारदउवाच ममागमनमिंद्रारेजातंस्वर्णगिरेरथ १८ तत्रदृष्टामया
लोकाःशक्राग्नियमपाशिनां सर्वेषांलोकपालानांभवनानिसमंततः १९ मयादृष्टानिविंध्यागनानाभोगप्रदा
निच इतिचोक्त्वाब्रह्मयोनिःपुनरुच्छ्वासमाविशत् २० उच्छ्वसंतंमुनिंदृष्ट्वापुनःपप्रच्छशैलराट् उच्छ्वास
कारणंकिंतद्ब्रूहिदेवऋषेमम २१ इत्याकर्ण्यनगस्योक्तंदेवर्षिरमितद्युतिः अब्रवीच्छ्रूयतांवत्समभोच्छ्वास-
स्यकारणं २२ गौरीगुरुस्तुहिमवाञ्शिवस्यश्वशुरःकिल संबंधित्वात्पशुपतेःपूज्यआसीत्क्षमाभृतां २३ ए
वमेवचकैलासःशिवस्यावसथःप्रभुः पूज्यःपृथ्वीभृतांजातोलोकेपापौघदारणः २४ निषेधःपर्वतोनीलोगंध
मादनएवच पूज्याःस्वस्थानमासाद्यसर्वएवक्षमाभृतः २५ यंपर्येतिचविश्वात्मासहस्त्रकिरणःस्वराट्
सग्रहर्क्षगणोपेतःसोयंकनकपर्वतः २६ आत्मानंमनुतेश्रेष्ठंवरिष्ठंचधराभृतां सर्वेषामहमेवास्योनास्ति
लोकेषुमत्समः २७ एवंमानाभिमानंतंस्मृत्वोच्छ्वासोमयोज्झितः अस्तुनैतावताकृत्यंतपोबलवतांनग २८
प्रसंगतोमयोक्तंतेगमिष्यामिनिजंगृहं इतिश्रीदेवीभा० महा० दश० द्वितीयोध्यायः २ सूतउ० एवंसमुपदिश्यायंदे
वर्षिःपरमःस्वराट् जगामब्रह्मणोलोकंस्वैरचारीमहामुनिः १

जाताश्चर्येणमयोच्छ्वासस्त्यक्तइतिभावः उज्झितस्त्यक्तः तपोबलवता
मस्माकं २८ निजंगृहं ब्रह्मलोकं इतिश्रीदेवीभा० तिलके दशमस्कंधेद्वितीयोध्यायः २ पंचविंशतिभिःश्लोकैरर्धश्लोकाधिकैरथ भानुमार्गनिरोधश्चविं
ध्येनकृतउच्यते १

नारदगमनोत्तरंजातंवृत्तमाह एवंसमुपदिश्येति १ चिंतांलेभेसजातीयस्यसुमेरोरभिमानासहिष्णुश्चिंतांप्राप्तवानित्यर्थः अंतरभ्यंतरेकृतं शोचनंशोकोयेनसः २ अत्रकिंकार्यंकथंवाकर्तव्यमित्यर्थः ३ ४ दोषकारिणीअपराधकारिणी ५ तेनकारणेनसदायंनगोदृप्यतिगर्वंकरो-तीत्यर्थः तथाचतस्यसूर्यस्यगतिनिरोधेमयाकृतेप्रदक्षिणासंभवादर्थात्तस्याभिमानोनष्टःस्यादित्यभिप्रायंविंध्यस्याह तस्यमार्गस्येति ६

गतेमुनिवरेविंध्यश्चिंतांलेभेऽनपायिनीं नैवशांतिंसलेभेचसदांतःकृतशोचनः २ कथंकिंत्वत्रमेकार्यंकथं मेरुंजयाम्यहं नैवशांतिंलभेनापिस्वास्थ्यंमेमानसेभवेत् ३ "धिगुत्साहंचमानंचधिग्मेकीर्तिंचधिक्कुलं" धिग्बलंमेपौरुषंधिक्स्मृतंपूर्वंमहात्मभिः एवंचिंतयमानस्यविंध्यस्यमनसिस्फुटं ४ प्रादुर्भूतामतिःकार्यक-र्तव्येदोषकारिणी मेरुंप्रदक्षिणांकुर्वन्नित्यमेवदिवाकरः ५ सग्रहर्क्षगणोपेतःसदादृप्यत्ययंनगः तस्यमार्ग-स्यसंरोधंकरिष्यामिनिजैःकरैः ६ तदानिरुद्धोद्युमणिःपरिक्रामेत्कथंनगं एवंमार्गेनिरुद्धेतुमयादिनकरस्य च ७ भग्नदर्पोदिव्यनगोभविष्यतिविनिश्चितं एवंनिश्चित्यविंध्याद्रिःखंस्पृशन्ववृधेभुजेः ८ महोन्नतैः शृंगवरैःसर्वंव्याप्यव्यवस्थितः कदोदेष्यतिभास्वांस्तंरोधयिष्याम्यहंकदा ९ एवंसंचिंतयानस्यसाव्यती-याययशर्वरी प्रभातंविमलंजज्ञेदिशोवितिमिराःकरैः १० कुर्वन्सनिर्गतोभानुरुदयायोदयेगिरौ प्रकाशतेस्म विमलंनभोभानुकरैःशुभैः ११ विकासंनलिनीभेजेमीलनंचकुमुद्वती स्वानिकार्याणिसर्वेचलोकाःसमुपतस्थिरे १२ हव्यंकव्यंभूतबलिंदेवानांचप्रवर्धयन् प्राण्हापराण्हमध्यान्हविभागेनत्विषांपतिः १३

७ भुजैःशृंगैः ८ ९

१० ११ नलिनीसूर्यविकासिनी कुमुद्वतीचंद्रविकासिनी १२ प्राण्हेति प्राण्हापराण्हमध्यान्हविभागेनहव्यंकव्यंचवर्धयन्सन् एवंक्रमेणवियोगिनींविर-हिणींप्राचींदिशंतथाग्नेयींदिशंचसमाश्वास्याथभास्करःकृशानोरग्नेर्दिशंविहाययाम्यांयमसंबंधिनींदक्षिणदिशंगंतुंप्रतस्थेप्रस्थानंकृतवानितिसमु

दायार्थः कथंभूतांवियोगिनींचिरकालीनविरहात्कामिनीमिवज्वलंतीं १३ १४ १५ नशेकुरिति अश्वाइतिशेषः व्यजिज्ञपद्विज्ञापितवान्
१६ त्वद्वृत्तांप्रदक्षिणांप्रेप्सुस्तस्याइच्छावानित्यर्थः अनूरुररुणः १७ १८ दैवचरित्रमेवोपपादयति राहुबाहुग्रहेति राहोर्बाहुभ्यांग्रहेण
आकलनेनव्यग्रोपियः क्षणमात्रमपिनावतिष्ठतेस्थिरोभवतिताद्दशःसइत्यन्वयः किंकरोतिनकिंचित्कर्तुंसमर्थइत्यर्थः यतोविधिर्बलीभव

एवंप्राचींतथाग्नेयींसमाश्वास्यवियोगिनीं ज्वलंतींचिरकालीनविरहादिवकामिनीं १४ भास्करोथकृशानो
श्चदिशंनूनंविहायच याम्यांगंतुंततस्तूर्णंप्रतस्थेकमलाकरः १५ नशेकुश्चाग्रतोगंतुंततोऽनूरुर्व्यजिज्ञ
पत् अनूरुरुवाच भानोमानोन्नतोविंध्योनिरुध्यगगनंस्थितः १६ स्पर्धतेमेरुणाप्रेप्सुस्त्वद्वृत्तांचप्र
दक्षिणां सूतउवाच अनूरुवाक्यमाकर्ण्यसविताह्यासचिंतयन् १७ अहोगगनमार्गोपिरुध्यतेचाति-
विस्मयः प्रायःशूरोनकिंकुर्यादुत्पथेवर्त्मनिस्थितः १८ निरुद्धोनोवाजिमार्गोदैवंहिबलवत्तरं राहुबाहु
ग्रहव्यग्रोयःक्षणंनावतिष्ठते १९ सुचिरंरुद्धमार्गोपिकिंकरोतिविधिर्बली एवंचमार्गेसंरुद्धेलोकाःसर्वे
चसेश्वराः २० नान्वविंदंतुशरणंकर्तव्यंनान्वपद्यत चित्रगुप्तादयःसर्वेकालंजानंतिसूर्यतः २१ सरुद्धो
विंध्यगिरिणाअहोदैवविपर्ययः यदानिरुद्धःसवितागिरिणास्पर्धयातदा २२ नष्टःस्वाहास्वधाकारो
नष्टप्रायमभूज्जगत् एवंचपाश्चिमालोकादाक्षिणात्यास्तथोवच २३ निद्रामीलितचक्षुष्कानिशामेवप्रपे
दिरे प्रांचस्तथोत्तराह्याश्चतीक्ष्णतापप्रतापिताः २४ मृतानष्टाश्चभग्नाश्चविनाशमभजन्प्रजाः हाहाभू
तंजगत्सर्वंस्वधाकव्यविवर्जितं २५

ति १९ २० कोपिकर्तव्यंनान्वपद्यतनप्राप्तवान् २१ २२ २३
२४ २५ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२

इतिश्रीदेवीभागवततिलकेदशमस्कंधेतृतीयोध्यायः ३ एकोनविंशतिश्लोकैर्देवदेवंवृषध्वजं स्तुत्वासर्वेस्ववृत्तांतंकथयामासुराद

देवाःसेंद्राःसमुद्विग्नाःकिंकुर्मइतिवादिनः इतिश्रीदेवीभागवतेमहापुराणेदशमस्कंधेदेवीमाहात्म्येतृतीयोध्यायः ३ सूतउवाच ततःसर्वेसुरगणामहेंद्रप्रमुखास्तदा पद्मयोनिंपुरस्कृत्यरुद्रंशरणमन्वयुः १ उपतस्थुःप्रणतिभिस्तोत्रैश्चारुविभूतिभिः देवदेवंगिरिशयंशशिलोलितशेखरं २ देवाऊचुः जयदेवगणाध्यक्षउमालालितपत्कज अष्टसिद्धिविभूतीनांदात्रेभक्तजनायते ३ महामायाविलसितस्थानायपरमात्मने वृषांकायामरेशायकैलासस्थितिशालिने ४ अहिर्बुध्न्यायमान्यायमनवेमानदायिने अजायबहुरूपायस्वात्मारामायशंभवे ५ गणनाथायदेवायगिरिशायनमोस्तुते महाविभूतिदात्रेतेमहाविष्णुस्तुतायच ६ विष्णुहृत्कंजवासायमहायोगरतायच योगगम्याययोगाययोगिनांपतयेनमः ७ योगीशायनमस्तुभ्यंयोगानांफलदायिने दीनदानपरायापिदयासागरमूर्तये ८ आर्तिप्रशमनायोग्रवीर्यायगुणमूर्तये वृषध्वजायकालायकालकालायतेनमः ९ सूतउवाच एवंस्तुतःसदेवेशोयज्ञभुग्भिर्वृषध्वजः प्राहगंभीरयावाचाप्रहसन्विबुधर्षभान् १० श्रीभगवानुवाच प्रसन्नोहंदिविषदःस्तोत्रेणोत्तमपूरुषाः मनोरथंपूरयामिसर्वेषांदेवतर्षभाः ११ देवाऊचुः सर्वदेवेशगिरिशशशिमौलिविराजित आर्तानांशंकरस्त्वंचशंविधेहिमहाबल १२ पर्वतोविंध्यनामास्तिमेरुद्वेष्टामहोन्नतः भानुमार्गनिरोद्धाहिसर्वेषांदुःखदोनघ १३ तद्वृद्धिंस्तंभयेशानसर्वकल्याणरूद्भव भानुसंचाररोधेनकालज्ञानंकथंभवेत् १४

रात् १ एवंजगदुपद्रवेसातितदनंतरंजातंवृत्तमाह ततःसर्वेइति १ २ पत्कजंकंजलंतस्माज्जातंकमलंकजं पच्छब्दःपदंघ्रिश्चरणोस्त्रियामितिकोशात्पादवाची चरणकमलमित्यर्थः ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४

१५ १६ १७ १८ १९ इतिश्रीदेवीभागवततिलके दशमस्कंधेचतुर्थोध्यायः ४ सप्तविंशतिपद्यैर्वाप्यर्धश्लोकाधिकैरथ देवादि-

नष्टस्वाहास्वधाकारेलोकेकःशरणंभवेत् अस्माकंचभयार्तानांभवानेवहि दृश्यते १५ दुःखनाशकरोदेवप्र-
सीदगिरिजापते श्रीभगवानुवाच नास्माकंशक्तिरस्तीहतद्बुद्धिस्तंभनेसुराः १६ इममेवचवंदामोभगवंतं
रमाधवं सोस्माकंप्रभुरात्माचपूज्यःकारणरूपधृक् १७ गोविंदोभगवान्विष्णुःसर्वकारणकारणः तंगत्वाक
थयिष्यामःसदुःखांतोभविष्यति १८ इत्येवमाकर्ण्यगिरीशभाषितंदेवाश्चसेंद्राःसप्रयोजसंभवाः रुद्रंपुर
स्कृत्यचवेपमानावैकुंठलोकंप्रतिजग्मुरंजसा १९ इतिश्रीदेवीभागवतेमहा० दशमस्कंधेचतुर्थोध्यायः ४
सूतउवाच तेगत्वादेवदेवेशंरमानाथंजगद्गुरुं विष्णुंकमलपत्राक्षंददृशुःप्रभयान्वितं १ स्तोत्रेणतुष्टुवुर्भ
क्त्यागद्गदस्वरसत्कृताः देवाऊचुः जयविष्णोरमेशाद्यमहापुरुषपूर्वज २ दैत्यारेकामजनकसर्वकाम
फलप्रद महावराहगोविंदमहायज्ञस्वरूपक ३ महाविष्णोध्रुवेशाद्यजगदुत्पत्तिकारण मत्स्यावतारे-
वेदानामुद्धाराधाररूपक ४ सत्यव्रतधराधीशमत्स्यरूपायतेनमः जयाकूपारदैत्यारेसुरकार्यसमर्पक ५
अमृताप्तिकरेशानकूर्मरूपायतेनमः जयादिदैत्यनाशार्थमादिसूकररूपधृक् ६ मह्युद्धारकृतोद्योगको
लरूपायतेनमः नारसिंहंवपुःकृत्वामहादैत्यंददारयः ७ करजैर्वरदृप्तांगंतस्मैनृहरयेनमः वामनंरूप-
मास्थायत्रैलोक्यैश्वर्यमोहितं ८ बलिंसंछलयामासतस्मैवामनरूपिणे दुष्टक्षत्रविनाशायसहस्रकरश
त्रवे ९ भिः कृतंस्तोत्रंमहाविष्णोरितीर्यते १ शिववाक्यश्रवणोत्तरंदेवावैकुंठंगताइत्याह तेगत्वेति १ २ ३ ४
अकूपारायसमुद्रकूर्मरूप ५ ६ कोलरूपायवराहरूपाय ७ करजैर्नखैः ८ सहस्रकरः कार्तवीर्यः ९ ६२ ६२ ६२

जामदग्न्यायपरशुरामाय पौलस्त्योरावणः १० ११ १२दुष्टयज्ञाअविधियज्ञाः १३ १४ १५ नारीजलात्मसुयेनरूपंधृतमित्यन्वयः



रेणुकागर्भजातायजामदग्न्यायतेनमः दुष्टराक्षसपौलस्त्यशिरश्छेदपटीयसे १० श्रीमद्दाशरथेतुभ्यंनमोनंतक्र
मायच कंसदुर्योधनाद्यैश्चदैत्यैःपृथ्वीशलांछनैः ११ भाराक्रांतांमहींयोसावुज्जहारमहाविभुः धर्मसंस्थाप-
यामासपापंकृत्वासुदूरतः १२ तस्मैकृष्णायदेवायनमोस्तुबहुधाविभो दुष्टयज्ञविघातायपशुहिंसानिवृत्त
ये १३ बौद्धरूपंदधौयोसौतस्मैदेवायतेनमः म्लेच्छप्रायेखिलेलोकेदुष्टराजन्यपीडिते १४ कल्किरूपंसमा
दध्यौदेवदेवायतेनमः दशावतारास्तेदेवभक्तानांरक्षणायवै १५ दुष्टदैत्यविघातायतस्मात्त्वंसर्वदुःखहृ
त् जयभक्तार्तिनाशायधृतंनारीजलात्मसु १६ रूपंयेनत्वयादेवकोन्यस्त्वत्तोदयानिधिः इत्येवंदेवदेव
शंस्तुत्वाश्रीपतिवासरं १७ प्रणेमुर्भक्तिसहिताःसाष्टांगंविबुधर्षभाः तेषांस्तवंसमाकर्ण्यदेवःश्रीपुरुषो
त्तमः १८ उवाचविबुधान्सर्वान्हर्षयञ्श्रीगदाधरः श्रीभगवानुवाच प्रसन्नोस्मिस्तवेनाहंदेवास्तापंवि
मुंचथ १९ भवतांनाशयिष्यामिदुःखंपरमदुःसहं वृणुध्वंचवरंमत्तोदेवाःपरमदुर्लभम् २० ददामिपरम-
प्रीतःस्तवस्यास्यप्रसादतः यएतत्पठतेस्तोत्रंकल्पउत्थायमानवः २१ मयिभक्तिंपरांकृत्वानतंशोकःस्पृ
शेत्कदा अलक्ष्मीःकालकर्णीचनाक्रामेत्तद्गृहंसुराः २२ नोपसर्गानवेतालानग्रहाब्रह्मराक्षसाः नरोगा
वातिकाःपैत्ताःश्लेष्मसंभविनस्तथा २३ नाकालमरणंतस्यकदापिचभविष्यति संततिश्चिरकालस्थाभो
गाःसर्वेसुखादयः २४ संभविष्यंतितन्मर्त्यगृहेयःस्तोत्रपाठकः किंपुनर्बहुनोक्तेनस्तोत्रंसर्वार्थसाधकं २५

१६ १७ १८ १९ २० २१ २२ २३ २४ २५ ६९ ६९ ६९ ६९

२६ अणुमात्रमपिसंदेहोनास्तीत्यर्थः २७ वृषाकपिंविष्णुं इतिश्रीदेवीभागवततिलकेदशमस्कंधेपंचमोध्यायः ५ सप्तविंशतिपद्यैर्वाप्यर्ध

एतस्यपठनान्नृणांभुक्तिमुक्तीनदूरतः देवाभवत्सुयद्दुःखंकथ्यतांतदसंशयं २६ नाशयामिनसंदेहश्चात्रका-
र्येणुरेवच एवंश्रीभगवद्वाक्यंश्रुत्वासर्वेदिवौकसः २७ प्रसन्नमनसःसर्वेपुनरूचुर्वृषाकपिं इतिश्रीदेवीभा
गवतेमहापुराणेदशमस्कंधेपंचमोध्यायः ५ सूतउवाच श्रीशस्यवचनाद्देवाःसंतुष्टाःसर्वएवहि प्र-
सन्नमनसोभूत्वापुनरेनमवोचत १ देवाऊचुः देवदेवमहाविष्णोसृष्टिस्थित्यंतकारण विष्णोविंध्यनगो
ऽर्कस्यमार्गरोधंकरोतिहि २ तेनभानुविरोधेनसर्वएवमहाविभो अलब्धभोगभागाहिकिंकुर्मःकुत्रयाम
हि ३ श्रीभगवानुवाच याकर्त्रीसर्वजगतामाद्याचकुलवर्धनी देवीभगवतीतस्याःपूजकःपरमद्युतिः
४ अगस्त्योमुनिवर्योसौवाराणस्यांसमासते तत्तेजोवंचकोगस्त्योभविष्यतिसुरोत्तमाः ५ तंप्रसाद्यद्वि
जवरमगस्त्यंपरमौजसं याचध्वंविबुधाःकाशींगत्वानिश्रेयसःपदीं ६ सूतउवाच एवंसमुपदिष्टास्तेविष्णु
नाविबुधोत्तमाः प्रतीताःप्रणताःसर्वेजग्मुर्वाराणसींपुरीं ७ क्षणेनविबुधश्रेष्ठागत्वाकाशीपुरींशुभां म-
णिकर्णीसमाप्लुत्यसचैलंभक्तिसंयुताः ८ संतर्प्यदेवांश्चपितॄन्दत्वादानंविधानतः आगत्यमुनिवर्यस्य
चाश्रमंपरमंमहत् ९ प्रशांतश्वापदाकीर्णंनानापादपसंकुलं मयूरैःसारसैर्हंसैश्चक्रवाकैरुपाश्रितं १०
महावराहैःकोलैश्चव्याघ्रैःशार्दूलकैरपि मृगैरुरुभिरत्यर्थंखड्गैःशरभकैरपि ११

श्लोकाधिकैरथ देवैः
संप्रार्थितोगस्तिर्विंध्याद्रेर्वृद्धिकुंठने १ विष्णुवाक्यश्रवणानंतरंजातंवृत्तमाह श्रीशस्येति १ २ ३ पूजकः अतएवभगवत्याअगस्त्युपा
सितालोपामुद्रोपासितेतिनामब्रह्मांडपुराणेतंत्रेषुप्रसिद्धमेवैतत् ४ तत्तेजोवंचकोविंध्याद्रिवृद्धिखंडकः ५ निःश्रेयसोमोक्षस्यपदींस्थानं ६
७ ८ ९ १० ११

१२ १३ १४ यस्यागस्तिनक्षत्रस्योदये १५ काशपुष्पेति अगस्तिनक्षत्रस्योदयेकाशपुष्पंमुनिपुष्पं भाषायांयस्यागस्तिपुष्पमितिसंज्ञाभ
वतितत्काशपुष्पंतस्यविकासोभवति ततोहेतोः काशपुष्पविकासाय लंकायांवासोगमनमभिलषितंयस्यसरामचंद्रोलंकावासस्तस्यप्रि-



समाश्रितंपरमयालक्ष्म्यामुनिवरंतदा दंडवत्पतिताःसर्वेप्रणेमुश्चपुनःपुनः १२ जयद्विजगणाधीशमान्य
पूज्यधरासुर वातापीबलनाशायनमस्तेकुंभयोनये १३ लोपामुद्रापतेश्रीमन्मैत्रावरुणिसंभव सर्ववि-
द्यानिधेऽगस्त्यशास्त्रयोनेनमोस्तुते १४ यस्योदयेप्रसन्नानिभवंत्युज्वलभांज्यपि तोयानितोयराशीनांत
स्मैतुभ्यंनमोस्तुते १५ काशपुष्पविकासायलंकावासप्रियायच जटामंडलयुक्तायसशिष्यायनमोस्तुते
१६ जयसर्वामरस्तव्यगुणराशेमहामुने वरिष्ठायचपूज्यायसस्त्रीकायनमोस्तुते १७ प्रसादःक्रियतां
स्वामिन्वयंत्वांशरणंगताः दुस्तराच्छैलजादुःखात्पीडिताःपरमद्युते १८ इत्येवंसंस्तुतोगस्त्योमुनिःपरम
धार्मिकः प्राहप्रसन्नयावाचाविहसन्द्विजसत्तमः १९ मुनिरुवाच भवंतःपरमश्रेष्ठादेवास्त्रिभुवनेश्व
राः लोकपालामहात्मानोनिग्रहानुग्रहक्षमाः २० योमरावत्यधीशानःकुलिशंयस्यचायुधं सिद्धयष्टकं
चयद्वारिसशक्रोमरुतांपतिः २१ वैश्वानरःकृशानुर्हिहव्यकव्यवहोनिशं मुखंसर्वामराणांहिसोऽग्निःकिं
तस्यदुष्करं २२ रक्षोगणाधिपोभामःसर्वेषांकर्मसाक्षिकः दंडव्यग्रकरोदेवःकिंतस्यासुकरंसुराः २३ तथा
पियदिदेवेशाःकार्यमच्छक्तिसिद्धिभूत् अस्तिचेदुच्यतांदेवाःकरिष्यामिनसंशयः २४ एवंमुनिवरेणोक्तं
निशम्यविबुधर्षभाः प्रतीताःप्रणयोद्विग्नाःकार्यंनिजगदुर्निजं २५

याय गुरवेशिवगीतोपदेशशिवमंत्रोपदेशकर्त्रे
शिवगीतायांस्पष्टमेतत् १६ १७ १८ १९ २० २१ २२ भामोदीप्तिमान् २३ २४ २५ ६१ ६१

२६ २७ इतिश्रीदेवीभागवततिलकेदशमस्कंधेषष्ठोध्यायः ६ षड्विंशतिमहापद्यैरर्धश्लोकाधिकैरथ मुनिनाविंध्यवृद्धेश्चकुंठनंकृत-

महर्षेर्विंध्यगिरिणानिरुद्धोर्कविनिर्गमः त्रैलोक्यंतेनसंविष्टंहाहाभूतमचेतनं २६ तद्वृद्धिंस्तंभयमुनेनिजया-
तपसःश्रिया भवतस्तेजसागरुत्यनूननम्रोभविष्यति २७ एतदेवास्मदीयंचकार्यंकर्तव्यमस्तिहि इतिश्री
देवीभागवतेमहापुराणेदशमस्कंधेषष्ठोध्यायः ६ सूतउवाच इतिवाक्यंसमाकर्ण्यविबुधानांद्विजोत्त
मः करिष्येकार्यमेतद्वःप्रत्युवाचततोमुनिः १ अंगीकृतेतदाकार्येमुनिनाकुंभजन्मना देवाःप्रमुदिताः
सर्वेबभूवुर्द्विजसत्तमाः २ तेदेवाःस्वानिधिष्ण्यानिभेजिरेमुनिवाक्यतः पत्नींमुनिवरःश्रीमानुवाचनृ
पकन्यकां ३ अयेनृपसुतेप्राप्तोविघ्नोनर्थस्यकारकः भानुमार्गनिरोधेनकृतोविंध्यमहीभृता ४ आ
ज्ञातंकारणंतच्चस्मृतंवाक्यंपुरातनं काशीमुद्दिश्ययद्गीतंमुनिभिस्तत्त्वदर्शिभिः ५ अविमुक्तंनमोक्त-
व्यंसर्वथैवमुमुक्षुभिः किंतुविघ्नाभविष्यंतिकाश्यांनिवसतांसतां ६ सोंतरायोमयाप्राप्तःकाश्यांनिव
सताप्रिये इत्येवमुक्त्वाभार्यांतांमुनिःपरमतापनः ७ मणिकर्ण्यांसमाप्लुत्यदृष्ट्वाविश्वेश्वरंविभुं दंडपाणिं
समभ्यर्च्यकालराजंसमागतः ८ कालराजमहाबाहोभक्तानांभयहारक कथंदूरयसेपुर्याःकाशीपुर्याः-
स्त्वमीश्वर ९ त्वंकाशीवासिविघ्नानांनाशकोभक्तरक्षकः मांकिंदूरयसेस्वामिन्भक्तार्तिविनिवारक १०
परापवादोनोक्तोमेनपैशून्यंनचानृतं केनकर्मविपाकेनकाश्याद्दूरंकरोषिमां ११ एवंप्रार्थ्यचतंकालनाथंकुं
भोद्भवोमुनिः जगामसाक्षिविघ्नेशंसर्वविघ्ननिवारणं १२

मुच्यते १ देववाक्यंश्रुत्वामुनिर्यत्कृतवांस्तदाह सूतउवाच इतिवाक्य
मिति १ २ ३ ४ एतस्यविघ्नस्यकिंकारणमितिचेदधुनैवतत्कारणंस्मृतमित्याह आज्ञातमिति ५ ६ ७ कालराजंकालभैरवं ८ ९ १० ११ १२ ६२

१३ १४ तपएववयोगएवयानंयस्य योगशक्त्याक्षणार्द्धेनगतइत्यर्थः १५ किमर्थंखर्वतरोनम्रतरोजातइतिचेत्तत्रोत्प्रेक्षामाह विवक्षुरवनीमिवे
ति अवनीं पृथिवीं किंचिद्रहस्यंकर्णेविवक्षुर्वक्तुमिच्छुरिव अतिशयेननम्रोजातइतितात्पर्यं १६ तदेवाह दंडवदिति १७ १८ १९ अवारुह्य पृ



तंदृष्ट्वाभ्यर्च्यसंप्रार्थ्यततःपुर्याविनिर्गतः लोपामुद्रापतिःश्रीमानगस्त्योदक्षिणांदिशं १३ काशीविरहसंतप्तोम
हाभाग्यनिधिर्मुनिः संस्मृत्यानुक्षणंकाशींजगामसहभार्यया १४ तपोयानमिवारुह्यनिमिषार्धेनवैमुनिः
अग्रेददर्शतंविंध्यंरुद्धांबरमथोन्नतं १५ चकंपेचाचलस्तूर्णंदृष्ट्वैवाग्रेस्थितंमुनिं गिरिःखर्वतरोभूत्वाविवक्षुर
वनीमिव १६ दंडवत्पतितोभूमौसाष्टांगंभक्तिभावितः तंदृष्ट्वानम्रशिखरंविंध्यंनाममहागिरिं १७ प्रसन्नवद
नोऽगस्त्योमुनिर्विंध्यमथाब्रवीत् वत्सैवंतिष्ठतावत्त्वंयावदागम्यतेमया १८ अशक्तोहंगंडशैलारोहणेतवपुत्र
क एवमुक्त्वामुनिर्याम्यदिशंप्रतिगमोत्सुकः १९ आरुह्यतस्यशिखराण्यवारुहदनुक्रमात् गतोयाम्यदिशं
चापिश्रीशैलंप्रेक्ष्यवर्त्मनि २० मलयाचलमासाद्यतत्राश्रमपरोभवत् सापिदेवीतत्रविंध्यमागतामनुपूजिता २१
लोकेषुप्रथिताविंध्यवासिनीतिचशौनक सूतउवाच एतच्चरित्रंपरमंशत्रुनाशनमुत्तमं २२ अगस्त्यविंध्यन
गयोराख्यानपापनाशनं राज्ञांविजयदंतच्चद्विजानांज्ञानवर्द्धनं २३ वैश्यानांधान्यधनदंशूद्राणांसुखदंतथा
धर्मार्थीधर्ममाप्नोतिधनार्थीधनमाप्नुयात् २४ कामानवाप्नुयात्कामीभक्त्याचास्यसकृच्छ्रवात् एवंस्वाय
भुवमनुर्देवीमाराध्यभक्तितः २५ लेभेराज्यंधरायाश्चनिजमन्वंतराश्रयं इत्येतद्वर्णितंसौम्यमयामन्वंतरा
श्रितं २६ आद्यंचरित्रंश्रीदेव्याःकिंपुनःकथयामिते

थिवींप्रत्यवातरदित्यर्थः २० इत्थंविंध्यकथांसमाप्यपूर्वसं
बंधंयोजयति सापिदेवीति २१ २२ २३ २४ २५ २६

इतिश्रीदेवीभागवततिलकेदशमस्कंधेसप्तमोध्यायः ७ चतुर्विंशतिभिः पद्यैःस्वारोचिषमनोः कथा अर्द्धश्लोकाधिकैरेवसंक्षेपात्प्रोच्यतेधु
ना १ स्वायंभुवमनोः कथाश्रवणानंतरंमनूनामन्येषामपिशौनकः कथांपृच्छति आद्योमन्वंतरइति १ सूतस्तुयादृशंभवतापृच्छ्यतेतादृशमेवनार

इतिश्रीदेवीभागवतेमहापुराणेदशमस्कंधेसप्तमोध्यायः ७ शौनकउवाच आद्योमन्वंतरःप्रोक्तोभवताचायमु
त्तमः अन्येषामुद्भवंब्रूहिमनूनांदिव्यतेजसां १ सूतउवाच एवमाद्यस्यचोत्पत्तिंश्रुत्वास्वायंभुवस्यहि अन्ये-
षांक्रमशस्तेषांसंभूतिंपरिपृच्छति २ नारदःपरमोज्ञानीदेवीतत्त्वार्थकोविदः नारदउवाच मेमनूनांसमा
ख्याहिसूत्पत्तिंचसनातन ३ नारायणउवाच प्रथमोयंमनुःस्वायंभुवउक्तोमहामुने देव्याराधनतोयेनप्राप्तं
राज्यमकंटकं ४ प्रियव्रतोत्तानपदौमनुपुत्रौमहौजसौ राज्यपालनकर्तारौविख्यातौवसुधातले ५ द्वितीय
श्चमनुःस्वारोचिषउक्तोमनीषिभिः प्रियव्रतसुतःश्रीमानप्रमेयपराक्रमः ६ सस्वारोचिषनामापिकालिंदीकू
लतोमनुः निवासंकल्पयामाससर्वसत्त्वप्रियंकरः ७ जीर्णपत्राशनोभूत्वातपःकर्तुमनुव्रतः देव्यामूर्तिंमृन्म
यींचपूजयामासभक्तितः ८ एवंद्वादशवर्षाणिवनस्थस्यतपस्यतः देवीप्रादुरभूत्तत्रसहस्रार्कसमद्यु-
तिः ९ ततःप्रसन्नादेवेशीस्तवराजेनसुव्रता ददौस्वारोचिषायैवसर्वमन्वंतराश्रयं १० आधिपत्यंजगद्धा
त्रीतारिणीतिप्रथामगात् एवंस्वारोचिषमनुस्तारिण्याराधनात्ततः ११ आधिपत्यंचलेभेससर्वारातिवि
वर्जितं धर्मसंस्थाप्यविधिवद्राज्यंपुत्रैःसमंविभुः १२

देननारायणंप्रतिपृष्टमित्याह एवमाद्यस्येति आद्यस्यादिभूतस्य-
स्वायंभुवमनोः परिपृच्छतिनारदइत्यन्वयः २ सनातनहेनारायण ३ ४ ५ ६ कूलतःकूले ७ ८ ९ १० तारिणीति यादृशमहा
विद्यासुमध्येतारिणीतिप्रथामगात्सास्वारोचिषायमन्वंतराधिपत्यंददावित्यन्वयः तारामहाविद्योपासकोयमितिभावः ११ १२ ६९

तृतीयोमनुरित्यन्वयः १३ १४ १५ १६ चतुर्थोमनुरित्यन्वयः १७ कामराजकूटंकामबीजं तच्चदक्षिणामूर्तिसंहितायांकामेश्वर्याउन्क्रम-
स्तीतिकामेश्वर्याअयमुपासकइतिभावः १८ १९ २० अंबरंपरलोकं तामसानुजः पूर्वोक्तोयःप्रियव्रतसुतस्तामसस्तस्यानुजः २१ २२ २३

भुक्त्वाजगामस्वर्लोकंनिजमन्वंतराश्रयात् तृतीयउत्तमोनामप्रियव्रतसुतोमनुः १३ गंगाकूलेतपस्तप्त्वावाग्भ
वंसंजपन्नृहः वर्षाणित्रीण्युपवसन्देव्यनुग्रहमाविशत् १४ स्तुत्वादेवींस्तोत्रवर्यैर्भक्तिभावितमानसः राज्यंनि-
ष्कंटकंलेभेसंततिंचिरकालिकीं १५ राज्योत्थान्यानिसौख्यानिभुक्त्वाधर्मान्युगस्यच सोप्याजगामपदवीं
राजर्षिवरभावितां १६ चतुर्थस्तामसोनामप्रियव्रतसुतोमनुः नर्मदादक्षिणेकूलेसमाराध्यजगन्मयीं १७
महेश्वरींकामराजकूटजापपरायणः वासंतेशारदेकालेनवरात्रसपर्यया १८ तोषयामासदेवेशींजलजाक्षी
मनूपमां तस्याःप्रसादमासाद्यनुत्वास्तोत्रैरनुत्तमैः १९ अकंटकंमहद्राज्यंबुभुजेगतसाध्वसः पुत्रान्बलोद्ध
ताञ्शूरान्दशवीर्यनिकेतनान् २० उत्पाद्यनिजभार्यायांजगामांबरमुत्तमं पंचमोमनुराख्यातोरैवतस्ताम-
सानुजः २१ कालिंदीकूलमाश्रित्यजजापकामसंज्ञकं बीजंपरमवाग्दर्पदायकंसाधकाश्रयं २२ एतदा-
राधनादापस्वाराज्यर्द्धिमनुत्तमां बलमप्रहतंलोकेसर्वसिद्धिविधायकं २३ संततिंचिरकालीनांपुत्रपौत्रमयीं
शुभां धर्मान्व्यस्यव्यवस्थाप्यविषयाननुपभुज्यच २४ जगामाप्रतिमःशूरोमहेंद्रालयमुत्तमं इतिश्रीदेवी
भागवतेमहापुराणेदशमस्कंधेऽष्टमोध्यायः ८ श्रीनारायणउवाच अथातःश्रूयतांचित्रंदेवीमाहात्म्यमु
त्तमं अंगपुत्रेणमनुनायथासंराज्यमुत्तमं १

२४ इतिश्रीदेवीभागवततिलकेदशमस्कंधेऽष्टमोध्यायः ८ एकोनत्रिं



शत्पद्येस्तुचाक्षुषस्यमनोःकथा यथावद्वर्ण्यतेयत्रदेवीमाहात्म्यविस्तरः १ अवशिष्टषष्ठमनोःकथामाह अथातरिति १ ६८

